# SÂRASWATAVYÂKARAṆAM

(THE THREE VṚITTIS.)

OF

# ANUBHÛTISWARÛPÂCHÂRYA

WITH

the commentary (Subodhikâ) of Chandrakîrti.

EDITED BY

MAHÂMAHOPÂDHYÂYA

PANDIT S'IVADATT KUDÂL

(of Jayapur, Râjputânâ),

HEAD PANDIT, ORIENTAL COLLEGE, LAHORE.

REVISED BY

VÂSUDEV LAXMAṆ S'ASTRÎ PAṆS'ÎKAR.

Fourth Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

BOMBAY.

1926.

*Price 3 Rupees.*

॥ श्रीः ॥

अनुभूतिस्वरूपाचार्यप्रणीतं

# सारस्वतव्याकरणम् ।

चन्द्रकीर्तिव्याख्यासहितम् ।

( वृत्तित्रयात्मकम् । )

( इयं च नागपुरस्थतपागच्छाधिराजभट्टारकविद्वद्वरश्रीचन्द्रकीर्तिसूरिप्रणीता सुबोधिका चन्द्रकीर्तिनाम्नी व्याख्या । )

लवपुरप्राच्यमहाविद्यालयमुख्यसंस्कृताध्यापकमहामहोपाध्याय-
जयपुरीय-
पण्डितशिवदत्तशर्मभिः
संस्कृतम् ।

चतुर्थमुद्रणावर्तनम् ।

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संशोधितम् ।

इदं च

मुम्बय्याम्

पाण्डुरङ्ग जावजी

इत्यनेन निर्णयसागराख्यमुद्रणयन्त्रालयाधिपतिना स्वीयेऽङ्कनालये

मुद्रयित्वा प्राकाश्यं नीतम् ।

शाकः १८४८, सन १९२६.

मूल्यं ३ रूप्यकत्रयम् ।

# विज्ञापनम् ।

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः ।
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥

स्वल्पस्य सिद्धस्य सुबोधकस्य सारस्वतव्याकरणस्य टीकाम् ।
सुबोधिकाख्यां रचयांचकार सूरीश्वरः श्रीप्रभुचन्द्रकीर्तिः ॥

संप्रति बहुत्र व्याकरणशास्त्रज्ञानायातीव सुगमप्रक्रियाकं बालोपकारकमिति **सारस्वतव्याकरणं** विद्वांसो बालानध्यापयन्ति । एतद्ग्रन्थकारस्य प्रतिज्ञैवेत्थं ग्रन्थारम्भे वरीवरीति— **"—बालधीवृद्धिसिद्धये । सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम्"** इति ॥ अपिच ग्रन्थारम्भहेतुरित्थं श्रूयते—"पुरा किल कस्मिंश्चित्समये विद्वत्पुरोगा **अनुभूतिस्वरूपाचार्याः** पण्डितवृन्दालंकृतपरिषदि 'पुंक्षु' इत्यवदन् । तच्छ्रुत्वानवहितोत्तरक्षण एव छिद्रान्वेषिभिः सदस्यैः पण्डितैः 'अशुद्धोऽयं प्रयोगो भवद्भिः कृतः' इति मानभङ्गायोपहासः कृतः । पृष्टं च 'यदि भवदुक्तः पुंक्ष्विति प्रयोगः शुद्धश्चेत्तर्हि कथं तत्सिद्धिः?' इति । आचार्यैस्तदा सादरं 'श्वो दर्शयिताहे' इत्युक्तम् । अनन्तरं दूयमानस्वान्तैस्तैः स्वभवनमागत्य समाराधिता श्रीमद्भगवती सरस्वती देवी । सा चैतस्य शुद्धभावनया सुप्रसन्नीभूयार्धरात्रेऽनुभूतिस्वरूपाचार्याभिमुखी बभूव । जगाद च—'ईप्सितं वरं वृणीष्व' इति । तदा देवीदर्शनात्कृतार्थंमन्यैरेभिरपूर्वमिदं व्याकरणकरणमेव वृतम् । प्रसन्नया तया दत्तं स्वीयहारात्सूत्रसङ्घं व्याकरणनिर्माणसामर्थ्योर्जितं वरं च । समाकलय्य तत्तन्नाम्नैवेमं ग्रन्थमाचार्या अरीरचन् । सोऽयं प्रसादलब्धो ग्रन्थः शिष्यप्रशिष्यशाखापरम्परया विचकास । आक्षेपकाणां समाधानं चानेन यथावदभूद्" इति किंवदन्ती ।

वृत्तित्रयात्मकेऽस्मिन्व्याकरणेऽनुभूतिस्वरूपाचार्यैस्तत्रतत्र बालानां सुखबोधाय सूत्रवृत्तिः तत्तदुदाहरणानि च यथावद्व्याख्यातानि सन्ति । तथा पाणिनीयव्याकरणवदाक्षेपसमाधानाद्यपि विशेषतो दुर्बोधभिया नोपक्रान्तम् । किंतु यथाऽनायासेनैव मन्दमतीनामपि सुबन्त-तिङन्त-कृदन्त-समास—तद्धिताद्युदाहरणानां सुखबोधः स्यात्तथास्य रचना कृतास्ति ।

सुखबोधस्याप्यस्याध्येतृवर्गस्य सम्यक् व्युत्पत्तिविधित्सया परमकारुणिकैः श्रीनागपुरस्थ-तपागच्छाधिराजभट्टारक—श्रीचन्द्रकीर्तिसूरिभिः **सुबोधिका** चन्द्रकीर्तिनाम्नी व्याख्या व्यरचि । तत्संवलितमेवेदं पुस्तकमस्माभिरङ्कितमस्ति ।

ग्रन्थारम्भे च बालानां सौलभ्याय प्रत्याहार-वर्ण-प्रयत्नादि-ग्रन्थबहिर्भूता अपि विषयाः पृथक्कोष्टकैर्निर्दिष्टाः सन्ति । सर्वं मूलं च जयपुराभिजनलवपुर(लाहोर)नगरीयप्राच्यविद्या-

लयस्थसंस्कृतश्रेणिप्रधानाध्यापक—दाधिमथ ( दाहिमह )—महेश्वरीयवैश्यान्तर्गतसोमानीगुरुपुरोहितकुदाल—महामहोपाध्याय—पण्डितवर—शिवदत्तशास्त्रिभिः प्राचीनहस्तलिखितादर्शपुस्तकमेलनेन यथोपयोगटिप्पणीयोजनेन च शोधितं भूषितं चास्ति । कृतेप्येतादृशि प्रयत्ने 'गच्छतः स्खलन—' मिति न्यायेन मनुजाल्पधिषणानिसर्गसुलभं स्खलितं क्षमध्वमिति सदयार्द्रहृदो ग्रन्थशोधनायासविदः कोविदानसकृदभ्यर्थयते ॥

पणशीकरोपाह्वो

**वासुदेवशर्मा ।**

# अनुक्रमणिका ।

## प्रथमा वृत्तिः १



## द्वितीया वृत्तिः २

## तृतीया वृत्तिः ३



समाप्ता चेयं विषयानुक्रमणी सारस्वतव्याकरणस्य ।

॥ श्रीः ॥

# सारस्वतव्याकरणम् ।

चन्द्रकीर्तिसमाख्यया व्याख्यया समलंकृतम् ।

## प्रथमा वृत्तिः ।

### संज्ञाप्रक्रिया १

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ।**
**सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥**

॥ श्रीगणेशाय नमः ॥

नमोऽस्तु सर्वकल्याणपद्मकाननभास्वते ।
जगत्त्रितयनाथाय पराय परमात्मने ॥ १ ॥

नमः श्रीगुरवे चारुबुद्धये दत्तसिद्धये ।
मतिप्रदानशीलायै सरस्वत्यै नमो नमः ॥ २ ॥

अथ श्रीमत्परमहंसपरिव्राजकाचार्यः श्रीअनुभूतिस्वरूपो निःशेषविघ्नसंघातशान्त्यर्थं सत्स्वपि देवेष्वपरेष्वैहिकामुष्मिकफललिप्सुस्तांश्च फलद्वयदानक्षमानपास्य भगवन्नमस्कृतिपूर्वकं सारस्वतीं प्रक्रियां चिकीर्षुः सरस्वतीदत्तवर आदावेव प्रस्तावनाश्लोकमाह—**प्रणम्येत्यादि** ॥ अथैतस्य साधनापूर्वं व्याख्यालेशः प्रारभ्यते—'णम् प्रह्वीभावे'। 'आदेः ष्णः स्नः' नम् प्रपूर्वः। 'समासे क्यप्' इति क्यप् प्रत्ययः। य। 'स्वरहीनं परेण संयोज्यम्'। 'प्रादेश्च तथा तौ सुनमाम्' इति नकारस्य णकारः। प्रथमैकवचनं सि। 'अव्ययाद्विभक्तेर्लुक्' इति सिलोपः। प्रणम्येति सिद्धम् ॥ (अग्रे) परमात्मानम्। परा प्रकृष्टा मा लक्ष्मीः कान्तिर्वा यस्य स परमः। यद्वा परैर्योगिभिर्मीयते ज्ञायते इति परमः। यद्वा परान् शत्रून् रागद्वेषा-

प्रकारान्तरेण व्याख्यान्तरम्—अनुभूतिस्वरूपाचार्यः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिपालनाय च स्वेष्टदैवतनमस्कारलक्षणं मङ्गलमाचरन् सरस्वतीकृतप्रक्रियाया ऋजुकरणं प्रतिजानीते —अहं सारस्वतीं प्रक्रियां ऋजुं कुर्वे इत्यन्वयः। कुर्वे इत्यनेनाहमिति कर्तृपदं लभ्यते। 'अस्मद्युत्तमः' इत्युक्तेः। अहं कुर्वे इति वाक्येन कर्मापेक्ष्यते करोतेः सकर्मकत्वात्। प्रक्रियामिति कर्म। प्रक्रियन्ते प्रकृतिप्रत्ययादिविभागेन व्युत्पाद्यन्ते शब्दा अनयेति प्रक्रिया ताम्। प्रकृतिप्रत्ययविभागकर्त्रीमित्यर्थः। अहं प्रक्रियां कुर्वे इत्येवमुक्तावस्याप्रामाण्यमायातं कृतकत्वात्। तत्परिहाराय प्रक्रियां विशिनष्टि। कथंभूतां प्रक्रियाम्। सारस्वतीम्। सरतीति सरः पूरः तद्विद्यते यस्याः सा सरस्वती ज्ञानरूपिणी

दीन् मिनाति हिनस्तीति परमः । यद्वा मानं माः ज्ञानं, परं प्रकृष्टं मा ज्ञानं यस्य स परमः ॥ अत सातत्यगमने । अतति सातत्येन गच्छति तांस्तान् भावानित्यात्मा । मनिण् प्रत्ययः । मनिणो णित्वात् 'अत उपधायाः' इति वृद्धिः ॥ परमश्चासावात्मा च परमात्मा तं परमात्मानम् । द्वितीयैकवचनम् अम् 'नोपधायाः' इति दीर्घः त्म इत्यस्य त्मा । 'स्वर-हीनं परेण संयोज्यम्' । 'मोऽनुस्वारः' परमात्मानमिति सिद्धम् ॥ ( अग्रे ) बालधीवृद्धि-सिद्धिः कल् बल् कामधेनू । बल् बलन्ति दीव्यन्ति गृहेष्विति बालाः । यद्वा बलन्ति चलन्ति दुर्बोधार्थादिति बालाः । 'ज्वलादेर्णः' इति णप्रत्ययः । 'अत उपधायाः' इति वृद्धिः ब इत्यस्य बा । 'स्वरहीनं परेण संयोज्यम्' ॥ ( अग्रे ) ध्यै चिन्तायाम् । ध्यै ध्यायते इति धीः । 'क्विप्' इति क्विप् प्रत्ययः । 'ध्यायतेः क्विपि संप्रसारणं दीर्घता च' इति संप्रसारणं यकारस्येकारः, तस्य दीर्घता च । ध्यै इत्यस्य धी । 'क्विपः सर्वापहारी लोपः' इति क्विब्लोपः । धी इति सिद्धम् ॥ अग्रे-वृधु वर्धने । वर्धनं वृद्धिः । 'क्तिः' इति क्तिप्रत्ययः । ति । 'तथोर्धः' इति तिस्थाने धिः । 'झबे जबाः' इति धस्य दः । 'स्वरहीनं परेण संयो-ज्यम्' ॥ अग्रे-षिध् शास्त्रे माङ्गल्ये च । षिध् । 'आदेः ष्णः स्नः' सिध् । सेधनं सिद्धिः । क्तिप्रत्ययादिकं प्राग्वत् । अत्र शब्दाशब्दानभिज्ञा बाला न तु स्तनंधयाः । यदि वा अधीतान्यशास्त्रा अप्यनभ्यस्तशब्दशास्त्रा बालाः । सर्वशास्त्रेषु शब्दशास्त्रं प्रधानम् । यतः 'अनधीत्य शब्दशास्त्रं योऽन्यच्छास्त्रं समीहते मूढः । सोऽहेः पदानि गणयति निशि तमसि

---

प्रसिद्धा । सरस्वत्या प्रणीतानि सारस्वतानि सूत्राणि एवं सारस्वतानि विद्यन्ते यस्यां सा सारस्वती तां सारस्वतीम् । सरस्वतीप्रणीतसूत्रसंबन्धिनीमित्यर्थः । अथवा सरस्वत्या प्रणीता सारस्वती ताम् । सर-स्वतीकृतामित्यर्थः । 'गौरवलाघवयोर्मध्ये लाघवमिष्टम्' इत्युक्तेः सुगमं व्याख्यानं प्रशस्तं यद्यर्थान्तरं न संभवति । अर्थान्तरेऽस्तु । ननु सरस्वतीकृता प्रक्रियास्ति, तवात्र करणे कः प्रयत्न इति चेत्तत्राह— ऋजुमिति यत्रतत्र स्थितानां सूत्राणां प्रयोगार्थमेकत्र लेखनं ऋजुकरणम् । प्रयोगानुकूलसूत्रक्रमाम् । एवंच सरलामित्यर्थः । अनेन सरस्वतीकृतप्रक्रियाया दुर्बोधत्वं सूचितम् । निर्विघ्नपरिसमाप्तये मङ्गल-माचरति—ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारात् । तत्र किंनाम मङ्गलं तदाह—'वन्दनं गुरुदेवानां ग्रहशान्तिर्द्विजार्चनम् । शुभद्रव्यावलोकश्च मङ्गलं परिचक्षते ॥' इति । किमर्थं मङ्गलं क्रियते कविना । विघ्ननिवारणाय । 'शिष्टैर्विघ्ननिवारणाय मङ्गलं क्रियते' इति सदाचा-रात् । तथोक्तम्—'नित्यं पथ्याशिनां पुंसां हितस्थाननिवासिनाम् । मङ्गलं चरतां विघ्नैर्विनिपातो न विद्यते ॥' इति । कादम्बर्यादौ मङ्गले कृतेऽपि न तत्परिसमाप्तिः, बौद्धेन न कृतं तत्प्रणीतसमाप्तिश्च दृष्टा, अतो मङ्गलं न सदिति चेन्न । प्राक्तनसंस्कारं विना किमपि न संभवति। अतो बौद्धेन पूर्वजन्म-नि मङ्गलमाचरितं तेनात्राकृतेऽपि मङ्गले विघ्नवारणमभवत् । प्राचीनसंस्काराभावादपवित्रत्वेनाचरितत्वा-त्कादम्बर्यादीनां न सिद्धिर्याता । अतो मङ्गलं सदेव । तदेवाह—परमात्मानं प्रणम्येति । पिपर्तीति परः । माया लक्ष्म्या आत्मा जीवनं मात्मा । लक्ष्मीपतिरित्यर्थः । परश्चासौ मात्मा च परमात्मा तम् । अथवा परः पूर्णः निरपेक्ष एवंभूतो मात्मा लक्ष्मीपतिस्तम् ॥ अयं भावः । कविभिर्विघ्ननिवारणकं भक्ष्या-च्छादनसूक्तयो(?) नित्यमिष्यते । ततोयमपि परशब्देन पालकत्वसर्वज्ञत्वोपदर्शितः मात्मा परमात्मा तं तथाभूतम् । अथवा परा शत्रुरूपा मा येषां ते परमा ये विरक्तास्तेषामात्मा मनो यस्मिन्स

जले चिरगतस्य ॥' तथा च । 'अङ्गीकृतं कोटिमितं च शास्त्रं नाङ्गीकृतं व्याकरणं च येन । न शोभते तस्य मुखारविन्दं सिन्दूरबिन्दुर्विधवाललाटे ॥' इति वचनात् । धियो वृद्धिर्धीवृद्धिः । तेषां बालानां या धीवृद्धिर्बुद्धिवृद्धिर्व्युत्पत्तिस्तस्याः सिद्धिः बालधीवृद्धिसिद्धिः । तस्यै बालधीवृद्धिसिद्धये चतुर्थ्येकवचनं ङे । ए । 'ङिति' द्वि इत्यस्य द्धे । 'स्वरहीनं परेण संयोज्यम्' । बालधीवृद्धिसिद्धये ॥ अग्रे सरस्वती । सृ गतौ । सृ 'वचादेरस्' गुणः । 'स्वरहीनं०' सरः प्रसारणं मुखे मुखे अस्त्यस्या इति 'मान्तोपधाद्वन्त्विनौ' इति अस्त्यर्थे वतुः । 'ष्टितः' इतीप् । 'स्वरहीनं०' । ततः सरस्वत्या प्रणीतानि सूत्राणि सारस्वतानि । ततः सारस्वतेभ्यः सूत्रेभ्यो जाता सारस्वती । 'कारकात्क्रियायुक्ते' अण्प्रत्ययः । अ । 'आदिस्वरस्य ञ्णिति वृद्धिः' स इत्यस्य सा । 'यस्य लोपः' ईकारलोपः 'स्वरहीनं०' । 'त्रण ईप्' इतीप् प्रत्ययः । 'स्वरहीनं०' । द्वितीयैकवचनम् अम् । 'अमृशसोरस्य'अलोपः ॥ सरस्वत्या प्रणीतानि यानि सूत्राणि इति युक्त्या । 'वृद्धाच्छः * *' 'यस्य लोपः * *' इति पाणिनीयस्य छप्रत्ययस्य संभवः । छस्य इयादेशः । तदा सारस्वतीया इति भवति । तेन सरस्वत्या प्रणीता या सा सारस्वती तां सारस्वतीम् । इत्येके ॥ अग्रे-ऋजु । द्वितीयैकवचनम् अम् । 'अमृशसोरस्य' इत्यकारस्य लोपः । 'मोऽनुस्वारः' । ऋजुम् ॥ 'वोर्गुणात्' इति विकल्पेन ईप् । तेन स्त्रीलिङ्गेऽपि ऋज्वी, ऋजुरिति रूपद्वयं स्यात् । अग्रे-कुर्वे । डुकृञ् करणे । कृ आत्मनेपदे वर्तमानोत्तमपुरुषैकवचनम् । ए । 'तनादेरुप्' इति उप्रत्ययः । उ । गुणः ।

---

परमात्मा तम् । परमेषु आत्मा यस्येति वा बहुव्रीहिणा परमपुरुषार्थत्वं सूचितम् । सप्तमीबहुव्रीहिणा कृपालुत्वं च । अथवा परैरुत्कृष्टैः सर्वतो विरक्तैर्योगिभिर्मीयते प्राप्यत इति परमः । 'नाम्नि च' इति डः । अततीत्यात्मा । सर्वग इत्यर्थः । परमश्चासावात्मा च परमात्मा तं, परम् आत्मानमिति वा छेदः । आत्मानं प्रणम्य प्रकर्षेण नत्वा । कायवाङ्मनोभिर्नमनम् । प्रकर्षो मङ्गलवाचकः । 'आत्मा जीवे सुते देहे स्वभावे परमात्मनि' इति कोशात् । एषु कतममात्मानं प्रणमसीति चेत्तत्राह—परमिति । परं पूर्णं तथाभूतमात्मानम् । व्यापकमित्यर्थः । तथाच वेदान्तसारे—'अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् । आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥' इति । तथाभूतं ब्रह्मैव । ननु गुरुगणेशादीन्विहाय कथं परमात्मानं प्रणम्येत्युक्तम् । सत्यम् । परमात्मनि नमस्कृते सर्व एव नमस्कृताः स्युः तस्य सर्वान्तर्यामित्वात् । तथाचोक्तं भागवते चतुर्थस्कन्धे—'यथा तरोर्मूलनिषेचनेन' इति । मनुः(?)—'अधिकारी च संबन्धो विषयश्च प्रयोजनम् । अवश्यमेव वक्तव्यं शास्त्रादौ तु चतुष्टयम् ॥' इति ग्रन्थप्रामाण्याय चतुष्टयमपेक्षणीयम् । आचार्यैस्तत्करणे किं प्रयोजनम् । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । तत्र चतुष्टयं वदन्स्वप्रयोजनमाह—बालधीवृद्धिसिद्धय इति । बाला अनधीतव्याकरणाः तेषामेव शब्दापशब्दज्ञानाभावात् । ननु स्तनपाः । धियो वृद्धिर्धीवृद्धिः बुद्धिवृद्धिः बालेभ्यो धीवृद्धिर्बालधीवृद्धिरिति तादर्थ्ये चतुर्थीतत्पुरुषः । बालानां धीवृद्धिरिति न षष्ठीतत्पुरुषः कार्यः । बालानामज्ञानिनां धीर्बुद्धिः अज्ञानधीः तस्या वृद्धिरिति दूषणात् । बालधीवृद्धिश्चासौ सिद्धिश्च बालधीवृद्धिसिद्धिस्तस्यै ॥ बालधीवृद्धेः सिद्धिरिति तत्पुरुषो न कार्यः । कुतः । तस्य क्रियाभिसंबन्धादुभयप्रधानो बलवानिति निगमात् । अत्र वृद्धिसिद्धिशब्दौ मङ्गलवाचकौ । अत एवायं ग्रन्थः सिद्धिकरः । अत्र बाला अधिकारिणः । शब्दो विषयः । तस्य ज्ञानं प्रयोजनम् । सरस्वतीप्रणीतत्वात्स एव संबन्धः । अनेनाप्रामाण्यशङ्कापास्ता ॥ १ ॥

कर् । 'स्वरहीनं०' करु । 'ङित्यद्रुः' क इत्यस्य कुः । 'उ वम्' 'राद्यपो द्विः' । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् । 'स्वरहीनं०' कुर्वे इति सिद्धम् ॥ अग्रे-प्रक्रियाम् । पुनः डुकृञ् करणे । कृ प्रपूर्वः । प्रक्रियन्ते व्युत्पाद्यन्ते साध्यन्ते शब्दा अनयेति प्रक्रिया । 'सदोणादयः' इत्यप्रत्ययः । 'अयकि' कृ इत्यस्य क्रि । 'नुधातोः' इतीय् क्रिय् । 'स्वरहीनं०' क्रिय् । 'आबतः स्त्रियाम्' 'सवर्णे दीर्घः सह' तां प्रक्रियाम् । 'अमृशसोरस्य' 'मोऽनुस्वारः' । अथवा डुकृञ् करणे । कृ । 'स्त्रियां यजां भावे कृञो यवाक्' इति यक् । रिङ् । क्रिया कृत्या ॥ अथवा क्रियादयः शान्ता निपात्याः । कृ । ततः 'कृञः श च * *' कृञो भावादौ श स्यात् । 'क्यप् घ * *' स्त्रियां शित्त्वात् भावे यक् रिङादेशः । प्रपूर्वः । प्रक्रिया तां प्रक्रियाम् । द्वितीयैकवचनम् अम् । 'अमृशसोरस्य' 'मोऽनुस्वारः' ॥ ततोऽग्रे स्तृ विस्तारे । स्तृ विपूर्वः विस्तरतीति विस्तरः । 'पचिनन्दिग्रहादेरयुणिनिः' इत्यप्रत्ययः । मतान्तरे 'मदामः' इत्यप्रत्ययः । गुणः । विस्तरः । 'स्वरहीनं०' । अतिपूर्वः अतिविस्तरः । निषेधार्थे नञ्पूर्वः । न विद्यते अतिविस्तरः शब्दबाहुल्यं यस्यां सा नातिविस्तरा तां नातिविस्तरामित्यत्र नाकादिवत् ' अनस्वरे' इत्यनेन नञोऽनादेशप्रतिषेधः । यद्वा केचित्तु बहुव्रीहौ नञो अनादेशमेव नेच्छन्ति । अथ वा न इति पृथगेव पदम् । ततः 'सवर्णे दीर्घः सह' । 'आबतः स्त्रियाम्' इति आप्प्रत्ययः । 'सवर्णे०' द्वितीयैकवचनम् अम् । 'अमशसोरस्य' 'मोऽनुस्वारः' इति प्रथमश्लोकस्य साधना ॥

अथ व्याख्या । प्रणम्य, परमात्मानम्, बालधीवृद्धिसिद्धये, सारस्वतीम्, ऋजुम्, कुर्वे, प्रक्रियाम्, नातिविस्तराम्, एवमस्मिन् श्लोके अष्टौ पदानि सन्ति ॥

अथान्वयः । अहमनुभूतिस्वरूपाचार्यः सारस्वतीं प्रक्रियामृजुं सरलां कुर्वे विदधे । लोकप्रसिद्धशब्दव्युत्पादनार्थमीषद्रचयामीत्यर्थः । कुर्वे इत्यस्य पठनपाठनादुत्पन्नस्य पुण्यरूपफलस्य कर्तृगामित्वादात्मनेपदप्रयोगो युक्त एव । किंनामधेयां प्रक्रियाम् ? । सारस्वतीं सरस्वतीप्रणीतसूत्रसंबन्धिनीमित्यर्थः । ननु शास्त्रादौ मङ्गलाचरणं विना शास्त्रसमाप्तिर्न स्यादत आह—किं कृत्वा ? । **परमात्मानं** परमेश्वरं **प्रणम्य** प्रकर्षेण मनोवाक्कायैर्नत्वा । परमात्मनि नमस्कृते सर्वेऽपि देवा नमस्कृताः स्युः । यथोक्तं भागवते—'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या' । इति । तथा च प्रशब्दस्य माङ्गलिकत्वादादौ प्रयोगः । तथा च—'प्रशब्दश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ ततो माङ्गलिकावुभौ' । ननु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' अतोऽत्र प्रक्रियाया ऋजुकरणे किं प्रयोजनमित्यत आह—कस्मै ? **बालधीवृद्धिसिद्धये** । सत्स्वपि महाभाष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात् । स्वल्पबुद्धीन् जनांस्तेषु चानादरान् संभाव्येमां प्रक्रियामवैयाकरणजनबुद्धिवर्धननिष्पत्त्यर्थं कुर्वे इत्यर्थः । चिकीर्षितायामपि प्रक्रियायां वक्रत्वकरणे भूयांसो जना निरादरा बोभूयन्ते तन्निरासार्थमाह—**ऋजुमिति** । सरलामित्यर्थः । सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्रतत्र स्थितानां सूत्राणामनुक्रममेलनेन ऋजुं सरलां कुर्वे इत्यर्थः । ननु भो, ऋजुमित्येव

कथं कृतम् ऋज्वीमिति कथं न स्यात् । तत्रोच्यते—'वोर्गुणात्' इत्यनेन सूत्रेण वा ईप्रत्ययः । द्वे रूपे ऋजुम् ऋज्वीमिति भवतः । परं छन्दोभङ्गभिया नोच्चार्येते । ऋजुरपि प्रक्रिया विस्तरबाहुल्यादध्येतुमशक्या अत आह—**नातिविस्तराम्** । विस्तरः शब्दबाहुल्यं तेन रहितां स्वल्पग्रन्थां प्रचुरार्थामित्यर्थः । एतावता सर्वाण्यपि सूत्राण्यादायोदाहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामिमां प्रक्रियां कुर्वे इति भावः ॥ अत्र बालधीवृद्धिः प्रयोजनम् । शब्दा विषयाः । अधिकारिणो बालाः । प्रतिपाद्यप्रतिपादकभावः संबन्धः । इति प्रथमश्लोकस्य व्याख्या ॥ १ ॥

**इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ।**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥**

ननु विस्तरः कथं निरस्तः इत्याशङ्कानिवारकं स्वगर्वापहारसूचकं च द्वितीयश्लोकमाह—**इन्द्रादयोऽपीति** । अथैतस्य साधना । 'इदि परमैश्वर्ये' । इन्दति ईष्टे इतीन्द्रः 'नमादेरः * *' इद् अग्रे रप्रत्ययः । 'इदितो नुम्' इति नुमागमः इ अग्रे न् द्र । 'नश्चापदान्ते झसे' नकारस्यानुस्वारः । 'स्वरहीनं०' ॥ अग्रे 'डुदाञ् दाने' दा आङ्पूर्वः । आदीयत इत्यादि । 'नक्की' इति किप्रत्ययः । इ । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'सवर्णे दीर्घः सह' इन्द्र आदिर्येषां ते इन्द्रादयः । प्रथमाबहुवचनम्–जस्–अस् । 'ए ओ जसि' दि इत्यस्य दे । 'ए अय्' 'स्वरहीनं०' 'स्रोर्विसर्गः' इन्द्रादयः ॥ अग्रे अपि प्रथमैकवचनम् सि 'अव्ययाद्विभक्तेः' सिलोपः । मध्ये 'अतोऽत्युः' 'उओ' 'एदोतोऽतः' अलोपः ॥ 'अग्रे यद् षष्ठ्येकवचनम्—ङस् 'त्यदादेष्टेरः स्यादौ' इति यदित्यस्य य । 'ङस्य' अग्रे—अन्तम् । द्वितीयैकवचनम् अम्—'अम्शसोरस्य' 'मोऽनुस्वारः' ॥ अग्रे—नेति प्रथमैकवचनं सि । 'अव्ययाद्विभक्तेर्लुक्' ॥ अग्रे 'या प्रापणे' । या । परोक्षाप्रथमपुरुषबहुवचनम्—उस् । 'द्विश्च' इति द्वित्वम् । या या उस् इति स्थिते 'ह्रस्वः' पूर्वयास्थाने यः । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'स्रोर्विसर्गः' ॥ अग्रे 'शप् आक्रोशे' । शप् शपति आक्रोशति जिह्वामिति शब्दः । उणादिषु दप्रत्ययः 'चपा अबे जबाः' पस्य बः । 'स्वरहीनं०' ॥ अग्रे 'डुधाञ् धारणपोषणयोः' । धा वारिपूर्वः । वारि धीयते यत्र स वारिधिः । 'नक्की' इति किप्रत्ययः । इ । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' शब्दानां वारिधिः शब्दवारिधिः । यद्वा शब्दा एव वारीणि धीयन्ते अस्मिन्निति शब्दवारिधिः । षष्ठ्येकवचनम् ङस् । 'ङिति' धिस्थाने धे । 'ङस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' अग्रे प्रक्रियामिति द्वितीयैकवचनम् अम् । 'अम्शसोरस्य' ॥ अग्रे तद् षष्ठ्येकवचनं ङस् । 'त्यदादेष्टेरः स्यादौ' 'ङस्य' ॥ अग्रे कृत्स्नस्येति षष्ठ्येकवचनम् ङस् 'ङस्य' ॥ अग्रे 'क्षम् सामर्थ्ये' क्षम् । क्षमते इति क्षमः 'पचिनन्दि०' इत्यप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ 'वच परिभाषणे' वच् । 'तुम् तदर्थायां भविष्यति' इति तुम्प्रत्ययः । 'चोः कुः' 'स्वरहीनं०' । प्रथमैकवचनान्तम् । 'अव्ययाद्विभक्तेर्लुक्' ॥ अग्रे 'नृ विक्षेपे' नृ । त्रियते विक्षिप्यते कामादिभिरिति नरः । 'स्वरादः' इत्यप्रत्ययः । गुणः । नरः । 'स्वरहीनं०' प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥

अग्रे किंशब्दस्य तृतीयैकवचनं टा । 'टा ना स्त्रियाम्' । 'तत्रादिर्गणो विभक्त्यर्थे निपात्यते * *' इति विभक्तिसहितस्य किमित्यस्य कथं निपातः इति द्वितीयश्लोकसाधनिका ॥

अथ व्याख्या । इन्द्रादयोऽपीति । अस्मिन् श्लोके चतुर्दश पदानि सन्ति तान्याह— इन्द्रादयः, अपि, यस्य, अन्तम्, न, ययुः, शब्दवारिधेः, प्रक्रियाम्, तस्य, कृत्स्नस्य, क्षमः, वक्तुम्, नरः, कथम् ॥

अथान्वयः । इन्द्रादयो देवाः अपिशब्दाद्व्यासवाल्मीक्यादय ऋषयोऽपि । अथवा । इन्द्रादयोऽष्टौ महाव्याकरणकर्तारोऽपि यस्य शब्दवारिधेः शब्दसमुद्रस्य व्याकरणस्यान्तं पारं न ययुर्न प्रापुः । तस्य कृत्स्नस्य समग्रस्य शब्दवारिधेः प्रक्रियां शब्दव्युत्पादनविधां वक्तुं नरः मल्लक्षणो मनुष्यः कथं क्षमः कथं समर्थो भवति । अतः कारणात् संक्षेपतः कथयामीत्यर्थः । इन्द्र आदिर्येषां ते इन्द्रादयः । 'इन्द्रश्चन्द्रः काशकृत्स्नाऽपिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः' इति ॥ २ ॥

**तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥**

अथ प्रथमं संज्ञाप्रक्रियायां विवक्षितायां संज्ञाव्याख्यानसूचिकां फक्किकामाह—**तत्र तावत्संज्ञेति** । तत्र तस्यां सारस्वतीप्रक्रियायां तावदादौ प्रथममेव समानस्वरादीनां संज्ञा नाम मया संगृह्यते । कस्मै प्रयोजनाय ? संव्यवहाराय सम्यक्शास्त्रव्यवहाराय । शास्त्रे हि संज्ञां विना न सम्यगवबुध्यते । यथा किल लोकेऽपि श्रूयते—अयं राजा अयममात्यः अयं यज्ञदत्तः अयं देवदत्त इत्यादि । तथाऽत्रापि समानादिसंज्ञा शास्त्रव्यवहाराय संगृह्यते इति भावः॥

**अइउऋऌ समानाः ॥ अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते । तेषां समानसंज्ञा च विधीयते ॥ नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥**

तत्र मातृकायां प्रथमं पठितत्वात् प्रथमं स्वराणामेव संज्ञामाह—सूत्रम् । '**अ इ उ ऋ ऌ समानाः** ।' अश्च, इश्च, उश्च, ऋश्च, ऌश्च, अइउऋऌ । प्रथमाबहुवचनान्तम् । साङ्केतिकत्वाज्जस्लोपः । यतः 'सूत्रे विभक्तिर्नैवास्ति वृत्तौ यत्रोपलभ्यते । एकद्वित्वबहुत्वादि तत्साङ्केतिकमुच्यते' । समानाः । समानं तुल्यं मानं परिमाणं येषां ते समानाः प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रोर्विसर्गः' ॥ यद्वा । अ इ उ ऋ ऌ इति प्रत्येकं प्रथमैकवचनान्तानि साङ्केतिकानि पञ्चैव भिन्नानि पदानि । समाना इति प्रथमाबहुवचनान्तम् । एवं षट्पदमिदं सूत्रम् । षट्पदत्वमेव युक्तम् । यतः 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति । यद्यपि 'अइकौ च मत्वर्थे' इत्यादौ समासेऽपि संधिर्न तथाऽप्यसार्वत्रिकोऽयं विधिरिति ॥ केचित्तु—एकाविति संधिरेव दृश्यते ॥ एतत्सूत्रं कार्यद्वयविधायकं वर्णपरिगणनानिरूपकं समानसंज्ञानिरूपकं चेत्यर्थः । तदेवाह— **अनेनेति** । अनेनोक्तवक्ष्यमाणसूत्रसमुच्चयेन प्रत्याहारग्रहणाय वर्णा अक्षराणि परि सामस्त्येन गण्यन्ते संख्याक्रियन्ते परिपाट्या प्रकाश्यन्ते । च पुनस्तेषां पूर्वोक्तानाम् अइउऋऌअक्षराणां समानसंज्ञा समान इति नाम विधीयते क्रियते । अथवा अभिधीयते कथ्यते ॥

ननु पञ्चानामकारादीनां न्यासवैसदृश्ये कथं समानसंज्ञा संजाघटीति ? अत्रोच्यते । एकमात्रत्वेन समानत्वमेतेषाम् ॥ ननु अइउऋऌ इत्यादिषु सूत्रेषु संधिः कथं न कृतस्तत्राह—**नैतेष्विति** । एतेषु उक्तवक्ष्यमाणेषु सूत्रेषु संधिर्नानुसंधेयः न कर्तव्यः । कस्मात् ? अविवक्षितत्वात् । वक्तुमिष्टो विवक्षितः । यद्वा वक्तुमिच्छा विवक्षा विवक्षा जाता अस्येति विवक्षितः न विवक्षितोऽविवक्षितः तस्य भावोऽविवक्षितत्वं तस्मादविवक्षितत्वात् । वक्तुमवाञ्छितत्वात् ॥ हेत्वन्तरमाह—**विवक्षितस्त्विति** । तु पुनर्विवक्षित एव संधिर्भवति नाविवक्षित इति नियमात् गुर्वाम्नायनिश्चयात् । यत्र संधौ कृते कार्यभ्रंशो भवति सोऽविवक्षितः संधिर्यथा—अ इ उ ऋ ऌ इत्यस्य य्वॢ इति स्यात् । यत्र च संधौ कृते कार्यसिद्धिर्भवति स विवक्षितः संधिः । यथा—ई च ऊ च ए च य्वे इत्यादिषु न निषेधः । हेतुमाह—**लौकिकेति** । लोक्यन्ते विलोक्यन्ते शब्दापशब्दा अनेनेति लोको व्याकरणं लोके भवा लौकिका अनादिसिद्धास्ते च ते प्रयोगाश्च लौकिकप्रयोगास्तेषां निष्पत्तिः सिद्धिः लौकिकप्रयोगनिष्पत्तिस्तस्यै लौकिकप्रयोगनिष्पत्तये । समयमात्रत्वात्सूचनामात्रकृत्त्वात् । विभक्त्यादिसंकेतरूपत्वाच्छास्त्रस्येति संधिर्न कृतः । अस्य व्याकरणस्य संकेतरूपत्वात् विभक्त्यनुपलम्भेऽपि अर्थानुसारेण सांकेतिकं पदं व्यवहर्तव्यम् ॥ चशब्दो हेत्वन्तरसूचकः । अत्र केऽप्याहुः । लोके भवा लौकिका बालास्तेषां प्रयोगनिष्पत्तिस्तस्यै सूचनमेवोक्तमत्रास्तीति भावः । अस्य व्याकरणस्य संकेतरूपत्वात् । विभक्त्यनुपलम्भेऽप्यर्थानुसारेण सांकेतिकं पदं व्यवहर्तव्यम् । कृते हि संधिकार्ये अउॠॡ इति पदं भवति तत्पाठे मन्दबुद्धयो जनाः सायासाः संजायन्ते यकारादीनां च स्वरसंज्ञाप्रसक्तिर्भवति अतोऽत्र संधिर्न कृतः ॥

**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । 'लोकाच्छेषस्य सिद्धि'रिति वक्ष्यति । ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्याः । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यञ्जनं चार्धमात्रकम् ॥**

> [एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
> त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥
> चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः ।
> शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥[1]]

अथैतानेव भिन्नतया विवृण्वन्नाह—'**ह्रस्वदीर्घ०**' । ह्रसति हीयते दीर्घापेक्षया इति ह्रस्वः । दृणाति विदारयत्युच्चार्यमाणो मुखमिति दीर्घः । प्लवते लङ्घते ह्रस्वदीर्घाविति प्लुतः । ततो ह्रस्वाश्च दीर्घाश्च प्लुताश्च ह्रस्वदीर्घप्लुतास्ते च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः । प्रथमाबहुवचनान्तम् । सदृशा वर्णाः सवर्णाः । 'सवर्णे दीर्घः सह' 'स्रोर्विसर्गः' ॥ एतेषां समानानां ह्रस्वदीर्घप्लुतभेदाः परस्परमन्योन्यं स्वजातीयेन सवर्णा भण्यन्ते कथ्यन्ते । यथा अ, ह्रस्वः । आ, दीर्घः । आ ३, प्लुतः ॥ इ, ह्रस्वः । ई, दीर्घः ई ३; प्लुतः ॥ उ, ह्रस्वः । ऊ,

---

१ क्वचिदेषोपलभ्येयाताम् । टीकायामेतदर्थकश्लोकान्तरस्योपलम्भात् ॥ प्राचीनपुस्तकेष्वनुपलम्भाच्च ॥

दीर्घः, । ऋ ३, प्लुतः ॥ ॠ, ह्रस्वः । ॠ, दीर्घः । ॠ ३, प्लुतः ॥ ऌ, ह्रस्वः । ॡ, दीर्घः । ॡ ३, प्लुतः ॥ एतेषां समानानामेव सवर्णत्वं न तु संध्यक्षराणाम् । तेन हरे अग्रे ए इत्यत्र 'सवर्णे दीर्घः सह' इति न भवति ॥ ननु सरस्वतीसूत्रेष्वनुक्तं ह्रस्वादीनां लक्षणं कुतो ज्ञायते इत्यत आह—**लोकादित्यादि** । शेषस्येह व्याकरणेऽनुक्तस्य सिद्धिर्निष्पत्तिर्लोकादन्यव्याकरणात् ज्ञेया । लोकात् गुरुपारम्पर्याद्वा अवगन्तव्येति शेषः । अस्य ग्रन्थस्यान्ते [ 'लोकात्–' ] इति पदं वक्ष्यति कथयिष्यति ॥ **ततो लोकत इत्यादि** ॥ ततस्तस्मात्कारणाल्लोकतोऽन्यव्याकरणादेव ह्रस्वादिसंज्ञा ज्ञातव्याः । तथा हि तदेव लोकोक्तमेव ह्रस्वादीनां लक्षणमाह—**एक०** । एका मात्रा उच्चारणकाले यस्य स एकमात्रो ह्रस्व उच्यते । मात्रा कालविशेषः स्यात् । अक्षिस्पन्दनप्रमाणः कालो मात्रा । **द्विमात्रो०** । द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घः । **त्रिमात्रः०** । तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतः । अर्धमात्रायां भवमार्धमात्रिकं व्यञ्जनमुच्यते ॥ केचित्तु व्यञ्जनं चार्धमात्रकमिति नोच्चरन्ति । व्यञ्जनस्यात्रानधिकारित्वात् ॥ यतः 'चाषो वदत्येकमात्रां द्विमात्रं वायसो वदेत् । त्रिमात्रं च शिखी ब्रूयान्नकुलश्चार्धमात्रिकम्' इति ॥

**एषामन्येऽप्युदात्तादिभेदाः सन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचैरनुदात्तः । समवृत्त्या स्वरितः । सानुनासिको निरनुनासिकश्च ॥**

किमेतावन्त एव भेदा इत्याशङ्क्याह —**एषामित्यादि** । एषां समानानां ह्रस्वादिभेदभिन्नानामप्यन्येऽपि लोकगम्या उदात्तादिभेदा उदात्तः १, अनुदात्तः २, स्वरितः ३, इति त्रयो भेदाः सन्ति ॥ उदात्तादीनां लक्षणमाह—**उच्चैरित्यादि** । वेदपाठकरणन्यासे उच्चैःस्थाने उपलभ्यमानः प्राप्यमाणः उच्चार्यमाणो वा उदात्तः प्रोच्यते । नीचैःस्थाने उच्चार्यमाणोऽनुदात्तः । नोच्चैर्न नीचैरिति समवृत्त्या स्वरेणोच्चार्यमाणो वर्णः स्वरितः । उदात्तादीनां तु प्रयोजनं वेदे एव ॥ अत्र तु प्रसङ्गवशादुक्तम् ॥ मुखनासिकाभ्यां कृत्वोच्चार्यमाणो वर्णः सानुनासिकः । तद्विपरीतो निरनुनासिकः । निर्गता नासिका उच्चार्यमाणकाले यस्मात्स निरनुनासिकः । किंतु केवलं मुखेनोच्चार्यमाणो वर्ण इत्यर्थः ॥ सानुनासिकः निरनुनासिकश्चेति पदं क्वचिन्न दृश्यतेऽपि । अनयोरत्र लक्षणस्यानुक्तत्वात् । अथ समाहृत्याह—यथा पञ्च समानाः ह्रस्वदीर्घप्लुतभेदात्पञ्चदश । तेऽप्युदात्तानुदात्तस्वरितभेदात्पञ्चचत्वारिंशत् भवन्ति । ते च सानुनासिकनिरनुनासिकभेदान्नवतिभेदाः समानानाम् ॥

**एऐओऔ संध्यक्षराणि ॥ एषां ह्रस्वा न सन्ति ॥ उभये स्वराः ॥ अकारादयः पञ्च, एकारादयश्चत्वारश्चोभये स्वरा उच्यन्ते । [ अइउऋऌएऐओऔ ] ॥**

**सूत्रम्—ए ऐ ओ औ संध्यक्षराणि** । द्विपदमिदं सूत्रम् । ए ऐ ओ औ प्रथमाबहुवचनान्तम् । सांकेतिकत्वाज्जसलोपः ॥ यद्वा—ए, प्रथमैकवचनान्तम् । ऐ, प्रथमैकवचनान्तम् । ओ, प्रथमैकवचनान्तम् । औ, प्रथमैकवचनान्तम् । सांकेतिकानि

१ 'स्वरेण' इति प्राचीनपुस्तकपाठः ॥ २ केनापि वर्धितलात्प्रक्षिप्तोऽयं पाठः ॥

चत्वारि पदानि । एवं पञ्चपदम् ॥ संध्यक्षराणि यथा समानानामेव संधिना कृत्वा एषां निष्पत्तिः । यथा—अकारइकारयोगे एकारः । अकारएकारयोगे ऐकारः । अकारउकारयोगे ओकारः । अकारओकारयोगे औकारः । यद्वा समानानां व्यञ्जनानां च संधौ मध्ये वर्तन्ते इति संध्यक्षराणि इति संध्यक्षरसिद्धिः । संध्यक्षरशब्दस्य प्रथमाबहुवचनान्तम् । 'जस्शसोः शिः' इ । 'नुमयमः' इकारात्पूर्वं नुमागमः । 'नोपधायाः' रस्थाने रा । 'ष्ट्रनोंणो०' 'स्वरहीनं०' ॥ ए ऐ, ओ, औ, एतानि चत्वार्यक्षराणि संध्यक्षरसंज्ञकानि भवन्ति । ततश्चैषां संध्यक्षराणां ह्रस्वभेदा न भवन्ति । एकमात्रकालाभावात् दीर्घप्लुता भवन्ति । परं सवर्णत्वं न । एतेषां संध्यक्षराणामष्टचत्वारिंशद्भेदा भवन्ति । यथा चतुर्णां संध्यक्षराणां दीर्घप्लुतभेदादष्ट । तेषां चाष्टानां प्रत्येकमुदात्तानुदात्तस्वरितभेदाच्चतुर्विंशतिः । तेषां च सानुनासिकनिरनुनासिकभेदादष्टचत्वारिंशदिति ॥ अथ समानसंध्यक्षराणामिति मिलितानां संज्ञामाह—सूत्रम्—**'उभये स्वराः'** द्विपदमिदं सूत्रम् । उभौ प्रकारावयवौ येषां ते उभये । उभयशब्दस्य प्रथमाबहुवचनान्तम् । 'जसी' 'अइ ए' ॥ स्वराः स्वयमनाश्रितत्वेन राजन्ते शोभन्ते इति स्वराः । प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रोर्विसर्गः'॥ अकारादयः पञ्च अ इ उ ऋ ऌ । चत्वार एकारादयश्च—ए ऐ ओ औ । एते उभये मिलिताः नवसंख्याः स्वरा उच्यन्ते कथ्यन्ते । **चकारात्समानानां** ह्रस्वदीर्घभेदमेलनेन चतुर्दश स्वरा भवन्ति । यथा—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥ केचित्तु अकारादयः पञ्च उभये उभयप्रकाराः ह्रस्वदीर्घा इति, चत्वार एकारादयश्च स्वरा उच्यन्ते इति व्याकुर्वन्ति ॥ परं न तत्सूत्रानुसाऽरि । यदा 'उभये' इत्यनेन अकारादय एव उभयप्रकारा गृह्यन्ते तदा चत्वार एकारादयः इति सूत्रे कुतः प्राप्यते ॥

**अवर्जा नामिनः ॥ अवर्णवर्जाः स्वरा नामिन उच्यन्ते ॥**

अथैतेष्वेव विशेषमाह—सूत्रम् 'अवर्जा नामिनः' द्विपदं सूत्रम् । अम् अवर्णं वर्जयन्तीत्यवर्णवर्जाः प्रथमाबहुवचनान्तम् । 'सवर्णे०' स्रोर्विसर्गः ॥ नामिन्शब्दस्य प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' ॥ अवर्णवर्जा अकाराकाररहिताः स्वराः इ ई उ ऊ ऋ ॠ

---

*** पाणिनीयमतेन स्वराणामष्टादशभेदकोष्टकम् ।**

| अ इ उ ऋ ऌ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|
| एकमात्रा ह्रस्वभेदाः । | द्विमात्रा दीर्घभेदाः । | द्विमात्राः प्लुतभेदाः । |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४ उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५ अनुदात्तानुनासिकः |
| ४ अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६ अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८ स्वरिताननुनासिकः |

ऌ ॡ ए ऐ ओ औ एते नामिन उच्यन्ते । नमनं नामः सोऽस्त्येष्विति नामिनः । अवर्णो नामी नोच्यते । लिपिन्यासे तस्य सरलत्वात् ॥

**अनुक्रान्तास्तावत्स्वराः ॥**

अथ स्वरोपसंहारमाह—अनुक्रान्ता इत्यादि । तावदादौ स्वरा अनुक्रान्ता अनुक्रमेण कथिताः ।

**अथ प्रत्याहारजिघ्राहयिषया व्यञ्जनान्यनुक्रामति ॥**

अथ व्यञ्जनान्याह—व्यञ्जयन्ते प्रकटीक्रियन्तेऽर्थाः प्रत्याहारा वा एभिरिति व्यञ्जनानि ॥ कया ? ग्राहयितुमिच्छा जिघ्राहयिषा प्रति कार्यं कार्यमाह्रियन्ते आनीयन्ते इति प्रत्याहारा अबादयस्तेषां प्रत्याहाराणां जिघ्राहयिषा प्रत्याहारजिघ्राहयिषा तया प्रत्याहारजिघ्राहयिषया कृत्वा व्यञ्जनान्मनुक्रामति अनुक्रमेण कथयति ॥

**हयवरल ॥ ञणनङम ॥ झढधघभ ॥ जडदगब ॥**

**छठथखफ ॥ चटतकप ॥ शषस ॥ आद्यन्ताभ्याम् ॥**

**प्रत्याहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येन गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि—अकारो बकारेण गृह्यमाणोऽबप्रत्याहारः ।**

कानि तानि व्यञ्जनानि । सूत्रम् हश्च यश्च वश्च यावत्सश्च इति द्वन्द्वः । प्रथमाबहुवचनान्तम् । सांकेतिकम् । हय यावदाद्यन्ताभ्यां द्विपदम् । आदिश्च अन्तश्च आद्यन्तौ ताभ्याम्। तृतीयाद्विवचनान्तम् 'अद्भिः' ॥ अथवा पञ्चमीद्विवचनान्तम् ॥ यद्वा हयवरलेति त्रयस्त्रिंशदपि प्रथमैकवचनान्तानि सांकेतिकानि पदानि । 'आद्यन्ताभ्यां' तृतीयाद्विवचनान्तम् । एवं चतुस्त्रिंशत्पदं सूत्रम् ॥ केचित्तु आद्यन्ताभ्यामित्येकपदं सूत्रं पृथक् मन्यन्ते ॥ क ख ग घ ङ इति क्रमं विहाय हयवरलेति क्रमः प्रत्याहारग्रहणार्थं कृतः । प्रतिकार्यमाह्रियते इति प्रत्याहारः तं प्रत्याहारं जिघृक्षता ग्रहीतुमिच्छता छात्रेण पुरुषेण वा आद्यन्ताभ्यां कृत्वा आद्यन्तवर्णाभ्यां सह एते हकारादयः सकारपर्यन्ता वर्णास्त्रयस्त्रिंशद्वसा ग्राह्याः । प्रत्याहारं व्यञ्जयन्नाह—आदिवर्णः आदौ वर्णः आदिवर्णः सोऽयमन्तस्थेन वर्णेन अक्षरेण सह गृह्यमाणः उच्चार्यमाणो वा अबप्रत्याहारादिस्तन्नामा प्रत्याहार उच्यते । तदेवाद्यन्तकं वर्णात्मकमेव नाम यस्य स तन्नामा ॥ अकार इत्यादि सुगमम् । न वरम् ॥

**स च अइउऋऌएऐओऔहयवरलञणनङमझढधघभजडदगब इति अबप्रत्याहारः । चटतकप इति चपप्रत्याहारः । झढधघभ इति झभप्रत्याहारः । जडदगब इति जबप्रत्याहारः ॥ एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं भवति स स तत्र तत्र ग्राह्यः । प्रत्याहाराणां संख्याऽनियमस्तु नास्ति ॥**

स च अबप्रत्याहारः इत्येतावत्संख्याक इत्यमुना प्रकारेणैतावता एकोनत्रिंशद्वर्णप्रमाणा संख्या यावत्संपद्यते भवति । आकारादिसवर्णग्रहणात्तु चतुस्त्रिंशद्वर्णप्रमाणसंख्या यस्य सः । एवं चटतकप इति पञ्चभिरक्षरैः चपप्रत्याहारो भवति । आद्यन्तयोश्चकारपकार-

ग्रहणेन चपः । एवं झढधघभ इत्याद्यन्तयोर्झकारभकारयोर्ग्रहणेन झभः । एवं जडदगब इत्यत्र जकारबकारयोर्ग्रहणेन जबः । एवमनुना प्रकारेण यत्र यत्रोदाहरणे येन येन प्रत्याहारेण सह कृत्यं कार्यं भवति स स प्रत्याहारस्तत्र तत्रोदाहरणे ग्राह्यः ॥ प्रत्याहाराणां संख्यानियमस्तु नास्ति यत् इयन्त एव प्रत्याहाराः सन्तीति ॥ केऽप्याहुः अनियमं व्यावर्तयितुमाह—संख्येति । अयमर्थः न नियमः अनियमः संख्याया अनियमः संख्यानियमः । प्रत्याहाराणां संख्याया अनियमो नास्ति । किं तर्हि नियम एव ॥ कथमाह—यतः । 'हसो झबो जबश्चैव यपो अब इलश्चपः । ञमो झभः खसः प्रोक्तो झसश्च छत ईरितः । यमो हबः खपश्चोक्तो डबश्च ढभ इष्यते । रसो वसः शसः ख्यातो झपो अव उदाहृतः ॥ ऊ उच्यते ततः प्राज्ञैः प्रत्याहारा उदाहृताः । सौत्रा एते स्फुटं ज्ञेयास्तथा चान्ये यथामति ॥' यदिवा—'भवलत एकैकस्मात् द्वाभ्यां मः स्यात्पबौ चतुर्भ्यः स्तः । सः षड्भ्यः स्यादित्थं प्रत्याहारास्तु विंशतिर्ज्ञेयाः ॥' झभ, अव, झल, छत, यम, ञम, यप, झप, खप, चप, अब, हब, जब, झब, हस, वस, रस, झस, खस, शस, एवमेते विंशतिः प्रत्याहाराः ॥

**हसा व्यञ्जनानि ॥ हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । स्वरहीनं व्यञ्जनम् ॥ तेष्वकारः सुखोच्चारणार्थत्वादित्संज्ञकः ॥**

अथ हसानां संज्ञामाह—सूत्रम् 'हसा व्यञ्जनानि' हसशब्दस्य प्रथमाबहुवचनान्तम् 'सवर्णे०' 'स्रोर्विसर्गः' ॥ व्यञ्ज्यन्ते प्रकटीक्रियन्ते अर्था यैस्तानि व्यञ्जनानि ॥ अथवा, विगतमञ्जनं स्वरलक्षणं येभ्यस्तानि । प्रथमाबहुवचनान्तम् । जस् । 'जस्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०' हकारमारभ्य सकारं यावत्त्रयस्त्रिंशदक्षराणि हसाः हससंज्ञानि प्रोच्यन्ते । द्वितीयनाम्नि व्यञ्जनानि प्रोच्यन्ते । व्यञ्जनलक्षणमाह—'स्वरहीनं व्यञ्जनम्' यत्स्वरहीनं तद्व्यञ्जनं यत्स्वरेभ्यो हीनं रहितम् । यद्वा स्वरेभ्यो हीनं व्यतिरिक्तम् अन्यत् । यद्वा स्वरत्वहीनमपरं यदक्षरं तद्व्यञ्जनसंज्ञं कथ्यते ॥ ननु हकारादयः सस्वरा वर्णाः कथं व्यञ्जनसंज्ञाः? इत्याह—तेषु व्यञ्जनेषु अकारः सुखोच्चारणार्थत्वात् । सुखेनोच्चारणमेव अर्थः प्रयोजनं यस्य स सुखोच्चारणार्थस्तस्य भावः सुखोच्चारणार्थत्वं तस्मात् । इत्संज्ञकः॥

**कार्यायेत् ॥ प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञो भवति ॥ यस्येत्संज्ञा तस्य लोपः ॥ वर्णादर्शनं लोपः ॥ वर्णविरोधो लोपश्च ॥ मित्रवदागमः ॥ शत्रुवदादेशः ॥ स्वरानन्तरिता हसाः संयोगः ॥ कुचुटुतुपु वर्गाः ॥ उकारः पञ्चवर्णपरिग्रहणार्थः ॥**

---

१ बालबोधाय प्रत्याहारसंग्रहोऽयं क्रियते ।

| १ हस | २ झब | ३ जब | ४ यप | ५ अब | ६ इल |
|---|---|---|---|---|---|
| ७ चप | ८ ञम | ९ झभ | १० खस | ११ झस | १२ छत |
| १३ यम | १४ हब | १५ खप | १६ डब | १७ ढभ | १८ रस |
| १९ वस | २० शस | २१ छप | २२ अव | २३ ओ | २४ भब |

इतो लक्षणमाह—'कार्यायेत्' द्विपदं सूत्रम् । कार्यशब्दस्य चतुर्थ्येकवचनान्तम् । 'ङेरक्' 'एअय्' 'सवर्णे०' 'स्वरहीनं०' ।। इत् एति गच्छति इत् । प्रथमैकवचनान्तम् 'हसेपः सेः' पदद्वये न संधिः 'अइ ए' ।। प्रत्ययादीति । आदिशब्दात् प्रत्ययागमादेशोपदेशेभ्योऽतिरिक्तोधिकः प्रत्ययादतिरिक्तः । अप्प्रत्ययादिः आगमातिरिक्तः । नुडागमादिः उपदेशः शिष्याख्यारूपः ह्यवरलेत्यादिः आदेशः 'पुंसोऽसुङ्' इत्यादिरूपः एषु कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञकोऽनुबन्धसंज्ञको भवतीति ।। कृत्यमाह—यस्येत्संज्ञा तस्य लोपः क्रियते । उच्चरितप्रध्वंसिनो ह्यनुबन्धा इति ।। लोपलक्षणमाह—वर्णाद०।। वर्णानामक्षराणामदर्शनमविलोकनं प्रध्वंसाभावो लोप उच्यते ।। वर्णानां विरोधः संधिकार्यवर्जनं यस्मिन् स लोप एव लोपश् कथ्यते । एकं वर्णं विनाशयत्यन्यस्योत्पत्तिं प्रतिबध्नातीति लोपश् । तत्कार्यं—'लोपशि पुनर्न संधिः' । यथा—त आगता इत्यादि ।। ( आगच्छतीत्यागमः ) ।। आगमो मित्रवत् । यथा मित्रं मित्रस्य समीपे आगत्योपविशति तथागमोऽप्यायाति । यथा 'नः सक् छते' इति सगादिः ।। आदेशः शत्रुवत् । यथा शत्रुः शत्रुं विनाश्य तत्स्थाने तिष्ठति तथा आदेशोऽप्यादेशिनं विनाश्य तस्य स्थाने भवति । शसः सकारस्य नकारादेशवत् ।। अथ संयोगसंज्ञामाह—'स्वरानन्तरिता०' इति । अन्तरं जातं येषां तेऽन्तरिताः न अन्तरिता अनन्तरिताः स्वरैरनन्तरिताः स्वरानन्तरिताः स्वरान्तररहिता ईदृशा हसा व्यञ्जनवर्णाः संयोगसंज्ञा उच्यन्ते । अत्र बहुवचनं जात्यभिप्रायेण । तेन द्वयोरपि हसयोः संयोगसंज्ञा स्यात् । यद्वा हसौ च हसाश्च हसाः एकशेषः समासः । संयोगकार्यं तु 'संयोगान्तस्य लोपः' इत्यादि ।। वर्गसंज्ञामाह—कुचुटुतुपु इति । कुश्च चुश्च टुश्च तुश्च पुश्च कुचुटुतुपु प्रथमाबहुवचनान्तम् । सांकेतिकम् । वर्गाः प्रथमाबहुवचनान्तम् । 'सवर्णे दीर्घः०' 'स्रोर्विसर्गः' ।। एते पञ्च वर्गसंज्ञका भवन्ति । तत्कार्यं 'स्तोः श्चुभिः श्चुः' 'ष्टुभिः ष्टुः' 'कुप्वोः ᳵक ᳶपौ वा' इत्यादि । उकारे हेतुमाह—उकारः स्वरेषु पञ्चमी मात्रा उकारस्तेन कुइत्युक्ते कखगघङ । चु इत्युक्ते चछजझञ । टुइत्युक्ते टठडढण । तुइत्युक्ते तथदधन, पुइत्युक्ते पफबभम इत्येतानि [लौकिकपाठे] पञ्च पञ्चाक्षराणि गृह्यन्ते।

**अरेदोन्नामिनो गुणः ।। नामिस्थानिकाः अर् ए ओ एते गुणसंज्ञका भवन्ति ।। आरैऔ वृद्धिः ।। आ आर् ऐ औ एते वृद्धिसंज्ञा भवन्ति ।।**

अथ गुणसंज्ञामाह—'अरेदो'० अर् च एत् च ओत् च अरेदोत् प्रथमाबहुवचनान्तम् सांकेतिकम् । अत्र तपरकरणमसंदेहार्थम् । नामिनः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः'।। गुणः प्रथमैकवचनम् । 'स्रोर्विसर्गः' ।। मध्ये—'हवे' 'उओ' ।। यद्वा अर् प्रथमैकवचनान्तम् । एत् प्रथमैकवचनान्तम् । ओत् प्रथमैकवचनान्तम् । नामिनः षष्ठ्येकवचनान्तम् । गुणः प्रथमैकवचनान्तम् । इति पञ्चपदं वा सूत्रम् । नामिस्थानिका नामिनां स्थाने जाता ऋकारस्य, ॠकारस्य, च अर्, इकारस्य ईकारस्य च ए, उकारस्य ऊकारस्य ओ, एते च त्रयो गुणसंज्ञका भवन्ति । ऌकारस्तु सावर्ण्यात् ग्राह्यः । तेन ऌकारस्य अल् गुणः । तत्कार्याणि 'गुणः' 'उपधाया लघोः' इत्यादीनि ।। अथ वृद्धिसंज्ञामाह—'आरैऔ०' इति । आ च आर् च ऐ च औ च आरैऔ प्रथमाबहुवचनान्तम् । सांकेतिकत्वाद्विभक्तिलोपः । 'वृद्धिः' प्रथमैकवचनान्तम् । अथवा आ प्रथमैकवचनान्तम् । आर् प्रथमैकवचनान्तम् । ऐ प्रथमैक-

वचनम् । औ प्रथमैकवचनम् । वृद्धिः प्रथमैकवचनान्तम् । एवं पञ्चपदं सूत्रम् । अकारस्य आ वृद्धिः । ऋकारस्य आर् वृद्धिः । इवर्णस्य एकारस्य ऐ वृद्धिः । उवर्णस्य ओकारस्य च औ वृद्धिः । एते चत्वारो वृद्धिसंज्ञका उच्यन्ते । ऋकारलकारयोः सावर्ण्यादेव लकारस्याल् वृद्धिः । तत्कार्याणि आदिस्वरस्य ञ्णिति वृद्धिः 'धातोर्नामिनः' 'अत उपधायाः' इत्यादीनि ॥

**अन्त्यस्वरादिष्टिः ॥ अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञो भवति ॥ अन्त्यात्पूर्व उपधा ॥ अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञो भवति ॥**

अथ टिसंज्ञामाह—अन्त्यस्वरादिः प्रथमैकवचनान्तम् । टिः प्रथमैकवचनान्तम् । द्विपदम् । अन्ते भवोऽन्त्यः अन्त्यो योऽसौ स्वरः अन्त्यस्वरः स आदौ यस्य सोऽन्त्यस्वरादिः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' । टिः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' मध्ये 'विसर्जनीयस्य सः' । 'ष्टुभिः ष्टुः' 'स्वरहीनं०' ॥ अन्त्यो यः स्वरस्तदादिवर्णः सोऽन्त्यस्वर एवादौ यस्य सोऽन्त्यस्वरादिस्तेन सहैव अन्त्यस्वरादारभ्य वर्णष्टिसंज्ञो भवति । अथवा अन्त्यः स्वरस्तदादिवर्णश्च सोऽन्त्यस्वर एवादौ यस्य सोऽपि वर्णष्टिसंज्ञको भवति । स्वरान्तशब्दस्यान्तिमः स्वर एव टिसंज्ञः । हसान्तशब्दस्यान्त्यो हसस्तत्पाश्चात्यः स्वरश्च द्वावपि टिसंज्ञकावित्यर्थः । तत्कार्यं तु 'डिति टेः' इत्यादि । यथा अचिन्त्यमहिमा । हरौ सखा ॥ अथोपधासंज्ञामाह—सूत्रम् । अन्त्यादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' । 'सवर्णे०' । पूर्वः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः'॥ उपधा प्रथमैकवचनान्तम् । 'आपः' त्रिपदम् । अन्त्याद्वर्णमात्रात्केवलादक्षरात्पूर्वो वर्णः स उपधासंज्ञको भवति । तत्कार्याणि 'नोपधायाः' 'अत उपधायाः' इत्यादीनि राजन्शब्दवत् ॥

**असंयोगादिपरो ह्रस्वो लघुः ॥ विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुः ॥ मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः ॥ मुखेनोच्चार्यमाणो निरनुनासिकः ॥ अः इति विसर्जनीयः ॥ वर्णशिरोबिन्दुरनुस्वारः ॥ [ कस्य पुनः किं स्थानमित्यपेक्षायां ][1] अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्त्योष्ठम् । जिह्वामूलीयस्य जिह्वमूलम् । नासिकाऽनुस्वारस्य ॥ [ ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । शषसहा ऊष्माणः । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः ॥ ][2]**

॥ इति संज्ञाप्रक्रिया ॥

---

१ अयं स्थानबोधकपाठः प्राचीनपुस्तकेऽपि टीकास्थ एव केनचिद् वर्धितो भवेत् ॥
२ अयं केनचित् क्वचिद् वर्धितः. प्राचीनपुस्तकेऽनुपलम्भात् ॥

अथ लघुसंज्ञामाह—असंयोगादीति । असंयोगादयः संयोगविसर्गानुस्वाराः परे अग्रस्था यस्मात्स संयोगादिपरः न संयोगादिपरः असंयोगादिपरः एवंभूतो ह्रस्वो वर्णो लघुरुच्यते । तथा चोक्तं प्राकृतच्छन्दोग्रन्थे 'पिछुडी लघुअं कुंडउ केवल वन्नउ जोय । ए तीनउ लघु जाणिये अवर सवे गुरु होय' । यथा । ककिकु तथा अइउऋऌ एतेषामग्रे विसर्गानुस्वार-संयोगा न भवन्ति तदैतेषां लघुसंज्ञा । अथ गुरुसंज्ञामाह—विसर्गानुस्वार इति विस-र्गानुस्वारसंयोगाः परे अग्रे वर्तमाना यस्मात्स विसर्गानुस्वारसंयोगपरः । विसर्गपरो यथा अः । अनुस्वारपरः अम् । संयोगपरो यथा अस्य । एवंभूतो ह्रस्वोऽपि गुरुः । पुनर्दीर्घश्च । आ ई ऊ का की कू रूपः स्वभावादेव गुरुरुच्यते ॥ मुखनासिकाभ्यामिति रूढिपदम् । अन्यथा द्विवचनं न संभवति । यथोक्तं प्रक्रियाकौमुद्याम् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' । एषां द्वन्द्व एकवत्साध्यः । एकवचनान्तो भवतीत्यर्थः । प्राण्यङ्गे दन्तौष्ठं मुखनासिकम्, तूर्याङ्गे मार्दङ्गिकपाणविकम् । सेनाङ्गे रथिकाश्वारोहमिति वचनात् ॥ मुखनासिकाभ्यां द्वाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकसंज्ञ उच्यते । 'ञणनङम अनुनासिका' इति । मुखादनु पश्चान्नासिकां स्पृशन्तीत्यनुनासिकाः ॥ चतुर्दश स्वराः, त्रयस्त्रिंशद्व्यञ्जनानि, अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, प्लुतश्च एवं द्विपञ्चाशदक्षराणि । एतेषामष्टौ स्थानानि सन्ति । तान्याह—अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । जिह्वामूलीयस्य जिह्वामूलम् । अनुस्वारस्य नासिका । एदैतोः कण्ठतालु । ओदौतोः कण्ठौष्ठम् । वकारस्य दन्तौष्ठम् । आ ई ऊ ॠ ॡ प्लुताश्च । एते एतेषां सवर्णग्रहणेनैव गृह्यन्ते । यवरलैर्ञणनङमैश्च संयुक्तस्य हस्योरः स्थानम् । यतः—

"हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यं तद्विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥
गजकुम्भाकृतिर्वर्ण ॠवर्णः स प्रकीर्तितः ।
एवं वर्णा द्विपञ्चाशन्मातृकायामुदाहृताः ॥"

### * बालबोधार्थं वर्णोद्भवस्थानकोष्टकम् ।

| अ | इ | ऋ | ऌ | उ | ञ | ए | ओ | व | ᳵक | ं |
|---|---|---|---|---|---|---|---|---|---|---|
| क | च | ट | त | प | म | ऐ | औ | | | |
| ख | छ | ठ | थ | फ | ङ | | | | | |
| ग | ज | ड | द | ब | ण | संध्यक्षराणि | संध्यक्षराणि | | | |
| घ | झ | ढ | ध | भ | न | | | | | अनु. |
| ङ | ञ | ण | न | म | | | | | | |
| ह | य | र | ल | ᳶप | | | | | | |
| | श | ष | स | | | | | | | |
| कंठः | तालु | मूर्धा | दंताः | ओष्ठौ | नासिका | कं.ता. | कं.ओ. | दं.ओ. | जि.मू. | नासिका |

**वर्णग्रहणे सवर्णग्रहणम् । कारग्रहणे केवलग्रहणम् । तपरकरणं तावन्मात्रार्थम् ॥ ॥ इति संज्ञाप्रक्रिया ॥ १ ॥**

वर्णग्रहणे सवर्णग्रहणं, कारग्रहणे केवलग्रहणं, तपरग्रहणे तावन्मात्रग्रहणमिति शिष्टसंकेतः ॥

इति संज्ञाप्रक्रिया संज्ञाधिकारः ॥ 'प्रक्रियात्वधिकारोऽथ' इति हेमसूरिः । अथवा—'प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः' ॥

---

## अथ स्वरसंधिः २

**अथाधुना स्वरसंधिरभिधीयते ॥ दधि आनय इति स्थिते ॥**

अधुनेति । संज्ञाकथनानन्तरं स्वरसंधिरभिधीयते कथ्यते । अक्षराणामन्योन्यं संधानं मेलनं संधिः । तत्राप्यादौ स्वरसंधिः स्वराणां संधिः स्वरसंधिः ॥ ननु सति अकारे इकारसंधिरादावेव कथं प्रतिपादितः ? । तत्रोच्यते—इकारः सावित्रीरूपः शक्तिरूपः । सा च सर्वजगत्सृष्टिकर्त्री । तस्मात्पूर्वं प्रतिपादितः ॥

**इ यं स्वरे ॥ इवर्णो यत्वमापद्यते स्वरे परे ॥ दध् य् आनय इति तावद्भवति ॥**

---

### * आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं कोष्टकम् ।

| आभ्यन्तर प्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृताः |
|---|---|---|---|---|---|---|---|---|
| संज्ञाः | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः उदात्तानुदात्तस्वरिताः | |
| व्यञ्जनानि स्वराश्च | क ख<br>प फ<br>च छ<br>ट ठ<br>त थ | ग ङ<br>ब ञ<br>ज म<br>ड ण<br>द न | घ<br>भ<br>झ<br>ढ<br>ध | य<br>व<br>र<br>ल | श<br>ष<br>स | ह | अ इ ए<br>उ ओ<br>ऋ ऐ<br>ऌ औ | अ<br>ह्रस्वप्रयोगे |
| बाह्यप्रयत्नाः | अ.प्रा.म.प्रा.<br>विवार<br>श्वास<br>अघोष | अ. प्रा.<br>संवार<br>नाद<br>घोष | म.प्रा.<br>संवार<br>नाद.<br>घोष | अल्पप्रा.<br>संवार<br>नाद<br>घोष | म.<br>विवार<br>श्वास<br>अघोष | प्रा.<br>सं.<br>ना.<br>घो. | अल्प प्राण<br>विवार<br>नाद<br>घोष | अल्पप्रा.<br>संवार<br>नाद<br>घोष |

१ इतः परम् "तस्मिन्निति निर्दिष्टे पूर्वस्य" । सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् । अतो वृत्तौ 'परे' इति व्याचष्टे । एवमन्यत्रापि ज्ञेयम् ॥ इत्यधिकः पाठः क्वचित् केनचित् प्रक्षिप्तः ।

सूत्रम्—'इ यं स्वरे' इ प्रथमैकवचनान्तम् । सांकेतिकम् । यम् द्वितीयैकवचनान्तम् । 'अम्शसो०' 'मोऽनुस्वारः' । स्वरे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् ॥ यद्वा इश्च ईश्च इ प्रथमैकवचनान्तम् । 'नपुंसकस्य' इति ह्रस्वः । 'नपुंसकात्स्वमोर्लुक्' 'वर्णग्रहणे सवर्णग्रहणम्' इति वचनात् इवर्ण इकार ईकाररूपो यत्वं यकारमापद्यते प्राप्नोति स्वरे परे । 'ह्रस्वदीर्घप्लुतभेदा' इति अकारस्य स्वरत्वे आकारस्यापि स्वरत्वं सिद्धमेव । दधि अग्रे आनय । 'इ यं स्वरे' अनेन सूत्रेण इकारस्य यकारः । दध्य् आनय इति जातम् । ननु दधि आनयेत्यत्र 'नामिनः स्वरे' इति नुमागमः कथं न क्रियते ? तत्राह—'नामिनः स्वरे' इति तु स्यादिविभक्तिसप्तकस्वरे परे भवति न त्वन्यत्र । तर्हि 'यस्य लोपः' कथं न क्रियते ? तत्राह—'यस्य लोपः' इति तु ईपि, तद्धिते (कृते) स्वरे यकारे च परे सति भवति न त्वन्यत्र । दध्य् आनयेत्यत्र 'संयोगान्तस्य लोपः' इत्यस्य प्राप्तौ । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति यलोपनिषेधः । यद्वा । 'संयोगान्तस्य लोपः' इति स्वाभाविकसंयोगान्तविषयः ॥ प्रक्रियायां तु 'संयोगान्तस्य०' इति लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' ॥

**हसेऽर्हहसः ॥ स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । इति धकारस्य द्वित्वम् ॥**

कृत्यान्तरमाह—सूत्रम्—'हसेऽर्हहसः' ॥ हसे सप्तम्येकवचनान्तम् । 'अ इ ए' र् च ह् च र्ह् न र्ह् यत्र स अर्ह् प्रथमैकवचनान्तम् 'हसेपः सेर्लोपः' । हसः प्रथमैकवचनान्तम् । स । 'स्रोर्विसर्गः' । हसे अर्ह् । 'एदोतोतः' अकारलोपः । 'स्वरहीनं०' सिद्धम् । स्वरात् ह्रस्वस्वरात्परोऽग्रे वर्तमानो रेफहकारवर्जितोऽन्यो हसो हसप्रत्याहारसंबन्धी वर्णो हसे परे सति द्विर्भवति । द्वयोर्भावो द्वित्वम् । एकस्य द्वौ भवत इत्यर्थः । इति धकारस्य द्वित्वम् । द्वित्वे कृते पुनर्द्वित्वं न भवति । अनवस्थादोषप्रसङ्गात् । द्वित्वविधानात् द्वावेव शिष्येते इति दध्ध्य् आनयेति जातम् ॥

**झबे जबाः ॥ झसानां झबे परे जबा भवन्ति । इति पूर्वधकारस्य दकारः सवर्णत्वात्, 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् । यथासंख्यं वा वक्तव्यम् ॥ स्वरहीनं परेण संयोज्यम् ॥ दध्यानय इति सिद्धम् ॥**

**[तक्रं न रोचतेऽस्माकं दुग्धं च मधुरायते ।**
**अन्नप्ररोचनार्थाय दध्यानय वरानने ॥ ८ ॥**
**दधि न श्रूयते कर्णे घृतं स्वप्ने न दृश्यते ।**
**मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ ९ ॥**
**कृतस्य करणं नास्ति मृतस्य मरणं न हि ।**
**पिष्टस्य पेषणं नास्ति द्वितीये त्रितयं न हि ॥ १० ॥**

सूत्रम् । 'झबे जबाः' झबे सप्तम्येकवचनान्तम् । 'अ इ ए' । जबाः प्रथमाबहुवचनान्तम् ।

---

१ 'झभे' इत्यनुचितम् 'झशि' इति पाणिनीयसंवादात् 'सज्जते' इत्याद्यर्थं तथावश्यकत्वात् ॥ २ इदं श्लोकत्रिकं प्राचीनपुस्तकेषु नोपलभ्यते ॥

'सवर्णे०' 'स्रोर्विसर्गः' । वृत्तिः सुगमा । अत्र सूत्रे झसानामिति पदं 'खसे चपा झसानाम्' इति सूत्रादनुवर्तते । अन्यत्राप्यनुवृत्तिः सरस्वतीदत्तसूत्रपाठक्रमादवगन्तव्या । अत्र तु मया न कथयिष्यते । अनेन सूत्रेण पूर्वधकारस्य दकारः । ननु झसास्त्रयोविंशतिः जबाः पञ्चैव तेन यथासंख्यमिति धकारस्य दकार एव कथं क्रियते? तत्राह—सवर्णत्वात् धकारस्य दकारो भवति । ननु धकारदकारयोः सावर्ण्यं कथमित्याह—वर्ग्यो वर्ग्येण सवर्ण इति । वर्गे भवो वर्ग्यो वर्णः वर्ग्येण स्ववर्गान्तर्वर्तिना अक्षरेण सह सवर्णो भवतीति । सवर्णत्वात् धस्य दः ॥ यद्वा—यथासंख्यं झढध, जडदेत्यनेनापि धस्य दः । अत्र तु सवर्णत्वात् यथासंख्यमित्युभयत्रापि धस्य दकारो भवति । परम् अग्निमथ्भ्यामित्यत्र सवर्णत्वादेव थकारस्य दकारो भवति । न तु यथासंख्यम् ॥ स्वरेण हीनं रहितं यदक्षरं तत्परेण अग्रस्थितेन स्वरेण वर्णेन सह संयोज्यम् । दध्यानयेति सिद्धम् । एवम् स्वस्ति अस्तु स्वस्त्यस्तु । हरि अनुभवः । हर्यनुभवः ॥

**गौरी अत्र इति स्थिते । इ यं स्वरे । गौर् य् अत्र तावद्भवति । यत्वे कृते अर्हे इति विशेषणान्न रेफस्य द्वित्वं किंतु? ॥ राद्यपो द्विः ॥ स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । इति यकारस्य द्वित्वम् । गौर् य् य् अत्र । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् । स्वरहीनं परेण संयोज्यम् । गौर्य्यत्र ॥**

इकारोदाहरणमाख्याय ईकारोदाहरणमाह—गौरी अग्रे अत्र 'इयं स्वरे' गौर् य् अत्र इति जातम् । ततोऽर्हे इति सूत्रोक्तविशेषणात् रेफहकारयोर्द्वित्ववर्जनादत्र रेफस्य द्वित्वं न भवति । ततः किं कर्तव्यमित्याह—सूत्रम्—'राद्यपो द्विः' ॥ रादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' ॥ यपः प्रथमैकवचनान्तम् । स्—'स्रोर्विसर्गः' । 'द्वित्रिभ्यां सुच्' 'स्रोर्विसर्गः' ॥ द्विस् प्रथमैकवचनान्तम् । 'अव्ययाद्विभक्तेर्लुक्' इति लोपः । 'चपा अबे जबाः' संधिः । यपः अग्रे द्विः । अत्र 'हबे' 'उ ओ०' सिद्धम् । स्वरः पूर्व आदौ यस्य स स्वरपूर्वः तस्मात् स्वरात्परस्माद्रेफात्परोऽग्रस्थो यपो द्विर्भवति इति यकारस्य द्वित्वम् ॥ 'जलतुम्बि०' यथा तुम्बी जलस्योपरि तिष्ठति तथा रेफोऽपि वर्णस्योपरि गच्छति नत्वधः ॥ 'स्वरहीनं०' गौर्य्यत्रेति सिद्धम् । केचित्तु दीर्घस्वराग्रस्थात् रेफात् परस्य यपस्य द्वित्वं नेच्छन्ति तन्मते गौर्यत्रेति सिध्यति । एवं नदी एषा नद्येषा ।

**स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदान्तरानुवृत्तिर्ज्ञातव्या ॥ ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥**

इतोऽग्रे स्वरसंधिं यावत् सर्वेष्वपि सूत्रेषु 'स्वरे' इति पदमनुवर्तते अन्वागच्छति । अनुक्तमपि ज्ञेयमित्यर्थः । यथा 'इ यं स्वरे' इत्यत्र स्वरे इति पदम् । तथा तत्र 'उ वम्' इत्यादिष्वपि प्राग्वत् ज्ञेयम् । एवममुना प्रकारेण अन्यत्र योगेष्वपि यत्र केवलसूत्राक्षरैः

---

१ जलतुम्बिकान्यायस्तु—

'तुम्बिका तृणकाष्ठं च तैलं जलसमागमे । ऊर्ध्वस्थानं समायान्ति रेफाणामीदृशी गतिः ॥ १ ॥
रेफः स्वरपरं वर्णं दृष्ट्वा रोहति तच्छिरः । पुरः स्थितं यदा पश्येदधः संक्रमते स्वरम् ॥ २ ॥

इति श्लोकाभ्यां प्रदर्शितः क्वचित्पुस्तके ।

कार्यसिद्धिर्न भवति तत्र योगे सूत्रान्तरादन्यसूत्रात्पदान्तरस्य अन्यपदस्यानुवृत्तिर्ज्ञेया ग्रन्थस्य शास्त्रस्य भूयस्त्वभयात् प्राचुर्यभयात् सूत्रे तत्तत्पदमस्माभिर्न लिख्यते ॥ केचित्तु आभिः सरस्वतीभिर्न लिख्यते स इति व्याकुर्वन्ति ॥ शेषं सुगमम् ॥

**उ वम् ॥ उवर्णो वत्वमापद्यते स्वरे परे । [ हसेऽर्हहसः । 'झबे जबाः' ] मधु+अत्र मद्ध्वत्र [ मधु अरिः मद्ध्वरिः । वधू आसनं वद्ध्वासनम् ] ॥**

सूत्रम्—'उ वम्' ॥ उ प्रथमैकवचनान्तम् । सांकेतिकम् । यद्वा—उश्च ऊश्च ऊ प्रथमैकवचनम् । 'नपुंसकस्य' इति ह्रस्वः । 'नपुंसका०' ॥ वम् इति द्वितीयैकवचनान्तम् । 'अम्-शसोः०' 'मोऽनुस्वारः' ॥ तपरकरणं विना कारग्रहणं च विना वर्ण एव गृह्यते । तेन उ इत्युक्ते उवर्णः उकार ऊकाररूपो वत्वं वकारं प्राप्नोति स्वरे परे ॥ 'मधु अग्रे अत्र' अत्र 'उ वम्' इति उकारस्य वकारः । 'हसेऽर्हहसः' इति धकारस्य द्वित्वम् । 'झबे जबाः' इति पूर्वधकारस्य दकारः । 'स्वरहीनं०' मद्ध्वत्रेति सिद्धम् । मधु क्षौद्रमत्र वर्तते । एवं वधू आसनं वद्ध्वासनम् ॥

**ऋ रम् ॥ ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः पित्रर्थः । [ मातृ अर्थः मात्रर्थः ] ॥**

सूत्रम्—'ऋ रम्' ॥ ऋ प्रथमैकवचनान्तम् । सांकेतिकत्वात् सिलोपः । रं द्वितीयैकवचनान्तम् । 'अम्शसोः०' 'मोऽनुस्वारः' ॥ ऋवर्णस्य रकारो भवति स्वरे परे । पितृ अग्रे अर्थः । 'ऋ रम्' 'हसेऽर्हहसः' 'स्वरहीनं०' पित्रर्थः ॥

**लृ लम् ॥ लृवर्णो लत्वमापद्यते स्वरे परे । लृ अनुबन्धः लनुबन्धः । [ लृ आकृतिः लाकृतिः ] ॥**

सूत्रम्—'लृ लम्' ॥ प्रथमैकवचनान्तम् । साङ्केतिकत्वात् ॥ लं द्वितीयैकवचनान्तम् । 'अम्शसोः०' 'मोऽनुस्वारः' ॥ लृवर्णस्य लकारो भवति स्वरे परे ॥ लृ अग्रे अनुबन्धः । 'लृ लम्' 'स्वरहीनं०' लनुबन्धः ॥ लृ लृकार अनुबन्धः इत्संज्ञो यस्य धातोः स लनुबन्ध उच्यते । एवं लृ अग्रे आकृतिः लाकृतिः । लृ इत् लित् ।

**ए अय् ॥ एकारो अय् भवति स्वरे परे । ने अनं नयनम् ॥**

सूत्रम्—'ए अय्' ॥ ए प्रथमैकवचनान्तम् । सांकेतिकम् । अय् प्रथमैकवचनान्तम् । 'हसे पः०' एकारस्य अय् भवति स्वरे परे । णीञ् प्रापणे णी । 'आदेः ष्णः स्नः' नी 'भावे युट्' 'युवोरनाकौ' इति युस्थाने अनः । गुणः । ने अनम् 'ए अय्' अनेन एकारस्य अय् भवति । 'स्वरहीनं०' 'अतोऽम्' 'अम्शसोः०' 'मोऽनुस्वारः' नयनमिति सिद्धम् ।

**ओ अव् ॥ ओकारो अव् भवति स्वरे परे । भो अति भवति ।**

सूत्रम्—'ओ अव्' ॥ ओ प्रथमैकवचनान्तम् । सांकेतिकम् । अव् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ व्याख्या सुगमा । भो अग्रे अति । 'ओ अव्' 'स्वर०' भवति इति सिद्धम् ॥

**क्वचित्स्वरवद्यकारः । यथाध्वपरिमाणे गो यूतिः गव्यूतिः ॥ अन्यत्र गवां मिश्रीभावो गोयूतिः ॥**

कचित्प्रयोगान्तरे यकारः स्वरवदवसेयः । स्वरेण तुल्यः स्वरवत् । स्वरे परे सति यत्कार्यं भवति तत् यकारे परेऽपि भवतीत्यर्थः । यथा अध्वपरिमाणे मार्गपरिमाणे वाच्ये सति गो अग्रे यूतिः अत्र यकारस्य स्वरत्वात् 'ओ अव्' 'स्वरहीनं०' गव्यूतिः । क्रोशद्वयम् । अन्यत्र तु मार्गप्रमाणाभावे गवां मिश्रीभावः एकीभावे समूहीभवने गोयूतिरित्येव तिष्ठति सिद्धम् । एवं पितृ अग्रे यं पित्र्यमित्यपि ज्ञेयम् ॥

**ऐ आय् ॥ ऐकार आय् भवति स्वरे परे । नै अकः नायकः ॥**

सूत्रम्—'ऐ आय्' ॥ ऐ प्रथमैकवचनान्तम् । सांकेतिकम् । आय् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ ऐकारः आय् भवति स्वरे परे । नै अग्रे अकः । 'ऐ आय्' 'स्वरहीनं०' नायकः ॥

**औ आव् ॥ औकार आव् भवति स्वरे परे । तौ इह ताविह ॥**

सूत्रम्—'औ आव्' ॥ औ प्रथमैकवचनान्तम् । सांकेतिम् । आव् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ औकारः आव् भवति स्वरे परे । तौ अग्रे इह । 'औ आव्' 'स्वरहीनं०' ताविहेति सिद्धम् ॥

**य्वोर्लोपश् वा पदान्ते ॥ पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति । ते आगताः त आगताः तयागताः । तस्मै एतत् तस्मा एतत् तस्मायेतत् । पटो इह पट इह पटविह । तौ इमौ ता इमौ ताविमौ । तस्मै आसनं तस्मा आसनम् तस्मायासनम् । असौ इन्दुः असा इन्दुः असाविन्दुः ॥ लोपशि पुनर्न संधिः ॥ छन्दसि तु भवति । हे सखे इति हे सखेति हे सखयिति ॥**

सूत्रम्—'य्वोर्लोपश् वा पदान्ते' ॥ य् च व् च य्वौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । लोपश् प्रथमैकवचनान्तम् । 'हसे पः०' । वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ पदान्ते सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम्—पदान्ते ॥ आदिशब्दात् 'ए अय्' 'ऐ आय्' 'ओ अव्' 'औ आव्' एभिः सूत्रैर्जातानामयादीनां संबन्धिनोर्यकारवकारयोर्वा लोपश् भवति । ते अग्रे आगताः । उभयत्रापि 'ए अय्' एकत्र यकारलोपः । अन्यत्र 'स्वरहीनं०' । ते आगताः तयागताः त आगताः ॥ वटो इह वटविह वट इह । 'ओ अव्' शेषं प्राग्वत् ॥ एवं तस्मै आसनं तस्मायासनं तस्मा आसनं । तस्मै इदं तस्मायिदं तस्मा इदम् ॥ असौ इन्दुः असाविन्दुः असा इन्दुः । तौ इमौ ताविमौ ता इमौ ॥ ननु 'त आगताः' अत्र 'सवर्णे०' तथा पट इहेत्यत्र 'अ इ ए' इति संधिः कथं न क्रियते? तत्राह—लोपशीति । लोपशि कृते पुनः पूर्वापरवर्णयोर्मिथो घटनस्वरूपः संधिः कार्यान्तरसाधनं च न भवति । यथा त आगताः । राजभ्यामत्र 'अद्भि' इति आ न भवति । नन्वुक्तमनित्यमिति कापि लोपशि कृतेऽपि संधिर्भवति । यद्वा 'छन्दसि तु भवती'ति तुशब्ददर्शनात् कुत्रचिल्लौकिकोदाहरणेऽपि लोपशि कृते संधिर्भवति । यथा दामोदरः, राजाश्वः, पश्चाग्निः, दण्डिषु, इत्यादिषु कार्यान्तरसंघातरूपश्च संधिर्भवति ॥ पुनर्विशेषमाह—छन्दसि वेदे

१ 'नोक्त' ॥

लोपशि कृतेऽपि संधिर्भवति । यथा हे सखे अग्रे इति । 'ए अय्' 'य्वोर्लोपश् वा०' इति यकारलोपः । छान्दसिकत्वान्न संधिनिषेधः । तेन 'अ इ ए' ॥

**एदोतोऽतः ॥ पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र ॥**

सूत्रम्—'एदोतोऽतः'॥ एच्च ओच्च एदोत् पञ्चम्येकवचनान्तम् । 'स्वरहीनं'० 'स्रोर्विं०' । एदोतः अग्रे अतः । मध्ये—'अतोऽत्युः' 'उओ' 'एदोतोऽतः' इत्यकारलोपः । अतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' 'एदोतोऽतः' ॥ तपरकरणमसंदेहोच्चारणार्थम् । अत इत्यत्र तपरकरणं तावन्मात्रग्रहणार्थम् । पदान्ते स्थितादेकारात् ओकारात् परस्याकारस्य लोपो भवति । ते अग्रे अत्र । पदान्ते स्थितौ यावेकारौकारौ ताभ्यां परस्याकारस्य लोपो भवति । चम्पकपटवासन्यायादखण्डाकारस्तिष्ठति । तेऽत्र । एवं पटो अत्र पटोऽत्र [वर्तत] इति सिद्धम् । 'ए अय्' 'ओ अव्' इति तु पदमध्ये भवति । अत्र 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायोऽङ्गीकर्तव्यस्तेन 'ए अय्' 'ओ अव्' इति न भवति ॥

**सवर्णे दीर्घः सह ॥ सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । दधि इह दधीह । मधु उदकं मधूदकम् । भानु उदयः भानूदयः । पितृ ऋणं पितॄणम् ।**

सूत्रम्—'सवर्णे दीर्घः०' ॥ सवर्णे इति सप्तम्यन्तम् । 'अ इ ए' सदृशो वर्णः सवर्णः । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्विं०' । सह प्रथमैकवचनान्तम् । स् । 'अव्यया०' ॥ पूर्वापरयोः सदृशस्वरयोर्मिलनेनाद्यो दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र ॥ यदुक्तम्—

'क्रमेण वैपरीत्येन गुरूणां गुरुभिः सह । लघूनां लघुभिः सार्धं गुरूणां लघुभिः सह ॥
लघूनां गुरुभिः सार्धं चतुर्धेति सवर्णता' ॥ १ ॥ इति ॥

अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता । पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥२॥

दधि अग्रे इह दधीह । भानु अग्रे उदयः भानूदयः । पितृ अग्रे ऋणं पितॄणम् । दण्ड अग्रे अग्रं दण्डाग्रम् ।

**सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ।**
**परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १ ॥**

ननु दधि इह अत्र कथम् 'इ यं स्वरे' इति यत्वं न भवतीत्याह—सामान्येति । नूनं निश्चितं सामान्यशास्त्रतः सामान्यसूत्रात् विशेषो विशेषशास्त्रं विशेषसूत्रं बलवान् भवेत् । तत्र बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः । दधि इह इत्यत्र 'इ यं स्वरे' इति सामान्यसूत्रं स्वराणां बहुत्वात् । 'सवर्णे दीर्घः' इति विशेषसूत्रं तस्य सवर्णस्यैकत्वात् । पक्षान्तरमाह—परेणेत्यादि । वा अथवा इह व्याकरणे प्रायशो बाहुल्येन बहुषु स्थानेषु परेण अग्रेतनसूत्रेण पूर्वसूत्रस्य बाधो निषेधो दृश्यतात् । यथा 'इ यं स्वरे' इति सूत्रं प्राक् प्रतिपादितं तस्य हि 'सवर्णे दीर्घः०' इति सूत्रेण बाधः । तदेवाह—प्रायशो बाहुल्येनेह व्याकरणे एवं दृश्यताम् इति । अनेनोत्सर्गापवादावुक्तौ । ततः उत्सर्गापवादयोरपवादविधिर्ब-

लवा' निति न्यायो दर्शितः । एकस्मिन्नेवोदाहरणे सूत्रद्वयसंभवे सामान्यविशेषयोर्यद्विशेषसूत्रं तल्लगति । पूर्वोक्तपरोक्तयोः सूत्रयोर्यत्परोक्तं सूत्रं तत्प्राप्नोति न तु पूर्वोक्तमिति भावः । एवं भानु उदयः अत्र 'उ वम्' इति सामान्यम्, 'सवर्णे दीर्घः०' इति विशेषः । एवमन्यत्रापि ॥ श्लोकार्थोऽयम् ॥

**अ इ ए॥ अवर्ण इवर्णे परे सह ए भवति । तव इदं तवेदम् । मम इदं ममेदम् ॥**

सूत्रम्—'अ इ ए'॥ अ प्रथमैकवचनान्तम् । सांकेतिकम् । इ सप्तम्येकवचनान्तम् । सांकेतिकम् । ए प्रथमैकवचनान्तम् । सांकेतिकम् । तव अग्रे इदम् 'अ इ ए' अवर्ण इवर्णे परे सह उभयोर्योगेन ए भवति । तव इदं तवेदम् इत्युदाहरणम् । गङ्गा इयं गङ्गेयम् ॥

**[ सर्वविधिभ्यो लोपविधिर्बलवान् ॥]**

**हलादेरीषादौ टेर्लोपो वक्तव्यः ॥ हल ईषा हलीषा । लाङ्गल ईषा लाङ्गलीषा । मनस् ईषा मनीषा । शक अन्धुः शकन्धुः । कर्क अन्धुः कर्कन्धुः । कुल अटा कुलटा । सीमन् अन्तः सीमन्तः केशवेशे । अन्यत्र सीमान्तः । पतत् अञ्जलिः पतञ्जलिः । सार अङ्गः सारङ्गः पशुपक्षिणोः । अन्यत्र साराङ्गः ॥ अद्य ओम् अद्योम् । शिव आ इहि शिवेहि ॥**

**'हलीषा लाङ्गलीषा च मनीषाद्यों तथैव च ।**
**शकन्धुरथ कर्कन्धुः सीमन्तः कुलटा तथा ॥ १ ॥**
**पतञ्जलिश्च सारङ्ग एते प्रोक्ता हलादयः ॥'**

अत्रापि विशेषमाह [हलादे०] अत्र हल आदिर्यस्य स हलादिः तस्य हलादेः षष्ठयेकवचनान्तम् । ङिति 'ङसिङसोरस्य' इत्यकारलोपः 'स्रोर्विसर्गः' । ईषा आदिर्यस्य स ईषादिः तस्मिन् ईषादौ । सप्तम्येकवचनान्तम् । ङि 'ङे रौ ङित्' औ ङित्वाट्टिलोपः । 'स्वरहीनं०'। टेः षष्ठयेकवचनान्तम् । अस् । 'ङिति' 'ङसिङसोः०' 'स्रोर्विसर्गः' 'नामिनो रः' 'रायपो द्विः' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' । वक्तव्यः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः'॥ हलादेः शब्दगणस्य ईषादौ गणे परे टेः 'अन्त्यस्वरादिष्टिः' इति टेर्लोपो वक्तव्यः । हल अग्रे ईषा अनेन टेर्लोपः । 'स्वरहीनं०' हलीषा । आदिशब्दान्मनस् ईषा । मनीषा । लाङ्गल ईषा लाङ्गलीषा । अद्य अग्रे ओम् अद्योम् । शक अन्धुः शकन्धुः । कुल अटा कुलटा । सीमन् अन्तः सीमन्तः । पतत् अञ्जलिः पतञ्जलिः । सार अङ्गः सारङ्गः । इत्यादयोऽपि तथैव ज्ञेयाः ॥

**उ ओ ॥ अवर्णे उवर्णे परे सह ओ भवति ॥ तव उदकम् तवोदकम् । गङ्गा उदकं गङ्गोदकम् ॥**

सूत्रम्—'उ ओ' ॥ ऊ सप्तम्येकवचनान्तम् । साङ्केतिकम् । ओ प्रथमैकवचनान्तम् वृत्तिः कण्ठ्या । तव उदकं तवोदकम् । गङ्गा उदकं गङ्गोदकम् ॥

**ऋ अर् ॥ अवर्ण ऋवर्णे परे सह अर् भवति । तव ऋद्धिः । तवर्द्धिः । 'रायपो द्विः' ॥**

सूत्रम्—'ऋ अर्' ॥ ऋ सप्तम्येकवचनान्तम्। सांकेतिकम्। अर् प्रथमैकवचनान्तम्। 'हसे पः०' ॥ अर्थो वृत्तितो ज्ञेयः । तव अग्रे ऋद्धिः । 'ऋ अर्' 'जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम्' । तवर्द्धिः इति सिद्धम् ॥

**क्वचिदार् ॥ अवर्ण ऋवर्णे परे सह क्वचिदार् भवति । ऋण ऋणं ऋणार्णम् ॥**
**ऋते च तृतीयासमासे एवाऽऽर् ॥ शीतेन ऋतः शीत ऋतः शीतार्तः ॥**
**अन्यत्र परम ऋतः परमर्तः ॥**

सूत्रम्—'क्वचिदार्'॥ क्वचित् सप्तम्येकवचनान्तम्।'अव्यया०'। आर् प्रथमैकवचनान्तम्। 'हसे पः०' 'चपा अबे०'॥ वृत्तेरर्थो ज्ञेयः। तृतीयासमासान्ते पदे इत्यर्थः॥ क्वचित्प्रयोगान्तरे अवर्ण ऋवर्णे परे सति सह उभयोर्योगेन आर् भवति । ऋण ऋणम् । 'क्वचिदार्' 'राद्यपो द्विः' 'स्वरहीनं०' 'जलतुम्बिका०' ऋणार्णम् । एवं शीतार्तः । दुःखार्तः । वसनार्णम् । कम्बलार्णम् । दशार्णम् । वत्सतरार्णम् । प्रार्णम् ॥

**ऌ अल् ॥ अवर्ण ऌवर्णे परे सह अल् भवति । तव ऌकारः तवल्कारः ॥**
**रलयोः सावर्ण्यं वा वक्तव्यम् ॥ परि अङ्कः । पर्य्यङ्कः । पल्य्यङ्कः ॥**

सूत्रम्—'ऌ अल्' ॥ ऌ सप्तम्येकवचनान्तम्। सांकेतिकम्। अल् प्रथमैकवचनान्तम्। 'हसे पः०'॥ वृत्तेरर्थो ज्ञेयः । तव अग्रे ऌकारः 'ऌ अल्' 'राद्यपो द्विः' 'स्वरहीनं०' तवल्कारः॥ नन्वत्र लकारोऽस्ति रकारो नास्ति 'राद्यपो०'इति कथं लगति तत्राह—रलयोरिति । रकारलकारयोः सावर्ण्यं सदृशत्वं वक्तव्यम् । तेन 'राद्यपो द्विः' इति ककारस्य द्वित्वे तवल्कार इति सिद्धम्। रकारलकारयोः उपचाराद्वा ग्रहणाद्वा वेदे ऋकारऌकारयोरपि सावर्ण्यं वक्तव्यम्। होत्ऌकारः । सवर्णे होतृकारः । अत्र ऋऌवर्णयोरसवर्णत्वेपि 'रलयोर्—' इत्यनेन सावर्ण्यम्। 'ऋऌवर्णस्थानिनोः प्रायः सावर्ण्यं रलयोर्भवेत् । तथा वेदे सवर्णत्वं स्यादृकारऌकारयोः' । परि अग्रे अङ्कः पर्य्यङ्कः । एवं पलि अग्रे अङ्कः पल्य्यङ्कः । उभयत्रापि 'इ यं स्वरे' 'राद्यपो द्विः' 'स्वरहीनं०' सिद्धम् ॥

**ए ऐ ऐ॥ अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥**

सूत्रम्—'ए ऐ ऐ'॥ ए सप्तम्येकवचनान्तम् । सांकेतिकम् । ऐ सप्तम्येकवचनम्—सांकेतिकम् । ऐ प्रथमैकवचनान्तम् । सांकेतिकम् ॥ वृत्तिः कण्ठ्या । उदाहरणे तव अग्रे एषा 'ए ऐ ऐ' तवैषा । तव अग्रे ऐश्वर्यम् 'ए ऐ ऐ' तवैश्वर्यम् । इति सिद्धम् ॥

**ओ औ औ ॥ अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनः तवौदनः । तव औन्नत्यं तवौन्नत्यम् ॥**

सूत्रम्—'ओ औ औ' ॥ ओ सप्तम्येकवचनान्तम् । सांकेतिकम् । औ सप्तम्येकवचनान्तम् । औ प्रथमैकवचनान्तम् । सांकेतिकम्॥ वृत्तिः कण्ठ्या । उदाहरणम् । तव ओदनम्। 'ओ औ औ' तवौदनम् । तव अग्रे औन्नत्यम् । तवौन्नत्यम्।गङ्गा अग्रे ओघः गङ्गौघः॥

**ओष्ठोत्वोर्वा ॥ अवर्णस्य ओष्ठोत्वोः परयोः समासे सति सह वा ओ**

---

१ रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा । वदन्त्येषां च सावर्ण्यमलंकारविदो जनाः ॥ १ ॥

भवति । बिम्ब ओष्ठः बिम्बोष्ठः बिम्बौष्ठः । स्थूल ओतुः स्थूलोतुः स्थूलौतुः ॥ समासे किम्? तव ओष्ठः तवौष्ठः ॥

सूत्रम्—'ओष्ठोत्वोर्वौ' ॥ ओष्ठश्च ओतुश्च ओष्ठोतू तयोः ओष्ठोत्वोः सप्तमीद्विवचनान्तम् । 'उ वम्' 'स्वरहीनं०' । वा तृतीयैकवचनान्तम् । 'अव्यया०' । ओ प्रथमैकवचनान्तम् । सांकेतिकम् । 'ओ औ औ' ॥ अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठौत्वोः ओकारेण सह वा अकारस्य ओकारो भवति समासे सति ॥ पक्षे 'ओ औ औ' ॥ यदा—'ओष्ठोत्वोर्वा' इति सूत्रम् । तदा ओष्ठोत्वोः परयोः अवर्णस्य वा लोपो भवतीति व्याख्या ॥ बिम्ब अग्रे ओष्ठः । बिम्बाकारावोष्ठौ यस्य स बिम्बोष्ठः बिम्बौष्ठः । स्त्रीचेत् बिम्बोष्ठी बिम्बौष्ठी वा । अनेन एकत्र अकारलोपः । 'स्वरहीनं०' । द्वितीये 'ओ औ औ' तथैव स्थूलश्चासावोतुश्च स्थूलोतुः स्थूलौतुर्वा । स्थूलमार्जार इत्यर्थः । समास इति किम् । हे छात्र ओष्ठं पश्य छात्रौष्ठं पश्येत्येकमेव रूपम् । एवं तवौष्ठः ॥

[ गवादेरवर्णागमोऽक्षादौ वक्तव्यः ] । गो अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः । गो अग्रं गवाग्रम् । गो अजिनं गवाजिनम् । स्व ईरम् स्वैरम् । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी सेना । प्र ऊढः प्रौढः ॥ [ इति गवादयः ॥ अविहितलक्षणप्रयोगो गवादौ द्रष्टव्यः ॥

गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम् ।
स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः ॥ १ ॥]

॥ इति स्वरसंधिप्रक्रिया ॥ २ ॥

गो आदिर्यस्य स गवादिस्तस्य गवादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' 'स्रोर्विसर्गः' गवादेः ॥ अवर्णस्य आगमः अवर्णागमः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ अक्ष आदिर्यस्य सः अक्षादिस्तस्मिन् अक्षादौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' डित्त्वाट्टिलोपः । 'स्वरहीनं०' । वक्तव्यः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' सिद्धम् । अत्र अकारागमे एव रूपसिद्धिः । वर्णग्रहणं तु चिन्त्यम् । यद्वा । अश्चासौ वर्णश्च अवर्णः । अकारवर्ण एव इत्यर्थः । गो अक्षः । अवर्णागमः । 'ओ अव्' 'स्वरहीनं०' 'सवर्णे दीर्घ०' ॥ गवाजिनं गोचर्म । प्र अग्रे ऊढः । अवर्णागमस्य वैयर्थ्यान्न 'सवर्णे दीर्घः सह' किंतु 'उ ओ' 'ओ औ औ' प्रौढः । एवं प्र ऊढिः प्रौढिः । स्व अग्रे ईरम् । अवर्णागमः । 'अ इ ए' 'ए ऐ ऐ' स्वैरम् । एवं स्व ईरिणी स्वैरिणी । अक्ष अग्रे ऊहिनी । अवर्णागमः । 'उ ओ' 'ओ औ औ' अक्षौहिणी सेनाविशेषः । [ 'सा सेनाऽक्षौहिणी नाम खागाष्टैकद्विकैः(२१८७०)र्गजैः । रथैश्चैभि(२१८७०)र्हयैस्त्रिघ्नैः (६५६१०) पञ्चघ्नैश्च पदातिभिः (३२८०५०)' इति] ॥

॥ इति स्वरसंधिः ॥

---

## प्रकृतिभावः ३

अथ प्रकृतिभाव उच्यते—॥ नामी ॥ अदसोऽमी संधिं न प्राप्नोति । अमी

**आदित्याः ॥ अमी अश्वाः ॥ अदस इति किम्? अमी रोगस्तद्वान् । अमी असौ अम्यसौ ।**

अथ स्वरसंधिकथनानन्तरं प्रकृतिभाव उच्यते । प्रकृतेर्भावः भवनं सत्ता प्रकृतिभावः । प्रकृतेर्यथावस्थितस्वरूपस्य भावोऽवस्थितिर्वा प्रकृतिभावः । संधियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठन्ति । तस्मात्प्रकृतिरुच्यते । [ संधिसंभवेऽपि प्रकृतिस्था ये तिष्ठन्ति ते प्रगृह्या उच्यन्ते ।] तत्रादिमं सूत्रम्—'नामी' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' ॥ अमी प्रथमाबहुवचनान्तम् । 'त्यदादेः०' सकारलोपः जसी 'दस्य मः' 'अ इ ए' 'एरी बहुत्वे' एकारस्य ईकारः । अमी प्रथमैकवचनान्तम् । सांकेतिकम् । 'सवर्णे०' नामीति सिद्धम् । अदस् शब्दस्य जसि यः अमीशब्दो निष्पन्नः स संधिं न प्राप्नोति । अमीशब्देन रोगवानप्युच्यते तन्निरासार्थम् 'अदसः' इति पदं प्रयुक्तम् । तत्र संधिः । अमी आदित्याः । 'इ यं स्वरे' इति सूत्रप्राप्तावपि संधिप्रतिषेधः । एवम् अमी उष्ट्राः संधिप्रतिषेधः । एवम्—अमी एडकाः । अमी अश्वाः ॥ अदस इति किम् । अमी असौ अम्यसौ ॥

**य्वे द्वित्वे ॥ ई च ऊ च ए च य्वे । ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति ॥ मणीवादिवर्जम्[1] । अग्नी अत्र । पटू अत्र । माले आनय ॥ मणीवादौ तु संधिर्भवति—मणी इव मणीवे[2] ॥ दंपती इव दंपतीव । जंपती इव जंपतीव । जायापती इव जायापतीव । रोदसी इव रोदसीव ॥**

सूत्रम्—'य्वे द्वित्वे' ॥ ई च ऊ च ए च य्वे प्रथमैकवचनान्तम् । साङ्केतिकम् । द्वित्वे सप्तम्येकवचनान्तम् । 'अ इ ए' इति । य्वे द्वित्वे सिद्धम् । ईकार ऊकार एकारास्त्रयः सिद्धा एव गृह्यन्ते । परं द्विवचने द्विवचनान्तः सन् ईकार ऊकार एकारान्तश्च शब्दः संधिं न प्राप्नोतीत्यर्थः ॥ मण्यादयो न निषिद्धाः । मणी इव इत्यादीन् शब्दान् वर्जयित्वा । मण्यादीनां तु द्विवचने ईकारान्तत्वेऽपि संधिर्भवति ॥ अग्नी अत्र प्रथमाद्विवचनान्तम् । 'औ यू' 'सवर्णे०' 'अग्नी अत्र' द्वित्वात् 'इ यं स्वरे' इति यत्वनिषेधः ॥ एवं 'पटू अत्र' वत्वनिषेधः । माले इति द्वितीयाद्विवचनान्तम् । 'औरी' इति ईकारः । 'अ इ ए' माले अग्रे आनय । 'ए अय्' निषेधः ॥ एवं हरी एतौ, विष्णू इमौ, गङ्गे अमू, कुले अमू इत्यादि ॥ मणीवादिवर्जमिति किम् । मणी इव, दम्पती इव, रोदसी इव, सर्वत्र 'सवर्णे०' द्वित्वेऽपि मणीवादिनिषिद्धत्वात् संधिः कार्यः ॥

**औ निपातः ॥ आकार ओकारनिपातः एकस्वरश्च संधिं न प्राप्नोति । आ एवं किल मन्यसे । नो अत्र स्थातव्यम् । उ उत्तिष्ठ । इ इन्द्रं पश्य । अ अपेहि ॥**

सूत्रम्—'औ निपातः' ॥ आ प्रथमैकवचनान्तम् । सांकेतिकम् । 'अव्यया०' । ओ प्रथमैकवचनम् । सांकेतिकम् । 'अव्यया०' । निपात्यते सिद्ध एव इति निपातः प्रथमैकवचना-

---

१ 'मणीवादिवर्जमिति किम्' । २ मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । ह्रियमाणौ तु तौ दृष्ट्वा मकिस्तत्रेदमब्रवीत् ॥ १ ॥

न्तम् 'स्नोर्विसर्गः' । ननु एकस्वरश्चेति पदं सूत्रे नास्ति वृत्तौ कुतो लभ्यते ? तदर्थमाकारादारभ्य ओकारं यावत् औ इति प्रत्याहारमङ्गीकुर्वन्ति इति केचित् । औ प्रथमैकवचनान्तम् । सांकेतिकम् । आकार ओकार एकस्वरा अत्र निपाता एव गृह्यन्ते आङुपसर्गवर्जिताः । वाक्ये स्मरणे च यो निपातरूपः आ इत्यक्षरं स संधिं न प्राप्नोति ॥

आग्रहणादाङो न निषेधः । तथा चोक्तम्[1]—

'इषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥
आकारस्तु निपातो यो ङिदङिद्भेदतो द्विधा ।
तत्रापि च ङिदाकारः संधिं प्राप्नोति न त्वङित् ॥ २ ॥
ओत्तमैरेक्षसे न त्वमामृतादेन्द्रतोऽखिलैः ।
आ एवं सर्ववेदार्थे आ एवं सद्वचो हरेः ॥ ३ ॥
अहो आहो उताहो च नो हो हंहो अथो इमे ।
मिथोयुक्ताश्च ओदन्ता निपाता अष्टधा मताः ॥ ४ ॥'

तथा ओकारः । 'आहो अहो उताहो च नो हो हंहो अथो अमी । भो भो(ऽ)युक्ताश्च ओदन्ता निपाताश्चाष्टधा स्मृताः' । भो भो इत्यादिषु निपातरूप ओकारः सोऽपि संधिं न प्राप्नोति । नो अत्र अहो ईशाः । अथो एवम् हे हे इत्येतयोरपि प्रगृह्यत्वमिति केचित् । हे अम्ब । हे ईश ॥ तथा एकस्वरः एक एव स्वरः एकस्वरः । यद्वा केवलः स्वरमात्र एव न तु हसयुक्तो यथा प्रादात् इत्यादिवत् । यद्वा एकस्वरः सदृशस्वरः अकार इकार उकाराणां निपातरूपाणां यः कश्चिदादौ भवति तादृश एव स्वरः अग्रेऽपि भवति तदा संधिं न प्राप्नोति । यथा अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ ॥ अ इति निर्भर्त्सने । अपेहि दूरीकुरु ॥ इ इति संबोधने विस्मये वा । इ इन्द्रं पश्य ॥ उ इति संबोधने रोषोक्तौ वा । उ उत्तिष्ठ ॥ आग्रहणादाङ् उपसर्गेण सह संधिर्भवति । उदाहरणं कण्ठ्यम् । 'अत्राकारनिपातस्तु ङिदङिद्भेदतो द्विधा । तत्र यः स्यात् ङित्स एव संधिं प्राप्नोति न त्वङित् ।' 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ।' 'ओत्तमैरेक्षसे न त्वमामृतादेन्द्रतोऽखिलैः । आ एवं सर्ववेदार्थः आ एवं सद्वचो हरेः ॥' आ ईषदुत्तमः ओत्तमः ३-३ इति ईषदर्थे आङासह संधिः ॥ आ ईक्षसे एक्षसे । आ इहि एहि इत्यादौ क्रियायोगे आङा सह संधिः ॥ आ अमृतात् आमृतात् । अमृतं मोक्षं मर्यादीकृत्य इति मर्यादायाम् । आ इन्द्रतः एन्द्रतः । इन्द्रमभिव्याप्येत्यभिविधौ च आङासह संधिः ॥ मर्यादा सीमा अभिविधिः अभिव्याप्तिः । मर्यादा अभिविधिश्च मर्यादाभिविधिः तस्मिन् सर्वोऽपि द्वन्द्वो विभाषयैकवचनान्तः स्यात् । 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकत्वम् । अनियममागमानुशासनमिति 'नामिनः स्वरे' इति नुमागमो न, किं तु 'ङेरौ ङित्' ॥ तथा

---

[1] अयं सश्लोकचतुष्टयपाठः प्राचीनैकतमपुस्तकोपलब्धोऽपि न मूलस्थः । टीकायामस्यार्थस्य व्यक्तीकरणसंदर्भात् ॥

आ इति आक्षेपे । आ एवं किल मन्यसे । आ इति वाक्ये । आ एवमीश्वरवचनमिति स्मरणे । स्मरणीयमित्यर्थः । अनाङ् आकारः संधिं न प्राप्नोति ॥

**प्लुतः ॥ प्लुतः संधिं न प्राप्नोति । देवदत्त ३ एहि । देवदत्त ३ अत्र गौश्चरति ॥ दूरादाह्वाने च टेः प्लुतः ॥**

सूत्रम्—'प्लुतः' ॥ प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ यत्र प्लुतस्तत्र संधिर्न भवति । भो देवदत्त एहि । 'का एषा प्रस्तुताङ्गी प्रचलितनयना हंसलीला व्रजन्ती द्वौ पादौ कुङ्कुमार्द्रौ कनकविरचितौ नूपुरं शब्दयन्ती । इत्थं मार्गे गता सा बहुकुसुमलताबद्धवेणी स्वनन्ती ताम्बूलं वामहस्ते मदननिवसिता गुह्यशालां विवेश ॥' अत्र विचारे टेः प्लुतत्वं तेन संधिर्न । क्वचित्तु संधिः । क्वचित्तु 'प्लुतोऽनितौ' इति सूत्रं पठन्ति । तेन प्लुतोऽपि इतिशब्दे परे संधिं प्राप्नोति । यथा हा तात इति हा तातेति ॥ देवदत्तेत्यादौ न संधिर्भवति ॥ प्लुतलक्षणमाह—

**दूरादाह्वाने गाने रोदने विचारे गम्यमाने च टेः प्लुतो भवति । इति प्रकृतिभावप्रक्रिया ॥**

सूत्रम्— 'दूरादाह्वाने०' ॥ दूरात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दीर्घः०' आह्वाने सप्तम्येकवचनम् । 'अ इ ए' । टिशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' । प्लुतः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ वृत्तिः कण्ठ्या । प्लुतस्तु उच्चारणमात्र एव न, किंतु ३ लिखनरूपः । इति प्लुतलक्षणम् ॥

॥ इति प्रकृतिभावः ॥

---

## व्यञ्जनसंधिः ४

**अथ व्यञ्जनकार्यमुच्यते ॥ चपा अबे जबाः ॥ पदान्ते वर्तमानाश्चपा जबा भवन्ति अबे परे । षट् अत्र षडत्र । वाक् यथा वाग्यथा । ककुप् ऐन्द्री ककुबैन्द्री ।**

अथ प्रकृतिभावकथनानन्तरं व्यञ्जनकार्यमुच्यते व्यञ्जनानां संधिः कथ्यत इत्यर्थः ॥ सूत्रम्—'चपा अबे जबाः' ॥ चकारपकाराभ्यां गृह्यमाणा वर्णाश्चपाः । चपशब्दस्य प्रथमाबहुवचनम् । 'सवर्णे' 'स्रोर्विसर्गः' ॥ अकारबकाराभ्यां गृह्यमाणः प्रत्याहारः अबस्तस्मिन् अबशब्दस्य सप्तम्येकवचनम् । 'अ इ ए' ॥ जकारबकाराभ्यां गृह्यमाणा वर्णा जबाः जबशब्दस्य प्रथमाबहुवचनम् । 'स्रोर्वि०' 'सवर्णे दीर्घः' सिद्धम् ॥ 'चपा जबा अबे' इति वक्तव्ये 'चपा अबे जबाः' इत्युक्तं तेन क्वचित्पदान्तं विनापि जबा भवन्ति । यथा--सद्गुरुर्भवदीयः इत्यादि । तथा क्वचिन्न भवति । यथा—वैवस्वतः । सरस्वान् । मरुत्त्वान् । तडित्वान् । वाचालः । वाचाटः इत्यादौ न ॥ अथवा असमासे साक्षादेव पदान्ते । समासादौ त्वन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्ते इति वाच्यम् । पदान्ते स्थिताश्चपा जबा भवन्ति ।

---

१ 'दूरादित्यत्र चकारग्रहणाद् हा तातेत्यादौ संधिः स्यात् ॥ **हेहयोः स्वरे संधिर्न वक्तव्यः** ॥ हे अनड्वन् ॥ **ऋतौ समानो वा** ॥ ऋतौ परे समानः संधिं न प्राप्नोति वा । हिम+ऋतुः हिमर्तुः हिमऋतुः ॥' इति पाठोऽधिकः क्वचित् ॥

चटतकपानां क्रमेण जडदगबा भवन्ति अबे परे। षट् अग्रे अत्र। वाक् अग्रे यथा। उभयत्रापि 'चपा अबे जबाः' इत्यनेन डकारगकारौ भवतः यथा टस्य डः, कस्य गः, 'स्वरहीनं०' षडत्र। वाग्यथा। एवम् अच् अन्ताः अजन्ताः। हरित् अश्वः हरिदश्वः। ककुप् एषा ककुबेषा। इति सिद्धम्। दिश् अम्बरः। दिश् अन्तः। अत्र पदान्तताश्रयणात् 'दिशाम्' इति कः। पश्चात् 'चपा अबे जबाः' दिगम्बरः। दिगन्तः। वाच् ईशः। अत्रापि पदान्तताश्रयणात् 'चोः कुः' पश्चात् 'चपा अबे जबाः'। वागीशः। अबे परे किम्। वाक् पूतः। षट् कुर्वन्ति॥

**ञमे ञमा वा॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति। वाक् मात्रं वाङ्मात्रम् वाग्मात्रम्। षट् मम षण्मम षड्मम॥ मयटि नित्यम्। चिन्मयम्[1]॥**

सूत्रम्—'ञमे ञमा वा'॥ ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ञमे। सप्तम्येकवचनम्। 'अ इ ए' ञकारमकाराभ्यां गृह्यमाणा वर्णा ञमाः। ञमशब्दस्य प्रथमाबहुवचनम्। 'सवर्णे०' 'स्रोर्विसर्गः०'। वा तृतीयैकवचनान्तम्। 'अव्यया०'॥ 'आदबे लोपश्'॥ चपानां ञमप्रत्याहारे परे वा विकल्पेन ञमा भवन्ति। चटतकपानां क्रमेण ञणनङमा भवन्ति। वाग्रहणात्पक्षे जबा अपि भवन्ति। वाङ्मात्रं वाग्मात्रम्। एकत्र ङः अन्यत्र गः। 'स्वरहीनं०'॥ षट् अग्रे मम। एकत्र णः अन्यत्र डः। षण्मम। षड्मम। 'स्वरहीनं०'॥ तत् नयनं तन्नयनं तद्नयनम्। मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः। यथा चिन्मयम् वाङ्मयम्। अप्मयः अम्मयः। अत्र न विकल्पः। तथा वाग्रहणादेव क्वचिज्जबस्यापि ञमाः स्युः। यथा मृद्मयः मृन्मयः॥

**चपाच्छः शः॥ चपादुत्तरस्य शकारस्य छो वा भवति। वाक् शूरः वाक्छूरः वाक्शूरः॥**

सूत्रम्—'चपाच्छः शः'॥ चपात् पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०'॥ चपात् अग्रे छः 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं०'॥ श इति षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विसर्गः' सिद्धम्। चपादुत्तरस्य शकारस्य छः छकारो भवति। वा विकल्पेन। वाक् अग्रे शूरः। अनेन शकारस्य छकारः। 'स्वरहीनं०'॥ वाक्छूरः पक्षे वाक्शूरः। इति सिद्धम्। छः शः इति विपरीतग्रहणात् वाक्श्चोततीत्यादौ छत्वं न स्यात्॥

**हो झभाः॥ चपादुत्तरस्य हकारस्य झभा वा भवन्ति। यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति। तत् हविः तद्धविः तद्हविः। वाक् हरिः वाग्घरिः वाग्हरिः। ककुप्हासः ककुब्भासः ककुब्हासः॥**

सूत्रम्—'हो झभाः'॥ हः इति षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विसर्गः'॥ झभाः प्रथमाबहुवचनान्तम्। 'सवर्णे०' 'स्रोर्विसर्गः'॥ यस्य वर्गस्य संबन्धी चपो हकारात्पूर्वं

---

१ 'प्रत्यये ञमे नित्यमिति केचित्॥ तेन वाङ्मात्रमित्येकमेव भवति॥' इत्यपि क्वचिदधिकः पाठो वर्तते। २ इतः प्राग् 'नन्वेकस्य हकारस्य पञ्च झभाः प्राप्ताः केन क्रमेण भवन्ति। अत्रोच्यते।' इत्यप्यधिकं क्वचित्॥

भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति । यथा ककारात्परस्य हस्य घः । चकारात्परस्य हस्य झः । टकारात्परस्य हस्य ढः । तकारात्परस्य हस्य धः । पकारात्परस्य हस्य भः । 'यद्वर्गस्य चपः पूर्वं हकारात्किल दृश्यते । हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः' वर्गचतुर्थो हस्य सवर्ण इति । वाग्रहणात्कचिच्चपादनुत्तरस्यापि हस्य झभा भवन्ति । समिध् होमः समिद्धोमः । हकारस्य धः । 'झबे जबाः' इति सिद्धम् । यद्वा कचिदनवसानेऽप्यवसानता ग्राह्या । तेन 'वावसाने' इति धकारस्य तकारः । पश्चात् 'हो झभाः ॥' इत्यादि । एवं तत् हितः तद्धितः ॥ तत् अग्रे हविः । 'हो झभाः' इति हकारस्य धकारः पश्चात् 'चपा अबे जबाः' तस्य दः । 'स्वरहीनं०' तद्धविः । तत् घृतमित्यर्थः ॥ वाक् अग्रे हरिः । हस्य घः पूर्ववत् । 'चपा अबे जबाः' इति कस्य गः वाग्घरिः । वाचा कृत्वा हरिः सिंहः इति सिद्धम् ॥ अच् अग्रे हलौ अज्झलौ । षट् अग्रे हलानि षड्ढलानि । ककुप् अग्रे हासः ककुब्भासः ॥

**स्तोः श्चुभिः श्चुः ॥ स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः ॥**

**कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रं तच्चित्रम् । तत् शास्त्रं तच्छास्त्रम् ॥**

सूत्रम्—'स्तोः श्चुभिः श्चुः' ॥ स् च तुश्च स्तुः तस्य स्तोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' ॥ श् च चवश्च श्चवस्तैः श्चुभिः तृतीयाबहुवचनान्तम् । 'स्रोर्विसर्गः' ॥ श् च चुश्च श्चुः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ अत्र 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकलिङ्गं युज्यते । परं 'छन्दोवत्सूत्राणी'ति छान्दसत्वात्पुंलिङ्गत्वम् । श्चुभिरित्यत्र बहुवचनमयथासंख्येन योगज्ञापकम् । तेन सकारस्य शकारचवर्गयोगे पूर्वतः परतः उभयत्रापि संबन्धे सति शकारः स्यात् । तवर्गस्य शकारचवर्गयोगे चवर्गः स्यात् । कस् चरति, कस् अग्रे शूरः उभयत्रापि शकारः । 'स्वरहीनं०' कश्चरति । कश्शूरः ॥ तत् चित्रम् । तस्य चः । 'स्वरहीनं' तच्चित्रम् ॥ तत् श्रवणं तत् शास्त्रम् । उभयत्रापि तस्य चः । 'चपाच्छ शः' ॥ कस् छादयति कश्छादयति । अत्र सकारस्य शकारः । 'स्वरहीनं०' ॥ सत् अग्रे झंझा । 'स्तोः श्चुभिः श्चुः' इति तस्य चः । 'चपा अबे जबाः' चस्य जः 'स्वरहीनं०' सज्झंझा ॥

**न शात् ॥ शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । विश्नः । प्रश्नः ॥**

सूत्रम्—'न शात्' ॥ न प्रथमैकवचनम् । 'अव्यया०' ॥ शादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः०' ॥ शकारादुत्तरस्य तवर्गस्य चुत्वं चवर्गो न भवति । प्रश् अग्रे नः, विश् अग्रे नः, रूपद्वयेऽपि चवर्गस्य निषेधः । किंतु 'स्वरहीनं०' । प्रश्नः प्रच्छनं प्रश्नः । विश्नः विशतीति विश्नः । 'विच्छ गतौ' विच्छनं विश्नः ॥

---

१ इतः परं 'स् च तुश्च स्तुस्तस्य स्तोः । समाहारद्वन्द्वे एकत्वम् । 'छन्दोवत्सूत्राणि' इतिवचनान्नपुंसकस्य पुंस्त्वम् । श् च चवश्च श्चवस्तैः श्चुभिः । चुशब्दे चवर्गस्यवर्णापेक्षया बहुवचनम् ॥ अकृत्वा सप्तमीमेतां तृतीयामकरोदिला । ततः श्चुभिः श्चुः पूर्वेण संनिपातः परेण वा ॥१॥' इत्यधिकं क्वचित् ।

**ष्टुभिः ष्टुः ॥ स्तोः सकारस्य तवर्गस्य च षकारेण टवर्गेण च योगे षकार-टवर्गौ यथासंख्येन भवतः। कस् षष्ठः कष्षष्ठः। कस् टीकते कष्टीकते। तत् टीकते तट्टीकते। तत् टीका तट्टीका ॥**

सूत्रम्—'ष्टुभिः ष्टुः' ॥ ष् च टुश्च ष्टवस्तैः ष्टुभिः तृतीयाबहुवचनान्तम्। ष् च टुश्च ष्टुः प्रथमैकवचनान्तम्। 'स्तो०' ष्टुभिरित्यत्रापि बहुवचनमयथासंख्ययोगसूचकम्। स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवतः इत्यर्थः। सकारस्य षकारः। तवर्गस्य टवर्गः। कस् अग्रे षष्ठः। कस् अग्रे टीकते उभयत्रापि सस्य षः। 'स्वरहीनं०' कष्षष्ठः। कष्टीकते। कः समर्थो भवतीत्यर्थः। टीकृ गतौ सामर्थ्ये च। तत् अग्रे टीकते अनेन तस्य टः 'स्वरहीनं०' तट्टीकते। विद् अग्रे ठलः पूर्वं 'खसे चपाः०' ततः 'ष्टुभिः ष्टुः' विट्ठलः ॥

**न षि ॥ षकारे परे तवर्गस्य ष्टुत्वं न भवति। भवान् षष्ठः भवान्षष्ठः ॥**

सूत्रम्—'न षि' ॥ न प्रथमैकवचनान्तम्। 'अव्यया०' ॥ षि सप्तम्येकवचनान्तम्। 'स्वरहीनं०' ॥ षकारे परे तवर्गस्य टवर्गो न भवति। भवान् षष्ठः। अत्रानेन 'ष्टुभिः ष्टुः' इति प्राप्तस्य टवर्गस्य निषेधः किंतु 'स्वरहीनं०' इति प्रकृतिभाव एव ॥

**टोरन्त्यात् ॥ पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुत्वं न भवति। षट् नरः षण्नरः। षट् सीदन्ति षट् सीदन्ति ॥**

सूत्रम्—'टोरन्त्यात्' ॥ टुशब्दस्य पञ्चम्येकवचनान्तम्। 'ङिति' टु इत्यस्य टो। 'ङसिङसोरस्य' इत्यकारलोपः। 'स्रोर्विसर्गः' ॥ टोः अग्रे अन्त्यः। 'नामिनोरः' 'स्वरहीनं०' अन्त्यशब्दस्य पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०' ॥ पदान्ते वर्तमानो यष्टवर्गस्तस्मादुत्तरयोः परयोः सकारतकारयोः षकारटवर्गौ न भवतः परं नाम्नवतिनगरीवर्जम्। उदाहरणम्। षट् अग्रे नरः। अत्र ष्टुत्वनिषेधः। ततो 'ञमे ञमा वा' चेट ञण। 'स्वरहीनं०' षण्नरः। पक्षे षड्नरः। ना नरौ नरः इति बहुवचनम्। षट् अग्रे सीदन्ति। अत्र षत्वनिषेधः। नाम्नवतिनगरीवर्जनात्। षण्णाम्। षण्णवतिः। षण्णगर्यः। अत्र 'टोरन्त्यात्' इदं सूत्रं न लगति, किंतु 'ष्टुभिः ष्टुः' इति भवति। 'स्वरहीनं०' ॥

**तोर्लि लः ॥ तवर्गस्य लकारे परे लकारो भवति। तत् लुनाति तल्लुनाति। भवान् लिखति भवाँल्लिखति। अन्तस्था द्विप्रभेदाः ॥ रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च। तत्र सानुनासिक एव नकारस्य लकारो भवति।**

सूत्रम्—'तोर्लि लः' ॥ तुशब्दस्य षष्ठ्येकवचनम्। 'ङिति' तुइत्यस्य तो 'ङसिङसोरस्य' 'स्रोर्विसर्गः' ॥ तोः अग्रे लीति सप्तम्येकवचनान्तम्। 'स्वरहीनं०' 'नामिनोरः' जलतुम्बिका० लि। लः। प्रथमैकवचनान्तम्। 'स्रोर्विसर्गः' ॥ तवर्गस्योदाहरणम्। तत् अग्रे

---

१ 'ष्टुभिरिति बहुवचनात्कचित्षकारटवर्गयोगं विनापि षत्वम्। अग्निष्टोमः।' इत्ययमपि पाठः कचिदधिकः ॥ २ अनेन यथासंख्यं प्रदर्शितम् ॥

लुनाति । अनेन तस्य लकारः । 'स्वरहीनं०' तल्लुनाति । भवान् अग्रे लिखति 'तोर्लि लः' इति नस्य लत्वे कृते । अन्तस्था द्विप्रभेदाः । उच्चारणकाले जिह्वाया अन्ते तिष्ठन्तीति अन्तस्थाः । अथवा वर्णानामन्ते तिष्ठन्तीत्यन्तस्थाः । ते के ? यरलवाः ते च द्विप्रकाराः । कथंभूताः ? रेफेण रकारेण वर्जिताः शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह—सानुनासिका निरनुनासिकाश्च तत्र तथदधानां स्थाने लकारो निरनुनासिको भवति । नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोऽपि सानुनासिक एव भवति । तेन पूर्वलकारस्योपरि अर्धानुस्वारो भवति । 'स्वरहीनं०' भवाँल्लिखतीति सिद्धम् ॥

**नः सक् छते ॥ नान्तस्य पदस्य छते परे सगागमो भवति ॥ टित्किताबाद्यन्तयोर्वक्तव्यौ ॥ टित्वादादौ कित्त्वादन्ते । राजन् चित्रं राजंश्चित्रम् । भवान् तनोति भवांस्तनोति ॥**

सूत्रम्—'नः सक् छते' ॥ नः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०'। सक् प्रथमैकवचनान्तम्। 'हसे पः०' । छते इति सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ त्रिपदम् । नान्तस्य नकारान्तस्य पदस्य छते छठथचटतलक्षणे प्रत्याहारे परे सक् इत्यागमो भवति । ककारः स्थाननियमार्थः । तमेवाह—'टित्कितौ०' ट इत् यस्यासौ टित्, क इत् यस्यासौ कित् । टिच्च किच्च टित्कितौ टित्किताबागमौ क्रमेण आद्यन्तयोर्विषये भवतः । टित् आदौ कित् अन्ते इत्यर्थः। अत्र कित्त्वादन्ते । राजन् चित्रं भवान् अग्रे तनोति उभयत्रापि सगागमः । अकार उच्चारणार्थः । एकत्र 'स्तोः श्चुभिः श्चुः' इति सस्य शः । उभयत्रापि 'स्वरहीनं०' 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यन्ते' इत्यागमान्तं पदमित्यपदान्तत्वान्नकारस्य 'नश्चापदान्ते झसे' इत्यनुस्वारः ।

**शे चग्वा ॥ नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्छूरः भवाञ्श्छूरः भवाञ्श्शूरः भवाञ्शूरः ॥**

सूत्रम्—'शे चग्वा' ॥ शे इति सप्तम्येकवचनान्तम् । 'अ इ ए' । चक् प्रथमैकवचनान्तम् । 'हसे पः०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' ॥ नान्तस्येति । नकारान्तस्य पदस्य शे शकारे परे वा विकल्पेन चगागमः स्यात् । भवान् अग्रे शूरः । अत्र 'चपाच्छः शः' इति सूत्रस्य विकल्पेन प्राप्त्यर्थं रूपद्वये चगागमः । च । पदत्रयेऽपि 'स्तोः श्चुभिः श्चुः' नस्य ञः । प्रथमरूपे 'चपाच्छः शः' इति शस्य छः । सर्वत्र 'स्वरहीनं०' भवाञ्छूरः । भवाञ्श्छूरः । भवाञ्श्शूरः । तृतीयरूपे चगागमाभावे भवाञ्शूरः ॥

**ङ्णनो ह्रस्वाद्विः स्वरे ॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदान्ते । प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह । राजन् इदम् राजन्निदम् ॥**

सूत्रम्—'ङ्णनो ह्रस्वा०' ॥ ङ् च ण् च न् च ङ्णन् प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे ह्रस्वात् पञ्चम्येकवचनान्तम् । पूर्वं 'हबे' 'उ ओ' । द्विः प्रथमैकवचनान्तम् 'अव्यया०' । 'चपा अबे जबाः' ॥ स्वरे इति सप्तम्येकवचनान्तम् । 'अ इ ए'

सिद्धम् । ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यन्ते द्वौ भवत इत्यर्थः । स्वरे परे पदान्ते विषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थम् । प्रत्यङ् अग्रे इदम् ॥ गण संख्याने सुपूर्वः । सुष्ठु गणयतीति सुगण् क्विबन्तः । अग्रे इह । राजन् अग्रे इह । सर्वत्रापि द्वित्वम् । 'स्वरहीनं०' प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ॥

**छः ॥ ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥**

सूत्रम्—'छः' ॥ प्रथमैकवचनान्तम् । एकपदम् । वृत्तिः कण्ठ्या । उदाहरणम् । तव अग्रे छत्रम् । अनेन छस्य द्वित्वम् । तवछ्छ् छत्रमिति स्थितम् ॥

**खसे चपा झसानाम् ॥ झसानां खसे परे चपा भवन्ति । तव छत्रं तवच्छत्रम् ॥**

सूत्रम्—'खसे चपा झसानाम्' ॥ खसे इति सप्तम्येकवचनान्तम् । 'अ इ ए' चपा इति प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रो०' ॥ झसानामिति षष्ठीबहुवचनान्तम् । 'नुडामः' 'नामि' इति दीर्घः । 'स्वरहीनं०' 'मोऽनुस्वारः' सिद्धम् । झसानां चपा भवन्ति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति । परं 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् चकार एव क्रियते । 'स्वरहीनं०' तव च्छत्रमिति सिद्धम् ॥

**दीर्घादपि च वक्तव्यः ॥ दीर्घादुत्तरश्छकारो द्विर्भवति । म्लेछः म्लेच्छः । ह्रीछः ह्रीच्छः ॥**

पक्षान्तरमाह—दीर्घादित्यादि । क्वचित्कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे छः, ह्री अग्रे छः, रूपद्वयेऽप्यनेन द्वित्वे विहिते वाग्वत् । 'खसे चपा झसानाम्' 'स्वरहीनं०' म्लेच्छः । 'म्लेच्छ अव्यक्ते शब्दे' । म्लेच्छयतीति म्लेच्छः । अथवा 'म्लै गात्रविनामे' । म्लायते इति म्लेच्छः । ह्रीच्छः । 'ह्री लज्जायां' ह्रीच्छतीति ह्रीच्छः । एवमाच्छादयति । ह्रीच्छति । ऐच्छत् । माऽच्छिदत् । स्त्रीच्छाया इत्यादौ दीर्घात्परस्य छस्य द्वित्वम् ॥

**मोऽनुस्वारः ॥ पदान्ते वर्तमानस्य मकारस्यानुस्वारो भवति हसे परे पदान्ते च । तम् हसति तं हसति । पद्मम् वृथा पद्मं वृथा ॥**

सूत्रम्—'मोऽनुस्वारः' ॥ मः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रो०' । मः अग्रे अनुस्वारः प्रथमैकवचनम् । 'स्रो०' । मध्ये । 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' मकारस्य हसे परे, अथवा पदान्ते सत्यनुस्वारो भवति । उदाहरणम्—तम् अग्रे हसति । पद्मम् अग्रे वृथा उभयत्राप्यनुस्वारः । तं हसति । पद्मं वृथा ॥ पदान्ते इति किम् । गम्यते इत्यादावनुस्वारो न ॥

**नश्चापदान्ते झसे ॥ नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे परे । यशान्सि यशांसि । पुम्भ्यां पुंभ्याम् ।**

---

१ इतः परम् अपिशब्दाद्दीर्घात्पदान्ताद्वेति वक्तव्यम् ॥ लक्ष्मीछाया लक्ष्मीच्छाया ॥ आङ्माङ्भ्यां च नित्यं वक्तव्यम् ॥ आच्छादयति । माच्छिदत् ॥ इत्यधिकं क्वचित् ॥ २ 'कौमारास्त्ववसानेऽप्यनुस्वारमिच्छन्ति ॥ अवसाने वा ॥ अवसाने मकारस्यानुस्वारो वा भवति । देवं देवम् ॥' इत्यधिकः पाठः ॥ ३ [ 'पयान्सि पयांसि । कम्सः कंसः ।' ] इत्यधिकः पाठः ॥ ४ [ आक्रम् स्यते आक्रंस्यते ॥ ] इत्यधिकः पाठः ॥

सूत्रम्—'नश्चापदान्ते झसे' नः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे च प्रथमैकवचनान्तम् । 'अव्यया०' 'विसर्जनीयस्य०' 'स्तोः श्चुभिः श्चुः' सस्य शः । 'स्वरहीनं०' । अग्रे अपदान्ते । सप्तम्येकवचनान्तम् । 'अ इ ए' 'सवर्णे०' । झसे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । चकारः पूर्वोक्तस्य । 'मोऽनुस्वारः' इत्यतो म इत्यस्यानुकर्षणार्थः । तेनोभयोरप्यपदान्ते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परे अनुस्वारो भवति । यशस् प्रथमाबहुवचनम् । 'जश्शसोः शिः' 'नुमयमः' 'मिदन्त्यात्स्वरात्परो०' 'न्सम्महतो०' ततो यशान् अग्रे सि । पुम् अग्रे भ्याम् । उभयत्राप्यनुस्वारः । यशांसि पुंभ्याम् । एवं पयान् अग्रे सि पयांसि ॥

**ञमा यपेऽस्य वा ॥ अनुस्वारस्य ञमा (वा) भवन्ति यपे परे ।**

**[ नन्वेकस्यानुस्वारस्य पञ्च ञमाः प्राप्ताः केन क्रमेण भवन्ति ? ]**

**अस्य यपस्य सवर्णाः । शांतः शान्तः ॥**[1]

**तं करोति तङ्करोति । तं तनोति तन्तनोति । तं जानाति तञ्जानाति ॥**[2]

**संयन्ता सय्यँता । संवत्सरः सव्वँत्सरः । यंलोकं यँल्लोकम् ॥**[3]

**[ ङ्णोः कक्टग्वा शरि ॥ ङकारणकारयोः शषसे परे कक्टकावागमौ वा स्तः । प्राङ् षष्ठः प्राङ्क्षष्ठः प्राङ्षष्ठः । सुगण् षष्ठः सुगण्ट्षष्ठः सुगण्षष्ठः ॥**

**मः स्वरे ॥ अनुस्वारस्य मकारो भवति स्वरे परे । किं अस्ति किमस्ति ॥ ]**

सूत्रम्—'ञमा यपे०' ञमाः प्रथमाबहुवचनान्तम् 'सवर्णे०' 'स्रोर्विसर्गः' यमाः । अग्रे यपे । सप्तम्येकवचनान्तम् । 'अ इ ए' प्राक् 'आदबे०' विसर्गलोपः । अग्रे अस्येति षष्ठ्येकवचनान्तम् । 'त्यदादेष्टेरः स्यादौ' 'दस्य मः' 'हभ्य' इदमः स्थाने अ । 'एदोतोऽतः' ॥ वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ अनुस्वारस्य ञमा वा भवन्ति । पक्षे अनुस्वार एव तिष्ठति यपप्रत्याहारे परे । कथमित्याह—अस्याग्रे वर्तमानस्य यपस्य सवर्णा एव ञमा भवन्ति । अनुस्वारस्य सानुनासिक्यात् ये सानुनासिका ञमास्त एव भवन्ति । 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् वर्ग्ये अक्षरे परे तद्वर्गस्य पञ्चमाक्षरं भवति । अन्यत्र यादृशो यपोऽग्रे भवति तादृश एव क्रियते । यथा कवर्गे परे ङकारः । चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवर्गे परे मः । यवलेषु परेषु यवला एव स्युः । उदाहरणम् । तम् अग्रे करोति । तम् अग्रे तनोति । ककारे परे अनुस्वारस्य ङः । तकारे परे अनुस्वारस्य नः । 'स्वरहीनं०' तङ्करोति । तन्तनोति । सं अग्रे यन्ता । अत्रानुस्वारस्य यः । अग्रे च 'अन्तःस्था द्विप्रभेदाः' इति सानुनासिकत्वात् यस्योपरि अर्धचन्द्राकारो बिन्दुः । सय्यँता । एवं संवत्सरः सव्वँत्सरः पुंलिङ्गः पुँल्लिङ्गः ॥ अत्र केचित् । 'स्वरे मः' अनुस्वारस्य मकारो भवति स्वरे परे । इति सूत्रं पठन्ति परं स्वरे परे पूर्वं 'मोऽनुस्वारः' एव

---

१ 'वा पदान्ते ॥ पदान्ते वर्तमानस्यानुस्वारस्य ञमा वा भवन्ति यपे परे ।' इत्यधिकः पाठः ।

२ 'वर्ग्ये वर्गान्तः ॥ वर्ग्ये परे वर्गान्तो भवति । वर्गाभावे पररूपं स्यात् ।' इत्यधिकः पाठः ।

३ 'मनयवलपरे हकारेऽनुस्वारस्य ते यथाक्रमं भवन्ति ॥ किं ह्मलयति किम्ह्मलयति । किं ह्नुते किन्ह्नुते । किं ह्यः किय्ँह्यः । किं ह्वलयति किव्ँह्वलयति । किं ह्लादयति किल्ँह्लादयति ।' इत्यधिकः पाठः ।

४ सर्वपुस्तकेषु नोपलभ्यते ।

न भवति । किंतु स्वरहीनमेव स्यात् । [ कृष्णो मां अवतु कृष्णो मामवतु । जिनं ईडे जिनमीडे । शं अस्ति शमस्ति । अस्माकं इह अस्माकमिह । 'ङ्णोः कक्टक् वा' ङकारणकारयोः शषसेषु परेषु क्रमेण कक्टक् आगमौ स्तः । प्राङ्षष्ठः प्राङ्क्षष्ठः । लिङ्सु लिङ्क्षु । सुगण् षष्ठः । सुगण्ट्षष्ठः ॥

ँछन्दसि ॥ अनुस्वारश्छन्दसि ँकारमापद्यते शषसहरेफेषु परतः । चतुस्त्रिँशद्वाजिनः । सामयजूँषि । वयँस्याम । सिँह्यसि । देवानाँराजा ॥ ]

इति व्यञ्जनसंधिप्रक्रिया ॥ ४ ॥

सूत्रम्—'ँछन्दसि' ॥ अनुस्वारः ँकारमापद्यते शषसहरेफेषु परतः छन्दसि वेदे । हंसः हँसः । शुचीं षत् । शुचीँषत् । वयं स्याम वयँस्याम । संहिता सँहिता । तं रविः तँरविः । ] इति चतुर्थसंध्यनुसारेण व्यञ्जनसंधेरवचूरिलेशतो लिखिता ॥

॥ इति व्यञ्जनसंधिः ॥

---

## विसर्गसंधिः ५

अथ विसर्गसंधिर्निगद्यते ॥ विसर्जनीयस्य सः ॥ विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ॥

अथेति । व्यञ्जनकार्यकथनानन्तरं विसर्गाणां संधिर्निगद्यते कथ्यते । द्वौ बिन्दू विसर्गः । सूत्रम्—'विसर्जनीयस्य सः' ॥ विसर्जनीयस्य षष्ठ्येकवचनान्तम् । 'ङस्य' । अग्रे सः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' सिद्धम् । विसर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारबिन्दुद्वयरूपस्य खसे परे सकारो भवति । [ श्लोको यथा 'शृङ्गवद्बालवत्सस्य कुमारीस्तनयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः' । ] उदाहरणम् । कः अग्रे तनोति अनेन विसर्गस्य सकारः । 'स्वर०' कस्तनोति ॥

शषसे वा ॥ विसर्जनीयस्य वा सकारो भवति शषसे परे । कः शेते कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः ।

सूत्रम्—'शषसे वा' ॥ द्विपदं । विसर्जनीयस्य शषसेषु परेषु शषसा एव वा भवन्ति । पक्षे विसर्जनीय एव तिष्ठति । कः शेते कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः । क्षेपकसूत्रमिदम् ॥

कुप्वोः ≍क≍पौ वा ॥ विसर्जनीयस्य कवर्गपवर्गसंबन्धिनि खसे परे ≍क≍पौ वा भवतः । कपावुच्चारणार्थौ । कः करोति क≍करोति । कः खनति क≍खनति । कः पचति क≍पचति । कः पठति क≍पठति ॥ कः फलति क≍फलति ॥

पुनर्विशेषमाह—सूत्रम्—'कुप्वोः ≍क≍पौ वा' ॥ कुश्च पुश्च कुपू तयोः कुप्वोः षष्ठीद्वि-

---

१ सर्वपुस्तकेषु नोपलभ्यते । २ कोष्ठकमध्यस्थोऽयं पाठः क्वाचित्क एव भवेत् ॥

वचनान्तम् । 'उवम्' 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे ×कश्च ×पश्च ×क×पौ । प्रथमाद्विवचनान्तम् । 'ओ औ औ' । वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ विसर्जनीयस्य कवर्गपवर्गसंबन्धिनि कखपफरूपे खसे परे ×क×पौ जिह्वामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः—कखयोः परयोः ×कः । पफयोः परयोः ×पः । कपौ ककारपकारावुच्चारणार्थौ अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगजकुम्भाकारौ तिष्ठतः । कः अग्रे करोति । अत्र विसर्गस्य ×कः । क× करोति । कः अग्रे पचति । क× पचति । एवं क× खनति । क× फलति ॥

**वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः ॥ वाचस्पतिः बृहस्पतिः तस्करः कारस्करः पारस्करः भास्करः हरिश्चन्द्रः । इत्यादि ॥**

वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दास्तेऽपि निपातात्साधवः निपातसिद्धा एव ज्ञेयाः । यथा वाचस्पतिः । अत्र 'कुप्वोः ×क×पौ वा' इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवं भास्करः । श्रेयस्करः । श्रेयस्कामः । अयस्कान्तः । अयस्कुम्भः । अयस्पात्रम् । तमस्काण्डः । दिवस्पतिः । नमस्कारः । अहस्कारः । बृहस्पतिः । तस्करः ॥ शास्त्रान्तरे त्वित्थं दृश्यते प्रक्रियाकौमुद्याम्—'तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च ।' तत् अग्रे करः । अनेन सुडागमः । तलोपः । तस्करः । बृहत् अग्रे पतिः । सकारागमः । तलोपः । बृहस्पतिः ॥ चकारात् हरिश्चन्द्रः । मस्करः मस्करी, [ परिव्राजकवेण्वोः[1] ] । कांस्कान् । कस्कः । कस्कादयः । एवमश्वत्थकपित्थदधित्थादिषु स्थाधातोः सस्य तः इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणैर्नोपपन्नं तत्सर्वं निपातात्सिद्धमेवेति लक्षणसूत्रमन्तरेण लोकप्रसिद्धरूपोच्चारणं निपातनम् ॥

**अह्नो रोऽरात्रिषु ॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु परतः । अहः पतिः अहर्पतिः । अहः गणः अहर्गणः । अहः अत्र अहरत्र । अरात्रिष्विति विशेषणादहोरात्रम् । अहः रूपं अहोरूपम् । अहः रथन्तरं अहोरथन्तरम्[2] ।**

सूत्रम्—'अह्नो रोऽरात्रिषु' ॥ अह्नः षष्ठ्येकवचनान्तम् । 'अल्लोपः स्वरे' 'स्रोर्विसर्गः' । अह्नः अग्रे रः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' मध्ये 'ह्वे' 'उ ओ' । रः अग्रे अरात्रिः 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' न रात्रयः अरात्रयस्तेषु अरात्रिषु सप्तमीबहुवचनान्तम् । 'किलातषः सः' ॥ अहन्शब्दसंबन्धिनो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु । रकारादिरात्रिरूपरथन्तरादिवर्जितेष्वित्यर्थः । उदाहरणम् । अहन् पतिः । अहन् अग्रे गणः । 'अह्नः' इति सूत्रेण उभयत्रापि नस्य सः । 'स्रोर्विसर्गः' अनेन सूत्रेण विसर्गस्य रः । 'राद्यपो द्विः' जलतुम्बिका० । अह्नो दिवसस्य पतिः अहर्पतिः । अह्नां गणः । अहर्गणः । अत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वं प्राह्यम् । अरात्रिष्विति विशेषणात् रात्र्यादिवर्जनात्किम् । अहन् अग्रे रात्रम् । 'अह्नः' इति नस्य सः । अरात्रिष्विति कथनात् रनिषेधः । ततो 'ह्वे' 'उ ओ' अहोरात्रम् । एवमहोरूपम् ।

---

[1] 'वेणुपरिव्राजकयोः' इति पाठो योग्यः 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' इति पाणिनीयसंवादात् ॥
[2] 'रूपरात्रिरथन्तरेषु न रेफ इत्यादि' अधिकः पाठः ॥

प्रशस्तमहः अहोरूपम् । 'अहोरथन्तरं साम श्रेष्ठं साम रथन्तरम्' । अहोरथन्तरम् । पदान्त इति किम् । अहोभ्याम् ॥

**अतोऽत्युः ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः । एदोतोऽतः । कः अर्थः कोऽर्थः ॥**

सूत्रम्—'अतोऽत्युः'॥ अतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । अतः अग्रे अति सप्तम्येकवचनम् । 'स्वरहीनं०' । मध्ये । 'अतोऽत्युः' 'उ ओ' 'एदोतोतः' । अग्रे उः प्रथमैकवचनान्तम् । 'स्रोर्वि०' पश्चात् 'इयं स्वरे' 'स्वरहीनं०' सिद्धिः । वृत्तिः कण्ठ्या । अति परतः अकार एव परे इत्यर्थः । तपरकरणं तावन्मात्रग्रहणार्थमुभयत्रापि सवर्णनिषेधार्थम् । उदाहरणम्—कः अग्रे अर्थः । अनेन उकारः । 'उ ओ' 'एदोतोतः' कोऽर्थः ।

**हबे ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवति हबे परे । कः गतः को गतः । देवः याति देवो याति । मनः रथः मनोरथः ॥**

सूत्रम्—'हबे' ॥ सप्तम्येकवचनम् । 'अ इ ए' ॥ वृत्तिः सुगमा । उदाहरणम् । कः गतः । अत्र अकारात्परस्य विसर्जनीयस्य हबे परे उकारः । ततः 'उ ओ' को गतः । देवः याति । 'हबे' 'उ ओ' देवो याति ॥ मनः रथः । 'हबे' 'उ ओ' मनोरथः ॥

**आदबे लोपश्च ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश्च भवत्यबे परे । देवाः अत्र देवा अत्र ॥ वाताः वाताः वाता वाताः ॥**

सूत्रम्—'आदबे लोपश्' ॥ आत् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः' आत् अबे सप्तम्येकवचनम् । 'अ इ ए' मध्ये । 'चपा अबे जबाः' ॥ लोपश् प्रथमैकवचनम् । 'हसे पः से०' ॥ यदि वा अश्च आ च आ । पञ्चम्येकवचनान्तम् । ङस् । 'नपुंसकस्य' इति ह्रस्वः । 'ङसिरत्' अवर्णादकाराकाररूपादुत्तरस्य विसर्जनीयस्य लोपश् भवति अबे परे ॥ उदाहरणम्—देवाः अग्रे अत्र । वाताः अग्रे वाताः । उभयत्रापि विसर्गलोपः । देवा अत्र । वाता वाताः ॥ एवं कः इह क इह ॥

**स्वरे यत्त्वं वा ॥ अवर्णात्परस्य विसर्जनीयस्य यत्वं वा भवति स्वरे परे । देवाः अत्र देवायत्र देवा अत्र ॥**

पुनर्विशेषमाह—सूत्रम्—'स्वरे यत्त्वं वा' ॥ स्वरे सप्तम्येकवचनान्तम् । 'अ इ ए' । यत्त्वं प्रथमैकवचनम् । 'अतोऽम्' 'अम्शसो०' 'मोऽनु०' ॥ वा तृतीयैकवचनम् । 'अव्यया०' ॥ वृत्तिः कण्ठ्या । वाग्रहणात्पक्षे 'आदबे लोपश्' देवाः अग्रे अत्र । एकत्र यत्त्वम्—'स्वरहीनं०' देवायत्र । अन्यत्र लोपश्—देवा अत्र ॥

**भोसः ॥ भोस् भगोस् अघोस् इत्येतत्संबन्धिनः[1] विसर्जनीस्य लोपश्च भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ॥**

---

१ 'इत्येतत्संबन्धिनः' इति तूचितम् ॥

सूत्रम्—'भोसः' ॥ भोस् शब्दस्य पञ्चम्येकवचनम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । जातीय-ग्रहणेन तज्जातीयग्रहणम् । यद्वा भोस् इत्यत्र आद्यन्तग्रहणेन प्रत्याहारः सूचितस्तेन भोस्, भगोस्, अघोस्, इत्येतस्मात्पदत्रयात्परस्य विसर्जनीयस्याबे परे लोपश् भवति । उदाहर-णम्—भोः अग्रे एहि आगच्छ । भगोः अग्रे नमस्ते । हे भगो हे भगवन् ते तुभ्यं नमः । अघोः अग्रे याहि । हे अघो हे पाप याहि गच्छ । सर्वत्र 'भोसः' इति सूत्रेण विसर्गलोपश्च[२] ॥

**नामिनो रः ॥ नामिनः परस्य विसर्जनीयस्य रेफो भवति अबे परे । अग्निः अत्र अग्निरत्र । बटुः यजते बटुर्यजते ॥**

सूत्रम्—'नामिनो रः' ॥ नामिनः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे रः । 'स्रोर्विसर्गः' 'उ ओ' 'नामिनो रः' । अवर्णवर्जस्वरात्परस्य विसर्जनीयस्य अबे परे रेफो भवति । उदाहरणम्—अग्निः अग्रे अत्र । अनेन सूत्रेण रेफः । 'स्वरहीनं०' अग्निरत्र । बटुः अग्रे यजति । 'नामिनो रः' इति रेफः । 'राद्यपो द्विः' जलतुम्बिका० बटुर्यजति । बटुर्ब्राह्मणो यजति यज्ञं करोति । एवं पटुरत्र वर्तते ।

**रेफप्रकृतिकस्य खपे वा ॥ नामिनः परस्य रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गीर्पतिः गीᳲपतिः । धूः पतिः धूर्पतिः धूᳲपतिः ॥**

सूत्रम्—'रेफप्रकृतिकस्य०' रेफप्रकृत्या उत्पन्नो वा रेफ एव प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य । षष्ठ्येकवचनम् । 'ङस्स्य' । खपे सप्तम्येकवचनम् । 'अ इ ए' । वा तृतीयैकवचनम् । 'अव्यया०' ॥ रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे । उदाहरणम्—गिर् अग्रे पतिः । 'य्वोर्वि ह्से' गि इत्यस्य गीः 'स्रोर्विसर्गः' गीः । 'रेफ-प्रकृति०' अनेन एकत्र रेफः । 'राद्यपो द्विः' 'जलतुम्बिका०' । अन्यत्र—'कुप्वोः ᳲकᳲपौ वा' गीर्पतिः । गीᳲपतिः । गीःपतिः । एवं रूपत्रयम् । एवं धूर्पतिः । धूᳲपतिः धूःपतिः इत्यादि ॥

**रः ॥ रेफसंबन्धिनो विसर्जनीयस्य रेफो भवति अबे परे । प्रातः अत्र प्रातरत्र । अन्तः गतः अन्तर्गतः ॥**

सूत्रम्—'रः' ॥ षष्ठ्येकवचनान्तम् । 'स्वरहीनं' 'स्रोर्विसर्गः' ॥ रेफसंबन्धिनो रेफाज्जातस्य[१] विसर्जनीयस्य रेफो भवति अबप्रत्याहारे परे । उदाहरणम्—प्रातर् अग्रे अत्र । अन्तर् अग्रे गतः । उभयत्रापि 'स्रोर्विसर्गः' । ततः 'रः' इत्यनेन पुनरपि रेफः । 'स्वरहीनं०' प्रात-रत्रागन्तव्यम् । अन्तर्गतः । एवं स्वः गतः—स्वर्गतः । पुनः आगतः—पुनरागतः ॥

**रि लोपो दीर्घश्च ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ॥**

सूत्रम्—'रि लोपो०' ॥ रि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' । लोपः प्रथमैकवचना-

---

१ 'इत्येतत्संबन्धिनः' इति सूचितम् ॥ २ इतः परम् 'यो वा खरे । भो एहि भोयेहि' इत्ययं पाठश्चन्द्रिकास्थो वर्धितः क्वचित् ॥

न्तम् । 'स्नोर्विसर्गः' । अग्रे दीर्घः । पूर्वम् । 'ह्वे' 'उ ओ' । दीर्घः प्रथमैकवचनान्तम् । 'स्नोर्विसर्गः' । दीर्घः अग्रे च प्रथमैकवचनान्तम् । 'अव्यया०' प्राक् 'विसर्जनीयस्य सः' 'स्तोः श्चुभिः श्चुः' सिद्धम् । सूत्रं चतुःपदम् । रेफेति वृत्तिः सुगमा । पुनः अग्रे रमते । 'रः' इति रेफः । 'रि लोपो०' इति रलोपः पूर्वस्य च दीर्घः । न इत्यस्य ना । शुक्तिः अग्रे रूप्यात्मना भाति 'नामिनो रः' 'रि लोपो०' इति रलोपः, पूर्वस्य च दीर्घः । शुक्ती रूप्यात्मना भाति । शुक्तिः रजताकारेण भासते इत्यर्थः । एवं हरी राजते । शंभू रमते ॥

**सैषाद्धसे ॥ सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति ॥**

सूत्रम्—'सैषाद्धसे' ॥ स च एष च सैषं तस्मात् । पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' । हसे सप्तम्येकवचनान्तम् । 'अ इ ए' मध्ये । 'हो झभाः' 'चपा अबे०' । अत्र समासे कृते 'तदेतदोर्हसे' इति संभवेऽपि 'सैषाद्धसे' इति यत्सूत्रं कृतं ततस्तैरेतैः सकः एषकः । न सः असः इत्यादौ हसे परे विसर्गलोपश्प्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः—स इति पृथक्पदं पञ्चम्येकवचनान्तं साङ्केतिकम् । एषात्पञ्चम्येकवचनम् । हसे सप्तम्यन्तम् । स एषात् इत्यत्र 'आदबे लोपश्' इति विसर्गलोपशं विधाय पश्चात् 'ए ऐ ऐ'॥

**सैषादिति संहिता—**

**'सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।**
**सैष कर्णो महात्यागी सैष भीमो महाबलः ॥'**

**इत्यादौ पादपूरणे संध्यर्था ज्ञेया ॥**

नन्वत्र लोपशि कृते संधिः कथं कृतः इत्यग्रे वक्ष्यति—सैषादिति संहितेत्यादिना । तद् एतद् उभयत्रापि प्रथमैकवचनान्तम् । 'त्यदादेष्टेरः स्यादौ' इति दलोपः (?) । 'स्तः' इत्युभयत्रापि तस्य सः । एस इत्यत्र 'किलात्षः सः०' 'स्नोर्विसर्गः' तदेतदोर्निष्पन्नाभ्यां सएषशब्दाभ्यामित्यर्थः । शेषं कण्ठ्यम् । उदाहरणम् । सः अग्रे चरति । एषः अग्रे हसति । उभयत्रापि 'सैषाद्धसे' इति विसर्गलोपश् । 'सादेषाद्धसे' इति सूत्रे ऋजुतया कर्तव्ये सैषादिति सूत्रमध्ये या अघटमाना अकारैकारयोः 'ए ऐ ऐ' इति संहिता संधिर्दर्शिता सा सएषशब्दयोः 'सैष दाशरथीरामः' इत्यादि अष्टाक्षरात्मकपादपूरणार्थम् लोपशि कृतेऽपि यः 'ए ऐ ऐ' इति संधिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः—सैषः सः अग्रे एषः 'आदबे लोपश्' 'ए ऐ ऐ' इति संधिर्भवति । एवमपरपादत्रयेऽपि । स एषः दाशरथिः । दशरथस्यापत्यं दाशरथिः । दशरथपुत्रो रामो वर्तते । स एषः युधिष्ठिरो राजा युधि संग्रामे स्थिरः युधिष्ठिरः । 'किलात्षः सः कृतस्य' इति षत्वम् । 'ष्टुभिः ष्टुः' स एष कर्णः राजा महात्यागी महादानी वर्तते । स एष भीमो भीमः पाण्डवः महाबलः अतिबलिष्ठो वर्तत इत्यादि । अर्थः सुगमः । इत्यादौ पादपूरणे संध्यर्था । पादपूरणे यः संधिः स एव अर्थः प्रयोजनं यस्याः सा ॥

---

[1] क्वचिन्नामिनोऽबे लोपश् ॥ नामिनः परस्य विसर्जनीयस्य लोपश् भवति क्वचिदबे परे । भूमिः आददे भूम्याददे ॥ इत्यधिकः पाठः ।

**यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ।**
**सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ १ ॥**

पुनर्वैदिकप्रयोगविश्लेषमाह—यदुक्तम् । यत्सूत्रमिहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धोदाहरणायोक्तं सूत्रादि तद्वेदे छन्दसि बहुलमन्यथा भवति अनिश्चितं विभजनतया भवेत् । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः । उदाहरणम्—सः अग्रे इमाम् । 'आदबे लोपश्' 'अ इ ए' भूमिः अग्रे आददे छान्दसत्वात्क्वचिन्नामिनोऽप्यबे विसर्गलोपश् । ततः 'इयं स्वरे' भूम्याददे ॥ सः अग्रे उषाम् । 'आदबे लोपश्' 'उ ओ' ॥ इत्यादीनामार्षप्रयोगाणां वैदिकप्रयोगाणामदुष्टता न दोष इत्यर्थः । 'स इमां भूमिमपुनात् भूमेश्च रसमाददे' । ततः स उषां गामानयामास ॥

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ २ ॥**

बाहुलकं कतिविधमित्याह—क्वचिदिति । क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः अप्राप्तस्यासंभवतः सूत्रस्य प्रापणं प्रवृत्तिः प्राप्तिः । यथा 'लोपशि पुनर्न संधिः' इति निषिद्धत्वेऽपि 'अ इ ए' इति संधेः प्राप्तिः । क्वचित्प्रयोगान्तरे उक्तस्याप्यप्रवृत्तिः । कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः अग्रे आददे इत्यत्र 'नामिनो रः' इत्यस्याप्राप्तिः । क्वचिद्विभाषा विकल्पः यथा वेदे देवैः देवेभिः । गवेशः गवीशः । क्वचिदन्यदेवोक्तमन्यदेव भवति यथा—भूमिः आददे अत्र विसर्गलोपरूपं कार्यम् अन्यदेव भवति । एवममुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं बहुधा बहुप्रकारं समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदन्ति कथयन्ति । बुधा इत्यध्याहारः । वैदिकं चतुर्धोक्तम् ॥

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ ३ ॥**

अथ लौकिकप्रयोगः कतिधा भवतीत्याह—वर्णागम इत्यादि । एको वर्णागमः । च पुनर्वर्णविपर्ययः । पूर्वोच्चरितस्य स्थाने परवर्णोच्चारणं परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः । पुनर्द्वावपरौ भेदौ । कौ तौ ? वर्णविकारनाशौ । पूर्वावस्थापरित्यागेन अवस्थान्तरापादनं विकारः । सर्वथा लोपो नाशः । वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पञ्चमश्च भेदः धातोस्ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा पुनर्धातोरर्थातिशयेन च कृत्वा धातोर्योऽर्थातिशयः अधिकता कश्चिद्विशेषो यः अर्थातिशयस्तेन च यो भवति स योग इति नाम्ना पञ्चमो भेदः । तत्तस्मान्निरुक्तं निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ॥

**वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।**
**षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ४ ॥**

पञ्चविधमुच्यते तानेव पञ्च व्यञ्जयति । अथ लौकिकः प्रयोगः कतिधा भवतीत्याह—वर्णागम इत्यादि । गवेन्द्रादौ वर्णागमः 'गवादेरवर्णागमोऽक्षादौ०' इति ॥ एवं हन् हिंसागत्योः । हन् अप्रत्ययः । सकारागमः हंस इति ॥ सिंहे वर्णविपर्ययो भवति । यथा हिंस

हिंसायाम् । 'मूर्तौ घनः' इति अप्रत्ययः । हिंस इति स्थिते । हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्य स्थाने हः एवं वर्णविपर्ययः सिंह इति सिद्धम् ॥ षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र । 'षष उदों डः' षस्य उः दस्य डः इति वर्णविकारः । ततः 'उ ओ' षोडश इति विकारोदाहरणम् ॥ गूढः अग्रे आत्मा । बन्धुजनः अग्रे आजुहाव । कुरवः अग्रे आत्महितम् । इत्यादिषु वर्णविकारमाकारस्य अकारं विधाय 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' 'गूढोत्मा' 'बन्धुजनो जुहाव' । कुरवोत्महितम् ॥ पृषोदरे वर्णनाशः । यथा पृषत् अग्रे उदरः तकारस्य नाशो लोपः 'उ ओ' पृषोदरः । पृषन्ति बिन्दवः उदरे यस्य स पृषोदरः मृगः अथवा पृषन्मृगस्तस्योदरमिवोदरं यस्य स पृषोदरः ॥

**वर्णनाशविकाराभ्यां धातोरतिशयेन यः ।**
**योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ५ ॥**[1]

॥ इति विसर्गसंधिप्रक्रिया ॥ ५ ॥

वर्णनाशेति । वर्णस्याक्षरस्य नाशविकाराभ्यां कृत्वा धातोरतिशयेन अर्थविशेषेण कृत्वा य उत्पद्यते सः प्राज्ञैः पण्डितैः योग इत्युच्यते । क । मयूरभ्रमरादिषु मयूरः भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा रु शब्दे । रु रु । एकत्र महीपूर्वः । अन्यत्र भ्रमन्पूर्वः । मह्यामतिशयेन रौति जल्पतीति मयूरः । भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । 'नाम्नि च' इति डः प्रत्ययः डित्वाट्टिलोपः । 'स्वरहीनं०' एकत्र विकारः हीस्थाने यू, अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । मयूरः भ्रमरः इति सिद्धम् । अन्येषां मते तु एते पञ्चापि पृषोदरादिभेदा एव ॥

॥ इति विसर्गसंधिः ॥

---

## स्वरान्ताः पुंलिङ्गाः ६

**अथ विभक्तिर्विभाव्यते । सा द्विधा । स्यादिस्त्यादिश्च ॥**

अथेति पञ्चसंधिकथनानन्तरं विभक्तिर्विभाव्यते कथ्यते । विभज्यन्ते पृथक् क्रियन्ते कर्तृकर्मादयो यया सा विभक्तिः ॥ सा विभक्तिर्द्विधा द्विप्रकारा । एका स्यादिः सि औ जस् इत्यादिका । अपरा त्यादिः तिप् तस् अन्ति इत्यादिका ॥

**विभक्त्यन्तं पदम् ॥ तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते ॥**

विभक्तेः प्रयोजनमाह—सूत्रम्—'विभक्त्यन्तं पदम्' ॥ विभक्तिरन्ते यस्य तद्विभक्त्यन्तं यस्यान्ते विभक्तिस्तत्पदमुच्यते ॥ तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नोऽग्रे योज्यते स्थाप्यते दीयते । त्यादिर्विभक्तिर्धातोरग्रे योज्यते स्थाप्यते ॥

**अविभक्ति नाम ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥ कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित् ॥**

नामलक्षणमाह—सूत्रम्—'अविभक्ति नाम' ॥ नास्ति विभक्तिर्यस्य तदविभक्ति प्रथमैक-

---

[1] वितकम्भनेन विस्कम्भनेन । शुनः शेपं चित् शुनश्चिच्छेपम् । पृषद् उदरं पृषोदरम् ॥ आत्खसयोरुः ॥ आकारे खसे च परे विसर्जनीयस्य सह उः क्वचिद्भवति । गूढः आत्मा गूढोत्मा ॥ इत्यधिकः पाठः ।

वचनान्तम् । 'नपुंसका०' सेर्लोपः । नामेति नामन् शब्दस्य प्रथमैकवचनान्तम् 'नपुंसका०' 'नाम्नो नो०' नस्य लोपः । सिद्धम् । द्विपदम् । विभक्त्या रहितं धातोर्भ्वादेः पृथक्भूतमर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते । शब्दरूपं नामेत्युक्ते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थमविभक्तीति । तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्जितमिति । तथा सति निरर्थकस्य टस् इत्यादि ध्वनेर्नामत्वं तन्निवारणार्थमर्थवदिति । ईदृग्लक्षणं नामोच्यते ॥ [1]च पुनः कृत्तद्धितसमासाः सविभक्तिका अपि नामसंज्ञाः स्युः केचिदित्याहुः । कृतस्तृतीयवृत्तिप्रत्ययाः । तदन्ताः शब्दाः धातवस्तद्धितान्ताः समासाश्च नामसंज्ञका भवन्ति इति । केचिदिति पाणिन्याचार्या वदन्ति । एते सर्वेऽपि प्रातिपदिकसंज्ञका नामसंज्ञका उच्यन्ते । तन्मते प्रातिपदिकमिति नामपर्यायः ॥ कृदन्ता धातवः समासतद्धितयोः पदान्यपि नामसंज्ञकानीत्यर्थः ॥

**तस्मात् सि औ जस् अम् औ शस् टा भ्यां भिस् ङे भ्यां भ्यस् ङसि भ्यां भ्यस् ङस् ओस् आम् ङि ओस् सुप् ॥ तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनं सि ॥**

**अकारान्तः पुलिङ्गो देवशब्दः । देव सि इति स्थिते । इकारः उच्चारणार्थः सेरिति विशेषणार्थश्च ॥**

सूत्रम्—'तस्माद्यावत्सुप्' ॥ तद् पञ्चम्येकवचनम् । 'त्यदादेष्टेरः०' दलोपः (?) । 'ङसिरत्' 'अतः' इति स्मडागमः । 'सवर्णे०' ॥ सिश्च, औश्च, जस् च, यावत्सुप् च प्रथमाबहुवचनान्तम् । सांकेतिकम् । यद्वा तस्मादिति पञ्चम्येकवचनान्तम् । अग्रे सि औ जस् इत्येकविंशतिरपि सांकेतिकप्रथमैकवचनान्तानि पदानि । एवं द्वाविंशतिपदं सूत्रम् । अष्टपदमित्यपि केचित् । सुप् इत्यत्र पकारः पाणिनीयानां सु औ जस् इति प्रथमैकवचनस्यापि सु इति संज्ञा तस्माद्भेदज्ञापनार्थः सुप्प्रत्याहारार्थश्च । अत्र तु सुखमुखोच्चारणार्थ एव । तस्मान्नाम्नः परा एताः पूर्वोक्ताः स्यादयः सप्त विभक्तयो भवन्ति । तत्र सि औ जस् प्रथमा । अम् औ शस् द्वितीया । टा भ्यां भिस् तृतीया । ङे भ्यां भ्यस् चतुर्थी । ङसि भ्यां भ्यस् पञ्चमी । ङस् ओस् आम् षष्ठी । ङि ओस् सुप् सप्तमी । एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । तत्रापि नाम्नि सप्तसु विभक्तिषु वा अर्थमात्रस्यैकत्वविवक्षायामर्थमात्रस्य घटपटादेरेकस्य वक्तुमिच्छा क्रियते यत्र, तत्र प्रथमैकवचनं सि दीयते । तत्र प्रथमं देवशब्दः । दिवु क्रीडायाम् । दीव्यतीति देवः । 'पचिनन्दिग्रहादेः०' इति अप्रत्ययः । गुणः । देव इति जातम् । ततः 'देव सि' इति स्थिते सति इकार उच्चारणार्थः 'सेर्डौधेः' 'सेरा' इति सूत्रे विशेषणार्थश्च । इत्संज्ञत्वात् इकारलोपः । देवस् इति स्थिरम् ॥

**स्रोर्विसर्गः ॥ सकाररेफयोर्विसर्जनीयादेशो भवत्यधातो रसे पदान्ते च । चकरात्पदान्ते उभयोर्धातुनाम्नोः । देवः ॥**

सूत्रम् 'स्रोर्विसर्गः' ॥ स् च र् च स्रौ तयोः स्रोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०'

---

[1] 'मतान्तरमाह' इति पाठान्तरम् ॥

'स्रोर्विसर्गः ।' प्रथमैकवचनान्तम् । 'स्रोर्वि०' इति द्विपदम् । मध्ये—'नामिनो०' । सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य रसे परे । चकारात्पदान्ते तु धातुनाम्नोरुभयोरपि ॥ नाम्नः सकाररेफयो रसे परे पदान्ते च विसर्गादेशः । चकारात्पदान्ते धातोरपि सकाररेफयोर्विसर्गादेशः—यथा अचकाः । अबिभः ॥ रसे परे धातोर्न—यथा आस्ते बिभर्तीत्यादौ । अनेन विसर्गः । देवः इति सिद्धम् ॥

**द्वित्वविवक्षायां औ । 'ओ औ औ' देवौ ॥**

द्वित्वविवक्षायाम् औ । द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनम् । यथा देवश्च देवश्चेत्येकशषे 'सरूपाणामेकशेष एकविभक्तौ' इति । देव औ इति स्थिते । 'ओ औ औ' देवौ ॥

**बहुत्वविवक्षायां देव जस् इति स्थिते । जकारो जसीति विशेषणार्थः । जकारस्येत्संज्ञायां तस्य लोपः । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ॥**

एवं देवश्च देवश्च देवश्चेति बहूनामुक्तौ प्रथमाबहुवचनम्—जस् । जकारो जसीति सूत्रविशेषणार्थः । अन्यथा असीत्युच्यमाने शसूङसूसंबन्धिनोऽप्यस ईकारः स्यात् । जकार इत्संज्ञकः । देव अस् । 'सवर्णे०' 'स्रोर्विसर्गः' देवाः ॥

**अकाराज्जसोऽसुक् कचिद्वक्तव्यश्छन्दसि ॥ कित्त्वादन्ते । देवासः । ब्राह्मणासः ॥**

विशेषमाह—'अकाराज्जसोऽसुक् कचिद्वक्तव्यः' ॥ कचित्प्रयोगान्तरे अकारात्परस्य जसः असुक् आगमो भवति छन्दसि वेदविषये । देव जस् । अनेन असुगागमः । कित्त्वादन्ते । 'स्वरहीनं०' 'स्रोर्विसर्गः' 'सवर्णे दीर्घः' देवासः ॥

**द्वितीयैकवचने देव अम् इति स्थिते ॥ अम्शसोरस्य ॥ समानादुत्तरयोरम्शसोरकारस्य लोपो भवति अधातोः । देवम् ॥ पूर्ववत् देवौ ॥**

कर्मैकत्वविवक्षायां द्वितीयैकवचने देव अम् । सूत्रम्—'अम्शसोरस्य' ॥ अम् च शस् च अम्शसौ तयोः अम्शसोः । अम्शस्शब्दस्य षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः'

---

१ वचननामानि

| विभक्तिनामानि | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सि | औ | जस् |
| द्वितीया | अम् | औ | शस् |
| तृतीया | टा | भ्याम् | भिस् |
| चतुर्थी | ङे | भ्याम् | भ्यस् |
| पञ्चमी | ङसि | भ्याम् | भ्यस् |
| षष्ठी | ङस् | ओस् | आम् |
| सप्तमी | ङि | ओस् | सुप् |

अस्येति षष्ठ्येकवचनान्तम् । 'ङस्य' 'नामिनोरः' सिद्धं द्विपदम् । समानात्परस्य अम्शस्-संबन्धिनोऽकारस्य लोपो भवत्यधातोः । अक्विबन्तात् शब्दादित्यर्थः । अनेन अकारलोपः । 'मोऽनुस्वारः' देवम् ॥ देवौ पूर्ववत् ॥

**बहुवचने देव शस् इति स्थिते । शकारोऽनुबन्धः 'शसि' इति विशेषणार्थः ॥**

द्वितीयाबहुवचने शस् । शकारः शसीति विशेषणार्थः । इत्संज्ञकः उच्चारणमात्रः । अस् लिख्यते । 'अम्शसोः' इत्यकारलोपः ॥

**सो नः पुंसः ॥ पुंलिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ शसि ॥ शसि परे पूर्वस्य दीर्घो भवति ॥ यदादेशस्तद्वद्भवति ॥ देवान् ॥**

सूत्रम्—'सो नः पुंसः' ॥ सः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । नः प्रथमैकवचनान्तम् 'स्रोर्वि०' पुंस इति पुंस्शब्दस्य पञ्चम्येकवचनान्तम् 'स्वरहीनं०' 'स्रोर्वि०' ॥ पुंलिङ्गे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवति ॥ सूत्रम्—'शसि' सप्तम्येकवचनम् । 'स्वर०' सिद्धमेकपदम् ॥ पूर्वह्रस्वस्य दीर्घो भवति शसि परे । 'यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ' इति न्यायात् पूर्वस्य दीर्घः । देवान् ॥

**तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्धः 'टेन' इति विशेषणार्थः ॥**

कर्तृकरणयोरेकत्वविवक्षायां तृतीयैकवचने देव टा इति स्थिते सति टकारोऽनुबन्धः । 'उच्चरितप्रध्वंसिनो ह्यनुबन्धाः' इति टकारस्य लोपः 'टेन' इति सूत्रार्थश्च । आ इति स्थिते ॥

**टेन ॥ अकारात्परष्टा इन भवति । 'अ इ ए' देवेन ॥**

सूत्रम्—'टेन' ॥ टा प्रथमैकवचनान्तम् । सांकेतिकम् । इन प्रथमैकवचनान्तं सांकेतिकम् । अकारान्तशब्दात्परतः टाविभक्तेः इनादेशो भवति सस्वर एव भवतीति । 'अ इ ए' देवेन ॥

**अद्भि ॥ अकार आ भवति भकारे परे । देवाभ्याम् ।**

देव–भ्याम् ॥ सूत्रम्—'अद्भि' ॥ अत् प्रथमैकवचनान्तम् । 'हसे पः' । भि सप्तम्येकवचनान्तम् 'स्वरहीनं०' 'चपा अबे जबाः' ॥ 'वासु' इति सूत्रादाकारस्यानुवृत्तिः ॥ केचित्तु 'आद्भि' इति पठन्ति । तन्मते आ अत् भि इति त्रीणि पदानि । अकारस्य स्यादिविभक्ति-संबन्धिभकारे परे आकारो भवति । देवाभ्यामिति सिद्धम् ॥

**देव भिस् इति स्थिते ॥ भ्यः ॥ अकारात्परस्य भिसो भकारस्याकारो भवति । 'अ इ ए' वृद्धिविसर्जनीयौ । देवैः ॥**

**अकारस्य भिसि छन्दस्येकारो वक्तव्यः ॥ देवेभिः । कर्णेभिः ॥**

तृतीयाबहुवचने देव भिस् इति स्थिते ॥ सूत्रम्—'भ्यः' ॥ अथवा । 'भ्यः' भ् भि अः

त्रिपदम् । भ् षष्ठ्येकवचनान्तं सांकेतिकम् । भि षष्ठ्येकवचनान्तं सांकेतिकम् । अः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'झबे जबाः' इति भस्य बः । 'इ यं स्वरे' 'स्वर०' इति सूत्रसाधना । वृत्तिः कण्ठ्या । देशैकग्रहणेन देशिग्रहणं तेन भि इत्युक्ते भिसो ग्रहणम् । पूर्वं भकारेकारौ विश्लेष्य वियोज्य इकारात्पूर्वं भकारं विधाय पश्चात् भस्य अः 'अ इ ए' 'ए ऐ ऐ' 'स्रोर्वि०' देवैरिति सिद्धम् । अत्र तु 'भिस् एस्' इति सूत्रकरणं युक्तम् ॥

अकारस्य भिसि परे छन्दसि वैदिकोदाहरणविषये एकारो वक्तव्यः । देवेभिः कर्णेभिरिति वैदिकप्रयोगः ॥

**चतुर्थ्येकवचने देव ङे इति स्थिते । ङकारो ङित्कार्यार्थः सर्वत्र ॥ ङेरक् ॥ अकारात्परस्य ङे इत्येतस्यागागमो भवति । कित्त्वादन्ते । 'ए अय्' 'सवर्णे दीर्घः' ॥ देवाय ॥ देवाभ्याम् ॥**

संप्रदानैकत्वविवक्षायां चतुर्थ्येकवचने देव ङे इति स्थिते ङकारो ङित्कार्यार्थे इत्संज्ञकश्च । सर्वत्र ङेङसिङस्ङिषु इत्यर्थः ॥ सूत्रम्—'ङेरक्' ॥ ङेः षष्ठ्येकवचनान्तम् । 'ङसिङसोरस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' ॥ अक् प्रथमैकवचनान्तम् 'हसे पः से०' 'नामिनोरः' 'स्वरहीनं०' सिद्धम् । अकारात्परस्य ङेइत्यस्य अगागमो भवति । कित्त्वादन्ते । 'ए अय्' 'सवर्णे०' 'स्वरहीनं०' देवाय ॥ चतुर्थीद्विवचने देव भ्याम् । 'अद्धि' देवाभ्याम् ।

**ए स्भि बहुत्वे ॥ अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः ॥**

चतुर्थीबहुवचने देव भ्यस् इति स्थिते । सूत्रम्—'ए स्भि बहुत्वे' ॥ ए प्रथमैकवचनान्तम् । सांकेतिकम् । स् च भ् च स्भ् तस्मिन् स्भि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ बहुत्वे सप्तम्येकवचनम् । 'अ इ ए' ॥ अकारस्यैत्वमेकारो भवति बहुवचने सति सकारभकारादौ विभक्तावित्यर्थः । देवेभ्यः ॥

**पञ्चम्येकवचने देव ङसि इति स्थिते । इकारः प्रत्ययभेदज्ञापनार्थः ॥ ङसिरत् ॥ अकारात्परो ङसिरत् भवति ॥ देवात् । देवाभ्याम् । देवेभ्यः ॥**

अपादानैकत्वविवक्षायां पञ्चम्येकवचने देव अस् इति स्थिते । सूत्रम् 'ङसिरत्' ॥ ङसिः प्रथमैकवचनान्तम् 'स्रोर्वि०' अत् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो०' सिद्धम् । अकारादुत्तरो यो ङसि सः अत् भवति । 'सवर्णे०' देवात् । पञ्चमीद्विवचने देव भ्याम् इति स्थिते । 'अद्धि' देवाभ्याम् । बहुवचने देवेभ्यः । 'ए स्भि बहुत्वे' 'स्रोर्विसर्गः' ॥

**षष्ठ्येकवचने देव ङस् इति स्थिते ॥ ङस्स्य ॥ अकारात्परो ङस् स्यो भवति । देवस्य ॥**

संबन्धैकत्वविवक्षायां षष्ठ्येकवचने देव अस् । सूत्रम्—'ङस्स्य' ङस् प्रथमैकवचनान्तम् । 'हसे पः०' स्यः प्रथमैकवचनान्तम् । 'स्रोर्वि०' अकारादित्यादिर्वृत्तिः कण्ठ्या । देवस्य ।

**ओसि ॥ अकारस्य ओसि परे एत्वं भवति । 'ए अय्' देवयोः ॥**

षष्ठीद्विवचने देव ओस् इति स्थिते सति ॥ सूत्रम्—'ओसि' ओस् शब्दस्य सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अकारस्य ओसि परे एत्वमेकारो भवति । 'ए अय्' 'स्वरहीनं०' 'स्रोर्विं०' देवयोः ॥

**नुडामः ॥ समानात्परस्यामो नुडागमो भवति । टित्त्वादादौ । उकार उच्चारणार्थः ॥ नामि ॥ नामि परे पूर्वस्य दीर्घो भवति । देवानाम् ॥**

षष्ठीबहुवचने । देव आम् । सूत्रम्—'नुडामः' ॥ नुट् प्रथमैकवचनान्तम् । 'हसे पः' ॥ आमः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' 'चपा अबे०' सिद्धम् । पुंसि समानात् ह्रस्वात् समानात्, दीर्घात्तु आबन्तेष्वीकारान्तेषु नित्यस्त्रीलिङ्गे वर्तमानेष्विति व्याख्येयम् । समानात्परस्य आमः, षष्ठीबहुवचनस्येति व्याख्येयम् । अन्यथा 'आम् ङेः' इत्याम् । 'स्त्रियां य्वोः' इत्याम् । 'आमौ' इत्यप्याम् । 'किमोऽव्ययात्' इत्याम् । 'कासादिप्रत्ययान्तात्' इत्याम् वर्तते तत्रातिव्याप्तिः स्यात् । तेन षष्ठीबहुवचनस्यामो नुडागमो भवति । अधातोरेवेत्यनुवर्तितव्यम् । तेन अधातोरकिबन्ताच्छब्दात् । टित्त्वादादौ । उकार उच्चारणार्थः । इति न इत्यागमः । आमो नुडिति कर्तव्ये नुडाम इति विपरीतकरणं नुटो नित्यत्वसूचकम् । तेन स्त्रीणां वारीणामित्यत्र 'नुडामः' इत्येव स्यात् । 'नामिनः स्वरे' इति न भवति ॥ सूत्रम्—'नामि' ॥ नुट्सहितः आम् नाम् तस्मिन् नामि सप्तम्येकवचनान्तम् 'स्वरहीनं०' सिद्धम् । नुडागमसहिते आमि परे पूर्वस्य दीर्घो भवति ॥ इति दीर्घः । 'स्वरहीनं०' 'मोऽनुस्वारः' देवानाम् ॥

**सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' देवे । देवयोः । बहुत्वविवक्षायां देव सुप् इति स्थिते पकारः पित्कार्यार्थः । (पकारस्येत्संज्ञायां लोपः) । 'ए स्भि बहुत्वे' इत्येत्वे कृते ॥ किलात्षः सः कृतस्य ॥ कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । अन्ते स्थितस्य तु न भवति । देवेषु ॥**

आधारैकत्वविवक्षायां सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' ॥ सप्तमीद्विवचने षष्ठीद्विवचनवत् ॥ देव देव देवेत्येकशेषे सप्तमीबहुवचने देव सु इति स्थिते । 'ए स्भि बहुत्वे' ततः सूत्रम्—'किलात्षः सः कृतस्य' ॥ कुश्च इलश्च किलं तस्मात् । पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे०' ॥ षः प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ सः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ कृतस्य षष्ठ्येकवचनान्तम् । 'ङस्स्य' ॥ चतुःपदं सूत्रम् । सिद्धम् । वृत्तिः कण्ठ्या । न वरम् । केनचित्सूत्रेण कृतस्यैव सकारस्य षकारो भवति न त्वकृतस्य स्वाभाविकस्य । अन्ते स्थितस्यापि सस्य षत्वं न भवति । यथा हरिस्तत्रेत्यादौ न षत्वम् । तथा नुम्विसर्गान्तरेऽपि षत्वं यथा हवींषि हविःषु इत्यादि । पूर्वं हविस् शब्दोऽस्ति इत्यर्थः । अत्र 'सः षः' इति कर्तव्ये यत् 'षः सः' इति विपरीतत्वेन कृतं, तत् क्वचित् किलं विनापि सस्य षत्वज्ञापनार्थं यथा अवष्टम्भः । अम्बष्ठः । अभ्यषुणोत् इत्यादि । देवेष्विति सिद्धम् ॥

**आमन्त्रणे सिर्धिः ॥ आमन्त्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ॥**

संबोधनमाह—सूत्रम्—'आमन्त्रणे सिर्धिः' ॥ आमन्त्र्यते आहूयते पुरुषोऽनेनेत्यामन्त्रणं तस्मिन् सप्तम्येकवचनम् 'अ इ ए'। सिः प्रथमैकवचनान्तम् । 'स्रोर्वि०'। धिः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' 'राद्यपो द्विः' पूर्वं 'नामिनो रः' जलतुम्बिकान्यायेन० । त्रिपदं सूत्रमिदं सिद्धम् । आमन्त्रणमिति कोऽर्थः । आभिमुखीकरणम् । अनभिमुखः आसमन्तात् प्रकारेण अभिमुखः क्रियतेऽनेनेति आभिमुखीकरणम् । तस्मिन्नर्थे विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति । उदाहरणम् । देव प्रथमैकवचने स् ॥

**समानाद्धेर्लोपोऽधातोः ॥ समानादुत्तरस्य धेर्लोपो भवत्यधातोः ॥**

धिसंज्ञायां किं कार्यं तदाह—सूत्रम्—'समानाद्धेर्लोपोऽधातोः' ॥ समानात् पञ्चम्यन्तम् 'ङसिरत्' 'सवर्णे दीर्घः'। धेः षष्ठ्येकवचनम् 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः 'झवे जबाः' तस्य दः । 'स्वरहीनं०' लोपः प्रथमैकवचनान्तम् 'स्रोर्वि०' 'नामिनो रः' जलतुम्बि० । अधातोः न धातुरधातुस्तस्मात् । अधातुशब्दस्य पञ्चम्येकवचनम् 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः । 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' चतुःपदं सिद्धम् । समानादुत्तरस्य धेर्लोपो भवति । अत्र समानादिति ह्रस्वसमानात्परस्येति व्याख्येयम् । अन्यथा हे हाहाः, हे हूहूः, हे वातप्रमीः, इत्यादौ विरुध्यति । अधातोः अक्विबन्ताच्छब्दात् । अक्विबन्तोऽधातुरुच्यते क्विबन्तश्च शब्दो धातुरित्यभिप्रायः । अनेन धिलोपः ॥

**आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः ॥ हे देव हे देवौ हे देवाः ॥ एवं घटपटस्तम्भकुम्भादयोऽप्यकारान्ताः पुंलिङ्गाः ॥**

पूर्वं हे शब्दः । एतद्धेतुः । अभिमुखस्य भावः आभिमुख्यं संमुखत्वं वा तस्याभिव्यक्तये प्रकटीकरणाय हे शब्दः प्राक् आदौ प्रयुज्यते इत्यर्थः । हे देव । द्विवचने 'ओ औ औ' देवौ । बहुवचने देव अग्रे जस् इति स्थिते जकारस्येत्संज्ञायां लोपः । देव अस् 'सवर्णे०' 'स्रोर्वि०' हे देवाः ॥ अन्यानपि शब्दानाह—एवं घटपटादयः । अत्र काव्येन विभक्त्यर्थं दर्शयति । 'वृक्षस्तिष्ठति कानने कुसुमिते, वृक्षं लताः संश्रिता, वृक्षेणाभिहता गजा निपतिता, वृक्षाय देयं जलम् । वृक्षादानय मञ्जरीं कुसुमितां, वृक्षस्य शाखोन्नता, वृक्षे नीडमिदं कृतं शकुनिना, हे वृक्ष किं पश्यसि ॥' [ 'वीरः सर्वसुरासुरेन्द्रमहितो, वीरं बुधाः संश्रिता, वीरेणाभिहतः स्वकर्मनिचयो, वीराय नित्यं नमः । वीरात्तीर्थमिदं प्रवृत्तमतुलं, वीरस्य घोरं तपो, वीरे श्रीधृतिकीर्तिकान्तिनिचयः, श्रीवीर भद्रं दिश ॥' 'शिष्यः कुरुते पृच्छां बहुना विनयेन तत्त्वबोधाय । आगत्य निजस्थानाद्धर्माचार्यस्य पादान्ते ॥' इत्यादि ।]

**अकारान्तानामपि सर्वादीनां तु विशेषः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मत् अस्मत् भवत् । एते सर्वादयस्त्रिलिङ्गाः ।**

पुनर्विशेषमाह—अकारान्तानामिति । यद्यपि सर्वादयोऽकारान्तास्तथापि सर्वादीनां विशेषो देवशब्दात्कश्चिद्भेदोऽस्ति ॥ के ते सर्वादय इत्याह—सर्व विश्व यावद्भवत् । विश्व-

शब्दस्य सकलार्थवाचकत्वे सर्वादित्वं, न तु जगद्वाचकत्वे । जगद्वाचकत्वे तु कुलशब्दवत् । समः अतुल्यार्थः, किंतु सर्वार्थवाचकः । तुल्यार्थत्वे तु राज्ञा समाय इत्यत्र न सर्वादित्वम् । सिमः समग्रार्थवाचकः । नेमः खण्डवाचकः । पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्थेति विकल्पः । स्वस्याभिधेयो दिग्देशकालस्वभावस्तमपेक्षते तेनैवापेक्ष्यते इति स्वाभिधेयापेक्षः ईदृशो योऽवधेर्मर्यादाया नियमोऽवश्यंभावोऽवधिभावादभ्रंशो व्यवस्थोच्यते । दक्षिणशब्दस्य प्रावीण्ये शृङ्गारनायकवाचकत्वे न सर्वादिकार्यम् । अन्यत्र दक्षिणदेशवाच्यत्वे सर्वादित्वम् । उत्तरशब्दस्य उत्तरदिग्देशवाच्यत्वे सर्वादित्वं, प्रतिवाक्ये तु न सर्वादि कार्यम् । अधरस्य हीनार्थत्वे सर्वादित्वं, न त्वोष्ठवाचकत्वे । स्वशब्दस्य ज्ञातिधनान्यवाचित्वे ज्ञातिधनार्थवर्जं ( किंतु आत्मात्मीयार्थे वाच्ये ) सर्वादित्वम् । 'ज्ञातावात्मनि चात्मीये धने स्वाख्या प्रवर्तते' इति । स्वा ज्ञातयः स्वानि द्रव्याणि । इत्यत्र सर्वादित्वं न अन्यत्र तु स्वस्मै रोचते स्वे पुत्राः स्वस्मै पुत्राय देहि । अत्र सर्वशब्दवत् । अन्तरशब्दस्य बहिर्योगे उपसंव्याने च सर्वादित्वं नान्यत्र । 'मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि । उपसंव्यानने प्राज्ञाः षडर्थमन्तरं विदुः ॥' अन्तरस्मै गृहाय । नगरबाह्याय चाण्डालादिगृहायेत्यर्थः । पुरि तु न भवति—अन्तरायै पुरे कुप्यति । चाण्डालादिबाह्यपुर्यै इत्यर्थः । वस्त्रान्तरेणापिहितं वस्त्रमुपसंव्यानम् । 'अन्तरीयं निवसनमुपसंव्यानमित्यपि' । तत्रार्थे अन्तरे अन्तरा वा शाटकाः । अन्तरस्मै शाटकाय वस्त्रान्तरेण वृताय शाटकायेत्यर्थः । यतः—

'सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाऽभिधा ।
पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ।
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि' ।

उभशब्दस्य त्वच्छब्दस्य भवच्छब्दस्य द्विशब्दस्य च तृतीयासमासे तथा हेत्वर्थे सर्वादेः सर्वा विभक्तयो भवन्ति तदर्थम् । 'अव्ययात्सर्वनाम्नष्टेः प्रागकच्' इत्यकच्प्रत्ययार्थं च सर्वादिमध्ये ग्रहणम् । यथा उभौ हेतू । उभाभ्यां हेतुभ्याम् । उभयोः हेत्वोः । त्वत् हेतुः । त्वतं हेतुम् । त्वता हेतुना । त्वते हेतवे । द्वौ हेतू । द्वाभ्यां हेतुभ्याम् । द्वयोर्हेत्वोः । भवान् हेतुः भवन्तं हेतुम् । भवता हेतुनेत्यादि । तथा अज्ञातौ उभौ उभकौ । एवं द्वकौ । भवकान् । भवकन्तौ । भवकन्तः । त्वकत् इत्यादि । त्यच्छब्दः प्रायश्छन्दस्येव । एते सर्वादय उच्यन्ते कथ्यन्ते । त्रिलिङ्गाः लिङ्गत्रयधारिणः पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गाः ।

तत्र पुंलिङ्गे रूपनयः । अकारान्तः सर्वशब्दः । सर्वः । सर्वौ ॥ **जसी** ॥ सर्वादेरकारान्तात्परो जस् ई भवति । [ गुरुः शिच्च सर्वस्य वक्तव्यः ] । 'अ इ ए' सर्वे । सर्वम् । सर्वौ । सर्वान् । पूर्ववत्प्रक्रिया ॥ **षरॄर्णो णोऽनन्ते** ॥ षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति अन्ते स्थितस्य न भवति सर्वानित्यादौ ॥ **अवकुप्वन्तरेऽपि** ॥ अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण । सर्वाभ्याम् । सर्वैः ।

तत्र पुंलिङ्गे रूपमाह—सर्व । सृ गतौ । वप्रत्ययः । सरति प्रसरतीति सर्वः । प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ सर्वशब्दात् प्रथमाद्विवचनविवक्षायामौ । सर्व औ । 'ओ औ औ' सर्वौ ॥ बहुत्वे विशेषकृत्यमाह—सूत्रम्—'जसी' ॥ जस् प्रथमैकवचनम् । सांकेतिकम् । ई प्रथमैकवचनान्तम् । सांकेतिकम् । वृत्तिः सुबोधा । 'गुरुः शिच्च सर्वस्य' इति गुरुत्वात्सर्वस्य जस ई भवति ॥ प्रक्रियायां तु—'जसः शी' शित्त्वात्सर्वस्य । न वरम् । अकारान्तग्रहणं भवच्छब्दनिषेधसूचकम् । अनेन ई । 'अ इ ए' सर्वे ॥ द्वितीयायां देववत् ॥ तृतीयैकवचने सर्व आ । 'टेन' इति इनादेशे कृते 'अ इ ए' ततः सूत्रम्—'ष्रृर्नोणोऽनन्ते' ॥ ष् च र् ऋश्च षृः तस्मात् ष्रृः पञ्चम्येकवचनम् । 'ऋतो ङ उः' सच डित् डित्वाट्टिलोपः । 'स्वर०' । नः प्रथमैकवचनान्तम् । 'स्रोर्विं०' 'नामिनो रः' जलतुम्बि० । णः प्रथमैकवचनम् । 'स्रोर्विं०' 'हवे' 'उ ओ' । अनन्तः न अन्तः अनन्तस्तस्मिन् अनन्ते सप्तम्येकवचनम् । 'अ इ ए' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' सिद्धम् । पाठसिद्धा वृत्तिः । अन्ते पदान्ते स्थितस्य व्यञ्जनस्य नकारस्य णकारो न भवतीत्यर्थः ॥ नन्वत्र रेफस्याग्रे नकारो नास्ति किंतु मध्ये वकारेकारौ स्तः तत्कथं नकारस्य णकारः स्यादित्याह—सूत्रम्—'अबकुप्वन्तरेऽपि' ॥ अबश्च कुश्च पुश्च अवकुपवः तैरन्तरमवकुप्वन्तरं तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ अपि प्रथमैकवचनान्तम् । 'अव्यया०' 'एदोतोतः' सिद्धम् । अबप्रत्याहारस्यान्तरे कवर्गस्यान्तरे पवर्गस्यान्तरे अपिशब्दात् जिह्वामूलीयोपध्मानीयानुस्वारनुम्विसर्गाणामपि व्यवधाने अन्तरे णत्वं वक्तव्यम् । सर्वेण ॥ सर्वाभ्याम्—'अद्भि' ॥ सर्वैः—'ऐभ्यः' 'अ इ ए' 'एऐऐ' 'स्रोर्विं०' ॥

**चतुर्थ्येकवचने सर्व ए इति स्थिते ॥ सर्वादेः स्मट् ॥ सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । [ टकारः स्थाननियमार्थः ] 'ए ऐ ऐ' । सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः ॥**

चतुर्थ्येकवचने सर्व अग्रे ए सूत्रम्—'सर्वादेः स्मट्' ॥ सर्वः आदिर्यस्य सः सर्वादिस्तस्मात् सर्वादेः पञ्चम्येकवचनम् । 'ङिति' 'ङसिङसोरस्य' ॥ अग्रे स्मट् । प्रथमैकवचनान्तम् । 'हसे पः से०' सिद्धम् । अनेन स्मडागमः सस्वर एव । टित्त्वादादौ । 'ए ऐ ऐ' सर्वस्मै ॥ सर्वाभ्याम् । सर्वेभ्यः ॥

**पञ्चम्येकवचने—सर्व अत् इति स्थिते ॥ अतः ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति दीर्घः । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः ॥**

सर्वशब्दात्पञ्चम्येकवचने सर्व अस् । 'ङसिरत्' ततः सर्व अत् इति स्थिते । सूत्रम्—'अतः' ॥ षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ 'अकारान्तात्सर्वादेः शब्दात्परस्य ङसिस्थाने जातस्य अत् इत्यस्य स्मडागमो भवति । इत्यनेन स्मडागमः । 'सवर्णे०' सर्वस्मात् ॥ द्वित्वे बहुत्वे च देववत् ॥ षष्ठ्येकवचने 'ङस्य' सर्वस्य ॥ षष्ठीद्विवचने सर्व ओस् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विं०' । सर्वयोः ।

**सुडामः ॥ सर्वादेरवर्णान्तात्परस्यामः सुडागमो भवति । सर्वेषाम् ।**

षष्ठीबहुवचने सर्व आम् इति स्थिते । सूत्रम्—'सुडामः' सुट् ॥ प्रथमैकवचनान्तम् । 'हसे पः०' ॥ आमः षष्ठ्येकवचनान्तम् । 'स्वर०' 'स्रोर्वि०' 'चपा अबे०' ॥ सर्वादेः परस्यामः सुडागमो भवति । इति सुट् टित्त्वादादौ । उकार उच्चारणार्थः । ततः—'ए स्भि बहुत्वे' 'किलात्षः सः कृतस्य' 'स्वरहीनं०' 'मोऽनुस्वारः' । सर्वेषाम् ।

**सप्तम्येकवचने सर्व ङि इति स्थिते ॥ ङि स्मिन् ॥ सर्वादेरकारान्तात्परो ङि स्मिन् भवति । सर्वस्मिन् । सर्वयोः । सर्वेषु । हे सर्व । हे सर्वौ । हे सर्वे । इत्यादि ॥**

सप्तम्येकवचने सर्व ङि इति स्थिते । सूत्रम्—'ङि स्मिन्' ॥ ङि प्रथमैकवचनान्तम् । सांकेतिकम् । स्मिन् प्रथमैकवचनान्तम् । 'हसे पः' सर्वादेरिति । अनेन ङिस्मिन्नादेशः । सर्वस्मिन्निति सिद्धम् ॥ सप्तमीद्विवचने । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' सर्वयोः । सप्तमीबहुवचने—'ए स्सि बहुत्वे' 'किलात्षः०' सर्वेषु ॥ पदद्वयप्रक्रिया देववत् ॥ संबोधने । 'समानाद्धेर्लोपोऽधातोः' हे सर्व । हे सर्वौ । हे सर्वे । प्रथमावत् ।

**एवं विश्वादीनामेकशब्दपर्यन्तानां रूपं ज्ञेयं डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । विश्वः । विश्वौ । विश्वे । इत्यादि ॥ अन्यः अन्यौ अन्ये । इत्यादि ॥ इतरः इतरौ इतरे । इत्यादि ॥ कतरः कतरौ कतरे । इत्यादि ॥ एवमेकशब्दपर्यन्तानां रूपं ज्ञेयम् ॥ पूर्वादीनां तु विशेषः । पूर्वः । पूर्वौ ॥ पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः ॥ पूर्वे—पूर्वाः । पूर्वम् । पूर्वौ । पूर्वान् । पूर्वेण । पूर्वाभ्याम् । पूर्वैः । पूर्वस्मै । पूर्वाभ्याम् । पूर्वेभ्यः ॥ पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ॥ पूर्वस्मात्—पूर्वात् । पूर्वाभ्याम् । पूर्वेभ्यः । पूर्वस्य । पूर्वयोः । पूर्वेषाम् । पूर्वस्मिन्—पूर्वे । पूर्वयोः । पूर्वेषु । हे पूर्व । हे पूर्वौ । हे पूर्वे हे पूर्वाः । एवं परशब्दः । परः । परौ । परे—पराः । इत्यादि ॥ एवमन्तरशब्दपर्यन्तानां रूपं ज्ञेयम् ॥**

एवं सर्वशब्दरीत्या डतरडतमौ विहाय तद्वर्जानां विश्वादीनामेकशब्दपर्यन्तानां शब्दानां रूपमवसेयं । परं डतरडतमौ विहाय वर्जयित्वा । यतस्तौ प्रत्ययौ तद्धितोद्भवौ अतस्तदन्ताः कतरकतमादिशब्दा ग्राह्याः । अन्यतरस्य पृथग्ग्रहणेन अन्यतमस्य प्रतिषेधः । अन्यतरसर्ववत् ॥ विशेषमाह—तु पुनः पूर्वादीनां नवानां शब्दानां जस ईकारो वा वक्तव्यः । वा सर्ववज्जसीत्यर्थः । अन्यत्र पक्षे देववत् । पूर्वे पूर्वाः परे पराः । इत्यादि ॥ पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योर्विषये स्मात्स्मिनावादेशौ वा वक्तव्यौ । पञ्चम्या एकवचने एकत्र सर्ववत् एकत्र देववत् । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । अन्यत्र सर्ववत् । पूर्वः पूर्वौ पूर्वे पूर्वाः । पूर्वम् पूर्वौ पूर्वान् । पूर्वेण पूर्वाभ्याम् पूर्वैः । पूर्वस्मै पूर्वाभ्यां पूर्वेभ्यः । पूर्वस्मात् पूर्वात् पूर्वाभ्यां पूर्वेभ्यः । पूर्वस्य पूर्वयोः पूर्वेषाम् । पूर्वस्मिन् पूर्वे पूर्वयोः पूर्वेषु । हे पूर्व हे पूर्वौ हे पूर्वे हे पूर्वाः । एवं परादयो बोध्याः ।

**प्रथमः । प्रथमौ ॥ प्रथमचरमतयायडल्पार्धकतिपयनेमानां जसी वा ॥ प्रथमे–प्रथमाः । चरमः । चरमौ । चरमे–चरमाः । शेषं देववत् ॥ नेमे–नेमाः । शेषं सर्ववत् ॥ तयायटौ प्रत्ययौ, तदन्ताः शब्दा ग्राह्याः । तयप्रत्ययान्तो द्वितयशब्दः । द्वितयः । द्वितयौ । द्वितये–द्वितयाः । एवं त्रितयशब्दः, । अयट्प्रत्ययान्तो द्वयः त्रयश्च । शेषं देववत् ॥ एवं नेमपर्यन्तानां रूपं ज्ञेयम् ॥**

प्रथमचरमेति सुकरम् ॥ प्रथमचरमाल्पार्धकतिपयानां केवलं जसि विकल्पः । शेषं देववत् ॥ तकट् अयट् प्रत्ययान्तानां द्वयद्वितयादीनां जसि रूपद्वयम् । शेषं देववत् ॥ नेमशब्दस्य जसि विकल्पः । शेषं सर्ववत् ॥ नेमानामिति रूपं यत् दृश्यते तत् 'द्वन्द्वे सर्वादित्वं वा' इति न्यायात् सिध्यति ॥ जसि प्रथमे प्रथमाः । चरमे–चरमाः । शेषं देववत् ॥ तयायटौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । द्वितये द्वितयाः । द्वये द्वयाः । शेषं देवशब्दवत् । उभयशब्दस्य अयट्प्रत्ययान्तत्वेऽपि सर्वादिपाठाज्जसि न विकल्पः किंतु सर्ववत् ॥

**तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यम् । द्वितीयः । द्वितीयौ । द्वितीयाः । द्वितीयम् । द्वितीयौ । द्वितीयान् । द्वितीयेन । द्वितीयाभ्याम् । द्वितीयैः । द्वितीयस्मै–द्वितीयाय । द्वितीयाभ्याम् । द्वितीयेभ्यः । द्वितीयस्मात्–द्वितीयात् । द्वितीयाभ्याम् । द्वितीयेभ्यः । द्वितीयस्य । द्वितीययोः । द्वितीयानाम् । द्वितीयस्मिन्–द्वितीये । द्वितीययोः । द्वितीयेषु । हे द्वितीय । हे द्वितीयौ । हे द्वितीयाः ॥ एवं तृतीयः ॥**

तीयस्येति ॥ तीयप्रत्ययान्तस्य द्वितीयतृतीयशब्दयुग्मस्य असर्वादित्वेऽपि ङित्सु वचनेषु विकल्पेन सर्ववद्रूपम् । ङित्सु ङेङसिङिषु वा सर्ववत्त्वमित्यर्थः । द्वितीयस्मै । द्वितीयाय । द्वितीयस्मात् द्वितीयात् । द्वितीयस्मिन् द्वितीये । शेषं देववत् । एवं तृतीयः ॥

**उभशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः । हे उभौ ॥**

उभशब्दो द्विसंख्यावाचकत्वान्नित्यं द्विवचनान्तः । प्रथमाद्वितीयाद्विवचने 'ओ औ औ'। तृतीयाचतुर्थीपञ्चमीद्विवचने 'अद्भि', षष्ठीसप्तमीद्विवचने 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विसर्गः' सिद्धम् ॥

**उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । इत्यादि ॥**

उभयशब्दस्य द्विवचनाभावः द्विवचनान्तप्रयोगदर्शनाभावादिति केचित् । 'सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथ वाऽभिधा । पूर्वादिश्च व्यवस्थायां समो तुल्योऽन्तरोऽपुरि । परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि' यथा । उभयः उभये । इत्यादि । इति सर्वादयः ॥

**अकारान्तः पुंलिङ्गो मासशब्दः ॥ मासस्याल्लोपो वा ॥ मासशब्दस्या-**

कारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ हसेपः सेर्लोपः ॥ हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति ॥ माः—मासः । मासौ—मासौ । मासः मासाः । मासं मासम् । मासौ मासौ । मासः मासान् । मासा मासेन । 'स्रोर्विसर्गः' 'आदबे लोपश्च' माभ्यां मासाभ्याम् । माभिः मासैः । मासे मासाय । माभ्यां मासाभ्याम् । माभ्यः मासेभ्यः । मासः मासस्य । मासोः मासयोः । मासां मासानाम् । मासि मासे । मासोः मासयोः । मास्सु मासेषु । हे माः हे मास । हे मासौ हे मासौ । हे मासः हे मासाः ॥

मासशब्दे विशेषमाह—सूत्रम्—'मासस्याल्लोपो वा' ॥ मासस्य षष्ठ्येकवचनान्तम् । 'ङ-स्य' ॥ अतः अकारस्य लोपः अल्लोपः प्रथमैकवचनान्तम् 'स्रोर्वि०' 'सवर्णे दीर्घः' ॥ वा तृतीयैकवचनम् । 'अव्यया०' हबे 'उ ओ' त्रिपदम् । मासशब्दस्याकारस्य लोपो भवति वा विकल्पेन शसादौ स्वरे परे । सर्वविभक्तिषु परत इत्येके । एतदेव संमतम् । यतः अदूषितं परमतं स्वमतमेवेति । अनेन सप्तस्वपि विभक्तिष्वकारलोपः ॥ सौ त्वल्लोपे कृते—'हसेपः०' 'स्रोर्वि०' । स्वरादौ तु 'स्वरहीनं०' । भकारादौ 'स्रोर्वि०' 'आदबे लोपश्च' । सप्तमीबहुवचने सुपि 'स्रोर्वि०' 'विसर्ज०' 'स्वरहीनं' एवं हसान्तसाधनम् ॥ स्वरान्तप्रक्रिया देवशब्दवत् । माः मासौ मासः । मासं मासौ मासः । मासा माभ्यां माभिः । मासे माभ्यां माभ्यः । मासः माभ्यां माभ्यः । मासः मासोः मासाम् । मासि मासोः मास्सु । हे माः हे मासौ हे मासः ॥ 'लृतुलसानां दन्ताः' इति स्थानसवर्णत्वात् 'झबे जबाः' इति सकारस्य दकारः स्यात् । माद्भ्याम् माद्भिः माद्सु । इत्यपि केचित् ॥ एवमकारलोपपक्षे साधनम् ॥ पक्षे देवशब्दवत् । मासः मासौ मासाः । इत्यादि ॥ एवमकारान्तप्रक्रिया ॥

आकारान्तः पुंलिङ्गः सोमपाशब्दः । सोमपाः । सोमपौ । सोमपाः । सोमपाम् । सोमपौ ॥ आतो धातोर्लोपः ॥ धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे । सोमपः । क्विबन्ता धातवो यद्यपि शब्दत्वं प्राप्तास्तथापि धातुत्वं न जहति । सोमपा । सोमपाभ्याम् । सोमपाभिः । सोमपे । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपोः । सोमपाम् । सोमपि । सोमपोः । सोमपासु । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हेसोमपाः । हेसोमपौ । हेसोमपाः ॥ एवं कीलालपा,[3] शङ्खध्मा, [मधुपा] विश्वपा [धनदा, वर्चोदा] प्रभृतयः ॥

---

१ इदं सूत्रं चन्द्रकीर्तिसूरिणा स्त्रीलिङ्गे नदीशब्दे व्याख्यास्यते । अत्र न व्याख्यातम् । तत्र कारणं चिन्त्यम् । इति चेत् शृणु—मास् शब्दो व्यञ्जनान्तोपि कोशेषूपलभ्यते । तथाच वार्तिकस्यास्याकरणे हसान्तत्वमत्र दुर्लभम् । हसान्तप्रकरण एव हस उदाहरणमेलनाद् अत्र न व्याख्यातम् ॥ २ निर्जरशब्दस्य स्वरादौ विकल्पेन जरस् आदेशः । निर्जरः, निर्जरसौ निर्जरा, निर्जरसः निर्जराः । निर्जरसं निर्जरम् इत्यादि इत्यधिकःपाठः ॥ ३ क्षीरे पुष्परसे तोये मद्ये मण्डे घृते स्रजि । सप्तस्वर्थेषु कीलालं कथयन्ति मनीषिणः ॥

अथ आकारान्तप्रक्रियामाह—तत्राकारान्तः पुंलिङ्गः पुमेव पुमानेव लिङ्गं विवक्षितं यस्य सः पुंलिङ्गः सोमपाशब्दः । पा पाने । पा सोमपूर्वः । 'क्विप्' इति क्विप्प्रत्ययः क्विपः सर्वापहारी लोपः । नामत्वात्स्यादयः । क्विबन्तत्वाद्धातुत्वं न जहति शब्दत्वं च प्रतिपद्यते । प्रथमैकवचने 'स्रोर्विसर्गः' प्रथमाद्विवचने 'ओ औ औ' प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्विसर्गः' धौ धातुत्वाद्धेर्लोपो न किंतु 'स्रोर्विसर्गः' हे सोमपाः । हे सोमपौ । हे सोमपाः । द्वितीयैकवचने 'सवर्णे०' 'मोऽनुस्वारः' द्वितीयाद्विवचने 'ओ औ औ' सोमपाः सोमपौ सोमपाः । सोमपां सोमपौ । द्वितीयाबहुवचने सोमपा अस् इति स्थिते । सूत्रम्—'आतो धातोर्लोपः'।। आतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । धातोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' 'स्रोर्वि०' 'हवे०' 'उओ०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' जलतुम्बिका० । सूत्रं सिद्धम् । वृत्तिः सुकार । अनेन शसादौ स्वरादावाकारलोपः । 'स्वरहीनं०' सकारस्य विसर्गः । आमि 'स्वरहीनं०' 'मोऽनुस्वारः' ।। ह्रस्वादावविशेषः । सोमपासु । अत्र क्विलाभावात् 'क्विलात्षः सः कृतस्य' इति न भवति । एवं कीलालपाशङ्खध्माविश्वपाप्रभृतयः ज्ञेयाः । कीलालं रुधिरं पिबतीति कीलालपा राक्षसः ।।

**आकारान्तो हाहाशब्दः । हाहाः हाहौ हाहाः । हाहाम् हाहौ हाहान् । आदन्ताच्छसो नत्वाभाव इत्येके । तेन हाहाः । 'सवर्णे दीर्घः सह' । हाहा हाहाभ्याम् हाहाभिः । 'ए ऐ ऐ' हाहै हाहाभ्याम् हाहाभ्यः । हाहाः हाहाभ्याम् हाहाभ्यः । हाहाः हाहौः । 'आकारान्तेषु आबन्तानामेव नुडागमो नान्येषाम्' इति नियमात् । 'सवर्णे दीर्घः सह' । हाहाम् । हाहे हाहौः हाहासु । हे हाहाः हे हाहौ हे हाहाः ।।**[1]

आकारान्तो हाहाशब्दस्तस्य च अक्विबन्तत्वान्न धातुसंज्ञा । अतस्तस्य साधना भिन्नैव । हाहाः । प्रथमैकवचने 'स्रोर्वि०' । हाहौ 'ओ औ औ' । हाहाः । हाहां हाहौ हाहान् । आकारान्तत्वाच्छसो नत्वाभावः इत्येके हाहाः ।। हाहा 'सवर्णे०' । हाहाभ्यां हाहाभिः । हाहै 'ए ऐ ऐ' । हाहाभ्यां हाहाभ्यः । हाहाः 'सवर्णे०' 'स्रोर्वि०' । हाहाभ्यां हाहाभ्यः । हाहा हाहौः । 'ओ औ औ' 'स्रोर्वि०' । हाहाम् । पुंलिङ्गस्य दीर्घसमानत्वान्नुडागमो न किंतु 'सवर्णे०' 'मोऽनुस्वारः' । हाहे 'अ इ ए' । हाहौः 'ओ औ औ' 'स्रोर्वि०' हाहासु । संबोधनं प्रथमावत् ।।

**इकारान्तः पुलिङ्गो हरिशब्दः । तत्र प्रथमैकवचने हरि सि इति स्थिते 'स्रोर्विसर्गः हरिः ।।**

इकारान्तसाधनमाह—इकारान्तो हरिशब्दः दशार्थवाचकः । यतः—'अर्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशुयमाश्च हरयो दश' । हृञ् हरणे हृ । 'इखखि' इति इप्रत्ययः । 'गुणः' 'स्वरहीनं०' हरि स् प्रथमैकवचने 'स्रोर्वि०'।।

---

१ प्राचीनमूलपुस्तके नैवोपलभ्यते टीकायां तूपलभ्यते । न जाने टीकां दृष्ट्वा मूलेपि कैश्चिद् वर्धितो भवेत् ।

**औ यू ॥ इकारान्तादुकारान्ताच्च पर औकारो यू आपद्यते ई ऊ भवतः । हरी ।**

सूत्रम्—'औ यू' ॥ औ प्रथमैकवचनान्तं सांकेतिकम् । यू इश्च ऊश्च यू द्वितीयाद्विवचनान्तम् । सांकेतिकम् । इकारान्तात्परस्य औ इत्यस्य ई । उकारान्तात्परस्य च ऊ इत्यर्थः । अनेन औस्थाने ई । 'सवर्णे०' ॥

**हरि जस् इति स्थिते ॥ ए ओ जसि ॥ इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । 'ए अय्' हरयः ॥**

सूत्रम्—'ए ओ जसि' ॥ ए प्रथमैकवचनान्तं सांकेतिकम् । ओ प्रथमैकवचनान्तम् । सांकेतिकम् । जसि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' सिद्धम् । इकारस्य जसि परे एकारः उकारस्य च ओकारः । अनेन ए 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' ॥

**धौ ॥ इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति । हेहरे । हेहरी । हेहरयः ॥ हरिम् ॥ हरी । हरीन् ॥**

संबोधने । सूत्रम्—'धौ' ॥ धिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ डित्' डित्त्वाट्टिलोपः । एकपदम् । धौ धिविषये इकारस्य एकारः । उकारस्य ओकारः । 'समानाद्धेर्लोपो०' इति धेर्लोपे कृते धौ इत्येकारः । 'सर्पे नष्टे सर्पघृष्टिर्न याति' इति न्यायाद्धिलोपेऽपि धिविषयो न याति । हे हरे । हे हरी 'औ यू' हे हरयः । 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' ॥

द्वितीयैकवचने । 'अम्शसो०' अकारस्य लोपः । 'मोऽनुस्वारः' द्वितीयाद्विवचने 'औ यू' 'सवर्णे०' द्वितीयाबहुवचने । 'अम्शसो०' 'सो नः पुंसः' 'शसि' इति दीर्घः । हरीन् ॥

**टा नाऽस्त्रियाम् ॥ इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रियाम् । हरिणा हरिभ्याम् हरिभिः ॥**

तृतीयैकवचने सूत्रम्—'टा नाऽस्त्रियाम्' ॥ टा प्रथमैकवचनान्तम् । सांकेतिकम् । ना प्रथमैकवचनान्तं सांकेतिकम् । न स्त्री अस्त्री तस्याम् । सप्तम्येकवचनम् । 'स्त्रियां य्वोः' इति ङेराम् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'सवर्णे०' 'मोऽनुस्वारः' सिद्धम् । इकारान्तादुकारान्ताच्च शब्दात्परो यः टा इति विभक्तिवचनरूपस्तस्य स्थाने ना इति भवति । पुंलिङ्गे नपुंसकलिङ्गे च । स्त्रीलिङ्गे तु न भवति ॥ अनेन टा इत्यस्य ना 'रषुर्नो णो०' हसादावविशेषः ॥

**ङिति ॥ इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । 'ए अय्' । हरये । हरिभ्याम् हरिभ्यः ॥**

सूत्रम्—'ङिति' ङ् इत् अनुबन्धो यस्य स ङित् तस्मिन् ङिति । सप्तम्येकवचनान्तम् । 'स्वरहीनं०' एकपदम् इकारान्तस्य ङेङसिङस्ङिष्वेकारः उकारस्य ओकारः । अनेन चतुर्थ्येकवचने रि इत्यस्य रे । 'ए अय्' 'स्वरहीनं०' हरये ॥

**ङस्य ॥ एदुद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः । हरिभ्याम् । हरिभ्यः ॥ हरेः । हर्योः । हरीणाम् ॥**

पञ्चम्येकवचने षष्ठ्येकवचने च । 'ङिति' इत्यनेन एकारे कृते ॥ सूत्रम्—'ङस्य' ॥ ङकारेणोपलक्षितः अः ङः तस्य । केचित्तु 'ङसिङसोरस्य' एवं सूत्रं पठन्ति । एकारौकाराभ्यां परस्य पञ्चमीषष्ठ्येकवचनसंबन्धिनोऽकारस्य लोपो भवति । अनेन अकारलोपः । 'स्रोर्विसर्गः' षष्ठीद्विवचने । 'इ यं स्वरे' 'राद्यपो द्विः' जलतुम्बिका० । 'स्वरहीनं०' । षष्ठीबहुवचने 'नुडामः' 'नामि' 'ष्रुर्नो णो०' 'स्वरहीनं' मोऽनुस्वारः ॥

**ङेरौ डित् ॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् ॥ डिति टेः ॥ डिति परे टेर्लोपो भवति । हरौ । हर्योः । हरिषु ॥ एवं अग्निगिरिरविकविप्रभृतयः पुंलिङ्गाः ॥**

सूत्रम्—'ङेरौ डित्' ॥ ङेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' 'स्रोर्वि०' औ प्रथमैकवचनान्तं सांकेतिकम् 'नामिनो रः' । डित् प्रथमैकवचनान्तम् । 'हसेपः से०' सिद्धम् । इकारोकाराभ्यां परस्य सप्तम्येकवचनस्य ङि इत्यस्य औ भवति । सच डित्संज्ञकः । डित्प्रयोजनमाह—सूत्रम्—'डिति टेः' । ड इत् यस्य स डित् तस्मिन् सप्तम्येकवचनान्तम् । 'स्वरहीनं०' । टेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' वृत्तिः कण्ठ्या । डकार इत् यस्य तस्मिन्नादेशे तस्यां विभक्तौ प्रत्यये च परे टेर्लोपो भवति । इति डित्त्वाट्टिलोपः । 'स्वरहीनं०' केचित् । 'ङिति' इत्येकारे कृते 'यदादेशस्तद्वद्भवती'ति न्यायात् ङेरौकारमिच्छन्ति । हरौ इति सिद्धम् ॥ द्विवचने पूर्ववत् ॥ सप्तमीबहुवचने । 'किलात्षः सः' ॥ एवं हरिशब्दवत् अग्न्यादयोऽपि शब्दा ज्ञेयाः ॥ अग्निरविकपिगिरिमुनिकलिआधिनिधिसंधिविधिप्रभृतयः ॥

**उकारान्ताश्च विष्णुवायुभानुप्रभृतयोऽप्येतैरेव सूत्रैः सिध्यन्ति । भानुः । भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्याम् । भानुभिः । भानवे । भानुभ्याम् । भानुभ्यः । भानोः । भानुभ्याम् । भानुभ्यः । भानोः । भान्वोः । भानूनाम् । भानौ । भान्वोः । भानुषु । हेभानो हेभानू हेभानवः । इत्यादि ॥ एवं विष्णुवायुप्रभृतयः ॥**

उकारान्ताश्च वेणुविष्णुभान्वादयोऽप्येतैरेव सूत्रैः सिध्यन्ति । भानुशब्दस्य 'औ यू' इत्यनेन औ इत्यस्य ऊ 'सवर्णे०' भानू । जसि 'ए ओ जसि' 'ओ अव्' भानवः । धौ च 'समानाद्धेर्लोपः०' इति उकारस्य ओकारः । तृतीयैकवचने 'टा ना स्त्रियाम्' ङित्सु चतुर्थ्येकवचने 'ङिति' इति उकारस्यौकारः 'ओ अव्' ॥ पञ्चमीषष्ठ्योरेकवचने 'ङस्य' इत्यकारलोपः । सप्तम्येकवचने 'ङेरौ ङित्' ॥ ओसि 'उवम्' । सुपि 'किलात्षः सः०' ॥ [उकारान्तः पुंलिङ्गस्तितउशब्दः । तितउः तितऊ तितावः । 'ए ओ जसि' 'ओ अव्' 'सवर्णे०' । तितउं तितऊ तितऊन् । तितउना तितउभ्यां तितउभिः । तितावे तितउभ्यां तितउभ्यः । तितओः तितउभ्यां तितउभ्यः । तितओः तितवोः तितऊनाम् तितऔ तितवोः तितउषु । हे तितओ हे तितऊ हे तितावः ॥]

**इकारान्तस्यापि सखिशब्दस्य भेदः । सखि सि इति स्थिते ॥ सेर्डाऽधेः ॥**

**सखिशब्दस्य सेरधेर्डा भवति । डित्वाट्टिलोपः । सखा । अधेरिति विशेषणादेकारो धिविषये । हेसखे ॥**

इकारान्तस्यापि सखिशब्दस्य हरिशब्दापेक्षया भेदो विशेषोऽस्ति तमाह—षण्दाने । सनोति ददातीति सखा । सनेर्ढखिप्रत्ययः । ढित्वाट्टिलोपः सखि इति जातम् । अग्रे सि । सूत्रम्—'सेर्डाऽधेः' ॥ से षष्ठ्येकवचनम् । ङस् 'ङिति' 'ङस्य' 'स्नोर्वि०' । डा प्रथमैकवचनान्तम् सांकेतिकम् । 'नामिनो रः' जलतुम्बि० । न धिः अधिस्तस्य अधेः षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' 'स्नोर्विसर्गः' 'सवर्णे दीर्घः०' ॥ सखिशब्दसंबन्धिनो धिवर्जितस्य सेर्डा भवति ॥ अनेन सेर्डा । डित्वाट्टिलोपः—'डिति टेः' 'स्नोर्वि०' सेर्डाऽधेरिति सूत्रमध्ये अधेरिति पदग्रहणात् धिविषये डा आदेशो न भवति । ऐकारादेशश्च न भवति । किंतु 'समानाद्धेर्लोपो०' इति धिलोपं विधाय पश्चात् 'धौ' इति सूत्रेण एकार एव भवति । हे सखे इति सिद्धम् ।

**ऐ सख्युः ॥ सखिशब्दस्यैकारादेशो भवति धिवर्जितेषु पञ्चसु परेषु ॥ षष्ठीनिर्दिष्टादेशस्तदन्तस्य ज्ञेयः ॥ आयादेशः । सखायौ ॥**

प्रथमाद्विवचने सूत्रम्—'ऐ सख्युः' ॥ ऐ प्रथमैकवचनान्तं सांकेतिकम् । सख्युः इति षष्ठ्येकवचनम् । 'ऋङ्के' 'इ यं स्वरे' 'स्वरहीनं०' 'ऋतो ङः उः' टिलोपः । 'स्वरहीनं०' 'स्नोर्वि०' द्विपदम् । 'सेर्डाधेः' इति सूत्रादधरिति पदम् 'ऐ सख्युः' इत्यत्राकर्षणीयम् । तेन सखिशब्दस्य धिवर्जितेषु पञ्चसु स्यादिषु वचनेषु परेषु ऐकारादेशो भवति । 'शत्रुवदादेश' इति वचनात्सर्वस्यापि न कथमैकारः । तत्रोच्यते—'षष्ठीनिर्दि०' षष्ठ्या विभक्त्या निर्दिष्टः कथितः उच्चरितः सूत्रमध्ये यः शब्दस्तस्य प्राप्त आदेशस्तस्यान्तस्य भवति न तु सर्वस्य । यथा 'ऐ सख्युः' इत्यत्र सखिशब्दस्य षष्ठ्या निर्दिष्टत्वात् सखिशब्दस्य प्राप्त ऐकारादेशः सखिशब्दस्यान्तो य इकारस्तस्य भवति । ननु पञ्चस्विति ग्रहणात् सौ परे ऐकारादेशः कथं न क्रियते तत्राह—सौ परे तु ऐकारादेशे कृतेऽप्यकृतेऽपि डादेशस्य नित्यत्वात् डादेश एव स्यात् नत्वैकारः ॥ अथवा 'ऐ सख्युः' इति सूत्रे विपरीतकरणात्सौ परे ऐकारो न कचित् 'औकारादिचतुर्षु परेषु' इत्येवास्ति । अनेन इकारस्यैकारः 'ऐ आय्' 'स्वरहीनं०' ॥ एवं प्रथमाबहुवचने, द्वितीयैकवचने । द्वितीयाद्विवचने । एतेष्वपि ज्ञेयम् ॥

**द्विवचनस्यावा वा छन्दसि ॥ द्विवचनस्यौकारश्छन्दस्याकारमापद्यते । सखाया । सखायः ॥ सखायम् ॥ सखायौ ॥ सखीन् ॥**

द्विवचनस्य औ आ वा छन्दसि । द्विवचनस्य प्रथमाद्विवचनस्य औ इत्यस्य छन्दसि वेदे वा आ भवति । सखाया ॥ संबोधने अधेरिति विशेषणादेकवचने ऐकारो न । तत्र हरिशब्दवत् । 'समानाद्धेर्लोपो०' 'धौ०' शेषं प्रागवत् । द्वितीयाबहुवचने हरिवत् ॥

**सखि टा इति स्थिते ॥ सखिपत्योरीक् ॥ सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः । दीर्घत्वान्ना न भवति । सख्या ॥ आगमजमनित्यम् ॥**

**आगमजं कार्यं अनित्यं स्यात् वा छन्दसि । सखिना सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः ॥**

तृतीयादौ विशेषमाह—सूत्रम्—'सखिपत्योरीक्०' ॥ सखिश्च पतिश्च सखिपती तयोः सखिपत्योः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'स्वरहीनं' 'स्रोर्विसर्गः' । ईक् प्रथमैकवचनान्तम् । 'ह्सेपः०' सखिपतिशब्दयोः टाङेङिषु परतः ईगागमो भवति । कित्त्वादन्ते । दीर्घत्वान्ना न भवति । ततो दीर्घः । ईकारान्तत्वात् 'टा ना स्त्रियाम्' इति सूत्रेण टास्थाने ना न भवति । किंतु 'सवर्णे०' 'इ यं स्वरे' सख्या पत्या इति सिद्धम् ॥ पुनरागमजमनित्यम् । आगमाज्जातमागमजं कार्यमनित्यं क्वचिन्न भवति । इति न्यायात्क्वचिदीकारागमो न भवति । तेन छन्दसि सखिना पतिना इति रूपं भवति । तत्र 'टानाऽस्त्रियाम्' । चतुर्थ्येकवचने ईगागमः । 'सवर्णे०' 'इ यं स्वरे' 'स्वरहीनं०' सख्ये ॥

**ऋङ्ङे ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । सख्यृ अस् इति स्थिते ॥ ऋतो ङ उः ॥ ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति स ङित् । ङित्त्वाट्टिलोपः । सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने 'ङेरौ ङित्' इत्यौकारे कृते 'सखिपत्योरीक्' इतीगागमः । सख्यौ । सख्योः । सखिषु ॥**

पञ्चमीषष्ठ्योरेकवचने विशेषमाह—सूत्रम्—'ऋङ्ङे' ॥ ऋक् प्रथमैकवचनान्तम् । 'ह्सेपः०' । ङकारेणोपलक्षितः अः ङः तस्मिन् ङे । सप्तम्येकवचनान्तम् । 'अ इ ए' अथवा—'ञमे ञमा वा' 'ऋङ्ङे' सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । 'इ यं स्वरे' सख्यृ अस् इति स्थिते सति सूत्रम्—'ऋतो ङ उः' ॥ ऋतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ङकारेणोपलक्षितः अः ङः तस्य षष्ठ्येकवचनान्तम् । सांकेतिकम् । उः प्रथमैकवचनान्तम् । 'स्रोर्वि०' सूत्रमिदं सिद्धम् । ऋकारा० वृत्तिः कण्ठ्या । अनेनोभयत्राप्यकारस्योकारः सचोकारः ङित्संज्ञकः कल्प्यः । ङित्त्वाट्टिलोपः । 'ङिति टेः' 'स्वरहीनं०' 'स्रोर्विसर्गः' 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्वि०' ॥ षष्ठीबहुवचने 'नुडामः' 'नामि०' 'स्वरहीनं०' 'सोऽनुस्वारः' ॥ सप्तम्येकवचने 'ङेरौ ङित्' इत्योकारे कृते ङित्त्वाट्टिलोपे च कृते 'यदादेशस्तद्वद्भवति' इति न्यायात् 'सखिपत्योरीक्' इति ईगागमः । 'इ यं स्वरे' ॥ शेषं हरिवत् । एवं सखिशब्दसाधनम् ॥

**पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । पतिः । पती । पतयः । पतिम् । पती । पतीन् । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पत्या । पतिभ्याम् । पतिभिः । पत्ये । पतिभ्याम् । पतिभ्यः । पत्युः । पतिभ्याम् । पतिभ्यः । पत्युः । पत्योः । पतीनाम् । पत्यौ । पत्योः । पतिषु । हे पते । हे पती । हे पतयः ॥ पतिरसमास एव सखिशब्दवद्वक्तव्यः, टादौ स्वरे परे ॥ ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना प्रजापतये इत्यादि ॥**

---

१ इतः परम् 'षष्ठीयुक्तश्छन्दसि वा । सीतायाः पतये नम इत्यादिप्रयोगदर्शनात्' इत्यधिकं वर्धितं कैश्चित् ॥

पतिशब्दसाधनमाह—पतिशब्दस्य प्रथमाद्वितीययोः साधना हरिशब्दवत् । तृतीयादौ तु सामान्येन सखिशब्दवत् । पत्या, पत्ये, पत्युः, पत्युः, पत्यौ ॥ तत्रापि विशेषमाह—असमास एव समासरहित एव पतिशब्दः सखिशब्दवत्साध्यः । समासान्तस्य च पतिशब्दस्य नादयो भवन्ति । 'टा नाऽस्त्रियाम्' 'ङिति' 'ङेरौ ङित्' 'ङस्य' इत्यादि सूत्राणि भवन्ति । यथा प्रजानां पतिः प्रजापतिरिति तत्पुरुषसमासे कृते द्वितीयां यावदविशेषः । तृतीयादौ तु 'टानाऽस्त्रियाम्' इत्यादि सूत्रसमुच्चयेन हरिशब्दवत्साधनेत्यर्थः । प्रजापतिना । प्रजापतिभ्याम् । प्रजापतिभिः । प्रजापतये प्रजापतेः प्रजापतेः प्रजापतौ इति । धौ हे प्रजापते । 'समानाद्धेर्लोपो०' हे प्रजापती 'औ यू' । हे प्रजापतयः 'ए ओ जसि' । सिद्धम् ॥

**द्विशब्दो नित्यं द्विवचनान्तः । औ इति स्थिते ॥ त्यदादेष्टेरः स्यादौ ॥ त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ त्यदादीनां धेरभावः ॥**

द्विशब्दः संख्यावाचकत्वात् नित्यं द्विवचनान्त एव । द्विवचनमन्ते यस्य स द्विवचनान्तः द्वि० सप्तविभक्तिद्विवचनेष्वपि सूत्रम्—'त्यदादेष्टेरः स्यादौ' ॥ त्यत् आदिर्यस्य स त्यदादिस्तस्य । त्यदादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' टेः षष्ठ्येकवचनम् । प्राग्वत् । 'विसर्जनी०' 'ष्टुभिः ष्टुः' 'स्वरहीनं०' । अः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' 'स्वरहीनं०' । स्यादौ सप्तम्येकवचनम् 'ङेरौ ङित्' ङित्वाट्टिलोपः । 'स्वरहीनं०' ॥ त्यद् तद् यद् एतद् इदम् द्वि किम् युष्मद् अस्मद् एते त्यदादयः । त्यदादेः शब्दस्य टेः 'अन्त्यस्वरादिष्टिः' इति संज्ञा प्रक्रियोक्तलक्षणायाः स्यादौ विभक्तौ परतोऽकारो भवति । अनेन द्वि इत्यस्य द्व सर्वत्र । रूपद्वये 'ओ औ औ' । रूपत्रये 'अद्धि' । षष्ठीसप्तम्योर्द्विवचने 'ओसि' 'ए अय्' 'स्वरहीनं०' ॥ त्यदादीनां संबोधनाभावः । सिद्धोऽयं द्विशब्दः ॥

**त्रिशब्दो नित्यं बहुवचनान्तः । त्रि अस् इति स्थिते 'ए ओ जसि' त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ॥ त्रि आम् इति स्थिते त्रेरयङ् ॥ त्रिशब्दस्यायङादेशो भवति नामि परे ॥ ङिदन्त्यस्य वक्तव्यः ॥ त्रयाणाम् । त्रिषु ॥**

इकारान्तस्त्रिशब्दस्त्रिसंख्यावाचकत्वान्नित्यं बहुवचनान्तः बहुवचनमन्ते यस्य सः । प्रथमाबहुवचने त्रि अस् इति स्थिते । 'ए ओ जसि' 'ए अय्' 'स्वर०' । शसि 'अम्शसोरस्य' 'सो नः पुंसः' त्रीन् । त्रिभिः त्रिभ्यः त्रिभ्यः । आमि विशेषः । पूर्वं नुडागमः । ततः सूत्रम्—'त्रेरयङ्' ॥ त्रिशब्दस्य षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' । अयङ् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो रः' सिद्धम् । त्रिशब्दस्य अयङ् इत्यादेशो भवति नुट्सहित आमि परे ॥ ङित् ङकारेत् आदेशः अन्तस्य भवतीति वचनादिकारस्येत्यर्थः । नन्वत्र 'षष्ठीनिर्दिष्टस्य' इत्यनेनान्तस्यादेशप्राप्तौ पुनर् 'ङिदन्तस्य' इति किमर्थमुक्तम् । तत्राह—'गुरुः शिच्च सर्वस्य' इत्यनेन 'षष्ठीनिर्दिष्टस्य' इत्यस्य बाधः । अयङिति बह्वक्षरत्वेन गुरुरादेशस्तेन सर्वस्यैव भवति । तन्निवारणार्थं ङिदन्तस्येति । ङित् ङकारेत् य आदेशः स गुरुरपि अन्तस्यैव भवति । इकारस्य अय् इत्यादेशः । 'नामि०' इति दीर्घः ।

'ष्ढुर्णोणो०' 'स्वरहीनं०' 'मोऽनुस्वारः' त्रिशब्दस्य बहुवचनान्तत्वेऽपि 'त्रेः' इत्येकवचनं शब्दनिर्देशात् । अथवा त्रेरित्येकवचननिर्देशात् असमासान्तत्वे एव अयङादेशः ॥ समासान्तत्वे तु न । यथा प्रियास्त्रयो येषां ते प्रियत्रयः तेषां प्रियत्रीणाम् ॥ एवमतिक्रान्तास्त्रीनिति अतिक्रान्तास्त्रयो यैस्ते इति वा अतित्रयस्तेषामतित्रीणामित्यादौ न अयङादेशः ॥ सप्तमीबहुवचने 'किलाटषः सः' । हे त्रयः ॥

**कतिशब्दो नित्यं बहुवचनान्तस्त्रिषु लिङ्गेषु सरूपः । कति जस् इति स्थिते ॥ कतिशब्दात्परयोर्जश्शसोर्लुक् वक्तव्यः ॥ लुकि न तन्निमित्तम् ॥ लुकि जाते सति तन्निमित्तं कार्यं न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । त्रिषु सरूपः ॥**

का संख्या येषां ते कति । किंशब्दात् डतिप्रत्ययः । 'शेषा निपात्याः कत्यादयः—' इति सिद्धस्य कतिशब्दस्य बहुवचनान्तस्यापि जश्शसोर्विशेषमाह—'कतिशब्दात्परयोर्जश्शसोर्लुग्वक्तव्यः' डतिप्रत्ययान्तादिति वा ॥ अनेन जश्शसोर्लोपः कर्तव्यः । 'लुकि न तन्निमित्तम्' इति लुकि कृते सति यस्य लुक् क्रियते स एव निमित्तं कारणं यस्य ईदृशं यत्कार्यं तन्न भवति । तेन 'ए ओ जसि' इति ए, 'शसि' इति दीर्घत्वं च न भवति । शेषं सुगमम् । कतिशब्दस्य संबोधनाभावः ॥ एवं कतिसाहचर्यात् यतिततिशब्दाभ्यां परयोर्जश्शसोर्लुक्वक्तव्यः । 'यति ते नाग शीर्षाणि तति ते नाग वेदनाः' इत्युदाहरणम् । कतिशब्दस्य त्रिष्वपि लिङ्गेषु सदृशरूपाणि ॥

**ईकारान्तः पुंलिङ्गः सुश्रीशब्दः ॥ सुश्रीः ॥ य्वोर्धातोरियुवौ स्वरे ॥ धातोरिकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ सुश्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम् सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियाम् । सुश्रियि सुश्रियोः सुश्रीषु । हे सुश्रीः हे सुश्रियौ हे सुश्रियः ॥**

इकरान्तानुक्त्वा ईकारान्तानाह—ईकारान्तः पुंलिङ्गः सुश्रीशब्दः । श्रिञ् सेवायाम् । सुपूर्वः । क्विप्प्रत्ययः । 'प्रच्छादेर्दीर्घता' इति दीर्घः । क्विपः सर्वापहारी लोपः । सुष्ठु श्रयन्त्येनमिति सुश्रीः । 'क्विबन्ता धातुत्वं न जहति शब्दत्वं च प्रतिपद्यन्ते' इति स्यादयः । प्रथमैकवचने 'स्रो०' ॥ द्विवचने सूत्रम्—'य्वोर्धातोरियुवौ स्वरे०' ॥ ई च ऊ च य्वौ तयोः य्वोः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'उ वम्' 'स्वरहीनं०' 'स्रोर्वि०' । धातोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' । इयुवौ प्रथमाद्विवचनान्तम् । 'स्वरहीनं' 'नामिनो रः' । स्वरे सप्तम्येकवचनम् । 'अ इ ए' ॥ धातोरीकारस्य स्वरे परे इय् ऊकारस्य च उव् । 'इ यं स्वरे' इति सूत्रात्स्वरे इत्यनुवृत्तौ सत्यां पुनः स्वरग्रहणं स्वरकार्यान्तरव्यावृत्त्यर्थम् । अमूशसोरस्य 'नुडामः' इति निषेधार्थं विभक्तिवर्जस्वरनिषेधार्थं च ॥ ततोऽत्र विभक्तिस्वर एव ग्राह्यः । तेन श्रीअर्थं श्र्यर्थमित्यादावियू न, किं तु 'इ यं स्वरे' इति यत्वम् । अनेन स्वरा-

---

१ 'भिरित्यादि' प्राचीनपुस्तके ॥

दाविय् । 'स्वरहीनं०' हसादावविशेषः । सुपि । 'किला०' ॥ संबोधने धातुत्वान्न धिलोपः । किं तु 'स्त्रोर्वि०' हे सुश्रीः हे सुश्रियौ हे सुश्रियः ॥

**तथैव सुधीशब्दः सुष्ठु ध्यायतीति सुधीः । सुधियौ । सुधियः । सुधियम् । इत्यादि ॥ एवमूकारान्तः स्वयम्भूशब्दः । स्वयं भवतीति स्वयम्भूः । स्वयम्भुवौ । स्वयम्भुवः । स्वयम्भुवम् । स्वयम्भुवौ । स्वयम्भुवः । स्वयम्भुवा । स्वयम्भूभ्याम् । स्वयम्भूभिः । स्वयम्भुवे । स्वयम्भूभ्याम् । स्वयम्भूभ्यः । स्वयम्भुवः । स्वयम्भूभ्याम् । स्वयम्भूभ्यः । स्वयम्भुवः । स्वयम्भुवोः । स्वयम्भुवाम् । स्वयम्भुवि । स्वयम्भुवोः । स्वयम्भूषु । हेस्वयम्भूः । हेस्वयम्भुवौ । हेस्वयम्भुवः । इत्यादि ॥**

एवं सुधीशब्दः । ऊकारान्तः स्वयम्भूशब्दोऽप्येवमेव । एवमूकारान्तो लूशब्दः । लूञ् छेदने इत्यस्माद्धातोः । लूः । लुवौ । लुवः इत्यादि ॥

**सेनानीशब्दस्याविशेषो हसादौ । स्वरादौ तु विशेषः । य्वौ वा ॥ धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकाराच्च नास्ति तदन्तस्यानेकस्वरस्य ईकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा । वाग्रहणादियं विवक्षा । सेनानीः सेनान्यौ सेनान्यः । सेनान्यम् सेनान्यौ सेनान्यः । सेनान्या सेनानीभ्याम् सेनानीभिः । सेनान्ये सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनान्योः ॥ सेनान्यादीनां वामो नुड्वक्तव्यः ॥ सेनानीनाम्—सेनान्याम् । सेनानी ङि इति स्थिते ॥ आम् ङेर्नियश्च ॥ आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति सेनान्याम् सेनान्योः सेनानीषु । हेसेनानीः हेसेनान्यौ हेसेनान्यः ॥ एवं ग्रामणीप्रभृतयः ॥**

णीञ् प्रापणे । 'आदेः ष्णः स्नः' नीः सेनापूर्वः । सेनां नयतीति सेनानीः । क्विप्प्रत्ययान्तः । सेनानीशब्दस्यैकारान्तधातोरपि हसादावविशेषः । स्वरादौ तु विशेषस्तमेव सूत्रद्वारा व्याख्याति । 'य्वोर्धातोरियुवौ स्वरे०' अनेन । 'इ यं स्वरे' 'उ वम्' इत्येतयोर्बाधो जातः । 'य्वोर्धातो०' इत्यस्य बाधनार्थं पूर्वं 'य्वौ वा' इति सूत्रं पठ्यते । य् च व् च य्वौ प्रथमाद्विवचनान्तम् । वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ यस्मादीकारादूकाराच्च पूर्वमादौ वर्तमानो धातोरवयवसंयोगः सुश्री यवक्रीवत् व्यक्षरादिसंयोगो नास्ति तदन्तस्य स एव धात्ववयवसंयोगपूर्वकत्वरहितः ईकारः ऊकारो वा अन्ते यस्य स तदन्तस्तस्य पुनरनेकस्वरस्य व्यादिद्वित्रिस्वरपूर्वस्य शब्दस्य संबन्धिनः ईकारस्य यकारः । ऊकारस्य च वकारः ॥ ननु 'णीञ् प्रापणे' अयं धातुरेकस्वरः कथमनेकस्वरत्वम् । उच्यते—कारकपूर्वस्यापि क्विबन्तग्रहणेन ग्रहणादनेकस्वरत्वम् । अत्र वाशब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूपुनर्भूदृन्भूकारभूकरभू एभ्योऽतिरिक्तोऽन्यो यो भूशब्दः स्वयंभू-दृन्भू-कमलभू-नाभिभू-अङ्गभू-आत्मभू-मनोभू-काराभू-प्रभृतिकस्तस्य संभवे सत्यपि 'य्वौ वा' इति न

१ 'भिरित्यादि' प्राचीनपुस्तके ॥

भवति । किं तु 'य्वोर्धातोरियुवौ स्वरे' इति ॥ तथा सुधीशब्दस्यापि संभवे सत्यपि 'य्वौ वा' इति न भवति । किं तु 'य्वोर्धातोरियुवौ स्वरे' इत्येव भवति । अत एतौ वर्जयित्वा अपर ईकारोकारयोः पूर्वोक्तलक्षणयोर्यकारवकारौ भवतः । वाग्रहणादियं विवक्षा ज्ञेया । कुतः निपातानामनेकार्थत्वात् । धातोः संयोगपूर्वकत्वे सुश्रियौ यवक्रियौ कटप्रुवौ इत्यादौ न यकारवकारौ । किं तु इयुवावेव ॥ एकस्वरे तु नीः नियौ । धीः धियौ । लूः लुवौ । भूः भुवौ भुवः । इत्यादौ न यकारवकारौ ॥ बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः । यथा सुधीः सुधियौ सुधियः । परमधिय इत्यादि ॥ धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ न भवतः । तेन उन्नीः उन्न्यौ उन्न्यः । इत्यादौ स्वाभाविकधात्ववयवसंयोगपूर्वकत्वाभावात् यत्वं न भवति ॥ वर्षाभू, पुनर्भू, दृन्भू, कारभू, इत्यत्र भूशब्दस्य वत्वम् । अन्यत्र च उवेव । वाशब्दस्य व्यवस्थावाचकत्वात् इयं विवक्षा लभ्यते ॥ अनेन स्वरादौ सर्वत्र यकारः । 'स्वर०' ॥ आमि विशेषः । सेनान्यादीनामामः षष्ठीबहुवचनस्य नुडागमो वक्तव्यः । अनेन एकत्र नुडागमः । 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ अन्यत्र 'य्वौ वा' इति यकारः 'स्वरहीनं०' । सप्तम्येकवचने सूत्रम्—'आम् ङेः' आम् प्रथमैकवचनान्तम् । 'हसेपः०' ङेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' स्रोर्विसर्गः' ॥ केचित्तु 'आम् ङेर्नियश्च' इति सूत्रं पठन्ति तन्मतं साधु । यतो नीशब्दादित्यनुवृत्तिर्न दृश्यते । आबन्तात् स्त्रीलिङ्गे आप्प्रत्ययान्तान्नीशब्दाच्चोत्तरस्य ङेः सप्तम्येकवचनस्य आम् भवति । अनेन आमि कृते 'य्वौ वा' इति यकारः । 'स्वरहीनं०' 'मोऽनुस्वारः' । धातुत्वाद्धेर्लोपो न । शेषं सुकरम् । एवं ग्रामणी अग्रणी प्रधीशब्दप्रभृतयोऽपीकारान्ता धातुशब्दा ज्ञेयाः ॥

एवमूकारान्तो यवलूशब्दः । यवलूः यवल्वौ यवल्वः । यवल्वम् यवल्वौ यवल्वः । यवल्वा यवलूभ्याम् यवलूभिः । यवल्वे यवलूभ्याम् यवलूभ्यः । यवल्वः यवलूभ्याम् यवलूभ्यः । यवल्वः यवल्वोः यवलूनाम् । यवल्वाम्-यवल्वि यवल्वोः यवलूषु । हेयवलूः हेयवल्वौ हेयवल्वः ॥ एवं वर्षाभूपुनर्भूप्रभृतयः ॥

ऊकारान्ताश्च यवलूखलपूदृन्भूकरभूकारभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवम् । परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति । तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपम् ॥ वर्षासु भवतीति वर्षाभूर्मण्डूकः । यवान् लुनातीति यवलूः । एते क्विप्प्रत्ययान्ताः ॥

ईकारान्तो वातप्रमीशब्दः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । वातप्रमीम् वातप्रम्यौ वातमीन् । वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वातप्रम्ये वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः वातप्रम्याम् । वातप्रमी वातप्रम्योः वातप्रमीषु । हेवातप्रमीः हेवातप्रम्यौ हेवातप्रम्यः ॥

अमि वातप्रमीमाहुः शसि वातप्रमीनिति ।
ङौ तु वातप्रमी शेषं ग्रामणीसदृशं भवेत् ॥ ३३ ॥

ईकारान्तो वातप्रमीशब्दः । वातप्रमीशब्दस्य प्रथमैकवचने 'स्रोर्वि०' वातप्रम्यौ । धातुत्वाभावात् 'य्वौ वा' इति न, किं तु 'इ यं स्वरे' वातप्रम्यः । वातप्रमीं वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्यां वातप्रमीभिः । वातप्रम्ये वातप्रभ्यः वातप्रम्यः वातप्रम्याम् । सप्तम्येकवचने 'सवर्णे दीर्घः' वातप्रमी वातप्रम्योः वातप्रमीषु । हे वातप्रमीः । 'अमि वातप्रमीं रूपम् । शसि वातप्रमीनिति । ङौ तु वातप्रमी शेषं ग्रामणीसदृशं विदुः ॥'

तथैवोकारान्तो हूहूशब्दः । हूहूः हूह्वौ हूह्वः । हूहूम् हूह्वौ हूहून् । हूह्वा हूहूभ्याम् हूहूभिः । इत्यादि ॥

एवम् ऊकारान्तो हूहूशब्दः । हूहूः हूह्वौ 'उवम्' हूह्वः । स्वरे परे सर्वत्र 'उवम्' । शसि हूहून् । आमि हूह्वाम्—हूह्वि ॥

ऋकारान्तः पितृशब्दः । पितृ सि इति स्थिते ॥ सेरा ॥ ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्त्वाट्टिलोपः । पिता ॥ अर् पञ्चसु ॥ ऋकारस्यार् भवति पञ्चसु स्यादिषु परेषु । पितरौ । पितरः । पितृ धि इति स्थिते ॥ धेरर् ॥ ऋकारान्तात्परस्य धेरर् भवति स च डित् । डित्त्वाट्टिलोपः ॥ हेपितः । हेपितरौ । हेपितरः ॥ पितरम् । पितरौ पितॄन् ॥ ऋरम् ॥ पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः ॥ ऋतो ङ उः ॥ पितुः । पितृभ्याम् । पितृभ्यः । पितुः । पित्रोः । पितॄणाम् ॥ ङौ ॥ ऋकारस्यार् भवति ङौ परे । पितरि । पित्रोः । पितृषु । एवं जामातृभ्रात्राद्यः ॥

ऋकारान्तानाह— ऋकारान्तः पितृशब्दः । पा रक्षणे पाति रक्षतीति पिता । पितृशब्दो निपातसिद्धो न तृप्रत्ययान्तः । पितृशब्दात् प्रथमैकवचने सूत्रम्—'सेरा' ॥ सेः षष्ठ्येकवचनान्तम् 'ङिति' 'ङस्य' 'स्रोर्विसर्गः' । आ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' ॥ ऋकारान्ता० इति । ऋकारान्तात्परस्य सेः आ इत्यादेशः स्यात् । स च आ डित्संज्ञकः । डित्त्वाट्टिलोपः । 'स्वरहीनं०' ॥ सूत्रम्—'अर् पञ्चसु' ॥ [अर् प्रथमैकवचनम् सि । 'हसेपः सेः' ॥ ] पञ्चन्शब्दस्य सप्तमीबहुवचनम् । 'नाम्नो नो०' ॥ स्यादिषु पञ्चसु वचनेषु परेषु ऋकारो अर् भवति । स्थानाशून्यार्थं सेरपि ग्रहणम् ॥ सिविषये तु 'सेरा' इत्याकारप्राप्तौ 'अर् पञ्चसु' इत्यर्प्राप्तौ च विशेषत्वान्नित्यत्वाच्च सेरा एव भवति ॥ केचित्तु प्रथमं 'अर् पञ्चसु' इत्यरं विधाय ततो यदादेशस्तद्वद् भवतीति 'सेरा' इति सेरा । ततष्टिलोपः । 'स्वरहीनं०' पिता ॥ पितृशब्दात् प्रथमाद्विवचने बहुवचने च अनेन अर् । 'स्वरहीनं०' ॥ धौ कृत्यमाह—सूत्रम्—'धेरर्' ॥ धेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' अर् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो रः' ॥ ऋकारान्ता० इति धेः अर् आदेशो भवति । स च डित् । डित्त्वाट्टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' शेषं सुकरम् ॥ द्वितीयाबहुवचने—'अमृशसोरस्य' 'सो नः पुंसः' 'शसि' ॥ तृतीयायां चतुर्थ्यां चैकत्वे । 'ऋरम्' 'स्वरही०' ॥ हसादावविशेषः । पञ्चमीषष्ठ्योरेकवचने । 'ऋतो ङ उः' 'डिति टेः' इति टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' ॥ षष्ठीसप्तम्योर्द्विवचने । 'ऋरम्' 'स्वरहीनं०' ॥

षष्ठीबहुवचने 'नुडामः' 'नामि०' 'षरुर्नोणो०'॥ सप्तम्येकवचने। सूत्रम्—'ङौ'। सप्तम्येकवचनम्॥ 'ङेरौ डित्' टिलोपः। 'स्वरहीनं०' एकपदम्॥ अनेन अर् 'स्वरहीनं०'॥ सप्तमीबहुवचने 'किलात्षः सः०'॥ एवं जामातृभ्रात्रादयः शब्दाः साध्याः॥ जामाता जामातरौ जामातरः॥ भ्राता भ्रातरौ भ्रातरः॥ देवा देवरौ देवरः॥ सव्येष्टा सव्येष्टरौ सव्येष्टरः इत्यादि॥

**एवं नृशब्दः॥ सेरा। ना। नरौ। नरः। नरम्। नरौ। नॄन्। त्रा नृभ्याम्। नृभिः। त्रे। नृभ्याम्। नृभ्यः। ऋतो ङ उः। नुः। नृभ्याम्। नृभ्यः। नुः। त्रोः॥ नुर्वा नामि दीर्घः॥ नृशब्दस्य नामि परे पूर्वस्य दीर्घो वा भवति। नॄणां नृणाम्। ङौ नरि। त्रोः। नृषु। हेनः। हेनरौ। हेनरः॥**

नृशब्दोऽपि पितृशब्दवत्। ना नरौ नरः। नरं नरौ नॄन्। त्रा नृभ्याम् नृभिः। त्रे नृभ्यां नृभ्यः। नुः नृभ्यां नृभ्यः। नुः त्रोः। आमि विशेषमाह—सूत्रम्—'नुर्वा०'॥ इति। नुरिति नृशब्दस्य षष्ठ्येकवचनम्। 'ऋतो ङ उः'। वा तृतीयैकवचनम्। 'अव्यया०' मध्ये 'नामिनो रः'। नामि सप्तम्येकवचनान्तम्। 'स्वरहीनं०'। दीर्घः प्रथमैकवचनान्तम्। 'स्रोर्वि०' सिद्धम्॥ नृशब्दस्य नामि परे दीर्घो वा वक्तव्यः। नॄणां नृणाम्। नरि त्रोः नृषु। हेनः हेनरौ हेनरः। इति सिद्धम्॥

**'पिता माता ननन्दा वा सव्येष्टृ-भ्रातृ-यातरः।**
**जामाता दुहिता देवा न तृनन्ता इमे नव॥'**

**कर्तृशब्दस्य पञ्चसु विशेषः॥ स्तुरार्॥ सकारतृप्रत्ययसंबन्धिन ऋकारस्याऽऽर् भवति पञ्चसु परेषु। कर्तार् सि इति स्थिते। यदादेशस्तद्वद्भवति। सेरा। डित्त्वाट्टिलोपः। कर्ता। कर्तारौ। कर्तारः। घेरर्। हेकर्तः हेकर्तारौ हेकर्तारः। कर्तारम्। कर्तारौ। कर्तॄन्। कर्त्रा। कर्तृभ्याम्। कर्तृभिः। कर्त्रे। कर्तृभ्याम्। कर्तृभ्यः। ऋतो ङ उः। कर्तुः कर्तृभ्याम् कर्तृभ्यः। कर्तुः कर्त्रोः कर्तॄणाम्। कर्तरि कर्त्रोः कर्तृषु। इत्यादि पूर्ववत्प्रक्रिया॥ एवं नप्तृहोतृक्षत्तृधातृगोमृप्रशास्तृपोतृउद्गातृप्रभृतयः।**

**[ स्वसा नप्ता च नेष्टा च त्वष्टा कर्ता तथैव च।**
**होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादयः स्मृताः॥ ]**

डुकृञ् करणे। कृ। 'तृवुणौ' तृप्रत्ययः। 'गुणः' 'रायपो०' 'स्वरही०' कर्तृ। करोतीति कर्ता। कर्तृशब्दस्य पञ्चसु विशेषस्तमेवाह—सूत्रम्—'स्तुरार्'॥ सृ च तृच स्तृ तस्य स्तुः। षष्ठ्येकवचनम्। 'ऋतो ङ उः' टिलोपः 'स्रोर्वि०'। आर् 'हसेपः' 'नामिनो०' सिद्धम्। सरकारसंबन्धिनः ससहितस्य ऋकारस्य सकारोपलक्षितस्येत्यर्थः। तृप्रत्ययान्तसंबन्धिन इति

१ प्राचीनपुस्तकेऽप्युपलभ्यमानोऽयं श्लोकः केनचित्पश्चाद्वर्धितः टीकायामव्याख्यातत्वात्॥ अष्टौ इति संख्याया अनुपयोगात् आर् योग्यानां तृप्रत्ययान्तानामसंख्यत्वात्॥

'तृवुणौ' इत्यादि कृत्प्रत्ययोत्पन्नतृप्रत्ययस्य च ऋकारस्य स्यादिषु पञ्चसु परेषु आर् भवति । सकारसंबन्धी ऋकारः स्वसृशब्द एव । तेन प्रियतिसृशब्दादावार् न स्यात् । प्रियतिसा, प्रियतिस्रौ । प्रियतिस्रः इत्यादि । अनेन द्वितीयाद्विवचनान्तं यावत् आर् । तत्र प्रथमैकवचने कर्तार् स् इति स्थिते । ऋकारासंभवे कथं सेराकारस्तत्राह—यदादेशस्तद्वद्भवति यो यस्यादेशः स तद्वदेव भवतीत्यर्थः । ऋकारस्यार् आदेशः स ऋकारवज्ज्ञेयः । ततः । 'सेरा' टिलोपः । सर्वत्र 'स्वरहीनं०' ॥ संबोधने । 'स्तुरार्' ततः । 'धेरर्' टिलोपः 'स्वरहीनं०' 'स्रोर्वि०' हे कर्तः । शेषं सुकरम् ॥ शसि—'अम्शसोरस्य' 'सो नः पुंसः' 'शसि' ॥ तृतीयादौ पितृशब्दवत् । यथा तृतीयैकवचने । 'ऋरम्' कर्त्रा कर्तृभ्यां कर्तृभिः । चतुर्थ्येकवचने 'ऋरम्' 'स्वरहीनं०' कर्त्रे कर्तृभ्यां कर्तृभ्यः । पञ्चमीषष्ठयोरेकवचने । 'ऋतो ङ उः' सच ङित् ङित्त्वाट्टिलोपः । 'स्वरहीनं०' कर्तुः ॥ कर्त्रोः । 'ऋरम्' 'स्वरहीनं०' ॥ 'नुडामः' 'नामि०' कर्तॄणाम् ॥ सप्तम्येकवचने । 'ङौ' 'स्वरहीनं०' कर्तरि । कर्त्रोः 'ऋरम्' । कर्तृषु 'किलात्षः०' । एवं नप्तृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृप्रभृतयोऽपि । तथा अन्येऽपि तृप्रत्ययान्ता अवसेयाः । तृप्रत्ययस्यार्थवतो ग्रहणेन नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां ग्रहणं न भवत्यतस्तेषां पृथगुपादानम् । अर्थवतो ग्रहणे नानर्थकस्येति ज्ञापकात् ॥ व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम् । सिद्धे सत्यारम्भो नियमायेति ॥

**उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वधिषु तृप्रत्ययान्तता वा वक्तव्या ॥ क्रोष्टु सि इति स्थिते । स्तुरार् । सेरा । क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारम् क्रोष्टारौ । शसि तृप्रत्ययवद्भावाभावात् क्रोष्टून् । अमि शसि तृप्रत्ययवद्भावो वेति केचित् । क्रोष्टुम् क्रोष्टून् ॥ तृतीयादौ स्वरादौ तृप्रत्ययान्तता वा वक्तव्या ॥ क्रोष्ट्रा-क्रोष्टुना । क्रोष्टुभ्याम् । क्रोष्टुभिः । क्रोष्ट्रे क्रोष्टवे । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः । क्रोष्ट्रोः क्रोष्ट्वोः । कृताकृतप्रसङ्गी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । इति प्रथमं नुडागमे कृते स्वरादित्वाभावात् तृप्रत्ययवद्भावो न भवति । क्रोष्टूनाम् । क्रोष्टरि क्रोष्टौ । क्रोष्ट्रोः क्रोष्ट्वोः । क्रोष्टुषु । अधिष्विति विशेषणाद्धेक्रोष्टो हेक्रोष्टारौ हेक्रोष्टारः ।**

क्रुश् आह्वाने । तुन्प्रत्ययः । 'गुणः' 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' क्रोष्टु इति जातम् । उकारान्तस्येत्यादि । यद्यपि क्रोष्टुशब्द उकारान्तस्तथापि तस्य अधिषु धिवर्जितेषु तृप्रत्ययान्तस्येव रूपम् । तृप्रत्ययान्तत्वं वक्तव्यम् । तृप्रत्ययान्तवदारादिकमित्यर्थः । ततः पञ्चसु कर्तृवत् । सौ 'स्तुरार्' 'सेरा' । धौ तु भानुवत् । द्वित्वबहुत्वयोः कर्तृवत् । 'स्तुरार्' 'स्वरहीनं०' । शसि विषये तृप्रत्ययो विद्यते यस्य स तृप्रत्ययवान् । यद्वा तृप्रत्ययेन तुल्यं तृप्रत्ययवत् । तस्मात् तस्य भावस्तृप्रत्ययवद्भावस्तस्याभावस्तृप्रत्ययवद्भावाभावस्तस्मात् क्रोष्टूनिति भानुवत्साध्यः । तृतीयादौ हसादौ त्वविशेषः । स्वरादौ वा तृप्रत्ययान्तता । उकारस्य वा ऋकार इत्यर्थः । ऋत्वे कर्तृवत् । उत्वे भानुवत् । आमितु विशेषः । क्रोष्टु आम् इत्यत्र

'नुडामः' इति नुडागमप्राप्तौ, 'तृतीयादौ स्वरादौ०' इति तृप्रत्ययान्तवद्भावस्य च प्राप्तौ नुडाम एव स्यादित्याह—आमि नुडागमे कृते हसादित्वात्तप्रत्ययभावस्तृप्रत्ययान्तत्वं नास्ति न भवति । अत्राह परः—ननु पूर्वं तृप्रत्ययभावं विधाय पश्चान्नुडागमः क्रियतां तत्रोच्यते—कृताकृतप्रसङ्गी० कृते अकृतेऽपि प्रसङ्गः प्रयोगप्राप्तिरस्यास्तीति कृताकृतप्रसङ्गी एवंभूतो यो विधिः स नित्यः । नित्यानित्ययोर्नित्यो विधिर्बलवानिति । एवमभिप्रायः—तृप्रत्ययभावे कृतेऽपि अकृतेऽपि नुडागमो नित्यः तदागमे च हसादित्वं सिद्धमेव । अतः स्वरान्तत्वाभावाद्वा[1] तृप्रत्ययान्तत्वं न किंतु क्रोष्टूनामित्येकमेव रूपम् । 'नुडामः' 'नामि०' ॥ सप्तम्येकवचने 'तृतीयादौ वा०' इत्येकत्र तृप्रत्यये कृते 'ङौ' इत्यर् । 'स्वरहीनं०' क्रोष्टरि । द्वितीये उकारान्तत्वात् 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' क्रोष्टौ । शेषं सुकरम् । संबोधने अधिष्विति विशेषणात् 'समानाद्धेर्लोपो०' 'धौ' हे क्रोष्टो हे क्रोष्टारौ हे क्रोष्टारः ॥

**ऋकारान्ता लृकारान्ता एकारान्ताश्चाप्रसिद्धाः[2] ॥**

ऋकारान्तानुक्त्वा अन्यानाह—ऋकारान्ता लृवर्णान्ता एकारान्ताश्चाप्रसिद्धा अप्रतीताः । कचित् प्रयोगे दृश्यते—'ङेरक्' इत्यादौ ॥

**ऐकारान्तः पुंलिङ्गः सुरैशब्दः ॥ रै स्भि ॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः । सुराः । स्वरादौ सर्वत्रायादेशः । सुरायौ सुरायः । सुरायम् सुरायौ सुरायः । सुराया सुराभ्याम् सुराभिः । सुराये सुराभ्याम् सुराभ्यः । सुरायः सुराभ्याम् सुराभ्यः । सुरायः सुरायोः सुरायाम् । सुरायि सुरायोः सुरासु । हेसुराः हेसुरायौ हे सुरायः ॥ एवं रैशब्दः ॥**

ऐकारान्तः सुरैशब्दः। सूत्रम्—'रैस्भि' ॥ रै षष्ठ्येकवचनान्तम् । स् च भ् च स्भ् तस्मिन् सप्तम्येकवचनम् । 'स्वरहीनं०' ॥ रैशब्दस्य विभक्तिसंबन्धिनि सकारे भकारे च परे अकारो भवति । षष्ठीनिर्दिष्टस्येत्यन्तस्य ॥ प्रथमैकवचने 'स्रोर्विसर्गः' शोभनो राः सुराः ।

---

१ 'स्वरादित्वाभावात्' इत्युचितपाठस्य स्थाने प्रमादेन 'स्वरान्तत्वाभावात्' इति जातम् ॥

२ इतः परम् 'कौमारास्तृप्रत्ययान्तस्य क्रुशेर्धातोः पृथग्रूपमाहुः । अप्रसिद्धा इति वृद्धव्यवहारे न त्वभिधानादौ । तेन 'एर्विष्णुरविमारुते' इत्येकाक्षरमालायाम्; तथा अनेकार्थमञ्जर्याम् ऋर्दैत्यमातरि स्याद्दव्यामखु लतान्तरे । वाय्वादित्ये महीध्रे च विष्णावे ऐ प्रकीर्तितौ ॥ अत्र ऋकारस्य स्वरादौ । ऋरम् ऋः रौ रः। ऋं रौ ऋन् । रा ऋभ्याम् ऋभिः । हेऋः हेरौ हेरः । इत्यादि ॥ लृवर्णस्य सावर्ण्यातिपितृशब्दवत्प्रक्रिया । आ अलौ अलः । अलम् अलौ लृन् । ला लृभ्याम् लृभिः । ले लृभ्याम् लृभ्यः । उः लृभ्यां लृभ्यः । उः लोः ॠणाम् । लि लोः । लृषु । हे अल् हेअलौ हे अलः ॥ इति लृशब्दरूपाणि ॥ एकारान्तस्य तु उयंश्चासौ एः रविश्चेति विग्रहे कृते विभक्तिलोपे कृते उयदेः इति समस्तं नाम । उयदेः उयदयौ उयदयः । हेउयदेः हेउयदयौ हेउयदयः । समानत्वाभावान्न धिलोपः । उयदयम् उयदयौ उयदयः । उयदया । उयदेभ्याम् उयदेभिः । उयदये उयदेभ्याम् उयदेभ्यः । उयदेः उयदेभ्याम् उयदेभ्यः । उयदेः ङस इत्यकारलोपः । उयदयोः उयदयाम् । उयदयि उयदयोः उयदेषु' इत्ययं पाठोऽधिकः कचित् ॥

सुष्ठु रा द्रव्यं यस्येति च सुराः । स्वरादौ तु 'ऐ आय्' 'स्वरहीनं०' ॥ समानाभावात् 'अमूशसोरस्य' 'सो नः पुंसः' नुडागमश्च न भवति ॥

**ओकारान्तः पुंलिङ्गो गोशब्दः । गो सि इति स्थिते ॥ ओरौ ॥ ओकारस्यौकारादेशो भवति पञ्चसु परेषु । गौः । 'औ आव्' गावौ गावः ॥ आम्शसि ॥ ओकारस्यात्वं भवति अमि शसि च परे गाम् 'औ आव्' गावौ गाः । गवा गोभ्याम् गोभिः । गवे गोभ्याम् गोभ्यः । 'ङस्य' ॥ इत्यकारलोपः । गोः गोभ्याम् गोभ्यः । गोः गवोः गवाम् ॥ गवि गवोः गोषु । हेगौः हेगावौ हेगावः ॥**

ओकारान्तः पुंलिङ्गो गोशब्दः । दशार्थवाचकः । यतः—'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः' । दशस्वप्यर्थेषु गोशब्दः पुंस्त्रीलिङ्गे ज्ञेयः इति हेमाचार्या आहुः ॥ व्याडिरप्येवमाह ॥ गौडस्तु—'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान् । स्त्री सौरभेयीदिग्बाणदृग्वाग्भूष्वप्सु भूम्नि च' ॥ इति विशेषमाह । गम्लृ गतौ । गम् । गच्छतीति गौः । गमेर्डोप्रत्ययः । डित्त्वाट्टिलोपः । 'स्वरहीनं०' गो इति जातम् । गोशब्दस्य पञ्चसु विशेषः । सूत्रम्—'ओरौ' ॥ ओः षष्ठ्येकवचनान्तम् । 'ङस्य' इत्यकारलोपः 'स्रोर्विसर्गः' । औ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' ॥ ओकारान्तशब्दसंबन्धिन औकारस्य ओकारादेशो भवति पञ्चसु परेषु । अम्विषये तु—'आम् शसि' आ प्रथमैकवचनान्तं सांकेतिकम् । अम् च शस् च अमूशस् तस्मिन् सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ 'सवर्णे०' ॥ ओकारस्यामि शसि च परे आकारो भवति । 'सवर्णे०' 'मोऽनुस्वारः' ॥ द्वित्वे 'औ आव्' ॥ बहुत्वे आकारे कृते 'सवर्णे०' 'स्रो०' । यदादेशस्तद्वद्भवतीति ओकारस्यासमानत्वान्न 'सो नः पुंसः' इति सस्य नः । टादौ स्वरादौ 'ओ अव्' ॥ हसादावविशेषः । पञ्चमीषष्ठ्येकवचने 'ङस्य' इति सूत्रेण अकारलोपः । 'स्रोर्वि०' ॥ केचित्तु आमि 'ऋगन्ते गोराम्' इति सूत्रान्तरेण नुडागममप्याहुः छन्दसि । गोनां गवाम् ॥ शेषं सुगमम् ॥ एवं द्योशब्दः स्त्रीलिङ्गे । पुंलिङ्गे तु गौणत्वे सुद्योशब्दः । सुष्ठु शोभना द्यौः स्वर्गो यस्य स सुद्यौः इन्द्रः । 'ओरौ' सुद्यौः सुद्यावौ सुद्यावः इत्यादि ॥

**औकारान्तः पुंलिङ्गो ग्लौशब्दः । तस्य हसादावविशेषः । स्वरादौ आवादेशः । ग्लौः ग्लावौ ग्लावः । हेग्लौः हेग्लावौ हेग्लावः । ग्लावम् ग्लावौ ग्लावः । ग्लावा ग्लौभ्याम् ग्लौभिः । ग्लावे ग्लौभ्याम् ग्लौभ्यः । ग्लावः ग्लौभ्याम् ग्लौभ्यः । ग्लावः ग्लावोः ग्लावाम् । ग्लावि ग्लावोः ग्लौषु इत्यादि ॥ इति स्वरान्ताः पुंलिङ्गाः ॥ ६ ॥**

औकारान्तः पुंलिङ्गो ग्लौशब्दश्चन्द्रार्थः । ग्लै हर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । औणादिको डौप्रत्ययः । 'डिति टेः' 'स्वरहीनं०' ग्लौः इति जातम् । तस्य हसादावविशेषः । स्वरादौ तु सर्वत्र । 'औ आव्' ग्लौः ग्लावौ ग्लावः । इति स्वरान्तपुंलिङ्गसाधनम् ॥

## स्वरान्ताः स्त्रीलिङ्गाः ७

**अथ स्वरान्ताः स्त्रीलिङ्गाः कथ्यन्ते ॥ तत्र आबन्तस्त्रीलिङ्गो गङ्गाशब्दः । गङ्गा सि इति स्थिते ॥ आपः ॥ आबन्तात्परस्य सेर्लोपो भवति । गङ्गा ॥ औरी ॥ आबन्तात्पर औरीकारमापद्यते ॥ 'अ इ ए' । गङ्गे गङ्गाः ॥**

अथ स्वरान्तस्त्रीलिङ्गसाधनमुच्यते । अकारान्तः शब्दः स्त्रीलिङ्गे नास्ति । तत्राबन्तो गङ्गाशब्दः । प्रथमैकवचने सूत्रम्—'आपः' ॥ आप्शब्दस्य पञ्चम्येकवचनम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । 'आबतः स्त्रियाम्०' इति सूत्रेण य आप्प्रत्ययः कृतः तदन्ताच्छब्दात्परस्य सेर्लोपो भवति । अनेन सेर्लोपः ॥ द्वित्वे सूत्रम्—'औरी' ॥ औः प्रथमैकवचनान्तम् । सांकेतिकम् । ई प्रथमैकवचनान्तं सांकेतिकम् ॥ आबन्तादिति वृत्तिः कण्ठ्या । न वरम् । औकार ईत्वमापद्यते प्राप्नोति । अनेन औस्थाने ई 'अ इ ए' ॥ बहुत्वे 'सवर्णे०' 'स्रोर्वि०' ॥

**धिरिः ॥ आबन्तात्परो धिरिर्भवति । हेगङ्गे हेगङ्गे हेगङ्गाः ॥**

धौ तु सूत्रम्—'धिरिः' ॥ धिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ इः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' ॥ केचित्तु—'धिरी' इति दीर्घमीकारं पठन्ति । ततः 'औ' इत्यस्मिन् सूत्रे दीर्घईकारानुवृत्तिं गृह्णन्ति 'ततो जरसी' इति रूपं साधयन्ति ॥ 'आबन्ता०' ॥ अनेन धिस्थाने इः । 'अ इ ए' ॥

**अम्बादीनां धौ ह्रस्वः ॥ अम्बादीनां धौ परे ह्रस्वो भवति ॥ हेअम्ब । हेअम्बे । हेअम्बाः ॥ यथाम्बाशब्दो द्विस्वरो मात्रर्थः । एवं ये द्विस्वरा मात्रर्थास्तेषां धौ परे ह्रस्वता स्यात् । हेअक्क । हेअक्के । हेअक्काः ॥ हेअल्ल । हेअल्ले हेअल्लाः ॥**

अम्बादीनां धिविषये विशेषमाह 'अम्बा०' अम्बादीनां धौ ह्रस्वो भवति । ततः 'समानाद्धे०' हे अम्ब हे अम्बे हे अम्बाः । एवं हे अक्क हे अल्ल हे अत्त । एते त्रयः एकार्थाः गृहमध्यस्थवृद्धस्त्रीवाचकाः । अम्बादीनां द्विस्वराणामेव धौ ह्रस्वता । तेन हे अम्बाले हे अम्बिके इत्यादौ न ह्रस्वः ॥

**गङ्गाम् । गङ्गे । गङ्गाः ॥ टौसोरे ॥ आबन्तस्य टौसोः परयोरेत्वं भवति ॥ 'ए अय्' गङ्गया । गङ्गाभ्याम् । गङ्गाभिः ॥ ङितां यट् ॥ आबन्तात्परेषां ङेङसिङस्ङि इत्येतेषां ङितां वचनानां यडागमो भवति । टकारः स्थाननियमार्थः[1] ॥ गङ्गायै । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गयोः । गङ्गानाम् । 'आम्ङेर्नियश्च' गङ्गायाम् । गङ्गयोः । गङ्गासु ॥ एवं श्रद्धामेधाविद्याशालामालाहेलादोलाप्रभृतयः ॥**

द्वितीयैकवचने 'अमूशसोरस्य' 'मोनुस्वारः' ॥ द्वित्वे प्रथमावत् ॥ शसि 'अमूशसोरस्य' 'स्रोर्वि०' । पुंलिङ्गाभावात् 'सो नः पुंसः' इति न भवति ॥ तृतीयैकवचने सूत्रम्—'टौसोरे' ॥

---

१ 'रादेश'.

टा च ओस् च टौसौ तयोः टौसोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । ए प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' सिद्धमिदम् । आप्प्रत्ययान्तस्य टा इति तृतीयैकवचने ओस् इति षष्ठीसप्तमीद्विवचने परे ए भवति । षष्ठीनिर्दिष्टस्येत्यन्तस्य । अनेन ए 'ए अय्' 'स्वरहीनं०' ॥ हसादौ त्वविशेषः ॥ चतुर्थ्येकवचने सूत्रम्—'ङितां यट्' ङ् इत् येषां ते ङितस्तेषां ङितां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः'॥ यट् प्रथमैकवचनान्तम् । 'हसेपः०' । 'आबन्ता०' । आप्प्रत्ययान्ताच्छब्दात्परेषामग्रे वर्तमानानां ङितां ङेङसिङस्ङि इत्येतेषां वचनानां यडागमो भवति । टित्त्वादादौ । अनेन यडागमः सस्वर एव । टित्त्वाद्यडादौ । 'ए ऐ ऐ' ॥ षष्ठ्येकवचने यडागमे कृते 'सवर्णे०' 'स्रोर्वि०'॥ षष्ठीद्विवचने 'टौसोरे' 'ए अय्' 'स्वरहीनं०' ॥ बहुत्वे नुडागमः । 'स्वरहीनं०' 'मोनुस्वारः' ॥ सप्तम्येकवचने । 'आम्ङेः' ततो यदादेशस्तद्वद्भवतीति न्यायात् यडागमः । 'स्वरहीनं०' 'मोऽनुस्वारः' शेषं सुकरम् । एवं श्रद्धादयो ज्ञेयाः ॥

**सर्वादीनां तु ङित्सु विशेषः ॥ [ आबतः स्त्रियाम्[1] ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति । पकारः सिलोपार्थः । 'सवर्णे दीर्घः सह' । ] सर्वा सर्वे सर्वाः । सर्वाम् सर्वे सर्वाः । सर्वया सर्वाभ्याम् सर्वाभिः । सर्वा ङे इति स्थिते ॥ यटोच ॥ आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति, पूर्वस्य चापोऽकारो भवति ॥ सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः ॥ सर्वस्याः सर्वयोः सर्वासाम् । 'आम्ङेर्नियश्च' सर्वस्याम् सर्वयोः सर्वासु । हेसर्वे हेसर्वे हेसर्वाः ॥ एवं विश्वादीनां सर्वाशब्दवद्रूपं ज्ञेयम् ॥**

आबन्तः सर्वाशब्दः । तस्य तृतीयां यावत् गङ्गाशब्दवत् । सर्वा सर्वे सर्वाः । सर्वां सर्वे सर्वाः । सर्वया सर्वाभ्यां सर्वाभिः । ङित्सु द्विवचनेषु विशेषः । 'ङितां यट्' इति यडागमे कृते सूत्रम्—'यटोच' यटः षष्ठ्येकवचनान्तम् 'स्वरहीनं०' 'स्रोर्विसर्गः' । अत् प्रथमैकवचनान्तम् 'हसेपः०' 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' च प्रथमैकवचनान्तम् 'अव्यया०' 'स्तोः श्चुना श्चुः' ॥ 'आबन्ता०' । अनेन यटः सुडागमः । टित्त्वादादौ पूर्वस्य च आपः आप्प्रत्ययाकारस्य अकारो भवति । चतुर्थ्येकवचने—'स्वरहीनं०' 'ए ऐ ऐ' सर्वस्यै । पञ्चमीषष्ठ्योरेकवचने—'ङितां यट्' 'यटोच' आकारस्य अकारः । 'स्वरहीनं०' 'सवर्णे०' 'स्रोर्वि०' ॥ सप्तम्येकवचने—'आम्ङेः' आमि कृते । 'ङितां यट्' 'यटोऽच' 'स्वरहीनं०' 'सवर्णेदी०' 'मोऽनुस्वारः' । षष्ठीसप्तम्योर्द्विवचने 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विसर्गः' । षष्ठीबहुवचने 'सुडामः' 'स्वरहीनं०' 'मोऽनुस्वारः' । संबोधने तु गङ्गावत् । एवमाबन्ताः सर्वादयोऽन्येऽपि विश्वा, उभा, अन्या, अन्यतरा, इतरा, कतरा, कतमा, समा, सिमा, नेमा, एका, पूर्वा, परा, दक्षिणा, उत्तरा, अपरा, अधरा, स्वा, अन्तरा ॥ उभयशब्दस्य तु, ईप्प्रत्ययः उभयी उभय्यौ उभय्यः ॥ नदीवत् ॥ द्वितीयातृतीयाशब्दयोर्ङित्सु वा सर्वादित्वम् । द्वितीयस्यै द्वितीयायै द्वितीयस्याः द्वितीयायाः द्वितीयस्यां द्वितीयायाम् । तृतीयस्यै

---

१ केनचिद्वर्धितोऽयं कोष्ठकान्तर्गतसूत्रपाठः टीकायाम् अत्राव्याख्यानात् स्त्रीप्रत्यय एव व्याख्यातत्वात् ॥

तृतीयायै तृतीयस्याः तृतीयायाः तृतीयस्यां तृतीयायाम् ॥ द्विशब्दस्य 'त्यदादेष्टे०' इत्यकारे कृते 'आबतः स्त्रियाम्' ततो गङ्गाशब्दद्द्विवचनवत्साध्यः । द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः । एवम् उभे उभे ॥

**आकारान्तो जराशब्दः ॥ जरायाः स्वरादौ जरस् वा वक्तव्यः ॥ जरसौ-जरे । जरसः-जराः । जरसं-जराम् जरसौ-जरे जरसः-जराः । जरसा-जरया जराभ्याम् जराभिः । जरसे-जरायै जराभ्याम् जराभ्यः । जरसः-जरायाः जराभ्याम् जराभ्यः । जरसः-जरायाः जरसोः-जरयोः जरसां-जराणाम् । जरसि-जरायाम् जरसोः-जरयोः जरासु । हेजरे हेजरसौ-हेजरे हेजरसः-हेजराः ॥**

आबन्तस्यापि जराशब्दस्य विशेषः । 'जरायाः०' जराशब्दस्य स्वरादौ जरस् वा वक्तव्यः । 'गुरुः शिच सर्वस्य वक्तव्यः' साधनं स्वरादावेकस्मिन् पक्षे गङ्गावत् । द्वितीयपक्षे जरस् आदेशे कृते 'स्वरहीनं०' । शेषं सुकरम् । जरा जरसौ जरे जरसः जराः इत्यादि ॥ सोमपाक्षीरपादयस्त्वाप्प्रत्ययान्ता न, किं तु आकारान्ताः क्विबन्तास्तेषां साधना रूपाणि च पुंलिङ्गवत् ॥

**इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः । तस्य प्रथमाद्वितीययोः हरिशब्दवत्प्रक्रिया । बुद्धिः । 'औ यू' बुद्धी । बुद्धयः । हेबुद्धे (हेबुद्धी) हेबुद्धयः । बुद्धिम् । बुद्धी । बुद्धीः । स्त्रीलिङ्गत्वान्नत्वनात्वाभावो विशेषः । बुद्ध्या बुद्धिभ्याम् बुद्धिभिः ॥ 'इदुद्भ्याम्' ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति ॥ इ यं स्वरे । 'ए ऐ ऐ' बुद्ध्यै । 'ङिति' 'ए अय्' । बुद्धये बुद्धिभ्याम् बुद्धिभ्यः । बुद्ध्याः । 'ङस' बुद्धेः । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्ध्याः-बुद्धेः । बुद्ध्योः । बुद्धीनाम् ॥ स्त्रियां योः ॥ इश्च उश्च युः तस्मात् । इवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्तमानात्परस्य ङेरामादेशो भवति ॥ बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । 'ङेरौ डित्' बुद्धौ बुद्ध्योः बुद्धिषु ॥ एवं मतिभूतिधृतिकान्तिगतिरुचिप्रभृतयः ॥**

इकारान्तो बुद्धिशब्दस्तस्य द्वितीयाद्विवचनं यावत् हरिशब्दवत्प्रक्रिया । 'औ यू' 'ए ओ जसि' इत्यादि ॥ शसि—'अमृशसोरस्य' 'शसि' इति दीर्घः । 'स्नो०' ॥ स्त्रीलिङ्गत्वान्नत्वस्य

---

१ अयम् तदन्तविधिरत्रेष्यते । एकदेशविकृतमनन्यवद्भवतीति न्यायात् । केचिट्टादाविनं अत आच्चेतीच्छन्ति । जरसः स्वरादौ निर्जस्यापि भवति । निर्जरः निर्जरसौ-निर्जरौ निर्जरसः-निर्जराः । निर्जरसम्-निर्जरम् निर्जरसौ-निर्जरौ निर्जरसः-निर्जरान् । निर्जरसिन निर्जरसा निर्जरेण निर्जराभ्याम् ॥ **भिस् ऐस् वक्तव्यः** ॥ निर्जरसैः-निर्जरैः । निर्जरसे-निर्जराय निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरसात्-निर्जरात् निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरस्य निर्जरसोः-निर्जरयोः निर्जरसाम् निर्जराणाम् । निर्जरसि-निर्जरे निर्जरसोः-निर्जरयोः निर्जरेषु । हेनिर्जर हेनिर्जरसौ-हेनिर्जरौ हेनिर्जरसः-हेनिर्जराः ॥ इत्यधिकः पाठः क्वचित् ॥

नात्वस्य चाभावः । 'सो नः पुंसः' इति सूत्रेण नकारो न । तृतीयैकवचने अस्त्रियामिति वचनात् 'टा नाऽस्त्रियाम्' इत्यस्य न प्रवृत्तिः किं तु 'इ यं स्वरे' 'स्वरहीनं०' ङित्सु रूपद्वयम् । एकत्र हरिवत् । 'ङिति' 'ङस्य' 'ङेरौ डित्' 'डिति टेः' इत्यादि सूत्राणि । अन्यत्र सूत्रम्—'इदुद्भ्याम्' इच्च उच्च इदुतौ ताभ्याम् इदुद्भ्याम् । पञ्चमीद्विवचनान्तम् । सिद्धम् एकपदम् । स्त्रियां वर्त० वृत्तिः कण्ठ्या ॥ अत्र 'नित्यं स्त्रियां वर्तमानाभ्यामिकारोकाराभ्याम्' इति व्याख्येयम् । तेन शुचिशब्दोऽनियतलिङ्गो हरिवज् ज्ञेयः । नतु विकल्पः ॥ अनेन चतुर्थीपञ्चमीषष्ठ्येकवचने वा अडागमः । टित्त्वादादौ । 'इ यं स्वरे' 'ए ऐ ऐ' पञ्चमीषष्ठ्योरेकवचने—'इ यं स्वरे' 'स्वर०' 'सवर्णे०' 'स्रो०' ॥ सप्तम्येकवचने सूत्रम्—'स्त्रियां योः' स्त्री सप्तम्येकवचनम् 'आम्ङेर्नियश्च' 'ङितामट्' 'स्त्रीभ्रुवो०ः' 'स्वरहीनं०' 'मोऽनुस्वारः' इश्च उश्च युस्तस्मात् योः पञ्चम्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्विसर्गः' इश्च उश्च० सुकरम् । स्त्रीलिङ्गे वर्तमानात् इवर्णान्ताद् उवर्णान्ताच्च शब्दात्परस्य ङेराम् आदेशो भवति । वर्णग्रहणान्नदीवधूजम्ब्वादीनामपि ङेराम् । अट्साहचर्यात् यस्मिन् पक्षे अडागमस्तत्रैव ङेराम् भवति । अत एवाग्रे वक्ष्यति 'अडागमाभावे आमोऽप्यभावः' इति । अनेन ङेराम् न । 'इदुद्भ्याम्' इति अडागमः । 'इ यं स्वरे' 'स्वरहीनं०' 'सवर्णे०' 'मोऽनुस्वारः' ॥ सप्तमीबहुवचने—'किलात्षः सः०' ॥ शेषं सुकरम् । संबोधने हरिवत् । 'समानाद्धेर्लोपोऽधातोः' 'धौ' एवं मतिभूतिधृतिरुचिप्रभृतयोऽपि इकारान्ता एतैरेव सूत्रैः सिद्ध्यन्ति ॥

**एवं धेनुरज्जुतनुप्रभृतयोऽप्युकारान्ताः स्त्रीलिङ्गा एतैरेव सूत्रैः सिद्ध्यन्ति[1] ॥**

एवम् उकारान्ता धेनुरज्जुप्रभृतयोऽपि ज्ञेयाः ॥

**ईबन्तः स्त्रीलिङ्गो नदीशब्दः ॥ हसेपः सेर्लोपः ॥ हसान्ताद् ईबन्ताच्च परस्य सेर्लोपो भवति ॥ नदी ॥ धौ ह्रस्वः ॥ इवर्णोवर्णयोरधातोः स्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति ॥ हेनदि[2] ॥ नदी । नद्यौ । नद्यः । नदीम् नद्यौ नदीः । नद्या नदीभ्याम् नदीभिः ॥ ङितामट् ॥ स्त्रियां वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति ॥ नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः । नदीभ्याम् । नदीभ्यः । नद्याः । नद्योः । नदीनाम् । नद्याम् । नद्योः । नदीषु ॥**

ईकारा[न्तेषु ईबन्तो] नदीशब्दः ॥ सूत्रम्—'हसेपः सेर्लोपः' हसश्च ईप् च हसेप् तस्मात् हसेपः पञ्चम्येकवचनम् 'स्रो०' 'स्वरहीनं०' । सेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रो०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' जलतुम्बि० ॥ हसान्ताद्व्यञ्जनान्ताच्छब्दात्परस्य ईप्प्रत्ययान्ताच्च शब्दात्परस्य सेर्लोपो भवति । हसान्ताच्च अग्रे हसान्तपुंलिङ्गे भविष्यति । अत्र तु ईबन्तात् । नदीशब्दात्प्रथमैकवचने सि । अनेन सि-

---

१ धेनुः । धेनू । धेनवः । धेनुम् । धेनू । धेनूः । स्त्रीलिङ्गत्वान्नत्वाभावः । धेन्वा । धेनुभ्याम् । धेनुभिः । धेन्वै-धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वाः धेनोः । धेनुभ्याम् । धेनुभ्यः । धेन्वाः-धेनोः । धेन्वोः । धेनूनाम् । धेन्वाम्-धेनौ । धेन्वोः । धेनुषु । हेधेनो । हेधेनू । हेधेनवः ॥ २ ह्रस्वविधिसामर्थ्यान्न गुणः ॥ एवं गौरीसरस्वतीब्रह्माणीकुमारीप्रभृतयः ॥

लोपः । द्वित्वबहुत्वयोः—'इ यं स्वरे' 'स्वरहीनं०' ॥ धौ तु सूत्रम्—'धौ ह्रस्वः' ॥ धौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टेर्लोपः । 'स्वरहीनं०' । ह्रस्वः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ इवर्णोवर्णयोः । अधातोरिति धातुवर्जशब्दस्य अकिबन्तस्येत्यर्थः ॥ अत्र अनियुवन्ता ईकारोकारान्ता नित्यस्त्रीलिङ्गाः शब्दाः स्त्रीशब्दश्च एतत्संबन्धिनोरेव इवर्णोवर्णयोरिति व्याख्येयम् । अनियुवन्ता इति किम् । हे भ्रूः । हे श्रीः । हे भूः । शेषं कण्ठ्यम् । अत्र वर्णग्रहणं ह्रस्वे कृते 'धौ' इति सूत्रस्य प्रतिषेधार्थम् । अनेन ह्रस्वः । 'समानाद्धेर्लोपः०' हे नदि हेनद्यौ हे नद्यः । अमि—'अमृशसोरस्य' 'मोऽनुस्वारः' । द्वितीयाद्विवचने 'इ यं स्वरे' 'स्वरहीनं०' । शसि—'अमृशसोरस्य' 'स्रो०' ॥ नदीशब्दात् तृतीयैकवचने टा । 'इ यं स्वरे' 'स्वरहीनं०' ॥ चतुर्थ्येकवचने सूत्रम्—'ङितामट्' ङ् इत् येषां ते ङितस्तेषां ङिताम् । षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' । अट् प्रथमैकवचनान्तम् । 'हसेपः०' ॥ स्त्रियामिति । स्त्रीलिङ्गे वर्तमानाभ्यामीकाराभ्यां परेषां ङितां ङे ङसि ङस् ङि इत्येतेषामडागमो भवति । अनेन अडागमः । 'इ यं स्वरे' 'ए ऐ ऐ' पञ्चमीषष्ठ्योरेकवचने अडागमः । 'इ यं स्वरे' 'स्वरहीनं०' 'सवर्णे०' 'स्रोर्वि०' ॥ षष्ठीसप्तम्योर्द्विवचने । 'इ यं स्वरे' ॥ षष्ठीबहुवचने नुडागमः 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ सप्तम्येकवचने । 'स्त्रियां य्वोः' 'ङितामट्' 'इ यं स्वरे' ॥ सप्तमीबहुवचने । 'किलातषः सः०' एवं नदीशब्दवत् गौरीसरस्वतीब्राह्मणीकुमारीनारीसारङ्गीप्रभृतयः एतैरेव सूत्रैः साध्याः ॥

**लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । हेलक्ष्मि हेलक्ष्म्यौ हेलक्ष्म्यः । शेषं नदीवत् ॥**

**अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुदाहृतः ।**
**सेसानामेव शब्दानां सेर्लोपो न कदाचन ॥ १ ॥**

ईकारान्तो लक्ष्मीशब्दस्तस्य ईबन्तत्वाभावादीप्प्रत्ययान्तत्वाभावात् 'हसेपः०' इति सेर्लोपो न भवति । यतः—'लक्षेरी मुट् च' इति सूत्रेण ईकारान्तत्वात् ॥ ततः प्रथमैकवचने—'स्रोर्विसर्गः' । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्वि०' ॥ संबोधने—हे लक्ष्मि । 'धौ ह्रस्वः' 'समानाद्धेर्लो०' ॥ शेषं नदीतुल्यम् ॥ यतः—'अवी लक्ष्मी तरी तन्त्री तन्द्री धी ह्री श्रियां पुरः । भीशब्दाच्च न सेर्लोपः स्त्रीलिङ्गे स्यात्कदाचन ॥'

**स्त्रीशब्दस्येबन्तत्वात्सेर्लोपोऽस्ति । स्त्री ॥ स्त्रीभ्रुवोः ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ स्त्रियः । हेस्त्रि हेस्त्रियौ हेस्त्रियः ॥ वाम्शसि ॥ स्त्रीशब्दस्य अमि शसि च परे वा इय् भवति ॥ स्त्रियं-स्त्रीम् । स्त्रियौ । स्त्रियः-स्त्रीः । स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रियै । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्रियाः । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्रियाः स्त्रियोः स्त्रीणाम् । स्त्रियाम् स्त्रियोः स्त्रीषु । इत्यादि ॥**

---

१ 'उणादितः' इति पाठान्तरम् ॥　२ टीकोक्त एवोत्तरार्धपाठः सम्यक् अस्मिन्पाठाऽवधारणस्यान्यस्योपलम्भात् ॥

स्त्रीशब्दस्येबन्तत्वात् ईप्प्रत्ययान्तत्वात् सेर्लोपोऽस्ति । ष्ट्यै धातुः स्त्यै धातुश्च शब्दसंघातयोः । 'स्त्यायतेः स्त्रीत्वे ड्रट्' इति रप्रत्ययः । डित्त्वाट्टिलोपः । 'संयोगा[1]न्तस्य०' इति यकारलोपः 'स्वरहीनं०' ततः 'ष्ट्रित्रितः' इतीप् । प्रथमैकवचने—'हसेपः०' । द्वित्वे सूत्रम्—'स्त्रीभ्रुवोः' ॥ स्त्री च भ्रूश्च स्त्रीभ्रुवौ तयोः स्त्रीभ्रुवोः षष्ठीद्विवचनान्तम् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रीशब्दस्य इय् । भ्रूशब्दस्य उव् । अनेन इय् । 'स्वरहीनं०' । बहुत्वेऽप्येवम् । द्वितीयैकवचने सूत्रम्—'वाऽमूशसि' ॥ वा तृतीयैकवचनान्तम् । 'अव्यया०' । अम् च शस् च अमूशस् तस्मिन् अमूशसि सप्तम्येकवचनान्तम् । 'सवर्णे दीर्घः०' ॥ अमि शसि च परे वा विकल्पेन इयुवौ भवतः । अत्र स्त्रीशब्द एव संभाव्यते । भ्रूशब्दस्य 'भ्रूम्' इति रूपस्यादृश्यमानत्वात् । उव्ग्रहणं तु संबन्धैक्यात् । अनेन एकत्र इय् 'स्वरहीनं०' 'मोऽनुस्वारः' । अन्यत्र 'अमूशसोरस्य' 'मोऽनुस्वारः' ॥ द्वित्वे प्रथमाद्वित्ववत् । शसि—'स्त्रीभ्रु[2]वोः' 'स्वरहीनं०' 'स्नोर्वि०' । अन्यत्र 'अमूशसो०' 'स्नोर्वि०' ॥ तृतीयैकवचने 'स्त्रीभ्रुवोः' 'स्वरहीनं०' स्त्रिया स्त्रीभ्यां स्त्रीभिः । शेषं चतुर्थ्यादौ नदीवत् । अस्यायमर्थः—ङेङसिङस्ङिषु 'ङितामट्' कृत्वा इय् कर्तव्य इत्यर्थः । स्त्रीशब्दाच्चतुर्थ्येकवचने ङे 'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'ए ऐ ऐ' स्त्रियै स्त्रीभ्यां स्त्रीभ्यः । पञ्चम्येकवचने स्त्री अस् 'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वर०' 'सवर्णे दीर्घः०' 'स्नोर्वि०' । स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः । षष्ठ्येकवचने स्त्री अस् ।'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'सवर्णे दीर्घः०' 'स्नोर्वि०' स्त्रियाः । षष्ठीद्विवचने स्त्री ओस् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'स्नोर्वि०' । षष्ठीबहुवचने स्त्री आम् । 'नुडामः' 'ष्रृनॄर्णो०' 'स्वरहीनं०' 'मोऽनुस्वारः' स्त्रीणाम् । अत्र 'स्त्रीभ्रुवोः' 'नुडामः' इत्युभयोः प्राप्तौ विशेषत्वात् नुडागम एव भवति । सप्तम्येकवचने स्त्री ङि । 'ङितामट्' 'स्त्रियां योः' इत्याम् । 'स्त्रीभ्रुवोः' 'स्वरहीनं० 'सवर्णे०' 'मोऽनुस्वारः' स्त्रियाम् । सप्तमीद्विवचने ओस् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' स्त्रियोः । सप्तमीबहुवचने स्त्री सु । 'किलात्षः सः०' स्त्रीषु । हे स्त्रि । 'धौ ह्रस्वः०' 'समानाद्धे०' हे स्त्रियौ हे स्त्रियः ॥

श्रीश[3]ब्दस्य भेदः । ईकारान्तः श्रीशब्दः ॥ श्रीः । श्रियौ । श्रियः । श्रियम् । श्रियौ । श्रियः । श्रिया । श्रीभ्याम् । श्रीभिः ॥ वेयुवः ॥ इयुवन्तात्स्त्रियां वर्तमानात्परेषां ङितां वचनानां वा अडागमो भवति, न तु स्त्रीशब्दस्य विकल्पेन । श्रियै-श्रिये । श्रीभ्याम् ॥ श्रीभ्यः । श्रियाः-श्रियः । श्रीभ्यां श्रीभ्यः ॥ श्रियाः-श्रियः । श्रियोः श्रियाम् । श्र्यादीनां वामो नुट् वक्तव्यः । श्रीणाम् । श्रियाम् । अडागमाभावे आमोप्यभावः । श्रियि श्रियोः श्रीषु । हेश्रीः हेश्रियौ हेश्रियः ॥ एवं धीह्रीप्रभृतयोऽप्यनीबन्ताः ॥

---

१ 'यवयोर्वसे हकारे च लोपः' इति तूचितम् । अपदान्ते 'संयोगान्तस्य लोपः' इत्यस्यानिष्टत्वात् ॥ २ 'वामूशसि' इति सूत्रस्यैवोपन्यासो योग्यः ॥ ३ 'श्रीशब्दस्यापीबन्तत्वाभावात्सेर्लोपो नास्ति' इति प्राचीनपाठः ॥ ४ धीः । धियौ । धियः । हेधीः हेधियौ हेधियः ॥ ह्रीः । ह्रियौ । ह्रियः । हेह्रीः ॥ इत्यधिकः पाठः ॥

अथ श्रीशब्दः । प्रथमैकवचने श्री स् । 'स्रोर्वि०' श्रीः ॥ प्रथमाद्विवचने श्री औ—'य्वोर्धातो०' 'स्वरहीनं०' श्रियौ । जसि—'य्वोर्धातो०' 'स्वरहीनं' श्रियः । द्वितीयैकवचने श्री अम् 'य्वोर्धातो०' 'स्वरहीनं०' श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । चतुर्थ्यादौ श्रीशब्दस्य विशेषमाह—सूत्रम्—'वेयुवः' ॥ वा तृतीयैकवचनान्तम् । 'अव्यया०' । इय् च उव् च इयुव् तस्मात् इयुवः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' मध्ये 'अ इ ए' ॥ नित्यं स्त्रियां वर्तमानात् इयन्तादुवन्ताच्च शब्दात्परेषां ङितां वचनानां विकल्पेन अडागमः स्यात्, न तु स्त्रीशब्दस्य । यतः कालापके 'स्त्री नदीवत्' । तथा हैमे 'वेयुवोऽस्त्रियाः' इति ॥ पूर्वम्—'य्वोर्धातोः०' 'वेयुवः' इति । अनेन एकत्र अडागमः । 'स्वरहीनं०' 'ए ऐ ऐ' । अन्यत्र 'य्वोर्धातो०' 'स्वरहीनं०' ॥ षष्ठीपञ्चम्योरेकवचने । एकत्र 'वेयुवः' इति अडागमः । 'य्वोर्धातो०' 'स्वरहीनं०' 'सवर्णे दीर्घः०' 'स्रोर्वि०' ॥ पक्षे पञ्चमीषष्ठ्योरेकवचने 'य्वोर्धातोः०' 'स्वरहीनं०' 'स्रोर्वि०' ॥ षष्ठीसप्तम्योर्द्विवचने । 'य्वोर्धातो०' इत्यनेन इय् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ षष्ठीबहुवचने श्र्यादीनां श्रीधीभीभूप्रभृतीनामामः षष्ठीबहुवचनस्य वा नुट् वक्तव्यः । अनेन न् । 'ष्रनोर्णो०' अन्यत्र इय् । 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ सप्तम्येकवचने रूपद्वयम् । एकत्र 'स्त्रियां य्वोः' इति ङेराम् । 'य्वोर्धातो०' इति इय् 'यदादेशस्तद्वद्भवतीति 'वेयुवः' इत्यडागमः 'स्वरहीनं०' 'सवर्णे०' । अन्यत्र 'य्वोर्धातो०' 'स्वरहीनं०' । ननु अडागमाभावेऽपि ङेराम् कथं न भवतीत्याह—अडागमाभावे आमोऽप्यभावः । यत्र प्रयोगे अडागमो न तत्र आमोऽप्यभावः । ङेराम् न भवतीत्यर्थः । शेषं कण्ठ्यम् ॥ धातुत्वाद्धेर्लोपो न किंतु 'स्रोर्वि०' हे श्रीः । द्वित्वे बहुत्वे 'य्वोर्धातो०' इति इय् । एवं धीह्रीभीप्रभृतयोऽपि स्त्रीलिङ्गा अनीबन्ताः ईप्प्रत्ययरहिताः शब्दाः साध्याः ॥ सुश्रीसुधीसेनानीग्रामण्यादयः पुंलिङ्गवत् । 'वेयुवः' इत्यत्र 'नित्यं स्त्रियाम्' इत्युक्तत्वात् स्त्रीवाचकत्वेऽपि सुश्रियै सुधियै इत्यादौ न विकल्पः ॥

**एवं भूशब्दो भ्रूशब्दश्च ॥ वधूजम्ब्वादीनां तु नदीवद्रूपं ज्ञेयम् । वधूः । वध्वौ । वध्वः । हेवधु । हेवध्वौ । हेवध्वः । शेषं नदीवत् ॥ एवं जम्बूः जम्ब्वौ जम्ब्वः । हेजम्बु इत्यादि ॥**

एवम् ऊकारान्तो भूशब्दः । भूः 'स्रोर्वि०' भुवौ भुवः । 'य्वोर्धातो०' ॥ भ्रूशब्दस्य तु 'भ्रमु चलने' । औणादिको डूप्रत्ययः । डकारष्टिलोपार्थः । भ्रमति चलतीति भ्रूः इति अकिबन्तत्वात् अधातुत्वाच्च 'य्वोर्धातो०' इति न भवति, किंतु 'स्त्रीभ्रुवोः' इति सूत्रेण उवादेशः । भ्रूः भ्रुवौ भ्रुवः भ्रुवं भ्रुवौ भ्रुवः । भ्रुवा भ्रूभ्यां भ्रूभिः । 'वेयुवः' 'स्त्रीभ्रुवोः' भ्रुवै भ्रुवे भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रुवोः भ्रुवां भ्रूणां । भ्रुवां भ्रुवि भ्रुवोः भ्रूषु । इयुवन्ताद्धौ न ह्रस्वता । हे भ्रूः । यद्वा धौ परे तु सुभ्रूशब्दः स्त्रीवदिति केचित् । तेन ह्रस्वः—हे सुभ्रु ॥ भ्रूशब्दस्य धौ वा ह्रस्वता । तेन सुभ्रूः ॥ वधूजम्बूश्वश्रूशब्दादीनां नदीशब्दवत्प्रक्रिया । परं सिविषये 'स्रोर्विसर्गः' वधूः । वध्वौ वध्वः 'उवम्' ॥ वधूं 'अमृशसोरस्य' 'मोऽनुस्वारः' ॥ वध्वौ वधूः । वध्वा वधूभ्यां वधूभिः । 'ङितामट्' वध्वै । वध्वाः । 'स्त्रियां य्वोः' 'ङितामट्' 'उवम्' वध्वाम् । हे वधु ॥ एवं चमू-तनू-जम्बू-

कण्डू–कच्छू–यवागू–दिधीषू–कद्रू–चञ्चू–कर्कन्धू–करभोरू–प्रभृतयः ॥ स्वयंभूप्रमुखाः पुंवत् ॥

ऋकारान्तो मातृशब्दस्तस्य पितृवत्प्रक्रिया । 'सेरा' । माता मातरौ मातरः । 'धेरर्' हेमातः हेमातरौ हेमातरः । मातरम् मातरौ । स्त्रीलिङ्गत्वाच्छसि नत्वाभावो विशेषः । शसीति दीर्घत्वम् । मातॄः । इत्यादि ॥ स्वसृशब्दस्य कर्तृशब्दवत्प्रक्रिया, स्त्रीलिङ्गत्वान्नत्वाभावो विशेषः । [ स्वसा स्वसारौ स्वसारः । स्वसारम् स्वसारौ । शसि स्वसॄः । हेस्वसः हेस्वसारौ हेस्वसारः ॥ ]

ऋकारान्तो मातृशब्दस्तस्य पितृशब्दवत्प्रक्रिया । 'अर् पञ्चसु' इत्यर् न वरम् । शसि दीर्घ एव भवति । परं स्त्रीलिङ्गत्वात् 'सो नः पुंसः' इति नत्वं नभवति । धौ 'धेरर्' ॥ एवं दुहितृयातृननान्दृशब्दाः । स्वसृशब्दस्तु कर्तृशब्दवत् । 'स्तुरार्' 'सेरा' । शसि स्त्रीलिङ्गत्वान्नत्वाभावः 'सो नः पुंसः' इति न भवति इति विशेषः । स्वसॄः । तृतीयादौ 'ऋरम्' 'स्वरहीनं०' ॥ एवं पितृष्वसृमातृष्वसृशब्दौ ॥

रैशब्दस्य सुरैशब्दवत्प्रक्रिया । राः रायौ रायः । हेराः ॥ गोशब्दस्तु पूर्ववत् ॥ नौशब्दस्य ग्लौशब्दवत्प्रक्रिया । नौः नावौ नावः । हेनौः हेनावौ हेनावः । इति स्वरान्तस्त्रीलिङ्गप्रक्रिया ॥ ७ ॥

रैशब्दः सुरैशब्दवत् । राः । 'रै स्भि' रायौ रायः इत्यादि । रैशब्दः पुंस्त्रीलिङ्गे[1] वर्तते । तथा अमरकोषे 'अर्थरैविभवा अपि' इति पुंलिङ्गे एव उक्तः । अत्र तु स्त्रीलिङ्गे एव उक्तस्तच्चिन्त्यम् ॥

गोशब्दः पुंवत् । 'ओरौ' गौः गावौ गावः । 'आमूशसि' गाम् गावौ गाः । गवा गोभ्यां गोभिः इत्यादि । अत्रापि गोशब्दो दशार्थवाची । एवं द्योशब्दोपि ॥ नौशब्दो ग्लौशब्दवत् । नौः नावौ नावः । इति स्वरान्तस्त्रीलिङ्गसाधनम् ॥

---

## स्वरान्ता नपुंसकलिङ्गाः ८

अथ स्वरान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते ॥ तत्राकारान्तः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ॥ अतोऽम् ॥ अतः अम् । अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवत्यधौ । अमो ग्रहणं लुग्व्यावृत्त्यर्थम् । 'अमूशसोरस्य' कुलम् ॥

अथ स्वरान्तनपुंसकलिङ्गसाधनम् ॥ तत्र अकारान्तः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने सूत्रम्—'अतोऽम्' ॥ अतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' । अम् प्रथमैकवचनान्तम् । 'हसेपः से०' मध्ये 'अतोऽत्युः' 'उ ओ' 'एदोतोतः' ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोः सि अम् इत्येतयोरम् भवति । अधौ धेरम् नभवतीत्यर्थः । ननु स्यमोर्म

---

[1] 'रा द्वयोर्विभवे स्वर्णे' इति रुद्रः ॥

क्रियतां, किम् अम् इत्यकारग्रहणेन । सत्यम् । अजरसमित्यादिसाधनार्थम् ॥ अमोऽम्करणे हेतुमाह—अमो ग्रहणं लुग्व्यावृत्त्यर्थं अम्स्थाने पुनर्यद् अम्करणं तत् 'नपुंसकात्स्यमोर्लुक्' इति सूत्रनिषेधार्थम् । अयमर्थः—अकारात्परयोः स्यमोर्लुग् न भवतीति भावः । अनेन स्यमोरम् 'अम्शसोरस्य' 'मोऽनुस्वारः' ॥

**ईमौ ॥ नपुंसकलिङ्गात्पर औ ईकारमापद्यते । अ इ ए । कुले ॥**

प्रथमाद्वितीययोर्द्विवचने सूत्रम्—'ईमौ' ई द्वितीयैकवचनान्तम् । 'अम्शसोरस्य' । औ प्रथमैकवचनान्तम् । सांकेतिकम् । 'स्वरहीनं०' । नपुंसकलिङ्गात्पर औ ईकारमापद्यते । दीर्घ ईकारस्तु वारिणी दधिनी इत्यादिरूपसिद्ध्यर्थम् । अनेन औस्थाने ईकारादेशः । 'अ इ ए' ॥

**जश्शसोः शिः ॥ नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ गुरुः शिच्च सर्वस्य वक्तव्यः ॥ षष्ठीनिर्दिष्टस्येत्यस्यापवादः ॥**

सूत्रम्—'जश्शसोः शिः' ॥ जस् च शस् च जश्शसौ तयोर्जश्शसोः षष्ठीद्विवचनम् । 'स्वरहीनं०' 'स्रोर्वि०' । शिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शिरिति शकारः सर्वादेशार्थः । तेन सर्वस्य जसः शसश्च इर्भवति न त्वन्तस्य । तमेवाह—गुरुः शिच्चेति शकार इद्यस्य स शिदादेशः । गुरुः शिच्च सर्वस्य वक्तव्यः । गुरुरनेकाक्षरः 'त्रेरयङ्' इत्यादिकः । तथा शकारेच्च य अदेशः स सर्वस्यादेशिनः स्थाने भवति न त्वन्तस्य । अनेन जश्शसोः शिः । इ० ॥

**नुमयमः ॥ नुम् अयमः । नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारान्तस्य न भवति ॥ मिदन्त्यात्स्वरात्परो वक्तव्यः ॥ उकार उच्चारणार्थः । मकारः स्थाननियमार्थः ॥ नोपधायाः ॥[1] नः उपधायाः । नान्तस्योपधाया दीर्घो भवति शौ परे, धिवर्जितेषु पञ्चसु परेषु, नामि च । कुलानि । पुनरपि । कुलम् । कुले । कुलानि । शेषं देववत् । कुलेन । कुलाभ्याम् । कुलैः । कुलाय । कुलाभ्याम् । कुलेभ्यः । कुलात् । कुलाभ्याम् । कुलेभ्यः । कुलस्य । कुलयोः । कुलानाम् । कुले । कुलयोः । कुलेषु । हेकुल । हेकुले । हेकुलानि ॥ एवं मूलफलपत्रपुष्पकुण्डकुटुम्बादयः ॥**

सूत्रम्—'नुमयमः' नुम् प्रथमैकवचनान्तम् । 'हसेपः०' न यम् अयम् तस्य अयमः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' ॥ नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारोऽन्ते यस्य शब्दस्य तस्य नुमागमो न भवति । यथा अहानि चत्वारि इत्यादौ ॥ मित् मकारेत् प्रत्ययः आगमश्च अन्त्यात्स्वरात्परो वक्तव्यः । उकार उच्चारणार्थः । अनेन नुमागमः । सूत्रम् । 'नोपधायाः' नस्योपधा नोपधा तस्या नोपधायाः षष्ठ्येकवचनान्तम् ।

---

[1] नोपधाया इत्यत्र 'छन्दसि तु भवती'ति नियमात्संधिः । 'छन्दोवत्सूत्राणि भवन्ती'ति वचनात् । क्वचित्तुपलभ्यमानोऽपपाठः टीकाविरुद्धत्वात् ॥

'ङित्तां यट्' 'सवर्णे दी०' 'स्रोर्वि०' । नान्तस्य शब्दस्य उपधाया 'अन्त्यात्पूर्व उपधा' इति संज्ञासंधिकथितलक्षणया दीर्घो भवति नपुंसके शौ परे, पुंलिङ्गे धिवर्जितेषु पञ्चसु वचनेषु, नामि च नुट्सहिते आमि परे च । यथा पञ्चानाम् । अनेन उपधाया दीर्घः ॥ धौ 'समानाद्धेर्लोपः०' । हे कुल । द्विवचने 'ईमौ' 'अ इ ए' हे कुले । बहुवचने । 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' हे कुलानि । शेषं देवशब्दवत् । एवं मूलफलपत्रपुष्पकुण्डकुटुम्बज्ञानधनवनरत्नादयः शब्दाः साध्याः ॥

**श्त्वन्यादेः ॥ श्तु अन्यादेः । अन्यादेर्गणात्परयोः स्यमोः श्तुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । वावसाने इति पक्षे दत्वमपि भवति । अन्यत् अन्यद् । अन्ये । अन्यानि । पुनरप्येवम् । शेषं सर्ववत् ॥ अन्यतरत्-अन्यतरद् । अन्यतरे । अन्यतराणि । इतरत्-इतरद् । इतरे । इतराणि ॥ कतरत्-कतरद् । कतरे । कतराणि ॥ कतमत्-कतमद् । कतमे । कतमानि । शेषं सर्ववद्रूपम् ॥ [ प्रथमादयः कुलवत् ॥ प्रथमं प्रथमे प्रथमानि ]**

सर्वादयोऽपि नपुंसकलिङ्गे प्रथमायां द्वितीयायां च कुलशब्दवत् । सर्वं सर्वे सर्वाणि । तृतीयादौ पुंलिङ्गवत् ॥ परमन्यादीनां प्रथमाद्वितीयैकत्वे विशेषः ॥ सूत्रम्—'श्त्वन्यादेः'॥ श्तु प्रथमैकवचनान्तम् । साङ्केतिकम् । अन्य आदिर्यस्यासौ अन्यादिस्तस्मात् पञ्चम्येकवचनम् । 'ङिति' 'ङस्य' इत्यकारलोपः । 'स्रोर्वि०' 'उ वम्' 'स्वरहीनं०' ॥ अन्यादेः—अन्य अन्यतर इतर कतर कतम इत्याद्यन्यादेर्गणान्नपुंसकलिङ्गे वर्तमानात्परयोः स्यमोः श्तु इत्यादेशः भवति । शकारः सर्वादेशार्थः । 'गुरुः शिच्च सर्वस्य वक्तव्यः' इति न्यायात् । उकार उच्चारणार्थः । अनेन सेः स्थाने अम्स्थाने च त् इत्यादेशः । द्वित्वबहुत्वयोः कुलशब्दवत् । तृतीयादौ सर्वादिवत् । एवमन्यतरत् इतरत् कतरत् कतमत् एतेऽपि शब्दाः साध्याः ॥ 'जराया जरस् वा' इति वा जरस् । नास्ति जरा यस्य तत् अजरम् अजरसम् अजरे अजरसी अजराणि अजरांसि । शेषं पुंवत् ॥ अत्र यद्यपि क्रमेण पूर्वमाकारान्तः सोमपाशब्दस्तदग्रे इकारान्ता अस्थिदधिसक्थिवारिशब्दाः, तद्वदेव उकारान्ता मध्वादयः, तदग्रे ईकारान्ता ग्रामण्यादयः तद्वदेव ऊकारान्ता यवल्वादयः, तदग्रे ऋकारान्ताः कर्तृप्रमुखाः तदग्रे ऐकारान्तो रैशब्दः इति क्रमो युज्यते, परमत्र केषुचित्पुस्तकेषु क्रमवैपरीत्येन लिखितानि सन्ति ॥

**इकारान्तोऽस्थिशब्दः ॥ नपुंसकात्स्यमोर्लुक् ॥ नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ॥**

इकारान्तो नपुंसकलिङ्गोऽस्थिशब्दः । स्यमोर्विषये सूत्रम्—'नपुंसकात्स्यमोर्लुक्'॥ नपुंसकात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दी०' । सिश्च अम् च स्यमौ तयोः स्यमोः षष्ठीद्विवच-

१ सर्वादीनामकारान्तानामन्यादिपञ्चशब्दव्यतिरिक्तानां प्रथमाद्वितीययोः कुलशब्दवत्प्रक्रिया । सर्वं सर्वे सर्वाणि । पुनरप्येवम् । शेषं पूर्ववत् । सर्वेण सर्वाभ्याम् सर्वैः । सर्वस्मै सर्वाभ्याम् सर्वेभ्यः । सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः । सर्वस्य सर्वयोः सर्वेषाम् । सर्वस्मिन् सर्वयोः सर्वेषु । हेसर्व हेसर्वे हेसर्वाणि ॥ अन्यादीनां पञ्चानां विशेषोऽस्ति अन्य सि इति स्थिते इति पुस्तकान्तरे पाठः ॥

नान्तम्। 'स्वरहीनं०'। लुक् प्रथमैकवचनान्तम्। 'हसेपः से०' 'नामिनो रः' अवर्णान्त-वर्जान्नपुंसकलिङ्गात्परयोः स्यमोर्लुग् भवति। अनेन स्यमोर्लुक्॥

**नामिनः स्वरे॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति विभक्तिस्वरे परे। ईमौ। अस्थिनी। अस्थीनि। पुनरप्येवम्॥ य्वॄणां नपुंसके धौ वा गुणो वक्तव्यः॥ इश्च उश्च ऋश्च तेषां य्वॄणाम्। उक्तं हि।**

**संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।**
**माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥१॥**

**हे अस्थे-हेअस्थि॥**

धौ विशेषमाह—'य्वॄणां धौ गुणो वा' इश्च उश्च ऋश्च य्वरः तेषां य्वॄणाम्। इकारउकारऋकाराणां स्थाने नपुंसकलिङ्गविषये धौ वा गुणो वक्तव्यः। 'नपुंसकात्स्यमोर्लुक्' इति धिलोपे विहिते इकारस्य एकारो गुणः। हेशब्दस्य प्राक्प्रयोगः। अत्र शिष्टसंमतिमाह—उक्तं च वृद्धैः। संबोधने० इति। तु इत्यवधारणे। माध्यंदिनिराचार्यः उशनसः उशनस्शब्दस्य संबोधने आमन्त्रणे त्रिरूपं रूपत्रयं वष्टि अभिलषति वाञ्छति वा कथयति। किं तत् त्रिरूपं सान्तं सकारान्तं यथा उशनस्। 'हसेपः०' 'स्रोर्विसर्गः' हे उशनः। तथा नान्तं नकारान्तम् हे उशनन्। तथा अदन्तमकारान्तं हे उशन इति। तु पुनः इगन्ते इकारोकारऋकारान्ते नपुंसके धिविषये विकल्पेन गुणं कथयति। यतः प्रक्रियाकौमुद्याम्—इ उण् ऋलक् एते इक्संज्ञकाः। यथा हे अस्थि हे अस्थे। हे वारि हे वारे। हे मधो हे मधु। हे कर्तृ हे कर्तः। कथंभूतो माध्यन्दिनिः। व्याघ्रपदां व्याघ्रपदगोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः श्रेष्ठः॥ प्रथमाद्वितीययोर्द्विवचने। 'ईमौ' इति औस्थाने ई॥ सूत्रम्—'नामिनः स्वरे'॥ नामिनः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विसर्गः'। स्वरे सप्तम्येकवचनान्तम्। 'अ इ ए'॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्वरे परे। अत्र विभक्तिसंबन्ध्येव स्वरो ग्राह्यः। तेन दधि आनयेत्यत्र न नुम्। अनेन नुमागमः। 'स्वरहीनं०'॥ बहुत्वे कुलवत्। दीर्घत्वे इकारस्य ईकारः॥ तृतीयादौ हसादावविशेषः॥

**अच्चास्थ्यां शसादौ॥ अत् चेत्यव्ययम्। अस्थ्यां अस्थ्यादीनां टादौ नुमागमो भवति, पूर्वस्य इकारस्य चाकारादेशो भवति शसादौ स्वरे परे॥ शस् आदिर्यस्य सः शसादिः टादिः। शसादावित्यतद्गुणसंविज्ञानो बहुव्रीहिः। यथा चित्रगुर्बहुधनः॥**

स्वरादौ सूत्रम्—'अच्चास्थ्यां टादौ'॥अत् प्रथमैकवचनान्तम्। 'हसेपः०'। च प्रथमैकवचनान्तम्। 'अव्यया०' 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं०'। अस्थ्यां षष्ठीबहुवचनान्तम्। 'अच्चास्थ्यां०' इति नुमागमः। इकारस्य अकारः। 'अल्लोपः स्वरे' 'स्वरहीनं०' मध्ये 'सवर्णे दी०'॥ टा आदिर्यस्यासौ टादिस्तस्मिन् सप्तम्येकवचनान्तम्। 'ङेरौ डित्' टिलोपः। 'स्वरहीनं०'॥ कचित्तु शसादाविति पाठः। तत्र शस् आदिर्यस्य स शसादिः अर्थात् टादिः। यद्वा गौणत्वेऽपि प्रियास्थ्नः शुनकान् प्रियदध्नश्च पुरुषान् इत्यादिप्रयोगसिद्ध्यर्थं शसोऽपि ग्रहणं युक्तम्। अस्थ्यादीनाम् अस्थिदधिसक्थिअक्षिशब्दादीनां टादौ स्वरे परे नुमागमो भवति।

इकारस्य च अकारः । अनेन स्वरादौ सर्वत्र नुम् इकारस्य च अकारः । 'नामिनः स्वरे' इत्यनेनैव चेन्नुम् क्रियते तदा इकाराभावे जाते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति नुम्लोपः स्यात् । अतः 'अच्चास्थ्नाम्' इति नुम्करणं पुनरुक्तये न ॥

**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ** ॥ नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । मकारवकारान्तसंयोगादुत्तरस्य न भवति । अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ॥

सूत्रम्—'अल्लोपः स्वरे' ॥ अतः अकारस्य लोपः अल्लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । स्वरे सप्तम्येकवचनम् । 'अ इ ए' । अम्वयुक्तात् । मृच वश्च म्वौ ताभ्यां युक्तः संयोगः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् । 'ङसिरत्' पश्चात् 'एदोऽतोऽतः' शस् आदिर्यस्य स शसादिस्तस्मिन् शसादौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' 'चपाच्छसः' सूत्रं सिद्धम् ॥ अत्र तु टादौ स्वरे परे एव अकारस्य लोपो भवति । शस्ग्रहणं तु प्रियास्थ्नः शुनकान् पश्य तथा राज्ञः इत्यादिप्रयोगसिद्ध्यर्थम् । नान्तस्य नकारान्तस्योपधाया उपधाभूतस्य अकारस्य लोपो भवति शसादौ स्वरे परे मकारस्य वकारस्य संयोगादुत्तरस्य लोपो न भवति । यथा आत्मनः आत्मना । यज्वनः यज्वना । अनेन स्वरादौ अकारलोपः । 'स्वरहीनं०' । तथा अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने ॥

**वेङ्योः** ॥ वेत्यव्ययम् । नान्तस्योपधाया ईङ्योः परयोर्वा अकारस्य लोपो भवति ॥ अस्थ्नि अस्थनि अस्थ्नोः अस्थिषु ॥ एवं दधिसक्थ्यक्षिप्रभृतयः शब्दाः॥

ङौ अल्लोपे विशेषमाह—'वेङ्योः' वा प्रथमैकवचनान्तम् । 'अव्यया०' । ईच ङिश्च ईङी तयोः सप्तमीद्विवचनान्तम् । 'इ यं स्वरे' 'स्वरहीनं०' पश्चात् । 'अ इ ए' ॥ नान्तस्य नकारान्तशब्दस्य ई इति औस्थाने जाते ईकारे परे ङौ च सप्तम्येकवचने परे वा अकारस्य लोपो भवति । ईकारे परे तु अह्नि अहनि इत्यादौ ज्ञेयम् । ङौ परे अनेन वा अल्लोपः । अस्थि अस्थनि एवं दधिसक्थिअक्षिशब्दाः । दधि दधीनी दधीनि । दध्ना दधिभ्यां दधिभिः । दध्नि दधनि ॥ एवं सक्थिशब्दः ऊरुवाची । सक्थि सक्थिनी सक्थीनि ॥ अक्षिशब्दो नेत्रवाची । अक्षि अक्षिणी अक्षीणि । अक्ष्णा अक्षिभ्याम् इत्यादि ।

**नपुंसकस्य** ॥ नपुंसकस्य ह्रस्वो भवति स्वरादौ ॥ 'नामिनः स्वरे' इति नुमागमः । ग्रामणि ग्रामणिनी ग्रामणीनि । पुनरप्येवम् ॥

**एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते ।**
**एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥ १ ॥**

---

१ अम्वयुक्ताच्छसादावित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः । लम्बकर्ण इतिवत् । अतः शसोऽपि ग्रहणम् ॥

२ यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । नपुंसके तदेव स्यादुक्तपुंस्कं तदुच्यते । पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ॥ वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥

**टादावुक्तपुंस्कं पुंवद्वा ॥ उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति ॥ ग्रामण्या-ग्रामणिना ग्रामणिभ्याम् ग्रामणिभिः । ग्रामण्ये-ग्रामणिने ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्याम् । नुमन्तस्यामि दीर्घः । ग्रामणीनाम् । ग्रामण्याम् ग्रामणिनि ग्रामण्योः-ग्रामणिनोः ग्रामणिषु । हेग्रामणे हेग्रामणि हेग्रामणिनी हेग्रामणीनि ॥**

ईकारान्तो ग्रामणीशब्दः । सूत्रम्—'नपुंसकस्य' ॥ नपुंसकशब्दस्य षष्ठ्येकवचनान्तम् । 'ह्रस्व' ॥ नपुंसकलिङ्गे वर्तमानस्य दीर्घस्वरान्तस्य शब्दस्य सर्वविभक्तिषु ह्रस्वो भवति । प्रथमाद्वितीयैकवचने अनेन सर्वत्र ह्रस्वः । ई इत्यस्य इ । 'नपुंसकात् स्यमोर्लुक्' ॥ प्रथमाद्वितीयाद्विवचने ह्रस्वः । 'ईमौ' 'नामिनः स्वरे' 'स्वरहीनं०' ॥ प्रथमाद्वितीयाबहुवचने ह्रस्वः । 'नुमयमः' 'नोपधायाः' ॥ तृतीयादौ ह्रस्वत्वे कृते हसादावविशेषः । स्वरादौ तु विशेषः ॥ श्लोकः—एक० । यः कश्चित् एक एव शब्दः आप् प्रत्ययादिरहितः सन् त्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु वर्तते एकमेव अर्थमाख्याति वक्ति तद्भाषितपुंस्कमुच्यते । ततः किं कर्तव्यमित्याह—'टादावुक्तपुंस्कं पुंवद्वा' उक्तः पुमान् पुंलिङ्गो येन तदुक्तपुंस्कम् । अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके वर्तमानः उक्तपुंस्कः तथावस्थितमपि निर्दिष्टपुंलिङ्गमेवंभूतं नाम्यन्तं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति नपुंसकलिङ्गे वा पुंलिङ्गवत्स्यात् । अनेन तृतीयादौ वा ह्रस्वः । ह्रस्वाभावे सेनानीशब्दवत्—'य्वौ वा' इति यकारः । ह्रस्वत्वे—'नामिनः स्वरे' इति नुमागमः । ग्रामण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने ग्रामण्याम् । आमि पुंवद्भावे नुडागमस्य नित्यत्वान्नुटि कृते 'नामि' इति दीर्घः । नपुंसकपक्षे 'नामिनः स्वरे' इति नुमि कृते 'नुडामः' इति सूत्रेण नुटोऽभावे 'नामि०' इति दीर्घत्वं न । तेन नुमन्तस्यापि दीर्घः । पक्षद्वयेऽपि ग्रामणीनामित्येव रूपसिद्धिः । परं 'नुडामः' इति नुटो नित्यत्वात् 'नामिनः स्वरे' इति न भवति । ततो 'नुमन्तस्यामि दीर्घः' इति व्यर्थमेव पुनश्चिन्त्यम् । उक्तं च हैमव्याकरणे—'अनाम् स्वरे नोऽन्तः' । ग्रामण्यां ग्रामणिनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु । एवं सुश्रि कुलम् । तेन सुश्रिणा सुश्रिया सुश्रिणे सुश्रिये । एवं पटुने पटवे इत्यादि । सेनानिसुश्रियवलुप्रमुखाः ॥

**सोमपं कुलं । सोमपे सोमपानि । पुनरप्येवम् । सोमपेन सोमपाभ्याम् सोमपैः इत्यादि । हे सोमप ॥**

आकारान्तः सोमपाशब्दस्तस्य 'नपुंसकस्य' इति सूत्रेण ह्रस्वे कृते 'टेन' 'अ इ ए' सोमपेन सोमपाभ्यां सोमपैः । 'अद्भि' 'स्भ्यः' सोमपाय सोमपाभ्यां सोमपेभ्यः । सोमपस्य सोमपयोः सोमपानाम् । सोमपे सोमपयोः सोमपेषु । 'संबोधने नपुंसकस्य' इति ह्रस्वे कृते कुलशब्दवत् । 'समानाद्धेर्लोपो०' सोमपाशब्दस्य उक्तपुंस्कत्वेऽपि नाम्यन्तत्वाभावात् तृतीयादौ स्वरादौ वा पुंवद्रूपाणि न भवन्ति ॥

**इकारान्तो नपुंसकलिङ्गो वारिशब्दः । वारि वारिणी वारीणि । पुनरप्येवम् । वारिणा वारिभ्याम् वारिभिः । वारिणे वारिभ्याम् वारिभ्यः । वारिणः वारिभ्यां वारिभ्यः । वारिणः वारिणोः वारीणाम् । वारिणि वारिणोः वारिषु । हेवारे-हेवारि हेवारिणी हेवारीणि ॥**

इकारान्तो वारिशब्दः । प्रथमाद्वितीययोः अस्थिशब्दवत् । वारि वारिणी वारीणि । तृतीयादौ 'नामिनः स्वरे' इति नुमागमः । 'ष्रृवर्णो णो०' 'स्वरहीनं०' वारिणा वारिभ्यां वारिभिः । वारिणे वारिभ्यां वारिभ्यः । वारिणः वारिभ्यां वारिभ्यः । वारिणः वारिणोः । आमि नुडागमः 'नामि' इति दीर्घः । वारीणां । वारिणि वारिणोः वारिषु । संबोधने । 'ध्वृणां नपुंसके धौ०' हे वारि हे वारे इत्यादि शेषं सुगमम् ॥

**उकारान्तो मधुशब्दः । तस्यापि स्वरादौ 'नामिनः स्वरे' इत्यादि नुमागमः ॥ मधु मधुनी मधूनि । पुनरप्येवम् । हेमधो हेमधु इत्यादि ॥**

उकारान्तो मधुशब्दः । स च चैत्रमासवाची वसन्तवाची मधुदैत्यवाची च पुंलिङ्गे भवति । क्षौद्रमद्यमकरन्दवाची तु नपुंसकलिङ्गे भवति । अत एवार्थभेदादुक्तपुंस्कत्वं न, किंतु तस्य वारिशब्दवत्साधना ॥ एवम् उकारान्तो वस्तुशब्दः । वस्तु वस्तुनी वस्तूनि । एवं वास्तु वास्तुनी वास्तूनि । अम्बु अम्बुनी अम्बूनि । सानु सानुनी सानूनि । इत्यादि ॥

**ऋकारान्तः कर्तृशब्दः । कर्तृ कर्तृणी कर्तॄणि । पुनरप्येवम् । हेकर्तः-हेकर्तृ-हेकर्तृणी हेकर्तॄणि । कर्त्रा-कर्तृणा इत्यादि ॥**

कर्तृशब्दस्य प्रथमाद्वितीययोः अस्थिशब्दवत् । कर्तृ कर्तृणी कर्तॄणि । तृतीयादौ स्वरादौ उक्तपुंस्कत्वात् रूपद्वयम् तत्रैकत्र पुंवत् । तत्र 'ऋ रम्' अन्यत्र 'नामिनः स्वरे' इति नुमागमः । कर्तृणा कर्त्रा । कर्तृणे कर्त्रे । कर्तृणः कर्तुः । कर्तृणि कर्तरि । धौ वा गुणः अर् । हेकर्तः हेकर्तृ । शेषं कण्ठ्यम् ॥

**ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥ सुष्ठु रायो यस्य तत् । सुरि सुरिणी सुरीणि । पुनरप्येवम् । सुरिणा-सुराया । हेसुरे-हेसुरि हेसुरिणी हेसुरीणि ॥ ऐकारान्तो नपुंसकलिङ्गः अतिरैशब्दः । रायमतिक्रान्तमतिरि कुलम् इति विग्रहे । ह्रस्वादेशे संध्यक्षराणामिदुतौ इति ह्रस्वत्वम् । वारिवत्प्रक्रिया । अतिरि अतिरिणी अतिरीणि । पुनरप्येवम् । अतिराया–अतिरिणा अतिराभ्याम् अतिराभिः इत्यादि ॥ उकारान्तो नपुंसकलिङ्ग उपगुशब्दः । उपगता गावो यस्येति उपगु उपगुनी उपगूनि । पुनस्तद्वत् । तृतीयादौ स्वरे विकल्पः । उपगवा-उपगुना इत्यादि अतिरिवत् ॥ औकारान्तो अतिनौशब्दः । अतिनु अतिनुनी अतिनूनि इत्यादि ॥**

ऐकारान्तः सुरैशब्दः । 'नपुंसकस्य' इति ह्रस्वे कृते वारिशब्दवत् । ह्रस्वादेशे संध्यक्षराणामिकारोकारौ वक्तव्यौ । सुष्ठु राः धनं यस्य तत् सुरि सुरिणी सुरीणि । सुरिणा

सुराया सुराभ्यां सुराभिः इत्यादि । एवं सुष्ठु नौर्यस्य तत् सुनु सुनुनी सुनूनि । सुनुना-सुनावा सुनुने सुनावे इत्यादि ॥

शोभना द्यौर्यस्य तत् सुद्यु सुद्युनी सुद्यूनि । हेसुद्यो-हेसुद्यु हेसुद्युनी हेसुद्यूनि । सुद्युना-सुद्यवा । इत्यादि सर्वमुन्नेयम् ॥ इति स्वरान्तनपुंसकलिङ्गप्रक्रिया ॥

ओकारान्त उपगोशब्दः । औकारान्त उपनौशब्दः । इति स्वरान्तनपुंसकलिङ्गसाधनम् ॥

---

## हसान्ताः पुंलिङ्गाः ९

अथ हसान्ताः पुंलिङ्गाः प्रदर्श्यन्ते । तत्र हकारान्तः अनडुह्शब्दः । अनडुह् सि इति स्थिते ॥ पञ्चस्वनडुह आमागमो वक्तव्यः शौ च ॥ सावनडुहः ॥ अनडुह्शब्दस्य सौ परे नुमागमो भवति ॥ संयोगान्तस्य लोपः ॥ संयोगान्तस्य लोपो भवति रसे पदान्ते च । हसेपः सेर्लोपः । नुम्विधिसामर्थ्याद्दत्वाभावः । अनड्वान् अनड्वाहौ अनड्वाहः ॥ धावम् ॥ अनडुह्शब्दस्य धौ परे अमागमो भवति । हेअनड्वन् हेअनड्वाहौ हेअनड्वाहः ॥ अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा ॥ वसां रसे ॥ वस् स्रंस् ध्वंस् भ्रंस् अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति । अनडुद्भ्याम् । अनडुद्भिः । अनडुहे । अनडुद्भ्याम् । अनडुद्भ्यः । अनडुहः । अनडुद्भ्याम् । अनडुद्भ्यः । अनडुहः । अनडुहोः । अनडुहाम् । अनडुहि । अनडुहोः । खसे चपा झसानाम् । अनडुत्सु ॥

अथ हसान्तपुंलिङ्गसाधनं किंचिदुच्यते । तत्र प्रथमं हान्तान् दर्शयति—हकारान्तोऽनडुह्शब्दः । तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो दीयन्ते । ततः । पञ्चस्वनडुह आमागमो वक्तव्यः शौ च ॥ अनडुह्शब्दस्य स्यादिषु पञ्चसु वचनेषु आमागमो भवति ॥ केचित्तु 'अनडुहश्च' इति सूत्रेण 'चतुरनडुहोराम् शौ च' इति सूत्रेण वा आमागममिच्छन्ति । स्त्रीलिङ्गे च विकल्पेनामागममिच्छन्ति—अनड्वाही अनडुही इति ॥ अनेन पञ्चसु आम् । 'मिदन्त्यात्स्वरात्परो वक्तव्यः' इति डु अग्रे आ । 'उ वम्' 'स्वरहीनं' ॥ सूत्रम् । 'सावनडुहः' सौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः 'स्वरहीनं०' । अनडुहः षष्ठ्येकवचनान्तम् । 'स्रोर्विः०' 'औ आव्' सिद्धम् । वृत्तिः कण्ठ्या । अनेन सौ परे नुमागमः । हस्य पूर्वं न् । 'हसेपः सेर्लोपः' ॥ सूत्रम्—'संयोगान्तस्य लोपः' ॥ संयोगस्य अन्तः संयोगान्तस्तस्य षष्ठ्येकवचनम् 'ङस्य' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्विः०' ॥ संयोगाक्षरस्य योऽन्तः संयुक्तानामक्षराणां योऽन्त्यो वर्णस्तस्य लोपो भवति रसे पदान्ते च । चकारात् रकारादग्रे संयोगान्तस्य लोपो न भवति 'रात्सस्य लोपः' इति सलोपस्यैव नियमात् कटचिकीर्ष् इत्यादौ 'अतः' इति अलोपे रेफादग्रे सकारस्य लोपो भवति परम् ऊर्ज् इत्यत्र जकारलोपो न सस्यैव नियमात् । यथा ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः । अनेन सौ परे हकारस्य लोपः । अनड्वान् इति सिद्धम् । अत्र नुम्विधानसाम्र्थ्यादेव 'वसां रसे' इति

दत्वं न भवति । यद्वा कृतेऽपि दकारे संयोगान्तस्य लोपान्न रूपभेदः । अनः शकटं वहतीति अनडान् वृषभः । 'अनसि वहेः क्विबनसो डश्च' इति क्विप् 'यजाम्' इति संप्रसारणम् वस्य उः ॥ स्वरादौ 'स्वरहीनं०' ॥ धौ तु । सूत्रम्—'धावम्' ॥ धौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' । अम् प्रथमैकवचनम् 'हसेपः सेः' पश्चात् 'औ आव्' 'स्वरहीनम्' ॥ अनडुह्शब्दस्य धौ परे अमागमो भवति । आमोपवादः ॥ अनेन अम् 'सिदन्त्या०' 'सावनडुहः' इति नुम् । 'हसेपः' 'संयोगान्तस्य लोपः' ॥ द्वित्वबहुत्वयोः—आमागमः । 'उ वम्' 'स्वरहीनं' ॥ द्वितीयादौ 'स्वरहीनं०' ॥ हसादौ सूत्रम्—'वसां रसे' वसां षष्ठीबहुवचनान्तम् । 'स्वरहीनं' 'मोऽनुस्वारः' । रसे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् ॥ वसामिति बहुवचननिर्देशात् वसादयः । वस् इति क्वस्प्रत्ययस्य वस् 'विदेर्वा वस्' इत्यपि वस् । स्रंस् ध्वंस् अधःपतने । अनडुह्शब्दो वृषभवाची । एतेषां रसे परे पदान्ते वा दत्वं भवति । 'षष्ठीनिर्दिष्टस्यादेशोन्त्यस्य भवति' अनेन हस्य दः । भकारादौ 'स्वरहीनं' ॥ सुपि—'खसे चपा झसानाम्' दस्य तः 'स्वरहीनं०' ॥ सिद्धोऽनडुह्शब्दः ॥ स्रंस्ध्वंसोस्तु सकारान्तावसरे । उखास्रत् उखास्रसौ उखास्रद्भ्याम् । एवं पर्णध्वत् ॥

**गोदुहशब्दस्य भेदः ॥ दादेर्घः ॥ दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ गोदुघ् स् इति स्थिते ॥**

हकारान्तत्वेऽपि अनडुह्शब्दापेक्षया गोदुह्शब्दस्य भेदः कश्चिद्विशेषोऽस्ति । गां दोग्धीति गोधुक् । 'दुह प्रपूरणे' गोपूर्वः क्विप्प्रत्ययान्तः । सूत्रम्—'दादेर्घः' ॥ दः दकार आदिर्यस्य स दादिस्तस्य दादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्नोर्वि०' 'नामिनो रः' जलतुम्बिका० । घः प्रथमैकवचनान्तम् । 'स्नोर्वि०' सिद्धम् । दादेरिति । दकारादेर्धातोर्हकारस्य घत्वं भवति झसे परे नाम्नस्तद्विकारस्य रसे परे अथवा पदान्तविषये । अनेन भकारादौ सुपि च हस्य घः ॥

**आदिजबानां झभान्तस्य झभाः स्ध्वोः ॥ धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥**

सूत्रम्—'आदिजबानां झबान्तस्य झभाः स्ध्वोः' ॥ आदिजबानामादौ वर्तमाना जबा आदिजबास्तेषाम् । षष्ठीबहुवचनान्तम् । 'नुडामः' 'नामि' 'स्वरहीनं०' 'मोऽनुस्वारः' । झभा अन्ते यस्य स झभान्तस्तस्य षष्ठ्येकवचनान्तम् । 'ङस्य' झभा प्रथमाबहुवचनान्तम् । 'सवर्णे दीर्घः' 'स्नोर्वि०' । स् च ध्व् च स्ध्वौ तयोः स्ध्वोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' ॥ सिद्धं चतुःपदमिदम् झभान्तस्य धातोरादौ वर्तमानानां जबानां झभा भवन्ति । जडदगबानां क्रमेण झढधघभा भवन्ति सकारे ध्वे च परे आख्याते आत्मनेपदे से ध्वे ध्वं संबन्धिनि परे, नाम्नश्च रसे पदान्ते च ॥ केचित्तु जभतीति जप् जभौ जभः इत्यादौ प्रयोगे जकारस्य झकारासंभवात् । 'आदिडबानां ढभान्तस्य ढभाः-स्ध्वोः' इत्येवं सूत्रं पठन्ति ॥ अनेन यत्र रसप्रत्याहारस्तत्र दस्य धः ॥

वावसाने ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ॥ गोधुक् गोधुग्। गोदुहौ। गोदुहः। हेगोधुक्-हेगोधुग्। हेगोदुहौ। हेगोदुहः। गोदुहम्। गोदुहौ। गोदुहः ॥ गोदुहा। भकारादौ-'दादेर्घः' इति घत्वे कृते-'आदिजबानाम्' इत्यनेन दकारस्य धकारे कृते-'झबे जबाः' गोधुग्भ्याम्। गोधुग्भिः। गोदुहे। गोधुग्भ्याम्। गोधुग्भ्यः। गोदुहः। गोधुग्भ्याम्। गोधुग्भ्यः। गोदुहः। गोदुहोः। गोदुहाम्। गोदुहि। गोदुहोः। गोधुक् सु इति स्थिते। 'खसे चपाझसानाम्' इति ककारः। पश्चात्-'किलात्षः सः कृतस्य' इति षत्वम् ॥ कषसंयोगे क्षः ॥ ककारषकारसंयोगे क्ष इत्यक्षरं भवति। गोधुक्षु ॥

सूत्रम्—'वावसाने' ॥ वा प्रथमैकवचनान्तम्। 'अव्यया०'। अवसाने सप्तम्येकवचनान्तम्। 'अ इ ए' 'सवर्णे दी०' सिद्धं द्विपदम्। अग्रे वर्णानामभावोऽवसानं तस्मिन् अवसाने अन्ते वर्तमानानां झसानां जबा भवन्ति पक्षे विकल्पेन चपा भवन्ति। अनेन सौ धौ च रूपद्वयं विधाय 'वसेपः से०' इति सिलोपे कृते एकत्र घस्य कः अन्यत्र गः। स्वरादौ 'स्वरहीनं०' ॥ भकारादौ विभक्तौ तु—'दादेर्घः' इति घत्वे कृते 'आदिजबानां' इति हस्य घः। 'झबे जबाः' घस्य गः। 'स्वरहीनं०' ॥ सुपि—'दादेर्घः' 'आदिजबानां०' 'खसे चपा झसानाम्' 'किलात्षः' इति षत्वम्। 'कषसंयोगे क्षः' ककारषकारसंयोगे क्षो भवति। गोधुक्षु इति सिद्धम् ॥

मधुलिह्शब्दस्य भेदः ॥ हो ढः ॥ हकारस्य ढत्वं भवति धातोर्झसे परे, नाम्नश्च रसे पदान्ते च। वावसाने मधुलिट् मधुलिड् मधुलिहौ मधुलिहः। हेमधुलिट् हेमधुलिड् हेमधुलिहौ हेमधुलिहः। मधुलिहम् मधुलिहौ मधुलिहः। मधुलिहा मधुलिड्भ्याम् मधुलिड्भिः होढः। खसे चपा झसानाम्। मधुलिट्सु ॥ इत्यादि ॥

मधु मकरन्दं पुष्परसं लेढीति मधुलिट् भ्रमरः। मधुलिह्शब्दस्य रसे पदान्ते च विशेषः। सूत्रम्—'हो ढः' ॥ हः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०'। ढः प्रथमैकवचनम्। 'हबे' 'उ ओ' सिद्धम् ॥ धातुसंबन्धिनो हकारस्य झसे परे ढत्वं भवति नाम्नश्च नामत्वं प्राप्तस्य रसे परे पदान्ते च। [उभयोः] प्रथमैकवचने रूपद्वयम्। उभयत्रापि हस्य ढः। 'हसेपः०' 'वावसाने०' एकत्र टः। अन्यत्र डः। स्वरादौ 'स्वरहीनं०' भकारादौ 'हो ढः' इति ढत्वे 'झबे जबाः' ढस्य डः। 'स्वरहीनं०'। सुपि 'हो ढः' 'खसे चपा०' ढस्य टः 'स्वरहीनं०' मधुलिट्सु। इत्यत्र 'क्वचिदपदान्तेऽपि पदान्तता आश्रयणीया' इति न्यायात् 'ढोरन्त्यात्' इति सूत्रेण सस्य षत्वाभावः ॥

---

१ विरामोऽवसानम् ॥ वर्णानामभावोऽवसानसंज्ञः स्यात्। इति पाणिनीयं सूत्रं न योग्यम् टीकाविरोधात् ॥

**मित्रद्रुह्शब्दस्य भेदः ॥ द्रुहादीनां घत्वढत्वे वा ॥ द्रुह् मुह् स्नुह् स्निह् इत्येतेषां हकारस्य घत्वढत्वे वा भवतः धातोर्झसे नाम्नश्च परे रसे पदान्ते च । वावसाने । मित्रध्रुग्–मित्रध्रुक्–मित्रध्रुड्–मित्रध्रुट् मित्रद्रुहौ मित्रद्रुहः । हेमित्रध्रुग्–हेमित्रध्रुक्–हेमित्रध्रुड्–हेमित्रध्रुट् । मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुहः । मित्रद्रुहा मित्रध्रुग्भ्याम्–मित्रध्रुड्भ्याम् मित्रध्रुग्भिः–मित्रध्रुड्भिः । मित्रध्रुट्सु-मित्रध्रुक्षु इत्यादि ॥ एवं तत्त्वमुह्शब्दः । तत्त्वे मुह्यतीति तत्त्वमुक्–तत्त्वमुग्-तत्त्वमुट्–तत्त्वमुड् तत्त्वमुहौ तत्त्वमुहः । हेतत्त्वमुक्–हेतत्त्वमुग्–हेतत्त्वमुड्-हेतत्त्वमुट् । तत्त्वमुहम् तत्त्वमुहौ तत्त्वमुहः । इत्यादि ॥**

हकारान्तानामपि द्रुहादीनां वाक्यान्तरेण विशेषमाह—द्रुहादीनां घत्वढत्वे वा । द्रुहादीनामिति द्रुह्मुह्स्निह्स्नुहां रसे पदान्ते च घत्वं वा भवति विकल्पेन । घत्वे कृते द्वितीयपक्षे ढत्वं भवति । द्रुह् जिघांसायाम्, मुह् वैचित्ये, स्नुह् उद्गिरणे, स्निह् प्रीतौ, णश् अदर्शने एते द्रुहादयः । अत्र द्रुहो दकारादित्वात्प्राप्तस्य घत्वस्य विकल्पः। अन्येषां तु अप्राप्तस्य विकल्प इत्यर्थः । मित्राय द्रुह्यतीति मित्रद्रुह् सर्वत्रापि प्रथमैकवचने रूपद्वये 'दादेर्धातोर्घः' । रूपद्वये च 'हो ढः' इति ढः । 'आदि झबानाम्' इति सर्वत्र द्रुस्थाने ध्रु । 'हसेपः सेर्लोपः' 'वावसाने०' । घस्य यथासंख्यं कगौ । ढस्य च टडौ । मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड । एवं सिविषये रूपचतुष्टयम् । मित्रद्रुहौ मित्रद्रुहः। भकारादौ सुपि च रूपद्वयम् ।

---

१ भारवाह्शब्दस्य भेदः । हो ढः वावसाने भारवाट् भारवाड् भारवाहौ भारवाहः । भारवाहम् भारवाहौ ॥ वाहो वौ शसादौ स्वरे ॥ वाहः वः औ शसादौ स्वरे । वाहो वकारस्यौकारादेशो भवति शसादौ स्वरे परे । भारौहः । भारौहा भारवाड्भ्याम् भारवाड्भिः ॥ श्वेतवाह् उक्थशास् पुरोडाश् अवयाजां डस् रसे पदान्ते चेति वक्तव्यम् ॥ डित्त्वाट्टिलोपः । अत्वसोः सौ । श्वेतवाः श्वेतवाहौ श्वेतवाहः । श्वेतवाहम् श्वेतवाहौ श्वेतवाहः । अत्र वाहो वौ शसादौ । स्वरे चेति केचित् । श्वेतौहः श्वेतौहा-श्वेतवाहा श्वेतवोभ्याम् श्वेतवोभिः । श्वेतौहे-श्वेतवाहे श्वेतवोभ्याम् श्वेतवोभ्यः । श्वेतौहः-श्वेतवाहः-श्वेतवोभ्याम् श्वेतवोभ्यः । श्वेतौहः-श्वेतवाहः श्वेतौहोः-श्वेतवाहोः श्वेतौहां-श्वेतवाहाम् । श्वेतौहि-श्वेतवाहि श्वेतौहोः-श्वेतवाहोः-श्वेतवःसु-श्वेतवस्सु ॥ अवयाः श्वेतवाः पुरोडाश्चैते कृतदीर्घाः संबुद्धौ निपात्यन्ते । चकारादुक्थशा इति केचित् । हेश्वेतवाः वेति केचित् । हेश्वेतवः हेश्वेतवाहौ हेश्वेतवाहः । श्वेतमासनं वहतीति श्वेतवाः इति व्युत्पत्तिः ॥ उक्थशाः उक्थशासौ उक्थशासः । उक्थशासम् उक्थशासौ उक्थशासः । उक्थशासा उक्थशोभ्याम् उक्थशोभिः । उक्थशासे उक्थशोभ्याम् उक्थशोभ्यः । उक्थशःसु-उक्थशस्सु । हेउक्थशाः हेउक्थशः हेउक्थशासौ हेउक्थशासः । इत्यादि ॥ पुरोडाः पुरोडाशौ पुरोडाशः । पुरोडाशम् पुरोडाशौ पुरोडाशः । पुरोडाशा पुरोडोभ्याम् पुरोडोभिः । पुरोडाशे पुरोडोभ्याम् पुरोडोभ्यः । पुरोडःसु पुरोडस्सु । हेपुरोडाः-हेपुरोडः हेपुरोडाशौ हेपुरोडाशः ॥ अवयाः अवयाजौ अवयाजः । अवयाजं अवयाजौ अवयाजः । अवयाजा अवयोभ्याम् अवयोभिः । अवयाजे अवयोभ्याम् अवयोभ्यः । अवयःसु-अवयस्सु । हेअवयाः-हेअवयः हेअवयाजौ हेअवयाजः ॥ तुरासाह्शब्दस्य भेदः । हो ढः ॥ सहेः षः साढि ॥ सहेः सकारस्य षकारादेशो भवति साढि सति । वावसाने तुराषाट्-तुराषाड् तुरासाहौ तुरासाहः । तुरासाहम् तुरासाहौ तुरासाहः । तुरासाहा तुराषाड्भ्याम् तुराषाड्भिः । तुरासाहे तुराषाड्भ्याम् तुराषाड्भ्यः । इत्यादि । हेतुराषाट्-हेतुराषाड् हेतुरासाहौ हेतुरासाहः ॥ अधिकः पाठः क्वचित् ॥

तत्रैकत्र घत्वे अन्यत्र ढत्वे कृते 'आदिजबानां०' इति द्रु इत्यत्र ध्रु। भकारादौ 'झबे जबाः' घस्य गः, ढस्य डः। मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां मित्रध्रुग्भिः मित्रध्रुड्भिः। सुपि—'खसे चपा०' इति घस्य कः। ढस्य च टः। कत्वे—'किलात्षः सः' 'कषसंयोगे क्षः' मित्रध्रुक्षु। ढत्वे—'स्वरहीनं०' मित्रध्रुट्सु। धौ सिवत्॥ एवं तत्त्वमुहृपुत्रस्निहृशास्तिस्नुहोऽपि साध्याः। तत्त्वं प्रति मुह्यतीति तत्त्वमुद्। हान्तानां साधनमेतत्॥ यकारवकारान्ता अप्रसिद्धाः॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः॥ चतुराम् शौ च॥ चतुर्शब्दस्यामागमो भवति धिवर्जितेषु पञ्चसु परेषु, शौ च परे। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥ रः संख्यायाः॥ रेफान्तसंख्यायाः परस्यामो नुडागमो भवति॥ णत्वद्वित्वे। चतुर्णाम्॥

रान्तमाह—रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः। प्रथमाबहुवचने सूत्रम्—'चतुराम् शौ च'॥ चतुर इति षष्ठ्येकवचनान्तं सांकेतिकम्। आम् प्रथमैकवचनान्तम्। 'हसेपः सेर्लोपः०'। शौ सप्तम्येकवचनान्तम्। 'ङेरौ ङित्' टिलोपः। च प्रथमैकवचनान्तम्। 'अव्यया०'॥ चतुर्०। 'पञ्चसु' ग्रहणं समासान्तत्वसूचकम्। यथा प्रियाश्चत्वारो यस्यासौ प्रियचत्वाः। इत्यादि ज्ञेयम्॥ अन्यथा बहुत्वे पञ्चस्विति पदं न संभवति। शौ चेति पदकथनेन नपुंसकेऽपि शस्याप्यामागमो भवति इत्यर्थः। 'मिदन्त्यात्स्वरात्परो वक्तव्यः'। जसि पूर्वम् आ। 'उवम्' 'स्वरहीनम्' 'स्रोर्विं०'॥ शसि—'स्वरहीनं०' 'स्रोर्विं०'॥ तृतीया चतुर्थी पञ्चमी बहुवचने। जलतुम्बिका०। षष्ठीबहुवचने सूत्रम्—'रः संख्यायाः' रः पञ्चम्येकवचनम्। 'स्वरहीनं०'। संख्यायाः पञ्चम्येकवचनम्। 'ङितां यट्' 'सवर्णे दी०'॥ 'रेफान्तसंख्यायाः०' अनेन नुट्। 'ष्रुर्नोणो०' 'राद्यपो द्विः' जलतुम्बि०। चतुर्णामिति सिद्धम्॥ सप्तमीबहुवचने—'किलात्षः सः०' जलतुम्बि०। चतुर्षु। 'दोषां रः' इति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यम्। अतोत्र चतुर्ष्वित्यत्र न विसर्गः। 'चतुरनडुहोरम् संबुद्धौ'। हे प्रियचत्वः॥ लवणान्ता अप्रसिद्धाः॥

नकारान्तो राजन्शब्दः। राजन् सि इति स्थिते। नोपधायाः इति दीर्घः। हसेपः सेर्लोपः। नाम्नो नो लोपशधौ॥ नाम्नः नः लोपश् अधौ॥ नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ। राजा राजानौ राजानः। राजानम् राजानौ॥ अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ इत्युपधाया लोपः। स्तोः श्चुभिः श्चुः इति नकारस्य ञकारः॥ जञोर्ज्ञः॥ जकारञकारसंयोगे ज्ञ इत्यक्षरं भवति॥ राज्ञः। राज्ञा। राजभ्याम्। 'लोपशि पुनर्न संधिः' इति नियमाद् 'अज्झि' इत्यात्वं न॥ राजभिः। राज्ञे राजभ्याम् रा-

१ 'शास्तिराज्ञा भूपस्य'॥ २ तदन्तविधिरत्रेष्यते। प्रियाश्चत्वारो यस्य सः प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः। प्रियचत्वारम् प्रियचत्वारौ प्रियचतुरः। प्रियचतुरा प्रियचतुर्भ्याम् प्रियचतुर्भिः। गौणत्वे नुट् नेष्यते। प्रियचतुराम्। प्राधान्ये तु स्यादेव। परमचतुर्णाम्॥ धावम्॥ चतुर्शब्दस्य धौ परे आमागमो भवति॥ हेप्रियचत्वः हेप्रियचत्वारौ हेप्रियचत्वारः॥ इत्यधिकः पाठः।

जभ्यः । राज्ञः राजभ्याम् राजभ्यः । राज्ञः राज्ञोः राज्ञाम् । राज्ञि । वेङ्योः । राजनि राज्ञोः राजसु । अधाविति विशेषणाद्धेराजन् हेराजानौ हेराजानः ॥

नान्तानाह—नकारान्तो राजन्शब्दः तस्य पञ्चसु वचनेषु 'नोपधायाः' इति दीर्घः । प्रथमैकवचने सूत्रम्—'नाम्नो नो लोपशधौ' ॥ नाम्न इति नामन्शब्दस्य षष्ठ्येकवचनान्तम् । 'अल्लोपः स्वरे' 'स्वरहीनं०' ॥ नः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०'पश्चात् । 'हबे०' 'उओ' ॥ लोपश् प्रथमैकवचनान्तम् । 'हसेपः०' पश्चात् 'हबे' 'उओ' ॥ न धिः अधिस्तस्मिन् अधौ सप्तम्येकवचनम् । 'ङेरौ डित्' टिलोपः । पश्चात् 'स्वरहीनं०' ॥ नाम्न इति शब्दस्य संबन्धिनो नकारस्य लोपश् वर्णविरोधरूपो भवति परमनागमजस्य शब्दान्तभूतस्यैव । परं केनापि सूत्रेणागतस्य नस्य लोपश् न भवति रसे पदान्ते च । चकारात् सुहिन् सुहिंसौ सुहिंसः । प्रशान् इत्यादौ नकारस्य लोपो न । अधौ धौ च लोपश् न भवति । अनेन सौ नस्य लोपः । अधाविति विशेषणात् धौ न नकारलोपश् । शसि—'अल्लोपः स्वरे०' इत्यकारलोपः । 'स्तोः श्चुभिः श्चुः' इति चुत्वे चवर्गे क्रियमाणे नकारस्य ञकारः । ततो 'जञोर्ज्ञः' । जश्च ञश्च जञौ तयोर्जकारञकारयोर्योगे ज्ञो भवतीत्यर्थः । अनेन ज्ञ्योगे ज्ञः । स्वरहीनं०' 'स्नोर्वि०' ॥ टाविषयेप्येवम् ॥ भकारादौ—'नाम्नो नो लोपशधौ' ततः 'लोपशि पुनर्न संधि'रिति करणात् 'अद्धि' इति सूत्रेण आकारो न भवति ॥ ङौ—'वेङ्योः' ॥ सुपि—नाम्नो नो लोपशधौ' ॥

एवं यज्वन्नात्मन्सुधर्मन्प्रभृतयः ॥ यज्वा यज्वानौ यज्वानः । हेयज्वन् हेयज्वानौ हेयज्वानः ॥ यज्वानम् यज्वानौ । अम्वयुक्तादिति विशेषणादलोपो नास्ति । यज्वनः । यज्वना यज्वभ्याम् । यज्वभिः । यज्वने यज्वभ्याम् यज्वभ्यः । यज्वनः । इत्यादि ॥

एवं यज्वन् आत्मन् सुधर्मन् सुपर्वन् प्रभृतयोऽपि साध्याः । परं शसादौ 'अम्वयुक्तात्' इति विशेषणात् मकारवकारयुक्तत्वात् अल्लोपो नास्ति । तेन यज्वनः यज्वना इत्यादि ॥ उक्षन् मूर्धन् शब्दौ तु राजन्वत् ॥

श्वन्युवन्मघवन्शब्दानां पञ्चसु राजन् शब्दवत्प्रक्रिया । श्वा श्वानौ श्वानः । श्वानम् श्वानौ ॥

श्वानौ ॥ श्वा कुक्कुरवाची । युवा तरुणवाची । मघवा इन्द्रवाची । इत्येतेषां शब्दानां पञ्चसु स्यादिवचनेषु राजन् शब्दवत्साधना ।

श्वादेर्वं उः ॥ श्वादेर्वकार उत्वं प्राप्नोति शसादौ स्वरे परे ईपि ईकारे च ।

---

१ आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मनः । आत्मना आत्मभ्याम् आत्मभिः इत्यादि ॥ हे आत्मन् हेआत्मानौ हेआत्मानः ॥ सुधर्मा सुधर्माणौ सुधर्माणः । सुधर्माणम् सुधर्माणौ सुधर्मणः । सुधर्मणा सुधर्मभ्याम् सुधर्मभिः इत्यादि ॥ हेसुधर्मन् हेसुधर्माणौ हेसुधर्माणः । अधिकः पाठः ॥

२ 'तद्धिते स्वरे तु न भवति ॥ अत्र नियामकं पाणिनीयसूत्रम् । श्वयुवमघोनामतद्धिते । तेन माघवनं भवति । इत्यधिकः पाठः ॥

**शुनः । शुना श्वभ्याम् श्वभिः । शुने श्वभ्याम् श्वभ्यः । शुनः श्वभ्याम् इत्यादि[1] ॥ युवा युवानौ युवानः । युवानम् युवानौ । युवन्शब्दस्य तु वकारस्योत्वे कृते । सवर्णे दीर्घः सह । यूनः । यूना युवभ्याम् युवभिः । यूने युवभ्याम् युवभ्यः । इत्यादि[2] ॥ मघवा मघवानौ मघवानः । मघवानम् मघवानौ । मघवन्शब्दस्य वकारस्योत्वे कृते । उ ओ । मघोनः । मघोना मघवभ्याम् मघवभिः । मघोने मघवभ्याम् मघवभ्यः । इत्यादि[3] ॥**

शसादौ तु विशेषस्तमाह सूत्रम्—'श्वादेर्व उः' ॥ श्वा आदिर्यस्य स श्वादिस्तस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' ॥ श्वादेरिति श्वन् युवन् मघवन् शब्दसंबन्धी वकारः उत्वमुकारत्वं प्राप्नोति शसादौ स्वरे परे ईपि च । ईपि प्रत्यये परे तु शुनी यूनी मघोनी इति भवति । वकारेण सहितोऽकारः वकारः इति सस्वरस्यापि वकारस्य स्थाने उकारः । 'स्वरहीनं०' शसादौ स्वरादौ सर्वत्र उकारः ॥ भकारादौ सुपि च 'नाम्नो नो लोपशधौ' इति ॥ संबोधने राजन्शब्दवत् ॥ श्वा श्वानौ श्वानः । श्वानं श्वानौ शुनः । शुना श्वभ्यां श्वभिः । शुने श्वभ्यां श्वभ्यः । शुनः श्वभ्यां श्वभ्यः । शुनः शुनोः शुनां । शुनि शुनोः श्वसु । युवा युवानौ युवानः । युवानं युवानौ । युवन्शब्दस्य शसादौ 'श्वादेर्वः' इति उत्वे कृते 'सवर्णे दीर्घः०' यूनः यूना ॥ मघवन् शब्दे तु उकारे कृते । 'उ ओ' ॥ मघोनः मघोना मघवभ्यां मघवभिः । इत्यादि ज्ञेयम् । तकारान्तमघवत् शब्दस्य तु मघवान् मघवन्तौ मघवन्तः । मघवन्तं मघवन्तौ मघवतः । मघवता मघवद्भ्यां मघवद्भिरिति रूपाणि ॥

**नकारान्तस्यापि पथिन्शब्दस्य भेदः ॥ इतोऽत्पञ्चसु ॥ इतः अत् पञ्चसु । पञ्चसु स्यादिषु पथ्यादीनामिकारस्याकारो भवति ॥ थो नुट् ॥ पथ्यादीनां थकारस्य नुडागमो भवति पञ्चसु स्यादिषु परेषु । पन्थन् सि इति स्थिते ॥ आ सौ ॥ आ सौ ॥ पथ्यादीनां टेरात्वं भवति सौ परे । पन्थाः । नोपधायाः पन्थानौ पन्थानः । हेपन्थाः हेपन्थानौ हेपन्थानः । पन्थानम् पन्थानौ ॥ पथां टेः ॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । पथः । पथा पथिभ्याम् पथिभिः । पथे पथिभ्याम् प-**

---

१ हेश्वन् हेश्वानौ हेश्वानः ॥ २ हेयुवन् हेयुवानौ हेयुवानः ॥ ३ हेमघवन् हेमघवानौ हेमघवानः ॥ मघवा बहुलम् ॥ मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् ॥ ऋकारो व्रित्कार्यार्थः । बहुलग्रहणात्सर्वे विधयो व्यभिचरन्ति । व्रितो नुम् मघवान् । नश्चापदान्ते झसे । मघवन्तौ मघवन्तः । मघवन्तम् मघवन्तौ मघवतः । मघवता मघवद्भ्याम् मघवद्भिः । मघवते मघवद्भ्याम् मघवद्भ्यः इत्यादि ॥ हेमघवन् हेमघवन्तौ हेमघवन्तः ॥ 'स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ॥' इति प्रयोगदर्शनात् ॥ अर्वणस्त्रसावनञः । नञ्वर्जस्यार्वणस्तृ इत्यन्तादेशः स्यादसौ विभक्तौ परतः । अर्वा अर्वन्तौ अर्वन्तः । अर्वन्तम् अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम् अर्वद्भिः । अर्वते अर्वद्भ्याम् अर्वद्भ्यः । इत्यादि ॥ हेअर्वन् हेअर्वन्तौ हेअर्वन्तः ॥ नञ्वर्जस्येति किम् । नोपधाया अनर्वा अनर्वाणौ अनर्वाणः । अनर्वाणम् अनर्वाणौ अनर्वणः । अनर्वणा अनर्वभ्याम् अनर्वभिः । अनर्वसु । इत्यादि ॥ इत्यधिकः पाठः क्वचित्पुस्तके ॥

थिभ्यः । पथः पथिभ्याम् पथिभ्यः । पथः पथोः पथाम् । पथि पथोः । नलोपः । किलात्वः सः । पथिषु ॥ एवं मथिन्ऋभुक्षिन्शब्दौ । मन्थाः । मन्थानौ मन्थानः ॥ ऋभुक्षाः ऋभुक्षाणौ ऋभुक्षाणः । इत्यादि ॥

पथिन्शब्दस्य भेदः ॥ सूत्रम्—'इतोऽत्पञ्चसु' ॥ इतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । अत् प्रथमैकवचनान्तम् । 'हसेपः०' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' । पञ्चसु इति पञ्चन् शब्दस्य सप्तमीबहुवचनान्तम् । 'नाम्नो नो०' सिद्धम् । स्यादिषु पञ्चवचनेषु परतः पथ्यादीनां पथिन्मथिन्ऋभुक्षिन्शब्दानामिकारस्य अकारो भवति ॥ अनेन सि औ जस् अम् औ वचनेषु थि इत्यस्य थ ॥ सूत्रम्—'थो नुट्' ॥ थ षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ नुट् प्रथमैकवचनान्तम् । 'हसेपः से०' 'हबे०' 'उ ओ' ॥ पथ्यादीनां थकारस्य पञ्चसु वचनेषु नुडागमो भवति । टित्त्वादादौ । थस्य पूर्वं न । पन् थन् सु इति स्थिते सति । सूत्रम्—'आ सौ' ॥ आ प्रथमैकवचनान्तं सांकेतिकम् । सौ सिशब्दस्य सप्तम्येकवचनान्तम् । 'ङे रौ ङित्' टिलोपः । 'स्वरहीनं०' सिद्धम् । पथ्यादीनां टेः सौ परे आत्वं भवति । अनेन सौ नसहितस्य थ इत्यस्य था । टेरात्वकरणादेव सेर्लोपो न, किंतु 'स्रोर्वि०' 'नश्चापदान्ते०' पन्था मार्गः । संबोधनेऽप्येवमेव । अग्रे द्वितीयाद्वित्वं यावत् 'नोपधाया०' दीर्घः । 'स्वरहीनं०' ॥ शसादौ विशेषः । सूत्रम्—'पथां टेः०' ॥ पथामिति पथिन्शब्दस्य षष्ठीबहुवचनान्तम् । 'पथां टेः०' 'स्वरहीनं०' 'मोऽनुस्वारः' । टेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' ॥ पथिन् मथिन् ऋभुक्षिन्शब्दानां टेर्लोपो भवति शसादौ स्वरे परे । अनेन शसादौ स्वरे टेः इन् इत्यस्य लोपः । भकारादौ—'नाम्नो नो लोपशधौ' ॥ सुपि—'नाम्नो नो०' इति नकारलोपशि कृते । 'किलात्वः सः' ॥ एवं मथिन्ऋभुक्षिन्शब्दौ ज्ञेयौ । मन्थाः मन्थनदण्डः ॥ ऋभुक्षाः इन्द्रः । ऋभुक्षाणौ ऋभुक्षाणः । ऋभुक्षाणम् ऋभुक्षाणौ ऋभुक्षः । ऋभुक्षा 'पथां टेः' ॥ ऋभुक्षिभ्याम् ऋभुक्षिभिः । ऋभुक्षे इत्यादि ॥

दण्डिन्शब्दस्य भेदः ॥ इनां शौ सौ ॥ इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति । सिलोपनलोपौ । दण्डी दण्डिनौ दण्डिनः । हेदण्डिन् हेदण्डिनौ हेदण्डिनः ॥ दण्डिनम् दण्डिनौ दण्डिनः । दण्डिना दण्डिभ्याम् दण्डिभिः । दण्डिने दण्डिभ्याम् दण्डिभ्यः । दण्डिषु । इत्यादि ॥ ब्रह्महा ब्रह्महणौ ब्रह्महणः । हेब्रह्महन् हेब्रह्महणौ हेब्रह्महणः । ब्रह्महणम् ब्रह्महणौ । शसादौतु 'अल्लोपः स्वरे' ॥ हनो घ्ने ॥ हनः घ् ने । हन्तेर्धातोर्हकारस्य घत्वं भवति अव्यवधाने नकारे परे, व्यवधाने ञिति णिति च परे घसंयोगो णत्वनिषेधार्थः ॥ ब्रह्मघ्नः । ब्रह्मघ्ना ब्रह्महभ्याम् ब्रह्महभिः । ब्रह्मघ्ने ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्मघ्नोः ब्रह्मघ्नाम् । ब्रह्मघ्नि-ब्रह्महणि ब्रह्मघ्नोः ब्रह्महसु ॥ एवं पूषा पूषणौ पूषणः

---

१ हन्तेरत्पूर्वस्य ॥ हन्तेरकारपूर्वस्यैव नस्य णत्वं स्यान्नान्यस्य ॥ इत्यधिकम् ॥

**हेपूषन् हेपूषणौ हेपूषणः । पूषणम् पूषणौ पूष्णः । पूष्णा पूषभ्याम् पूषभिः । पूष्णे पूषभ्याम् पूषभ्यः । पूष्णः पूषभ्याम् पूषभ्यः । पूष्णः पूष्णोः पूष्णाम् । पूष्णि-पूषणि । ङौ टिलोपो वेति केचित् । पूषि पूष्णोः पूषसु ॥ एवम्-अर्यमा अर्यमणौ अर्यमणः । हेअर्यमन् हेअर्यमणौ हे अर्यमणः । अर्यमणम् अर्यमणौ अर्यम्णः । अर्यम्णा अर्यमभ्याम् अर्यमभिः । इत्यादि ॥**

दण्डिन्शब्दस्य भेदः । सूत्रम्—'इनां शौ सौ' ॥ इनां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः' । शौ इति शिशब्दस्य सप्तम्येकवचनान्तम् । 'ङेरौ डित्' सौ इत्यपि सिशब्दस्य सप्तम्येकवचनान्तम् । 'ङेरौ डित्' सिद्धम् । इन् इन्प्रत्ययान्तः, हन् धातुः ब्रह्मभ्रूणवृत्राद्युपपदपूर्वः क्विप्प्रत्ययान्तः । पूषन् सूर्यवाची । अर्यमन् सूर्यवाची । इत्येषां शौ नपुंसके जस्शसोः स्थाने जाते, सौ च प्रथमैकवचने धिवर्जिते परे दीर्घो भवति । 'नोपधायाः' इत्यनेन सिद्धौ सत्याम् 'इनां०' इति सौ परे एव दीर्घः स्यान्न तु पञ्चस्विति नियमार्थमुक्तम् । अनेन सौ दीर्घः । 'हसेपः०' 'नाम्नो नो०' ॥ स्वरादौ सर्वत्र 'स्वरहीनं०' ॥ रसे च—'नाम्नो नो०' ॥ सुपि—'किलात्षः सः०' ॥ धौ अधाविति विशेषणान्न लोपश्च दीर्घो । हे दण्डिन् ॥ शेषं सुकरम् । ब्रह्महन्शब्दो दण्डिन्शब्दवत् । ब्रह्महा ब्रह्महणौ । 'अव्कुप्वन्तरेऽपि' इति णत्वम् । ब्रह्महणः । ब्रह्महणं ब्रह्महणौ । शसादौ तु—'अल्लोपः स्वरे०' इत्यल्लोपे कृते सूत्रम्—'हनो घ्ने' हनः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः०' । घ् प्रथमैकवचनान्तम् । 'हसे पः०' 'ह्वे०' 'उ ओ' । ने सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । हन्तेरिति । हन् इत्यस्य धातोः संबन्धिनो हकारस्य धत्वं भवति नकारे परे । तथा ञिति णिति च परे । अनेन हस्य घः 'स्वरहीनं०' । हस्य घत्वे कृते घसंयोगे 'ष्रुर्नो णो०' इति सूत्रनिषेधार्थः । 'हन्तेरकारपूर्वस्यैव सति णत्वनिमित्ते णत्वं नतु व्यञ्जनपूर्वस्य' इति वचनात् घकारनकारयोः संयोगे जाते सति 'ष्रुर्नोणो०' इति नस्य णप्रतिषेधः । 'स्वरहीनं०' ॥ रसे परे—'नाम्नो नो०' ॥ ङौ तु—'वेङ्योः' ब्रह्मघ्नि ब्रह्महणि । धौ दण्डिन्वत् ॥ एवं पूषन् अर्यमन् शब्दौ । तत्र शसादौ—'अल्लोपः स्वरे' इत्यल्लोपे कृते । 'ष्रुर्नो णो०' ॥ हसादौ—'नाम्नो नो०' ॥ शेषं कण्ठ्यम् ॥ पूषा पूषणौ पूषणः । पूषणं पूषणौ पूष्णः । पूष्णा पूषभ्यां पूषभिरित्यादि । ङौ तु 'वेङ्योः' पूष्णि पूषणि ॥ एवम् । अर्यमा अर्यमणौ अर्यमणः । अर्यमणम् अर्यमणौ अर्यम्णः । अर्यम्णा अर्यमभ्याम् । अर्यमभिः । अर्यमसु इत्यादि ॥

**संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः । पञ्चन् जस् इति स्थिते ॥ जश्शसोर्लुक् ॥ षकारनकारान्तसंख्यायाः परयोर्जस्शसोर्लुग्भवति ॥ लुकि न तन्निमित्तम् ॥ लुकि सति तन्निमित्तं कार्यं न स्यात् ॥ तेन 'नोपधायाः' इति दीर्घत्वं न । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः ॥ ष्णः ॥ षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति ॥**

**नोपधायाः । नाम्नो नो लोपशधौ । पञ्चानाम् । पञ्चसु ॥ एवं सप्तन्नवन्दश-न्प्रभृतयः ॥**

संख्यावाचकाः शब्दाः पञ्चन्प्रभृतयो बहुवचनान्ताः त्रिषु लिङ्गेषु सदृशरूपाः । जसि शसि च सूत्रम्—'जस्शसोर्लुक्' ॥ जस् च शस् च जस्शसौ तयोर्जस्शसोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । लुक् प्रथमैकवचनान्तम् 'हसेपः०' 'नामिनोरः' ॥ वृत्तिः कण्ठ्या । अनेन जस् शस् इत्येतयोर्लुक् 'प्रत्ययलोपे प्रत्ययलक्षणं न याति' इति न्यायात् 'नोपधायाः' इति दीर्घत्वप्राप्तौ निषेधहेतुमाह—'लुकि न तन्निमित्तम्' इति । लुकि कृते सति तन्निमित्तं कार्यं न भवति स एव निमित्तं कारणं यस्य तत्तन्निमित्तं यथा जसि 'नोपधायाः' इति सूत्रेण दीर्घत्वप्राप्तावपि न दीर्घता । तर्हि दीर्घं विधाय लुक् कार्यः । इत्यत्रोच्यते—कृताकृतप्रसङ्गी यो विधिः स नित्यः इति भावरूपं कार्यं न भवति, अभावरूपं तु भवत्येव । तेन 'नाम्नो नो लोपशधौ' इति भवत्येव ॥ तृतीयाचतुर्थीपञ्चमीबहुवचने 'नाम्नो नो लो०' । आमि सूत्रम् 'ष्णः' ॥ ष् च न् ष्ण् तस्मात् ष्णः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' । षकारान्तनकारान्तसंख्यायाः परो य आम् तस्य नुडागमो भवति । अनेन नु । 'नोपधायाः' इति दीर्घः । 'नाम्नो नो०' ॥ सुपि—'नाम्नो नो०' एवं सप्तन् नवन् दशन् एकादशन् प्रभृतयोऽपि साध्याः ॥

**अष्टन्शब्दस्य भेदः ॥ अष्टनो डौ वा ॥ अष्टन्शब्दात्परयोर्जस्शसोर्वा डौ भवति । डित्वाट्टिलोपः अष्टौ अष्टौ अष्ट अष्ट ॥ वासु ॥ वा आ आसु । अष्टन्शब्दस्य आसु विभक्तिषु परासु वा टेरात्वं भवति । अष्टभिः-अष्टाभिः । अष्टभ्यः-अष्टाभ्यः । अष्टभ्यः-अष्टाभ्यः । अष्टानाम् । अष्टसु-अष्टासु[1] ॥**

अष्टन्शब्दस्य भेदः । सूत्रम्—'अष्टनो डौ वा' ॥ अष्टन इति अष्टन्शब्दस्य षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । डौ प्रथमैकवचनान्तम् । सांकेतिकम् । 'हबे' 'उ ओ' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया०' ॥ सिद्धमिदं सूत्रम् । अष्टन्शब्दात्परयोर्जस्शसोर्वा विकल्पेन डौ भवति । गुरुत्वात्सर्वस्य जसो डौ । जसि शसि च रूपद्वयम् । अनेन एकत्र डौ । औ । डित्वाट्टिलोपः । 'स्वरहीनं०' अन्यत्र 'जस्शसोर्लुक्' 'नाम्नो नो०' ॥ तृतीयादिबहुत्वेऽपि रूपद्वयम् । सूत्रम्—'वासु' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया०' । आ प्रथमैकवचनम् । सांकेतिकम् । आसु इति इदंशब्दस्य सप्तमीबहुवचनान्तम् । 'त्यदादेष्टेरः स्यादौ' 'स्भ्यः' 'आबतः स्त्रियाम्' 'सवर्णे दीर्घः०' । अष्टन इति अष्टन्शब्दस्य आसु तृतीयादिषु

---

१ गौणत्वेऽपि आत्वं जश्शसोर्डौत्वं वेत्येके । प्रियाष्टा प्रियाष्टाः प्रियाष्टानौ-प्रियाष्टौ प्रियाष्टानः प्रियाष्टौ-प्रियाष्टाः । प्रियाष्टानं-प्रियाष्टाम् प्रियाष्टानौ-प्रियाष्टौ प्रियाष्ट्नः प्रियाष्टौ प्रियाष्टान् । प्रियाष्ट्ना-प्रियाष्टा प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभिः-प्रियाष्टभिः । प्रियाष्ट्ने-प्रियाष्टै प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभ्यः-प्रियाष्टभ्यः । प्रियाष्ट्नः-प्रियाष्टाः प्रियाष्टाभ्यां-प्रिष्टभ्याम् प्रियाष्टाभ्यः-प्रियाष्टभ्यः । प्रियाष्ट्नः-प्रियाष्टाः प्रियाष्ट्नोः प्रियाष्टौः प्रियाष्टां-प्रियाष्ट्नाम् । प्रियाष्ट्नि-प्रियाष्टनि-प्रियाष्टे प्रियाष्ट्नोः-प्रियाष्टौः प्रियाष्टासु-प्रियाष्टसु । हेप्रियाष्टन्-हेप्रियाष्टाः हेप्रिष्टानौ-हेप्रियाष्टौ हेप्रियाष्टानः हेप्रियाष्टौ हेप्रियाष्टाः ॥ जसि त्रीण्येव रूपाणि शसि त्रीण्येव वै-पुनः । डावपि त्रीणि रूपाणि शेषे द्वे द्वे प्रियाष्टनः ॥ इत्यधिकं क्वचित् ॥

परासु सतीषु वा आत्वमाकारो भवति । अनेन तृतीया चतुर्थी पञ्चमी बहुवचने वा आकारः । अन्यत्रापि 'नाम्नो नो०' । आमि । एकत्र आकारः । उभयत्रापि 'ष्णः' इति नुट् । द्वितीयरूपे । 'नोपधायाः' इति दीर्घः । 'नाम्नो नो०' पक्षद्वये सदृशं रूपम् ॥ सुपि—एकत्र आकारे कृते अन्यत्रापि 'नाम्नो नो०' ॥

**मकारान्त इदम्शब्दः ॥ इदमोऽयं पुंसि ॥ इदमः अयम् पुंसि । इदम्शब्दस्य पुंसि विषये अयमादेशो भवति सिसहितस्य ॥ अयम् । द्विवचनादौ 'त्यदादेष्टेः' इति सर्वत्राकारः । इद औ इति स्थिते ॥ दस्य मः ॥ त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे ॥ 'ओ औ औ' इमौ । सर्वादित्वात् 'जसी' इमे । त्यदादीनां घेरभावः ॥ इमम् इमौ इमान् ॥ अन टौसोः ॥ इदमोऽनादेशो भवति टौसोः परयोः कृत्स्नस्य ॥ 'टेन' अनेन ॥ स्भ्यः ॥ स्भि अः । इदमः सकारे भकारे च परे अकारादेशो भवति कृत्स्नस्य ॥ 'अद्भि' इत्यात्वम् आभ्याम् ॥**

मकारान्तानाह—मकारान्त इदम्शब्दः । सौ सूत्रम्—'इदमोऽयं पुंसि' ॥ इदमः षष्ठ्येकवचनम् । 'स्वरहीनं०' । अयं प्रथमैकवचनान्तम् । 'हसेपः०' 'मोऽनुस्वारः' 'अतोऽत्युः' 'उओ' 'एदोतोऽतः' । पुंसि इति पुंस्शब्दस्य सप्तम्येकवचनान्तम् । 'स्वरहीनं०' सिद्धम् । इदम्शब्दस्य पुंसि पुंलिङ्गे एव सौ प्रथमैकवचने परे, अयमित्यादेशो भवति । अनेन सौ परे अयम् । मान्तकरणसामर्थ्यादेव 'त्यदादेष्टेरः स्यादौ' इति न भवति । अन्यथा अयमित्येवावक्ष्यत् । 'हसे पः से०' 'मोऽनुस्वारः' ॥ केचित्तु सिसहितस्यैव अयम् इत्यादेशमिच्छन्ति । द्विवचनादौ तु 'त्यदादेष्टेरः स्यादौ' इत्यकारे कृते सूत्रम्—'दस्य मः' षष्ठ्येकवचनान्तम् । 'ङस्य' । मः प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ त्यदादीनां दकारस्य अयुक्तस्य स्यादौ सर्वविभक्तौ परे मत्वं भवति । अनेन सर्वविभक्तिषु मकारः । प्रथमाद्विवचने 'ओ औ औ' ॥ प्रथमाबहुवचने—'जसी' 'अइए' ॥ द्वितीयैकवचने—'अम्शसोरस्य' 'मोऽनुस्वारः' ॥ द्वितीयाद्विवचने—'ओ औ औ' ॥ द्वितीयाबहुवचने—'अम्शसोरस्य' 'स्रो नः पुंसः' 'शसि' ॥ तृतीयैकवचने सूत्रम्—'अन टौसोः' अन प्रथमैकवचनान्तं सांकेतिकम् । टा च ओस् च टौसौ तयोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ इदम्शब्दस्य टा तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने परे अन इत्यादेशो भवति । अनेन टावचने अन आदेशः । 'टेन' 'अ इ ए' अनेन ॥ द्वित्वे । सूत्रम्—'स्भ्यः' स् च भ् च स्भ् तस्मिन् स्भि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अः प्रथमैकवचनान्तम् । 'स्रोर्विं०' पश्चात् 'इ यं स्वरे' 'स्वरहीनं०' ॥ इदम्शब्दस्य सकारे भकारे च परे अकारो भवति कृत्स्नस्य समग्रस्येत्यर्थः ॥ अनेन तृतीयाचतुर्थीपञ्चमीद्वित्वे इदमोऽकारः । 'अद्भि' इत्यात्वम् ॥ तृतीयाचतुर्थीपञ्चमीबहुवचने—'स्भ्यः' इत्यकारः ॥

**भिस्भिस् ॥ इदमदसोर्भिस् भिसेव भवति ॥ तेन न भकारस्याकारः ।**

---

१ त्यदादित्वादत्वसिद्धौ पुनरत्वविधानं सर्वादेशार्थम् । तदाह कृत्स्नस्येति ।

सौ धौ च 'हसेपः से०' इति सिलोपे कृते षस्य डः। 'वावसाने' इति डस्य वा टः। समो मस्य राट्शब्दे परेऽनुस्वाराभावो वक्तव्य इति केचित्। सम्राट् सम्राड्। भकारादौ षस्य डत्वे कृते 'स्वरहीनं०'॥ सुपि—डत्वे कृते 'खसे चपा झसानाम्' 'स्वरहीनं०' सम्राट्सु॥ क्वचित् हसादौ विभक्तौ पदान्तताश्रयणीया इति 'टोरन्त्यात्' इति ष्टुत्वाभावः। शेषं कण्ठ्यम्। एवं विराजादयः॥ इति जान्ताः। एवं परिव्राट् परिव्राजौ परिव्राजः। [तरुवृट् तरुवृश्चौ तरुवृश्चः।] यवभृट् यवभृज्जौ यवभृज्जः। इत्यादि॥ अन्येपि भूभुक्—बलिभुक्—हुतभुक्—वणिक्—भिषक्—अश्वयुक्—प्रभृतयो जान्ताः। तत्र 'चोः कुः'॥ एवम् ऋत्विक्। 'दिशाम्' इति कत्वम्। ऋतुषु ऋतुं वा यजति—ऋत्विक् ऋत्विजौ ऋत्विजः॥ ञान्ता अप्रसिद्धाः॥

दकारान्तास्त्यद्तद्यद्एतद्शब्दाः॥ एतेषां 'त्यदादेष्टेः' इत्यकारे कृते सर्वशब्दवद्रूपनयः॥ स्तः। स् तः। त्यदादेस्तकारस्य सत्वं भवति सौ परे॥ स्यः त्यौ त्ये। त्यम् त्यौ त्यान्। त्येन त्याभ्याम् त्यैः। त्यस्मै त्याभ्याम् त्येभ्यः। त्यस्मात् त्याभ्याम् त्येभ्यः। त्यस्य त्ययोः त्येषाम्। त्यस्मिन् त्ययोः त्येषु॥ सः तौ ते। तम् तौ तान्। तेन ताभ्याम् तैः। तस्मै इत्यादि॥ यः यौ ये। यम् यौ यान्। येन याभ्याम् यैः। यस्मै। इत्यादि॥ एषः एतौ एते॥ एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः॥ उक्तस्य पुनर्भाषणमन्वादेशः। एतं एनम् एतौ-एनौ एतान्-एनान्। एतेन-एनेन एताभ्याम् एतैः। एतस्मै एताभ्याम् एतेभ्यः। एतस्मात् एताभ्याम् एतेभ्यः। एतस्य एतयोः-एनयोः एतेषाम्। एतस्मिन् एतयोः-एनयोः एतेषु॥ एतेन व्याकरणमधीतमेनं छन्दोऽध्यापय॥

दकारान्तास्त्यदादयस्तेषां 'त्यदादेष्टेरः स्यादौ' इत्यकारे कृते सर्वत्र सर्वशब्दवत्। सौ तु विशेषः। सूत्रम्—'स्तः' स् प्रथमैकवचनान्तम्। 'हसेपः'। तः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विं०'॥ त्यदादेस्तकारेति वृत्तिः सुगमा। अनेन सौ तस्य सः। स्यः त्यौ त्ये। शेषं सर्ववत्। न वरं॥ घेरभावः॥ एवं तद्यद्शब्दौ। एतद्शब्दस्य सर्वत्र टेरत्वे कृते सौ च 'स्तः' इति तस्य सत्वे च कृते 'किलात्षः सः०' 'स्रोर्विं०'। एषः एतौ एते। द्वितीयायां टौसोश्च विशेषः॥ एतद् इति। एतद्शब्दस्य॥ अन्वादेशे सति। उक्तस्य पुनः कथनमन्वादेश उच्यते। यथा एष राजा याति, एनं पश्येत्यन्वादेशः। तस्मिंश्च वक्ष्यमाणे द्वितीयाटौस्सु द्वितीयायां वचनत्रये टा इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एनादेशः तकारस्य वा नकार इत्यर्थः। अनेनोक्तवचनेषु वा एनादेशः। एतम् एनम् एतौ एनौ एतान् एनान्। एतेन एनेन एतयोः एनयोः॥ शेषं सुकरम्॥ इति दान्ताः॥ अन्येऽपि बलभिद्दिविषद्सर्वविद्वेदविद्सुहृद्प्रभृतयः॥ गबखफान्ता अप्रसिद्धाः॥

---

१ अस्य जान्तत्वाभावेऽपि षत्वादेशयोग्यतयोपपादनम्॥

छकारान्तस्तत्त्वप्राछ्शब्दः 'छशषराजादेः षः' 'वावसाने' तत्त्वप्राट्-तत्त्वप्राड् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछम् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछा । 'छशषराजादेः षः' 'षो डः' तत्त्वप्राड्भ्याम् । तत्त्वप्राड्भिः । तत्त्वप्राछे तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राछोः तत्त्वप्राछाम् । तत्त्वप्राछि तत्त्वप्राछोः तत्त्वप्राट्सु ॥

छकारान्तस्तत्त्वप्राछ्शब्दः ॥ व्याकरणान्तरेषु 'च्छ्वोः शूडनुनासिके च' इति च्छस्य शत्वं विधाय शकारान्तस्तत्त्वप्राश् शब्द इत्युक्तमस्ति । तस्य रसे पदान्ते च संयोगान्तस्य लोपः इत्येकस्य छकारस्य लोपं विधाय ततः 'छशषराजादेः षः' इति षत्वे कृते । 'षो डः' 'वावसाने' सम्राजवत् ॥ शेषं सुकरम् । छान्तोऽयम् ॥ ठान्ता अप्रसिद्धाः ॥

थकारान्तोऽग्निमथ्शब्दः । 'वावसाने' अग्निमत्-अग्निमद् अग्निमथौ अग्निमथः । हेअग्निमत्-हेअग्निमद् हेअग्निमथौ हेअग्निमथः ॥ अग्निमथम् अग्निमथौ अग्निमथः । अग्निमथा अग्निमद्भ्याम् अग्निमद्भिः । इत्यादि ॥

थकारान्तोऽग्निमथ्शब्दस्तस्य सौ धौ च सिलोपे कृते 'वावसाने०' इति 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ 'झबे जबाः' थस्य दः । 'स्वरहीनं०' । सुपि—'खसे चपा झसानाम्' थस्य तः 'स्वरहीनं०' । स्वरादौ 'स्वरहीनं०' ॥ एवं थान्ताः ॥

चकारान्तः प्रत्यच्शब्दः ॥ अञ्चेः पञ्चसु नुमागमो वक्तव्यः ॥ चोः कुः ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन ॥ 'स्तोः श्चुभिः श्चुः' 'संयोगान्तस्य लोपः' प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । हेप्रत्यङ् हेप्रत्यञ्चौ हेप्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ॥ अञ्चेरलोपो दीर्घश्च ॥ अञ्चतेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च ॥ प्रतीचः । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचा । 'चोः कुः' प्रत्यग्भ्याम् प्रत्यग्भिः । प्रतीचे प्रत्यग्भ्याम् प्रत्यग्भ्यः । प्रत्यक्षु ॥ एवं तिर्यच्शब्दः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चम् तिर्यञ्चौ ॥

चकारान्तः प्रत्यच्शब्दः । 'अञ्चु गतिपूजनयोः' । अञ्च् प्रतिपूर्वः क्विप्प्रत्ययः ['प्रतिपूर्वस्यापूजार्थस्याञ्चतेर्नलोपो वक्तव्यः' । यद्वा ] 'नो लोपः' । 'इ यं स्वरे' क्विपः सर्वापहारी लोपः । प्रत्यच् इति सिद्धम् । तस्य पञ्चसु विशेषः । 'अञ्चेः पञ्चसु नुमागमो वक्तव्यः' ।

---

१ नाञ्चेः पूजायाम् ॥ पूजार्थस्याञ्चतेरुपधाभूतस्य नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । 'क्विन्प्रत्ययस्य कुः' 'संयोगान्तस्य लोपः' । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ । नलोपाभावादकारस्यालोपः । प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः । इत्यादि ॥ 'ङ्णोः कुक् टुक् वा शरि' प्रत्यङ्-प्रत्यङ्क्षु ॥ अधिकः पाठः ॥

२ अस्य प्रामाणिकत्वे तिर्यच् उदच् प्रभृतिषु नकारस्य लोपो न प्राप्नोति ।

'ए स्भि बहुत्वे' एभिः । इदम् ङे इति स्थिते 'त्यदादेष्टेरः स्यादौ', 'सर्वादेः स्मट्' 'स्भ्यः' अस्मै । आभ्याम् । एभ्यः । 'ङसिरत्' 'अतः' अस्मात् । आभ्याम् । एभ्यः । 'ङस्स्य' अस्य । 'अन टौसोः' 'ओसि' 'ए अय्' अनयोः । 'सुडामः' 'स्भ्यः' 'एस्भि बहुत्वे' 'किलात्' एषाम् । 'ङि स्मिन्' अस्मिन् अनयोः एषु ॥ त्यदादीनां संबोधनाभावः ॥

ततो भिसि सूत्रम्—'भिस्भिस्' । भिस् प्रथमैकवचनान्तम् । 'हसेपः०' । भिस् प्रथमैकवचनम् । 'हसेपः०' ॥ इदम्-अदस्शब्दसंबन्धी यो भिस् स भिस् एव भवति । तत्र भिसो भिस्करणं 'स्भ्यः' इति सूत्रेण अकारनिषेधार्थम् । तदेवाह—न भकारस्याकार इति ॥ 'ए स्भि बहुत्वे' ॥ परं कप्रत्ययसहितयोर्न । तेन इमकैः अमुकैः । एवं चतुर्थीपञ्चमीबहुत्वेऽपि । चतुर्थ्येकवचने 'सर्वादेः स्मट्' 'स्भ्यः' 'ए ऐ ऐ' । पञ्चम्येकवचने । 'ङसिरत्' 'अतः' 'स्भ्यः' 'सवर्णे दीर्घः०' ॥ षष्ठ्येकवचने—'ङस्स्य' 'स्भ्यः' । षष्ठीसप्तम्योर्द्विवचने । 'अन टौसोः' 'ओसि' 'ए अय्' 'स्वरहीनं०' ॥ आमि 'सुडामः' 'स्भ्यः' 'ए स्भि बहुत्वे' 'किलात्षः सः०' ॥ 'स्वरहीनं०' ॥ सप्तम्येकवचने । 'ङि स्मिन्' 'स्भ्यः' 'एस्भि बहुत्वे' 'किलात्षः सः०' । त्यदादित्वात्संबोधनाभावः ॥ 'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षं विजानीयात्' ॥

किंशब्दस्य भेदः । किंशब्दस्य 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥ कः कौ के । कम् कौ कान् । केन काभ्याम् कैः । कस्मै काभ्याम् केभ्यः । कस्मात् काभ्याम् केभ्यः । कस्य कयोः केषाम् । कस्मिन् कयोः केषु ॥

किम्शब्दस्य 'त्यदादेष्टेरः स्यादौ' इत्यादिना अकारे कृते सर्वशब्दवत्प्रक्रिया ॥ त्यदादित्वाद्धेरभावः संबोधनाभावः ॥ इत्यादयो मान्ताः शब्दा ज्ञेयाः ॥ झढघभान्ता अप्रसिद्धाः ॥

धकारान्तस्तत्त्वबुध् शब्दः । तस्य रसे पदान्ते च । 'आदिजबानां झभान्तस्य झभाः स्ध्वोः', 'हसेपः सेर्लोपः' 'वावसाने' तत्त्वभुत्-तत्त्वभुद् तत्त्वबुधौ तत्त्वबुधः । हेतत्त्वभुत्-हेतत्त्वभुद् हेतत्त्वबुधौ हेतत्त्वबुधः । तत्त्वबुधम् तत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधा तत्त्वभुद्भ्याम् तत्त्वभुद्भिः । इत्यादि ॥

धकारान्तस्तत्त्वबुध् शब्दः । तस्य रसे पदान्ते च 'आदिजबानां०' इत्यनेन बकारस्य भकारः । सौ धौ च सिलोपे कृते 'वावसाने' इति धकारस्य दकारतकारौ । स्वरादौ । 'स्वरहीनं०' । भकारादौ 'झबे जबाः' । 'स्वरहीनं०' । सुपि—'खसे चपा झसानाम्' धस्य तः 'स्वरहीनं०' । एवं मर्मविध् ॥

---

१ इदमोऽप्यन्वादेशे द्वितीयाटौस्स्वेनादेशो वक्तव्यः ॥ उक्तस्य पुनर्भाषणमन्वादेशः ॥ एनं एनौ एनान् । एनेन एनयोः ॥ प्रशाम्शब्दस्य भेदः ॥ मो नो धातोः ॥ धातोर्मकारस्य नकारादेशो भवति रसे पदान्ते च । प्रशान् प्रशामौ प्रशामः । हेप्रशान् हेप्रशामौ हेप्रशामः । प्रशामम् प्रशामौ प्रशामः । प्रशामा प्रशान्भ्याम् प्रशान्भिः । इत्यादीत्ययमधिकः पाठः ।

**जकारान्तः सम्राज्शब्दः ॥ छशषराजादेः षः ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य च राज्यज्सृज्मृज्भ्राजादेश्च षकारो भवति धातोर्झसे परे, नाम्नश्च रसे पदान्ते च ॥ षस्य षत्वं डत्वनिषेधार्थम्। तेन आख्यातादौ तु डत्वं नास्ति—द्वेष्टीत्यादौ ॥ षो डः ॥ षः डः । षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने ॥ मो राजि समः क्वौ ॥ क्विबन्ते राजतौ परे समो मस्य म एव स्यात् ॥ तेनानुस्वाराभावः। सम्राट्-सम्राड् । सम्राजौ । सम्राजः । हेसम्राट्-हेसम्राड्-हेसम्राजौ हेसम्राजः । सम्राजम् । सम्राजौ । सम्राजः । सम्राजा । सम्राड्भ्याम् । सम्राड्भिः एवं विराजादयः ॥**

अथ जान्ताः । तत्र जकारान्तः सम्राज्शब्दः । तस्य स्वरादौ 'स्वरहीनं०' रसे पदान्ते च विशेषः । सूत्रम्—'छशषराजादेः षः' छश्च शश्च षश्च राजादिश्च छशषराजादिस्तस्य । षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्नोर्वि०'। षः ॥ प्रथमैकवचनान्तम् । 'स्नोर्वि०' सिद्धम् ॥ छकारान्तस्य तत्त्वप्राच्छादेः, शकारान्तस्य विशादेः, षकारान्तस्य द्विष् षष् इत्यादेः तथा राज्यज्सृज्मृज्भ्राजादेश्च षकारो भवति ॥ 'षष्ठीनिर्दिष्टस्य' इत्यन्त्यस्य । धातोर्झसे परे नाम्नश्च रसे पदान्ते च । उभयोरादिशब्दात् व्रश्चभ्रस्जपरिव्राजानां ग्रहणम् षकारस्य षत्वकरणं डत्वनिषेधार्थं षस्य षत्वे कृते । 'षो डः' इति डकारो न भवति । यत्तु षस्य षत्वं डत्वनिषेधार्थं तदपि द्वेष्टि इत्यादावेव, न तु सर्वत्र । यथा द्विषधातोस्त्यादौ द्वेष्टीत्यादिरूपम् ॥ यद्वा छशषेति ग्रहणं व्यर्थमिति केचित् । प्रयोगदर्शनाभावात् । यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि व्यर्थम् । द्विट् द्विषौ द्विषः अद्वेट् इत्यादौ षस्य षत्वेऽपि डत्वस्य दर्शनात् । तथा द्वेष्टीत्यादावपि षस्य षत्वं न, किं तु केवलं 'ष्टुभिः ष्टुः' । अनेन रसे पदान्ते च जस्य षः । ततः सूत्रम्—'षो डः' षः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' । डः प्रथमैकवचनान्तम् । 'स्नोर्वि०' सिद्धम् । षकारस्य डकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ केचित्तु 'वावसाने' इत्यनेनैव षकारस्य 'ऋटुरषा मूर्धन्याः' इति स्थानसवर्णौ मूर्धन्यौ टकारडकारौ स्यातामिति । तथा भ्यां भिस् इत्यादावपि 'झबे जबाः' अनेन डत्वं स्यात् । अतः 'षो डः' इति सूत्रं व्यर्थमिति वदन्ति । तच्चिन्त्यम् । अनेन

---

१ युजेरसमासे ॥ युजेः सुटि नुम् स्यादसमासे । क्विन्प्रत्ययस्य कुः ॥ क्विन्नन्तस्य धातोः कवर्गान्तादेशः स्यादसमासे झलि पदान्ते च । प्रत्ययशब्दे प्रत्ययान्तस्य ग्रहणम् । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ युञ्जः । युञ्जम् युञ्जौ युजः । युजा युग्भ्याम् युग्भिः । युजे युग्भ्याम् युग्भ्यः । 'चोः कुः' 'खसे चपा०' 'किलात्' 'कषसंयोगे क्षः' युक्षु । हेयुङ् हेयुञ्जौ हेयुञ्जः । इत्यादि ॥ असमासे किम् । अश्वयुक्-अश्वयुग् अश्वयुजौ अश्वयुजः । अश्वयुजम् अश्वयुजौ अश्वयुजः । अश्वयुजा अश्वयुग्भ्याम् अश्वयुग्भिः इत्यादि ॥ समाध्यर्थस्य युजेर्न नुम् । युक् समाधिमानित्यर्थः ॥ दकारान्तो द्विपाद्शब्दः । द्विपात्-द्विपाद् द्विपादौ द्विपादः । द्विपादम् द्विपादौ ॥ पादः पत् ॥ पाद्शब्दस्य पदादेशः स्याच्छसादौ स्वरे परे तद्धिते ईपि ईकारे च ॥ द्विपदः । द्विपदा द्विपाद्भ्याम् द्विपाद्भिः । द्विपदे द्विपाद्भ्याम् द्विपाद्भ्यः । इत्यादि ॥ हेद्विपात्-हेद्विपाद् हेद्विपादौ हेद्विपादः ॥ अयं पाठः पाणिनीयानुसारी केनचिद्वर्धितः ॥

सौ धौ च 'हसेपः से०' इति सिलोपे कृते षस्य डः । 'वावसाने' इति डस्य वा टः । समो मस्य राट्शब्दे परेऽनुस्वाराभावो वक्तव्य इति केचित् । सम्राट् सम्राड् । भकारादौ षस्य डत्वे कृते 'स्वरहीनं०' ॥ सुपि—डत्वे कृते 'खसे चपा झसानाम्' 'स्वरहीनं०' सम्राट्सु ॥ क्वचित् हसादौ विभक्तौ पदान्तताश्रयणीया इति 'टोरन्त्यात्' इति ष्टुत्वाभावः । शेषं कण्ठ्यम् । एवं विराजादयः ॥ इति जान्ताः । एवं परिव्राट् परिव्राजौ परिव्राजः । [तरुवृट् तरुवृश्चौ तरुवृश्चः । ] यवभृट् यवभृज्जौ यवभृज्जः । इत्यादि ॥ अन्येपि भूभुक्—बलिभुक्—हुतभुक्—वणिक्—भिषक्—अश्वयुक्—प्रभृतयो जान्ताः । तत्र 'चोः कुः' ॥ एवम् ऋत्विक् । 'दिशाम्' इति कत्वम् । ऋतुषु ऋतुं वा यजति—ऋत्विक् ऋत्विजौ ऋत्विजः ॥ डान्ता अप्रसिद्धाः ॥

दकारान्तास्त्यद्तद्यद्एतद्शब्दाः ॥ एतेषां 'त्यदादेष्टेः' इत्यकारे कृते सर्वशब्दवद्रूपनयः ॥ स्तः । स् तः । त्यदादेस्तकारस्य सत्वं भवति सौ परे ॥ स्यः त्यौ त्ये । त्यम् त्यौ त्यान् । त्येन त्याभ्याम् त्यैः । त्यस्मै त्याभ्याम् त्येभ्यः । त्यस्मात् त्याभ्याम् त्येभ्यः । त्यस्य त्ययोः त्येषाम् । त्यस्मिन् त्ययोः त्येषु ॥ सः तौ ते । तम् तौ तान् । तेन ताभ्याम् तैः । तस्मै इत्यादि ॥ यः यौ ये । यम् यौ यान् । येन याभ्याम् यैः । यस्मै । इत्यादि ॥ एषः एतौ एते ॥ एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः ॥ उक्तस्य पुनर्भाषणमन्वादेशः । एतं एनम् एतौ-एनौ एतान्-एनान् । एतेन-एनेन एताभ्याम् एतैः । एतस्मै एताभ्याम् एतेभ्यः । एतस्मात् एताभ्याम् एतेभ्यः । एतस्य एतयोः-एनयोः एतेषाम् । एतस्मिन् एतयोः-एनयोः एतेषु ॥ एतेन व्याकरणमधीतमेनं छन्दोऽध्यापय ॥

दकारान्तास्त्यदादयस्तेषां 'त्यदादेष्टेरः स्यादौ' इत्यकारे कृते सर्वत्र सर्वशब्दवत् । सौ तु विशेषः । सूत्रम्—'स्तः' स् प्रथमैकवचनान्तम् । 'हसेपः' । तः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ त्यदादेस्तकारेति वृत्तिः सुगमा । अनेन सौ तस्य सः । स्यः त्यौ त्ये । शेषं सर्ववत् । न वरं ॥ घेरभावः ॥ एवं तद्यद्शब्दौ । एतद्शब्दस्य सर्वत्र टेरत्वे कृते सौ च 'स्तः' इति तस्य सत्वे च कृते 'किलात्षः सः०' 'स्रोर्विं०' । एषः एतौ एते । द्वितीयायां टौसोश्च विशेषः ॥ एतद् इति । एतद्शब्दस्य ॥ अन्वादेशे सति । उक्तस्य पुनः कथनमन्वादेश उच्यते । यथा एष राजा याति, एनं पश्येत्यन्वादेशः । तस्मिंश्च वक्ष्यमाणे द्वितीयाटौस्सु द्वितीयायां वचनत्रये टा इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एनादेशः तकारस्य वा नकार इत्यर्थः । अनेनोक्तवचनेषु वा एनादेशः । एतम् एनम् एतौ एनौ एतान् एनान् । एतेन एनेन एतयोः एनयोः ॥ शेषं सुकरम् ॥ इति दान्ताः ॥ अन्येऽपि बलभिद्[1]दिविषद्सर्वविद्वेदविद्सुहृद्प्रभृतयः ॥ गबखफान्ता अप्रसिद्धाः ॥

---

१ अस्य जान्तत्वाभावेऽपि षत्वादेशयोग्यतयोपपादनम् ॥

छकारान्तस्तत्त्वप्राछ्शब्दः 'छशषराजादेः षः' 'वावसाने' तत्त्वप्राट्-तत्त्वप्राड् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछम् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछा । 'छशषराजादेः षः' 'षो डः' तत्त्वप्राड्भ्याम् । तत्त्वप्राड्भिः । तत्त्वप्राछे तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राछोः तत्त्वप्राछाम् । तत्त्वप्राछि तत्त्वप्राछोः तत्त्वप्राट्सु ॥

छकारान्तस्तत्त्वप्राछ्शब्दः ॥ व्याकरणान्तरेषु 'च्छ्वोः शूडनुनासिके च' इति च्छस्य शत्वं विधाय शकारान्तस्तत्त्वप्राश् शब्द इत्युक्तमस्ति । तस्य रसे पदान्ते च संयोगान्तस्य लोपः इत्येकस्य छकारस्य लोपं विधाय ततः 'छशषराजादेः षः' इति षत्वे कृते । 'षो डः' 'वावसाने' सम्राज्वत् ॥ शेषं सुकरम् । छान्तोऽयम् ॥ ठान्ता अप्रसिद्धाः ॥

थकारान्तोऽग्निमथ्शब्दः । 'वावसाने' अग्निमत्-अग्निमद् अग्निमथौ अग्निमथः । हेअग्निमत्-हेअग्निमद् हेअग्निमथौ हेअग्निमथः ॥ अग्निमथम् अग्निमथौ अग्निमथः । अग्निमथा अग्निमद्भ्याम् अग्निमद्भिः । इत्यादि ॥

थकारान्तोऽग्निमथ्शब्दस्तस्य सौ धौ च सिलोपे कृते 'वावसाने०' इति 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ 'झबे जबाः' थस्य दः । 'स्वरहीनं०' । सुपि—'खसे चपा झसानाम्' थस्य तः 'स्वरहीनं०' । स्वरादौ 'स्वरहीनं०' ॥ एवं थान्ताः ॥

चकारान्तः प्रत्यच्शब्दः ॥ अञ्चेः पञ्चसु नुमागमो वक्तव्यः ॥ चोः कुः ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन ॥ 'स्तोः श्चुभिः श्चुः' 'संयोगान्तस्य लोपः' प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । हेप्रत्यङ् हेप्रत्यञ्चौ हेप्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ॥ अञ्चेरलोपो दीर्घश्च ॥ अञ्चतेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च ॥ प्रतीचः । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचा । 'चोः कुः' प्रत्यग्भ्याम् प्रत्यग्भिः । प्रतीचे प्रत्यग्भ्याम् प्रत्यग्भ्यः । प्रत्यक्षु ॥ एवं तिर्यचशब्दः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चम् तिर्यञ्चौ ॥

चकारान्तः प्रत्यच्शब्दः । 'अञ्चु गतिपूजनयोः' । अञ्चू प्रतिपूर्वः क्विप्प्रत्ययः ['प्रतिपूर्वस्यापूजार्थस्याञ्चतेर्नलोपो वक्तव्यः' । यद्वा ] 'नो लोपः' । 'इ यं स्वरे' क्विपः सर्वापहारी लोपः । प्रत्यच् इति सिद्धम् । तस्य पञ्चसु विशेषः । 'अञ्चेः पञ्चसु नुमागमो वक्तव्यः' ।

---

१ नाञ्चेः पूजायाम् ॥ पूजार्थस्याञ्चतेरुपधाभूतस्य नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । 'क्विन्प्रत्ययस्य कुः' 'संयोगान्तस्य लोपः' । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ । नलोपाभावादकारस्यालोपः । प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः । इत्यादि ॥ 'ङ्णोः कुक् टुक् वा शरि' प्रत्यङ्-प्रत्यङ्क्षु ॥ अधिकः पाठः ॥

२ अस्य प्रामाणिकत्वे तिर्यच् उदच् प्रभृतिषु नकारस्य लोपो न प्राप्नोति ।

अञ्चु गतिपूजनयोरित्यस्य धातोः स्यादिषु पञ्चसु नुमागमो वक्तव्यः । 'मिदन्त्यात्स्वरात्परो वक्तव्यः' । उकार उच्चारणार्थः । पञ्चसु वचनेषु त्य अग्रे न । सौ धौ च प्रत्यन्च् इति स्थिते । 'स्तोः श्चुभिः श्चुः' इति नस्य ञः । 'हसेपः०' इति सेर्लोपः । 'संयोगान्तस्य' इति चलोपः ॥ सूत्रम्—'चोः कुः' चोरिति चुशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः । 'स्रोर्वि०' । कुः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ चवर्गस्य वृत्तिर्गम्या । न वरम् । यथासंख्येनेति यथाक्रमेण चस्य कः, छस्य खः, जस्य गः, झस्य घः, ञस्य ङ इत्यर्थः । अनेन ञस्य ङः । प्रत्यङ् ॥ केचित्त्वत्र 'स्तोः श्चुभिः श्चुः' इति नाद्रियन्ते । यतः 'संयोगान्तस्य०' इति चलोपे 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति पुनर्ञकारस्य नकार एव । ततः 'चोः कुः' इत्यपि न भवति किंतु प्रत्यन् इति सिद्ध्यति ॥ द्विवचनादौ तु नुमागमे कृते 'नश्चापदान्ते०' 'स्वरहीनं०' । प्रत्यञ्चौ प्रत्यञ्चः । यद्वा प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ । शसादौ स्वरादौ तु विशेषः ॥ सूत्रम्—'अञ्चेरलोपो दीर्घश्च' अञ्चेरिति अञ्चिशब्दस्य षष्ठ्येकवचनान्तम् । इति 'ङस्य' इत्यलोपः । 'स्रोर्वि०' । अस्य अकारस्य लुक्(ऽ)अलुक्(ऽ)प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः' 'नामिनो रः' । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । च प्रथमैकवचनान्तम् । 'विसर्जनीय०' 'स्तोः श्चुभिः श्चुः' ॥ अञ्चतेर्धातोः शसादौ स्वरे परे, तद्धितसंबन्धिनि प्रत्यये, ईपि प्रत्यये च, 'ईमौ' इति सूत्रेण कृते ईकारे च परे अकारस्य लोपो भवति । तद्धिते प्रतीचीनः प्रतीच्यः । ईपि प्रतीची । इकारे प्रत्यये प्रतीची प्रत्यञ्चि । अत्र तु शसादौ स्वरे । अनेन प्रति अच् इति विश्लेषे कृते अकारस्य लोपः । ति इत्यस्य दीर्घः । भकारादौ 'चोः कुः' इति ककारे कृते 'झबे जबाः' कस्य गः । 'स्वरहीनं०' । सुपि—'चोः कुः' 'किलात्षः सः०' 'कषसंयोगे क्षः' । शेषं कण्ठ्यम् ॥ पूजार्थस्य तु अञ्चतेर्नलोपो न । तेन प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः । प्रत्यञ्चे इत्यादि ॥ एवं प्राङ् प्राञ्चौ प्राञ्चः । प्राञ्चं प्राञ्चौ प्राञ्चः । प्राञ्चा प्राङ्भ्याम् प्राङ्भिः ॥ गत्यर्थस्य तु शसादौ प्राचः प्राचा ॥ तिर्यच् उदच् शब्दयोः पञ्चसु प्रत्यच्शब्दवत् ॥

**तिरश्चादयः** ॥ तिरश्चादयः शब्दा निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च ॥ तिरश्चः । तिरश्चा तिर्यग्भ्याम् तिर्यग्भिः । तिर्यक्षु । हेतिर्यङ् हेतिर्यञ्चौ हेतिर्यञ्चः ॥ उदीचः । उदीचा उदग्भ्याम् उदग्भिः । उदक्षु । हेउदङ् हेउदञ्चौ हेउदञ्चः ॥ एवं सम्यच्शब्दः । सम्यङ् सम्यञ्चौ सम्यञ्चः । सम्यञ्चम् सम्यञ्चौ समीचः । समीचा इत्यादि ॥ सध्र्यङ् सध्र्यञ्चौ सध्र्यञ्चः ।

---

१ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्याद्वप्रत्ययान्तेऽञ्चतौ परे ॥ अमुं अञ्चतीति विग्रहे अदसष्टेरद्र्यादेशः ॥ अदसोऽसेर्दादु दो मः ॥ अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः स्यात् । अदमुयङ् अमुद्र्यङ् अमुमुयङ् अदद्र्यङ् ॥ परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥ विष्वद्र्यङ् देवद्र्यङ् ॥ उदङ् उदञ्चौ उदञ्चः । उदञ्चम् उदञ्चौ ॥ उद ईत् ॥ उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेरकारस्येकारादेशो भवति शसादौ स्वरे परे तद्धिते ईपि इकारे च इति प्रक्षिप्तं पाणिनीयानुसारिचन्द्रिकास्थम् ॥

**हेसध्र्यङ् हेसध्र्यञ्चौ हेसध्र्यञ्चः ॥ सध्र्यञ्चम् सध्र्यञ्चौ सध्रीचः । सध्रीचा सध्र्यग्भ्यामित्यादि ॥**

शसादौ तु विशेषः । सूत्रम्—'तिरश्चादयः' तिरश्च आदिर्येषां ते तिरश्चादयः प्रथमाबहुवचनान्तम् । 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विं०' ॥ तिरश्चादय इति । तिर्यच्उदच्सध्र्यच्सम्यच् शब्दानां यथाक्रमं तिरश्च् उदीच् सध्रीच् समीच् इत्यादेशा निपात्यन्ते शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । तद्धिते यथा तिरश्चीनः । ईपि तिरश्ची । ईकारे तिरश्ची तिर्यञ्चि । अत्र अनेन शसादौ स्वरे परे तिर्यच् शब्दस्य तिरश्च्, उदच् शब्दस्य उदीच् । 'स्वरहीनं०' भकारादौ । 'चोः कुः' 'झबे जबाः' । सुपि च 'चोः कुः' 'किलात्षः सः' इति प्रत्यग्वत् । इत्यादयश्चान्ताः ॥ टकारान्ता अप्रसिद्धाः ॥

**तकारान्तो मरुच्छब्दः । 'हसे पः सेर्लोपः' 'वावसाने' मरुत्-मरुद् मरुतौ मरुतः । हेमरुत्-हेमरुद् हेमरुतौ हेमरुतः ॥ मरुतम् मरुतौ मरुतः । मरुता मरुद्भ्याम् मरुद्भिः । इत्यादि । एवं अग्निचित्प्रभृतयः । अग्निचित्-अग्निचिद् अग्निचितौ अग्निचितः । हेअग्निचित्-हेअग्निचिद् हेअग्निचितौ हेअग्निचितः ॥**

तकारान्तो मरुत् शब्दस्तस्य सौ धौ च सिलोपे कृते 'वावसाने' तकारस्य वा दकारः । भकारादौ 'झबे जबाः' तस्य दः 'स्वरहीनं०' । स्वरादौ सुपि च 'स्वरहीनं०' ॥ एवमग्निचित्प्रभृतयोऽपि साध्याः । अग्निं चिनोति इन्धनैर्वर्धयतीति अग्निचित् ॥

**तकारान्त उ(ऋ)कारानुबन्धो महच्छब्दः ॥ व्रितो नुम् ॥ उश्च ऋश्च वृ । वृ इत् यस्य सः व्रित् तस्य व्रितः नुम् । उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु [ शौ च[1] ] ॥**

तकारान्त उ (ऋ)कारानुबन्धो महच्छब्दस्तस्य पञ्चसु विशेषः । 'मह पूजायाम्' । 'द्रुहिमहिपृषिभ्यः कत्' । एभ्यः कित् अत्प्रत्ययो भवति । ऋकार इत् । उकारानुबन्धित्वं तु चिन्त्यम् । मह्यत इति महत् । कार्यार्थमुच्चरितस्य वर्णस्यानुबन्ध इति संज्ञा । यद्वा उच्चरितप्रध्वंसिनो ह्यनुबन्धाः । सूत्रम्—'व्रितो नुम्' ॥ उश्च ऋश्च वृ वृ इत् यस्य स व्रित् तस्य व्रितः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' । नुम् प्रथमैकवचनान्तम् । 'हसेपः०' 'हबे' 'उ ओ' सिद्धम् । उकारानुबन्धस्य वतुप्रत्ययादेः, ऋकारानुबन्धस्य च शतृप्रत्ययादेः नुमागमो भवति पुंसि पुंलिङ्गे पञ्चसु वचनेषु परेषु । शौ चेति नपुंसके जस्शसोः स्थाने जाते शौ च परे । अनेन पञ्चसु स्यादिषु तकारात्पूर्वं न ॥

**न्सम्महतोऽधौ दीर्घः शौ च ॥ न्सन्तस्याप्शब्दस्य[2] महच्छब्दस्य च दीर्घो भवति पञ्चसु परेषु धिवर्जितेषु शौ च परे ॥ 'संयोगान्तस्य लोपः' महान् ।**

---

१ टीकां दृष्ट्वा वर्धितं परं व्यर्थमेव 'नुमयमः' इत्यनेनैव सिद्धत्वात् ॥ २ न्सन्तस्येत्यागमजनकारयुक्तसान्तस्य ज्ञेयम् । तेन कंस्शब्दस्य क्विबन्तस्य न दीर्घः । संयोगान्तस्य लोपः । कन् कंसौ कंसः । कंसम् कंसौ कंसः । कंसा कन्भ्याम् कन्भिः कन्सु । हेकन् ॥ शोभना आपो यस्मिन्नसौ स्वाप् स्वाब् स्वापौ स्वापः । स्वाम्पि तडागानि । इत्यधिकम् ॥

**'नश्चापदान्ते झसे' महान्तौ महान्तः । हेमहन् हेमहान्तौ हेमहान्तः । महान्तम् महान्तौ महतः । महता महद्भ्याम् महद्भिः । महते महद्भ्याम् महद्भ्यः । इत्यादि ॥**

सूत्रम्—'न्सम्महतोऽधौ दीर्घः शौ च' न्स च अप् च महच्च न्सम्महत् तस्य षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' न्सम् अग्रे महत् । 'न्मे न्मा वा' पस्य मः । 'स्वरहीनं०' । न धिः अधिस्तस्मिन् अधौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । स्वरहीनं०' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्विं०' । 'शौ' इति शिशब्दस्य सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । च प्रथमैकवचनान्तम् । 'अव्यया०' ॥ न्संतस्येति । सुहिन्स्शब्दं विहाय नुमागमसहितसकारान्तस्य, तथा अप्शब्दस्य जलवाचिनो नित्यं बहुवचनान्तस्य, तथा महच्छब्दस्य उकारानुबन्धस्य पुंसि पञ्चसु वचनेषु धिवर्जितेषु, नपुंसके शौ च दीर्घो भवति ह्रस्वदीर्घप्लुता विधीयमानाः स्वरस्थाने भवन्तीति न्सादीनां व्यञ्जनसंनिकृष्टस्य स्वरस्य दीर्घो भवतीत्यर्थः ॥ अप्शब्दो बहुत्व एव । तत्र असमासान्तस्य जसि दीर्घो नान्यत्र । समासान्तस्य पञ्चस्वेव इयं विवक्षा । यथा शोभना आपो यत्र स स्वाप् देशः स्वाप् स्वापौ स्वापः । स्वापं स्वापौ इति । नपुंसके शौ स्वांपि सरांसि इति ॥ अनेन धिवर्जितेषु पञ्चसु दीर्घः । धौ तु नुमागम एव न दीर्घः । 'हसेपः०' 'संयोगान्तस्य०' इति सौ धौ च तकारस्य लोपः । शेषेषु—'नश्चापदान्ते झसे' 'स्वरहीनं०' । भकरादौ—'झबे जबाः' 'स्वरहीनं' ॥ शेषं सुगमम् ॥

**तकारान्त उकारानुबन्धो भवच्छब्दः ॥ अत्वसोः सौ ॥ अत्वसोः सौ इति धातोर्नेष्यते । अत्वन्तस्यासन्तस्य[1] च दीर्घो भवति धिवर्जिते सौ परे । 'संयोगान्तस्य' 'हसेपः' । भवान् भवन्तौ भवन्तः । हेभवन् हेभवन्तौ हेभवन्तः । भवन्तम् भवन्तौ भवतः । भवता भवद्भ्याम् भवद्भिः । भवते भवद्भ्याम् भवद्भ्यः । भवतः भवद्भ्याम् भवद्भ्यः । भवतः भवतोः भवताम् । भवति भवतोः भवत्सु ॥ ऋकारानुबन्धस्य भवत्शब्दस्य नुमागम एव । अत्वन्तत्वाभावान्न दीर्घः । भवन् भवन्तौ भवन्तः । हेभवन् हेभवन्तौ हेभवन्तः भवन्तम् भवन्तौ भवतः । भवता भवद्भ्याम् भवद्भिः । भवत्सु । इत्यादि ॥ एवं पचन्शब्दः । पचन् पचन्तौ पचन्तः । हेपचन् हेपचन्तौ हेपचन्तः । पचन्तम् पचन्तौ पचतः । पचत्सु । इत्यादि[2] ॥**

भा दीप्तौ । 'भातेर्डवतुः' । यतः—'भातेस्तु डवतुः परः । भवान् पूज्ये युष्मदर्थे' इति

---

१ असन्तस्येत्यसुप्रत्ययान्तस्येति विवक्षितम् । तेन पिण्डं ग्रसतीति पिण्डग्रः पिण्डग्रसौ पिण्डग्रसः । पिण्डग्रसम् पिण्डग्रसौ पिण्डग्रसः । इत्यादि ॥ २ द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेधः पुंलिङ्गे नित्यं वक्तव्यो नपुंसके वा शौ च ॥ दधत्-दधद् दधतौ दधतः । दधतम् दधतौ दधतः । दधता दधद्भ्याम् दधद्भिः । इत्यादि ॥ नपुंसके दधत्-दधद् दधती दधति दधन्ति । जक्ष जागृ दरिद्रा शास् दीधी वेवी चकास् एते जक्षादयः इत्यधिकम् ॥

उकारानुबन्धो भवच्छब्दः । तस्य पञ्चसु—'त्रितो नुम्' इति नुमागमः । ततः सूत्रम्—'अत्वसोः सौ' अतुस् च अस् च अत्वसौ तयोः अत्वसोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । सौ इति सिशब्दस्य सप्तम्येकवचनम् । 'ङे रौ ङित्' ॥ अत्वन्तस्येति । उकारानुबन्धस्य असन्तस्येति । नुमागमरहितस्यासन्तस्य शब्दस्य धिवर्जिते सौ परे दीर्घो भवति । अनेन सौ दीर्घो भवति, धौ न, 'धिवर्जिते' इति विशेषणात् ॥ धौ 'हसेपः से०' 'संयोगान्तस्य लोपः' हे भवन् । अन्यत्र—'नश्चापदान्ते०' ॥ स्वरादौ सुपि च 'स्वरहीनं०' । भकारादौ 'झबे जबाः' । शेषं सुकरम् ॥ एवम् अष्ठीवत्–चक्रीवत्–कक्षीवत्–शब्दाः ॥ भू 'शतृशानौ तिपूतेवत् क्रियायाम्' 'अप् कर्तरि' गुणः 'ओ अव्' 'स्वरहीनं' 'अदे' 'स्वरहीनं०' ऋकारानुबन्धो भवतृशब्दः । भवत् इत्यस्य ऋकारानुबन्धत्वात् 'त्रितो नुम्' इति नुमागम एव स्यात् । परम् अत्वन्तत्वाभावात् 'अत्वसोः सौ' इति दीर्घत्वं न । शेषं सुगमम् । एवं पचत् शब्दः । पचत् शब्दोऽपि रित् ऋकारानुबन्ध इत्यर्थः । एवम् अन्येऽपि शतृप्रत्ययान्ता ऋकारानुबन्धा ज्ञेयाः ॥ इति तान्ताः ॥ कपान्ता अप्रसिद्धाः ॥

**शकारान्तो विश्शब्दः । 'छशषराजादेः षः' इति षत्वम् । 'षो डः' इति डत्वम् । 'वावसाने' चपा जबाश्च । विट्–विड् विशौ विशः । हेविट् हेविड् हेविशौ हेविशः ॥ विशम् विशौ विशः । विशा विड्भ्याम् विड्भिः । विट्सु इत्यादि ॥**

शकारान्तो विश् शब्दः । तस्य 'छशषराजादेः षः' इति षत्वे कृते । 'षो डः' 'वावसाने' । स्वरादौ 'स्वरहीनं०' ॥ सुपि 'खसे चपा झसा (पा) नाम्' सम्राज्शब्दवत् । विट् विड् इत्यादीनि रूपाणि ॥ विड् मनुष्यो वैश्यश्च ॥ इत्यादयः शान्ताः ॥

**षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । षष् जस् इति स्थिते । 'जस्शसोर्लुक्' 'षो डः' 'वावसाने' । षट् षड् षड्भिः षड्भ्यः षड्भ्यः । 'ष्णः' इति नुट् । 'षो डः' षड् नाम् इति स्थिते ॥ 'ड् णः' ॥ ड् णः । संख्यासंबन्धिनो डकारस्य णत्वं भवति नामि परे ॥ 'ष्टुभिः ष्टुः' षण्णाम् । षट्सु क्वचिदपदान्तेऽपि पदान्तताश्रयणीया ॥**

षकारान्तः षष् शब्दो नित्यं बहुवचनान्तस्त्रिषु लिङ्गेषु सदृशरूपः । 'जस्शसोर्लुक्' 'षो डः' 'वावसाने' । षट् षड् । पुनरपि षट् षड् । भकारादौ 'षो डः' इति डत्वे कृते 'स्वरहीनं०' ॥ आमि—'ष्णः' इति नुमागमः । 'षो डः' षड् नाम् इति स्थिते सति सूत्रम्—'ड्णः' ड् षष्ठ्येकवचनान्तम् । सांकेतिकम् । णः इति प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ संख्या० । वृत्तिः कण्ठ्या । अनेन नामि परे डकारस्य णकारः । 'ष्टुभिः ष्टुः' 'स्वरहीनं०' ॥ सुपि 'षो डः' 'खसे चपा झसा(पा)नाम्' ततः टकारस्य सकारसंयोगे 'ष्टुभिः ष्टुः' इति प्राप्तौ 'टोरन्त्यात्' इति सूत्रेण 'ष्टुभिः ष्टुः' इति सूत्रेण सस्य षत्वनिषेधः ॥ ननु अत्र पदान्तत्वाभावात् 'टोरन्त्यात्' इति सूत्रं कथं संभवति अत्राह—क्वचिदिति । क्वचित्प्रयोगान्तरे अपदान्तेऽपि पदान्तता आश्रयणीया वक्तव्या इति भावः ॥

दोष्शब्दस्य भेदः ॥ दोषां रः ॥ दोष्सजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च ॥ 'हसेपः' 'स्रोर्विसर्गः' दोः दोषौ दोषः। हेदोः हेदोषौ हेदोषः ॥ दोषम् दोषौ। [ शसादावन्नन्तता वा वक्तव्या। ] दोषः-दोष्णः। दोषा-दोष्णा दोर्भ्यां-दोषभ्याम् दोर्भिः-दोषभिः। दोषे-दोष्णे दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोषोः-दोष्णोः दोषां दोष्णाम्। वेङ्योः दोष्णि-दोषणि दोषि दोषोः-दोष्णोः। दोर्षु-दोःषु-दोषसु। सप्तमीबहुवचने कृत्रिमत्वाद्विसर्गः ॥ एवं सजुष्शब्दः ॥ सजुषाशिषौ रसे पदान्ते च दीर्घो वक्तव्यः ॥ दोषाम् । सजूः सजुषौ सजुषः। हेसजूः हेसजुषौ हेस-जुषः। सजुषम् सजुषौ सजुषः। सजुषा सजूर्भ्याम् सजूर्भिः। सजूर्षु-सजूःषु। इत्यादि ॥

दोष्शब्दो भुजार्थवाचकस्तस्य भेदः ॥ सूत्रम्—'दोषां' दोषां षष्ठीबहुवचनान्तम्। 'स्वरहीनं०' 'मोऽनुस्वारः' एकमिदं सूत्रम् ॥ अथवा 'दोषां रः' इति द्विपदं सूत्रम्। दोष् सजुष् आशिष् हविष् धनुष् सर्पिष् शब्दानां षकारस्य रसे पदान्ते च रेफो भवति। सकारस्य स्थाने जातस्य षकारस्येति व्याख्येयम्। अनेन रसे पदान्ते च रेफः। सौ धौ च—'हसेपः से०' 'स्रोर्वि०' ॥ द्विवचनादौ 'स्वरहीनं०' ॥ दोः दोषौ दोषः । दोषं दोषौ। शसादौ तु विशेषः। 'शसादौ स्वरे परे नान्तता वा वक्तव्या' । अस्यार्थः । दोष्शब्दस्य शसादौ स्वरे परे नान्तत्वं भवति वा विकल्पेन अन्ते नकारागमो भवतीत्यर्थः । दोष् न् इति स्थिते । 'ऋर्नो णो०' पक्षे 'स्वरहीनं०' । दोष्णः दोषः दोष्णा दोषा । भकारादौ 'दोषां रः' जलतुम्बिका० । दोर्भ्यां दोर्भिः। यद्वा 'दोषां रः' 'रायपो द्विः' 'झबे जबाः' 'स्वरहीनं०' दोर्भ्यां दोर्भिः इत्यादि । केचित्तु—'शसादावनन्तता वा वक्तव्या' इत्येवं पठन्ति, स्वर इति पदं न पठन्ति तन्मते स्वरादौ हसादौ च सर्वत्र विकल्पेन अन् आगमे कृते स्वरादौ 'अल्लोपः स्वरे' 'ऋर्नो णो०' 'स्वरहीनं०'। द्वितीयपक्षे केवलं 'स्वरहीनं०' दोष्णः दोषः । दोष्णा दोषा ॥ भकारादौ एकत्र अन् आगमे कृते 'स्वरहीनं०' 'नाम्नो नो०' दोषभ्यां । द्वितीयपक्षे 'दोषां रः' जलतुम्बि० । दोर्भ्याम् ॥ एवं दोषभिः दोर्भिः। दोषे 'स्वरहीनं०' दोष्णे शसादावनन्तता। ततो 'अल्लोप स्वरे०' 'ऋर्नो णो०' 'स्वरहीनं०'॥ दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः दोषः दोष्णः दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः दोषः दोष्णः दोषोः दोष्णोः दोषां दोष्णां । 'वेङ्योः' दोषि दोष्णि दोषि। दोषोः दोष्णोः सुपि अनन्तत्वे कृते 'नाम्नो नो लोप०' दोषसु पक्षे 'दोषां रः' इति रत्वे। 'किलात्षः सः०' दोर्षु। केचित्तु 'दोषां रः' 'स्रोर्विसर्गः' 'विसर्जनीयस्य०' दोस्सु इत्यपि साधयन्ति। केचित्तु दोःषु इति पठन्ति ततो यथासंभवं साध्यम् ॥ दोष् शब्दः पुंक्लीबलिङ्गः। क्लीबे तु

१ दोष् सु इति स्थिते दोषाम् इति विसर्गः। शषसे वा इति सत्वे कृते । किलात् इति षत्वम्। नुम्-विसर्जनीयशसव्यवधानेऽपि किलादिति सस्य षत्वं वाच्यम्। कृताकृतप्रसङ्गी यो विधिः स नित्यः।

दोषी दोषि ॥ जुषी प्रीतिसेवनयोः । जोषणं जुट् मिलनं सह तेन वर्तते इति सजूर्मित्रम् । 'सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः' इति केचिन्नेच्छन्ति । 'दोश्रां रः' इति रत्वं विधाय 'ष्वोर्विहसे' इत्यनेनैव सिद्धत्वात् । इति षान्ताः ॥

**सकारान्तः पुंस्शब्दः ॥ पुंसोऽसुङ् ॥ पुंस्शब्दस्य असुङादेशो भवति पुंसि पञ्चसु परेषु शौ च ॥ ङकारोऽन्त्यादेशार्थः । उकारो नुम्विधानार्थः ॥ 'मः स्वरे' पुमस् सि इति स्थिते । 'व्रितो नुम्' 'न्सम्महतः' इति दीर्घः । 'संयोगान्तस्य लोपः' 'हसेपः सेर्लोपः' पुमान् पुमांसौ पुमांसः । हे पुमन् हे पुमांसौ हे पुमांसः । पुमांसम् पुमांसौ पुंसः । पुंसा । पुंसि पुंसोः । पुंस् सु इति स्थिते ॥**

सकारान्तः पुंस्शब्दः । पुनातीति पुमान् । 'पुनातेः सुक् नुम् च' इति सुप्रत्ययो नुमागमश्च 'प्वादेर्ह्रस्वः' । अथवा—पाति त्रिवर्गं पुमान् 'पातेर्डुम्सुः' इति डुम्सु प्रत्ययः ॥ पुंस् शब्दस्तस्य पञ्चसु विशेषः । सूत्रम्—'पुंसोऽसुङ्' पुंसः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' असुङ् प्रथमैकवचनान्तम् । 'हसेपः०' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' ॥ पुंस्शब्दस्य पञ्चसु स्यादिषु परेषु असुङ् इत्ययमादेशो भवति । ङकारोऽन्त्यादेशार्थः । उकारः उच्चारणार्थः । अनेनान्त्यस्य सकारस्य अस् इत्यादेशः । पुमस् इति स्थिते । 'व्रितो नुम्' इति नुमागमः । पञ्चसु । 'न्सम्महत०' इति धिवर्जम् अन्यत्र दीर्घः । 'सौ धौ च' 'हसेपः०' इति सिलोपः 'संयोगान्तस्य०' इति सलोपः । अग्रे द्वितीयाद्वित्वं यावत् 'नश्चापदान्ते०' 'स्वरहीनं०' पुमान् पुमांसौ पुमांसः । हे पुमन् हे पुमांसौ हे पुमांसः । पुमांसम् पुमांसौ । शसादौ 'नश्चापदान्ते०' 'स्वरहीनं०' पुंसः पुंसा । भकारादौ 'संयोगान्तस्य०' 'नश्चापदान्ते झसे' ॥ एवं सुपि 'संयोगान्तस्य०' 'नश्चापदान्ते' पुंसु ॥

**असंभवे पुंसः ककसौ ॥ असंभवेऽर्थे पुंसशब्दस्य कगागमो भवति सुपि परे ॥ ककारः कित्कार्यार्थः । अकार उच्चारणार्थः ॥ स्कोराद्योश्च संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ 'किलात्' इति सस्य षत्वम् । 'कषसंयोगे क्षः' पुंक्षु ॥**

अथ रूपान्तरं साधयति—असंभव इति । असंभवे वैदिकप्रयोगे । असंभवो नाम वेदान्तैकवेद्यस्य आत्मनो बहुत्वासंभवः । न विद्यते आत्मनो ब्रह्मणो बहुत्वसंभवो यत्र सोऽसंभवः । कुतः 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किंचन' इति वेदान्तवेद्यस्य वेदान्तशास्त्रेण वेद्यस्य ज्ञेयस्यात्मनो बहुत्वासंभवः ॥ अथवा—नास्ति संभवो बुद्धेः सूत्रादेश्च

---

१ रेफः स्वरपरं वर्णं दृष्ट्वाऽऽरोहति तच्छिरः । पुरः स्थितं यदा पश्येदधः संक्रमते स्वरम् ॥ अनुस्वारो नमस्यैव यावत्तद्देशयोगतः । मूर्ध्नि सङ्गं लभेत्तावन्नेक्षते पुरतः स्वरम् ॥ इत्यधिकं दृश्यते क्वचित् ॥

२ ननु पुंक्ष्वित्यत्र मकार एव संयोगादिर्न सकारस्तर्हि कथं लोपः । पुंक्षु अत्र 'स्कोराद्योश्च' इत्यनेन संयोगाद्यस्य लोपे प्राप्ते मकारस्यैव लोपो भवेन्न तु सकारस्य । आदित्वाभावात् । संयोगाद्यस्तु पुंस् इत्यत्र शिरसि मकार एव । तस्मादादित्वं द्विविधम् । मुख्यमापेक्षिकं च । अत्र सस्यादित्वमापेक्षिकम् । पुंस् क इत्यत्र ककारापेक्षया सकार आदिः सकारापेक्षया मकार आदिरिति सकारस्यैव लोपः । इत्यधिकम् ॥

यत्र सोऽसंभवस्तस्मिन् वाच्ये सति साविति सुपि परे कगागमो भवति ॥ अनेन पुंस् अग्रे क् कित्वादन्ते । 'स्कोराद्योश्च' इति सलोपः । 'किलात्षः सः०' 'कषसंयोगे क्षः' पुंक्षु इति सिद्धम् । परमपुरुषे पुङ्क्षु, लौकिकेषु पुरुषेषु पुंसु ॥

एवं विद्वस्शब्दः । विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् । विद्वांसम् विद्वांसौ ॥ वसोर्व उः ॥ वसोः संबन्धी वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च ॥ विदुषः । विदुषा । 'वसां रसे' इति दत्वम् । विद्वद्भ्याम् विद्वद्भिः । विदुषे विद्वद्भ्याम् विद्वद्भ्यः । विद्वत्सु । इत्यादि ॥

विद्वसुशब्दस्य पञ्चसु पूर्ववत् 'न्रितो नुम्' 'नसम्महतो०' दीर्घः । 'संयोगान्तस्य लोपः' 'हसेपः' विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् । विद्वांसम् विद्वांसौ । शसादौ तु विशेषः— 'वसोर्व उः०' वसोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्नोर्वि'० 'नामिनोरः' जलतुम्बिका० । वः प्रथमैकवचनान्तम् । 'स्नो०' उः प्रथमैकवचनं सांकेतिकम् । 'आदवे लोपश्' वसोरिति 'कसुकानौ णबेवत्' 'विदेर्वा वसुः' इत्यादिसूत्रोत्पन्नो यो वसुप्रत्ययस्तस्य संबन्धी वकारः सस्वर उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ये प्रत्यये ईपि च परे । तद्धिते वैदुष्यम् । ईपि विदुषी ॥ अत्रानेन शसादौ स्वरे सर्वत्र व इत्यस्य उः 'किलात्षः सः०' 'स्वरहीनं०' । हसादौ 'वसां रसे' इति सस्य दत्वे कृते भकारादौ 'स्वरहीनं०' सुपि 'खसे चपा झसानाम्' दस्य तः । स्वरहीनं०' ॥

एवं तस्थिवस्शब्दः[1] । तस्थौ इति तस्थिवान् । ष्ठा गतिनिवृत्तौ । 'आदे ष्णः स्नः' स्था । क्वसुप्रत्ययः । वस् । स च णपूवत् । तेन द्वित्वम् । 'ह्रस्वः' 'शसात्खपा०' इति पूर्वसस्य लोपः । 'झपानां जबचपाः' इति थस्य तः [ 'स्थामी' इति आकारस्य ईकारः ][2] । तस्थिवस् इति जाते स्यादिः । तस्थिवान् तस्थिवांसौ । तस्थिवांसः तस्थिवांसम् तस्थिवांसौ ॥ शसादौ 'वसोर्व उः' इति वस्य उत्वे कृते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति इकारस्य आकार

---

१ एवं तस्थिवस्प्रभृतयः । तस्थिवान् तस्थिवांसौ तस्थिवांसः । तस्थिवांसम् तस्थिवांसौ । निमित्ताभावे नैमित्तिकस्याप्यभावः । इटो वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे तन्निवृत्तिः । आतोऽनपि इत्यालोपः । तस्थुषः । तस्थुषा तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थिवत्सु । इत्यादि हेतस्थिवन् हेतस्थिवांसौ हेतस्थिवांसः ॥ सकारान्तः शुश्रुवस्शब्दः । शुश्रुवान् शुश्रुवांसौ शुश्रुवांसः । शुश्रुवांसम् शुश्रुवांसौ । शुश्रुवस् शस् इति स्थिते । 'वसोर्व उः' य्वोर्धातोरियुवौ स्वरे स्वरहीनं परेण संयोज्यम् । 'किलात्' इति षत्वम् । शुश्रुवुषः । शुश्रुवुषा । वसां रसे खसे चपा शुश्रुवत्सु । हेशुश्रुवन् हेशुश्रुवांसौ हेशुश्रुवांसः ॥ एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसम् पेचिवांसौ । शसि वस्योत्वे कृते यदागमत्वादिड्लोपः । पेचुषः । पेचुषा पेचिवद्भ्याम् । इत्यादि ॥ सकारान्तो जग्मिवस्शब्दः । जग्मिवान् जग्मिवांसौ जग्मिवांसः । जग्मिवांसम् जग्मिवांसौ । इटः वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे कृते इटोऽपि निवृत्तिः । 'गमां स्वरे' इन्यनेन उपधालोपः । जग्मुषः । जग्मुषा जग्मिवद्भ्याम् । जग्मिवत्सु । इत्यादि ॥ जगन्वान् जगन्वांसौ जगन्वांसः । जगन्वांसम् जगन्वांसौ । शसि वस्योत्वे कृते वकारनिमित्तस्य 'मोनो धातोः' इति नकारस्यापि मकारः । गमां स्वरे इति उपधालोपः । जग्मुषः । जग्मुषा जगन्वद्भ्याम् । इत्यादि । एवं जघन्वान् जघन्वांसौ जघन्वांसः । जघन्वांसम् जघन्वांसौ जघ्नुषः । जघ्नुषा जघन्वद्भ्याम् । इत्यादि ॥ अधिकम् मूलपुस्तके नास्ति ॥

२ अयं कोष्ठकान्तर्गतपाठष्टीकाकर्तुः प्रमादजः । 'कृतद्वित्वानामेकस्वराणामादन्तानां च घसेः क्वसोरिड्वाच्यः' इत्यनेन क्वसोर्विशेषेणेड्विधानस्य जागरूकत्वात् ॥

एव । ततः 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'किलात्षः सः०' तस्थुषः तस्थुषा तस्थिवद्भ्यामित्यादि ॥ एवं गत इति जग्मिवान् जग्मिवांसौ जग्मिवांसः । जग्मिवांसम् जग्मिवांसौ जग्मुषः । जग्मुषा जग्मिवद्भ्यामित्यादि ॥ एवं पेचिवान् पेचिवांसौ पेचिवांसः।पेचिवांसम् पेचिवांसौ पेचुषः । पेचुषा पेचिवद्भ्यामित्यादि । उषा(खा)स्रत्पर्णध्वसादीनां तु रसे पदान्ते च 'वसां रसे' इति दत्वम् । स्वरादौ 'स्वरहीनं०' उषा(खा)स्रत् उषा(खा)स्रसौ उषा(खा)स्रसः उषा(खा)स्रद्भ्याम् उषा(खा)स्रद्भिः उषा(खा)स्रत्सु । एवं पर्णध्वत् पर्णध्वसौ पर्णध्वसः इत्यादि ॥

सकारान्तः सुवचस्शब्दः । 'अत्वसोः सौ' सुवचाः सुवचसौ सुवचसः । हेसुवचः हेसुवचसौ हेसुवचसः ॥ सुवचसम् सुवचसौ । इत्यादि ॥ एवं चन्द्रमस्प्रभृतयः । 'अत्वसोः सौ' 'हसेपः सेर्लोपः' चन्द्रमाः चद्रन्मसौ चन्द्रमसः । हेचन्द्रमः हेचन्द्रमसौ हेचन्द्रमसः । चन्द्रमसम् चन्द्रमसौ चन्द्रमसः । चन्द्रमसा चन्द्रमोभ्याम् चन्द्रमोभिः । चन्द्रमस्सु-चन्द्रमःसु । इत्यादि ॥

सकारान्तः सुवचस्शब्दः । वच परिभाषणे सुपूर्वः । 'वचादेरस्' 'स्वरहीनं०' नामत्वात्स्यादयः । ततः सौ परे 'अत्वसोः सौ' इति दीर्घः 'हसेपः से०' 'स्रोर्विं०' । धौ 'हसेपः से०' 'स्रोर्विं०' । स्वरादौ सुपि च सर्वत्र 'स्वरहीनं०' भकारादौ 'स्रोर्विं०' 'हबे' 'उ ओ' शेषं सुकरम् । एवं चन्द्रमस् शब्दः । चन्द्रमाः चन्द्रमसौ चन्द्रमसः । चन्द्रमसा चन्द्रोभ्यां चन्द्रमस्सु । एवं वेधाः वेधसौ वेधसः । दुर्मेधाः दुर्मेधसौ दुर्मेधसः । इत्यादि । एवं प्रचेतस् जातवेदस् उच्चैःश्रवस् सुप्रजस् तेजस्प्रभृतयः ॥

उशनस्शब्दस्य भेदः ॥ उशनसाम् ॥ उशनस् पुरुदंसस् अनहेस् इत्येतेषां सेरधेर्डा भवति ॥ डित्वाट्टिलोपः । उशना उशनसौ उशनसः । उशनसो धौ सान्तता नान्तताऽदन्तता वा वक्तव्या । हेउशनन्-हेउशन-हेउशनः हेउशनसौ हेउशनसः ॥ उभयविकल्पे रूपत्रयम् । संबोधने तूशनसस्त्रिरूपमिति वचनात् ॥ उशनसम् उशनसौ उशनसः । उशनसा उशनोभ्याम् उशनोभिः । उशनस्सु-उशनःसु । इत्यादि ॥ [पुरुदंसा पुरुदंससौ पुरुदंससः । इत्यादि ॥ अनेहा अनेहसौ अनेहसः हेअनेहः । अनेहसम् । इत्यादि ॥ ]

उशनस्शब्दादीनां सौ विशेषः । सूत्रम्—'उशनसाम्' उशनसां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' उशनस्पुरुदंसस्अनेहस् इत्येतेषां शब्दानां धिवर्जितस्य सेर्डा भवति । अनेन सेर्डा । डकारष्टिलोपार्थः । 'डिति टेः' इति टेर्लोपः । 'स्वरहीनं०' । शेषं द्वित्वादौ सुवचस्वत् । उशनसो धौ विशेषमाह—'उशनसो धौ सान्तता नान्तता अदन्तता च वक्तव्या' उशनस्शब्दस्य धिविषये नान्तता अन्त्यसकारस्य नकारः अदन्तता अकारान्तता च सकारस्य लोपो भवतीत्यर्थः । चकारात् तृतीये तु सान्त एव तिष्ठतीति धौ रूपत्रयम् ॥ यतः 'संबोधने तूशनसः' इति । एकत्र 'हसेपः०' 'स्रो०' । द्वितीयरूपे सस्य नः । 'हसेपः०' । तृतीये तु अदन्तता वक्तव्येति सलोपः । 'समानाद्धेर्लोपो०' इति धेर्लोपः । हे

उशनः हे उशनन् हे उशन इति ज्ञेयम् । उशनस् भ्यामित्यत्र 'स्रोर्वि०' 'हबे' 'उ ओ' उशनोभ्याम् उशनोभिरित्यादि । उशना शुक्रः । एवं पुरुदंसस् अनेहस्प्रभृतयः । पुरुदंसा पुरुदंससौ पुरुदंससः । पुरुदंसा इन्द्रः ॥ अनेहा अनेहसौ अनेहस इत्यादि । अनेहा कालः ॥

अदस्शब्दस्य भेदः । 'त्यदादेष्टेः' इति सर्वत्राकारः । अद् सि इति स्थिते ॥ सौ सः ॥ अदसो दकारस्य सौ परे सत्वं भवति ॥ सेरौ ॥ अदसः सेरौकारादेशो भवति ॥ असौ ॥

अदस्शब्दस्य सकारान्तस्यापि विशेषः । तस्य 'त्यदादेष्टे०' इति सर्वत्राकारः । सौ तु अदस् सौ इति स्थिते सूत्रम्—'धौ सः' साविति सिशब्दस्य सप्तम्येकवचनान्तम् । 'ङौ' टिलोपः । सः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ अदसो दकारस्य सौ परे सो भवति । अनेन दस्य सः । असस् इति स्थिते । सूत्रम् 'सेरौ' सेः इति सिशब्दस्य षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' । औ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' 'स्वरहीनं०' ॥ अदसः संबन्धिनः सेः औकारो भवति । अनेन सिस्थाने औ । 'ओ औ औ' असाविति सिद्धम् ॥

द्विवचने अदस् औ इति स्थिते ॥'दस्य मः' ॥'ओ औ औ' अमौ इति स्थिते ॥ मादू ॥ उश्च ऊश्च ऊ । अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारादेशो भवति दीर्घस्य च दीर्घ ऊकारादेशो भवति ॥ अमू ॥ बहुवचने सर्वादित्वात् 'जसी' दस्य मः 'अ इ ए' अमे इति स्थिते ॥ एरी बहुत्वे ॥ एः ई बहुत्वे । बहुत्वे सति मकारात्परस्य अदस एकारस्य ईकारादेशो भवति ॥ अमी । अमुम् अमू अमून् ॥ मत्वोत्वे कृते । 'टा नाऽस्त्रियाम्' अमुना अमूभ्याम् अमीभिः । अमुष्मै । अमूभ्याम् अमीभ्यः । अमुष्मात् अमूभ्याम् अमीभ्यः । अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः । अमीषु ॥

द्विवचनादौ 'त्यदादेष्टेरः०' इति सर्वत्राकारे कृते 'दस्य मः' अम औ इति स्थिते 'ओ औ औ' इति ॥ सूत्रम्—'मादू' मात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दीर्घः०' उश्च उश्च ऊ प्रथमैकवचनान्तं सांकेतिकम् । 'चपा अबे०' सिद्धम् । अदसो मकारात्परस्य ह्रस्वस्वरस्य उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अनेन अमौ इत्यस्यौकारस्य दीर्घत्वात् ऊकारः । अत्र पूर्वं विभक्तिकार्यं पश्चात् 'मादू' । टास्थाने तु पूर्वम् 'मादू' पश्चाद्विभक्तिकार्यमिति विवेकः । अमू । बहुत्वे बहुवचने सर्वादित्वात् 'जसी' 'अ इ ए' अमे इति स्थिते सूत्रम्—'एरी बहुत्वे' एः 'षष्ठ्येकवचनान्तम् 'स्रोर्वि०' । ई प्रथमैकवचनान्तं सांकेतिकम् । 'नामिनो रः' 'स्वरहीनं०' । बहुत्वे सप्तम्येकवचनान्तम् । बहुत्वे बहुवचने सति अदस्शब्दस्य मकारात्परस्य एकारस्य ईकारो भवति । अनेन एकारस्य ईकारः । अमी । मकारात्परस्येति चेन्न व्याक्रियते तदा अमुकः अमुकौ अमुके इति न सिध्यति । अमि 'अम्शसोरस्य' 'मादू' इत्यकारस्य उकारः । मोऽनुस्वारः' अमुमिति सिद्धम् । द्विवचने

१ ईकारविधिसामर्थ्यान्न तूकारः ।

प्रथमाद्विवचनवत् । बहुत्वे 'अम्शसोरस्य' 'सो नः पुंसः' 'शसि' 'मादू' अमून् इति सिद्धम् । टाविषये 'मादू' अस्य उः । अमु ततः 'टानाऽस्त्रियाम्' अमुना । द्विवचने 'अद्भिः' इत्यात्वम् पश्चात् 'मादू' इत्याकारस्य दीर्घत्वादूकारः अमूभ्यामिति सिद्धम् । एवं चतुर्थीपञ्चमीद्वित्वेऽपि । तृतीयाबहुवचने 'भिस्भिस्' इति वचनात् 'ए स्भि बहुत्वे' 'एरी बहुत्वे' अमीभिः । एवं चतुर्थीपञ्चमीबहुवचने । चतुर्थ्येकवचने 'सर्वादेः स्मट्' 'मादू' 'किलात्षः सः' 'ए ऐ ऐ' अमुष्मै । पञ्चम्येकवचने 'ङसिरत्' 'अतः०' इति स्मडागमः । 'सवर्णे०' 'मादू' 'स्वरहीनं०' 'किलात्षः सः०' अमुष्मात् । षष्ठ्येकवचने 'ङस्य' 'मादू' 'किलात्षः सः०' अमुष्य । षष्ठीसप्तम्योर्द्विवचने ओसि अकारस्य एकारः । 'ए अय्' 'मादू' 'स्वरहीनं०' । आमि 'सुडामः' 'ए स्भि बहुत्वे' 'एरी बहुत्वे' 'किलात्षः सः' अमीषाम् । सप्तम्येकवचने 'ङि स्मिन्' 'मादू' 'किलात्षः सः०' अमुष्मिन् । सुपि 'ए स्भि बहुत्वे' 'एरी बहुत्वे' 'किलात्षः सः०' अमीषु । त्यदादित्वाद्धेरभावः । संबोधनं न भवतीत्यर्थः ॥

**सामान्ये अदसः कः स्यादिवच ॥** सामान्येऽर्थे वाच्ये सति अदस्शब्दात्परः कः प्रत्ययो भवति स स्यादिवज्ज्ञेयः॥ 'त्यदादेष्टेरः स्यादौ' 'दस्य मः' 'मादू' अमुकः अमुकौ अमुके । अमुकम् अमुकौ अमुकान् । अमुकेन अमुकाभ्याम् अमुकैः ॥ इत्यादि ॥ इति हसान्तपुंलिङ्गप्रक्रिया ॥ ९ ॥

पुनर्विशेषमाह—सामान्य इति । सामान्यार्थे विशेषाकथने अज्ञानाद्यर्थे अदस्शब्दस्य कप्रत्ययो भवति । स च स्यादिवज्ज्ञेयः । स्यादौ परे यत्कार्यं भवति तत्कार्यं कप्रत्यये परेऽपि भवतीत्यर्थः । तेन 'दस्य मः' 'मादू' इति भवति । स्यादिवचेति चकारात्प्रथमैकवचने असकौ इति रूपमिति भवति । पुंसि स्त्रियां च अदसः कः प्रत्ययः स्यादिवत्त्वात् । 'त्यदादेष्टे०' 'दस्य मः' 'मादू' अमुक इति सिद्धम् । ततः स्यादयः । प्रक्रिया सर्वशब्दवत् ॥ इति सान्ताः । इति हसान्तपुंलिङ्गसाधनम् ॥

---

## हसान्ताः स्त्रीलिङ्गाः १०

**अथ हसान्ताः स्त्रीलिङ्गाः प्रदर्श्यन्ते ॥ ॥ तत्र हकारान्त उपानह्शब्दः ॥**

**नहो धः ॥** नहो हकारस्य धकारादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ 'वावसाने' उपानत्-उपानद् उपानहौ उपानहः । हेउपानत्-हेउपानद् हेउपानहौ हेउपानहः । 'खसे चपा झसानाम्' उपानत्सु ॥

अथ हसान्तस्त्रीलिङ्गे किंचिच्छब्दसाधनं लिख्यते । हकारान्त उपानह्शब्दः पादत्राणार्थवाचकस्तस्य स्वरादौ 'स्वरहीनं०' । 'हो ढः' इति ढत्वप्राप्तौ तदपवादार्थं रसे पदान्ते च विशेषमाह—सूत्रम्—'नहो धः' नहः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । धः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'हवे' 'उ ओ' सिद्धम् । वृत्तिः कण्ठ्या । अनेन रसे पदान्ते

---

१ एकस्योच्चारणेन बह्वर्थो लभ्यते तत्सामान्यम् । २ शेषं सर्वशब्दवद्रूपं ज्ञेयम् । चकारात्सात्परस्योत्वम् तेन त्यदादेष्टेः सौ सः मादू अमुकः । इत्यादि ॥ इत्यपि भवति ॥ अधिकम् चन्द्रिकाद्यनुसारि ॥

हस्य धः । सौ धौ च धत्वे कृते 'हसेपः०' 'वावसाने' धकारस्य वा तकारदकारादौ भकारादौ 'झबे जबाः' धस्य दः । 'स्वरहीनं०' । सुपि—'खसे चपा झसानाम्' धस्य तः । 'स्वरहीनं०' शेषं कण्ठ्यम् । गोधुक्प्रभृतयः पुंलिङ्गवत् ज्ञेयाः । इति हान्ताः ॥ यकारान्ता अप्रसिद्धाः ॥

**वकारान्तो दिव्शब्दः ॥ दिव औ ॥ दिवः औ । दिवो वकारस्य औकारादेशो भवति सौ परे ॥ 'इ यं स्वरे' द्यौः दिवौ दिवः । हेद्यौः । हेदिवौ । हेदिवः । दिवम् ॥ वाम्या । दिवो वकारस्य वा आत्वं भवति अमि परे द्याम् दिवम् । दिवौ । दिवः । दिवा ॥ उ (ऊ) रसे ॥ दिवो वकारस्य उकारादेशो भवति रसे पदान्ते च ॥ द्युभ्याम् । द्युभिः । दिवे । द्युभ्याम् । द्युभ्यः । दिवः । द्युषु ॥**

वकारान्तो दिव्शब्दः स्वर्गाकाशवाचकस्तस्य नामसंज्ञायां स्यादयः । दिव् स् इति स्थिते सूत्रम्—'दिव औ सौ' दिवः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । औ प्रथमैकवचनान्तं सांकेतिकम् । 'आदबे लोपश्' । साविति सिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' । दिव इति षष्ठ्या निर्दिष्टत्वाद्दिव्शब्दसंबन्धिनो वकारस्य औकारो भवति सौ परे । अनेन सौ धौ च धस्य औकारः । 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्वि०' द्यौः । एवं हे द्यौः । वर्णविधौ नेदमिति 'यदादेशस्तद्वद्भवति' इति सिलोपो न । द्वित्वे बहुत्वे च 'स्वरहीनं०' । अमि विशेषः । सूत्रम्—'वाम्या' वा प्रथमैकवचनान्तम् । 'अव्यया०' । अम् शब्दस्यामि इति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' 'सवर्णे०' । आ प्रथमैकवचनान्तम् । सांकेतिकम् । 'इ यं स्वरे' त्रिपदम् । दिवो वकारस्य अमि परे वा आत्वं भवति । अनेन अम्विषये वा वकारस्य आकारः । 'इ यं स्वरे' 'स्वरहीनं०' द्याम् । पक्षे दिवम् अग्रे स्वरादौ सर्वत्र 'स्वरहीनं०' । हसादौ तु विशेषः । सूत्रम्—'उ रसे' उ प्रथमैकवचनान्तं सांकेतिकम् । रसे सप्तम्येकवचनान्तम् । 'अ इ ए' दिवो वकारस्य रसे परे उकारो भवति ॥ यद्वा 'उरसे' उ प्रथमैकवचनान्तम् । उ सप्तम्येकवचनम् । रसे सप्तम्येकवचनान्तम् । त्रिपदं सूत्रं पठन्ति । तेन रसे परे उवर्णेऽपि परे उकारो भवति । द्यूषितः दिवि उषितः ॥ एवं दिवं ऊर्णोति आच्छादयतीति द्यूर्णुत् ॥ अनेन भकारादौ सुपि च वकारस्य उकारः । 'इ यं स्वरे' 'स्वरहीनं०' सुपि । 'उ रसे' ततः 'किलातषः सः०'॥ इति वान्ताः ॥

**रेफान्तश्चतुर्शब्दो बहुवचनान्तः ॥ त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥**

---

१ स्त्रियामिति त्रिचतुरोर्विशेषणात्स्त्रियां गौणयोर्नैतावादेशौ स्तः । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः प्रियत्री प्रियत्रयः । बुद्धिवत् । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदादेशौ स्त एव । प्रियास्तिस्रो यस्य सः प्रियतिसा । सेरा प्रियतिसौ प्रियतिस्रः । प्रियतिस्रम् प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रा प्रियतिसृभ्याम् प्रियतिसृभिः । प्रियतिसृषु ॥ क्लीबे प्रियास्तिस्रो यस्य तत्प्रियतिसृ प्रियतिसृणी प्रियतिसृणि ॥ एवं प्रियाश्चतस्रो यस्य सः प्रियचतसा प्रियचतसौ प्रियचतस्रः ॥ क्लीबे । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि ॥ अधिकम् वर्धितम् ॥

त्रिचतुरोः स्त्रियां तिसृचतसृ । ऋवदित्यव्ययम् । स्त्रियां वर्तमानयोस्त्रिचतुर्-शब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतः ऋकारश्च ऋवत् ॥ ततः 'स्तुरार्' इत्यार् न भवति । 'ऋ रम्' तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः ॥ न तिसृचतसृ नामि दीर्घः ॥ तिसृ चतसृ इत्येतयोर्नामि दीर्घो न भवति । छन्दसि वा । तिसृणां-तिसॄणाम् । तिसृषु ॥ चतस्रः । चतस्रः । चतसृभिः । चतसृभ्यः । चतसृभ्यः । चतसृणाम्-चतसॄणाम् । चतसृषु ॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तस्तस्य च स्त्रियां विशेषः । सूत्रम्—'त्रिचतुरोः स्त्रियां तिसृचतसृवत्' ॥ त्रिश्च चतुर् च त्रिचतुरौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रो०' । स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनान्तम् । 'स्त्रियां योः' 'स्त्रीभ्रुवोः' 'ङितामट्' 'स्वरहीनं०' 'सवर्णे दीर्घः०' । तिसृ च चतसृ च तिसृचतसृ प्रथमाद्विवचनान्तम् । सांकेतिकम् । ऋवत् प्रथमैकवचनम् । 'अव्यया०' 'सवर्णे दीर्घः०' सिद्धमिदं सूत्रम् । स्त्रियां वर्तमानौ यौ त्रिचतुर्शब्दौ तयोस्तिसृचतसृ इत्येतावादेशौ क्रमाद्भवतः । त्रिशब्दस्य तिसृ, चतुर्शब्दस्य चतसृ, ऋकारश्च ऋकारवत् । ऋकारेण तुल्यो ज्ञेयः । ततो दीर्घत्वाज्जसि 'स्तुरार्' इति सूत्रेण आर् न भवति । सप्तस्वपि वचनेषु त्रिशब्दस्य तिसृ आदेशः चतुर्-शब्दस्य चतसृ आदेशः । जसि शसि च 'ऋरम्' 'स्वरहीनं०' 'स्रोर्वि०' । आमि नुडागमे कृते विशेषः सूत्रम्—'न तिसृचतसृ नामि दीर्घः' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । तिसृचतसृ षष्ठीद्विवचनान्तम् । सांकेतिकम् । नामि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्वि०' छन्दसि सप्तम्येकवचनान्तम् । वा प्रथमैकवचनान्तम् । तिसृचतसृ इत्येतयोरिति । स्त्रीलिङ्गे वर्तमानयोस्त्रिचतुर्शब्दयोर्नामि परे दीर्घो न भवति छन्दसि तु वा भवति । वेदे तु तिसॄणां तिसृणां चतसॄणां चतसृणामिति रूपे भवतः । अन्यथा तिसृणां चतसृणामित्येव । सुपि 'किलात्षः सः०' ॥

रेफान्तो गिर्शब्दः ॥ य्वोर्वि हसे ॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः ॥ गीः गिरौ गिरः । हेगीः हेगिरौ हेगिरः । गिरम् गिरौ गिरः । गिरा गीर्भ्याम् गीर्भिः ॥ एवं पूर्धुरादयः ॥

रेफान्तो गिर्शब्दः गिरत्यनयेति गीः । गॄ निगरणे क्विप्प्रत्ययः । क्विप्लोपः । 'ऋत इर्' गिर् इति जातम् । तस्य स्वरादौ सर्वत्र 'स्वरहीनं०' ॥ हसादौ तु विशेषः सूत्रम्—'य्वोर्वि हसे' ॥ इश्च उश्च यू तयोः य्वोः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'उ वम्' 'स्वरहीनं०' 'स्रोर्वि०' । र् च व् च र्व् तस्मिन् र्वि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' पश्चात् 'नामिनो रः' 'रि लोपो दीर्घश्च' । हसे सप्तम्येकवचनम् । 'अ इ ए' ॥ धातुसंबन्धिनोरिकारोकारयोर्दीर्घो भवति रेफवकारयोः परयोः सतोः । किंविशिष्टयोः रेफवकारयोः ? हसपरयोः हसपरोऽग्रे वर्तमानो याभ्यां तौ हसपरौ तयोः । अनेन हसादौ दीर्घः । गि इत्यस्य गीः 'हसेपः से०' 'स्रोर्वि०' हे गीः । गीर्भ्यां गीर्भिः गीर्भ्यः गीर्भ्यः गीःषु इत्यादि रूपमव-

सेयम् । शेषं कण्ठ्यम् । एवं पुर्धुरादयः । उकारस्य दीर्घत्वे ऊकारः । शेषं गिर्शब्दवत् । पूः पूरौ पुरः । पुरा पूर्भ्यां पूर्भिरित्यादि । धूः धुरौ धुरः इत्यादि ॥

**धकारान्तः समिध्शब्दः । 'वावसाने' समित्-समिद् समिधौ समिधः । हेसमित्-हेसमिद् हेसमिधौ हेसमिधः । समिधम् समिधौ समिधः । समिधा समिद्भ्याम् समिद्भिः । 'खसे चपा झसानाम्' समित्सु ॥**

धकारान्तः समिध्शब्दः इन्धनार्थवाचकः । तस्य सौ धौ च 'हसेपः०' इति सिलोपे कृते 'वावसाने' धस्य वा तकारदकारौ । समित् समिद् । भकारादौ 'झबे जबाः' धस्य दः । 'स्वरहीनं०' । सुपि 'खसे चपा झसानाम्' धस्य तः 'स्वरहीनं०' समित्सु ॥ शेषं सुकरम् ॥ एवं वीरुध्क्षुध्शब्दौ ॥

**भकारान्तः ककुभ्शब्दः । वावसाने । ककुप्-ककुब् ककुभौ ककुभः । हेककुप्-हेककुब् हेककुभौ हेककुभः । ककुभम् ककुभौ ककुभः । ककुभा ककुब्भ्याम् ककुब्भिः । ककुप्सु ॥**

भकारान्तः ककुभ्शब्दः दिग्वाचकः । तस्य समिध्शब्दवत्प्रक्रिया । न वरम् । 'वावसाने' इति जबत्वे बः, चपत्वे तु पः । ककुप्-ककुब् । ककुब्भ्यां 'झबे जबाः' । ककुप्सु । 'खसे चपा०' इत्यादि ॥

जकारान्तः स्रज्शब्दः । 'दिशाम्' इति कत्वम् । स्रक्-स्रग् स्रजौ स्रजः । स्रजं स्रजौ स्रजः ॥ एवं रुक् रुग् रुजौ रुजः ॥

**दकारान्तास्त्यदादयः । 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारः । 'आबतः स्त्रियाम्' इति आप् । पकारः सिलोपार्थः । सवर्णदीर्घत्वे कृते स्त्रीलिङ्गे सर्वाशब्दवद्रूपं ज्ञेयम् ॥ 'स्तः' स्या । 'औरी' 'अ इ ए' त्ये त्याः ॥ सा ते ताः ॥ या ये याः ॥ एषा एते एताः ॥ एतां-एनाम् एते-एने एताः-एनाः । एतया-एनया । एतयोः-एनयोः ॥ का के काः ॥**

दकारान्ताः शरद् संपद् आपद् परिषद् प्रतिपद् दृषद् संसद् उपनिषद् प्रभृतयः ॥

त्यदादीनां विशेषः । दकारान्तास्त्यद् तद् यद् एतद्शब्दास्तेषां 'त्यदादेष्टेः' इत्यरकारे कृते 'आबतः स्त्रियाम्' इति वक्ष्यमाणसूत्रेण आप्प्रत्ययः । आप् इति पकारः 'आपः' इति सूत्रेण सिलोपार्थः । ततः 'सवर्णे दीर्घः सह' इति दीर्घे कृते सिविषये 'स्तः' इति तस्य सः । साधना सर्वाशब्दवत् । स्या त्ये त्याः । एवं तद् । सा 'आपः' । ते 'औरी' । ताः 'सवर्णे०' 'स्रोर्विः०' । ताम्—'अम्शसोरस्य' 'मोऽनुस्वारः' । ते 'औरी' । ताः 'अम्शसोरस्य' । तया 'टौसोरे' 'ए अय्' । ताभ्यां ताभिः । तस्यै 'ङितां यट्' 'यटोच' इति सुट् । पूर्वस्य अकारः 'स्वरहीनं' 'ए ऐ ऐ' । ताभ्यां ताभ्यः । तस्याः 'ङितां यट्' 'यटोच' । तस्याः 'ङितां यट्' 'यटोच' । तयोः 'टौसोरे' 'ए अय्' 'स्वरहीनं०' । तस्याम् 'आम्ङे' 'ङितां यट्' 'यटोच' 'स्वरहीनं०' 'मोऽनुस्वारः' । तयोः तासु । त्यदादित्वात्संबोधनाभावः । एवं या ये याः ॥ एतच्छब्दस्य सादिकं पुंवत् । 'स्तः' 'किलात्षः सः०' एषा एते एताः ।

'एतदोऽन्वादेशे द्वितीयादौ एनो वा वक्तव्यः' । एतां-एनां एते-एने एताः-एनाः । एतया-एनया । एतयोः-एनयोः इति विशेषः । इत्यादि ज्ञेयम् ॥

एवं मकरान्तः किम्शब्दोऽपि सर्वाशब्दवत् । 'त्यदादेष्टेरः स्यादौ' 'आवतः स्त्रियाम्' का के काः । इदम्शब्दस्य सौ विशेषः । इदम् प्रथमैकवचने ॥

**इदम्शब्दस्य भेदः ॥ इयं स्त्रियाम् ॥ इदम्शब्दस्य स्त्रियामियं भवति सिसहितस्य । इयं इमे इमाः । इमां-एनाम् इमे-एने इमाः-एनाः । अनया आभ्याम् आभिः । अस्यै आभ्याम् आभ्यः । अस्याः आभ्याम् आभ्यः । अस्याः अनयोः-एनयोः आसाम् । अस्याम् अनयोः-एनयोः आसु ॥**

सूत्रम् । 'इयं स्त्रियाम्' ॥ इयं प्रथमैकवचनान्तम् । 'हसेपः से०' 'मोऽनुस्वारः' । स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनान्तम् । 'स्त्रियां योः' 'स्त्रीभ्रुवोः' 'ङिताम‍ट्' 'स्वरहीनं०' 'सवर्णे०' ॥ इदम्शब्दस्य सौ परे इयम् आदेशो भवति गुरुत्वात्सर्वस्य । अनेन इयम् । 'हसेपः से०' 'मोऽनुस्वारः' ॥ अग्रे द्वितीयाबहुत्वं यावत् । 'त्यदादेष्टे०' अत्वे कृते । 'दस्य मः' इति मत्वे कृते 'आवतः स्त्रियाम्' 'सवर्णे दीर्घः०' गङ्गाशब्दवत् । तृतीयादौ 'त्यदादेष्टे०' इति सर्वत्र अकारः । टावचने 'ओसि च' 'अनटौसोः' अनादेशे कृते । 'आवतः स्त्रियाम्' 'टौसोरे' 'ए अय्' 'स्वरहीनं०' अनया अनयोः । भकारादौ सुपि च 'स्भ्यः' इत्यकारे कृते । 'आवतः स्त्रियाम्' आभ्याम् आभिः आसु इत्यादि । ङेङसिङस्ङिषु 'आवतः स्त्रियाम्' 'ङितां यट्' 'यटोऽच्च' 'स्भ्यः' अस्यै अस्याः । सप्तम्येकवचने 'आवतः स्त्रियाम्' 'आम्ङेः' 'ङितां यट्' 'यटोच्च' 'स्भ्यः' 'स्वरहीनं०' अस्याम् । आमि 'सुडामः' 'आवतः स्त्रियाम्' 'स्वरहीनं०' 'मोऽनुस्वारः' आसाम् । शेषं सुगमम् ॥

**चकारान्तस्त्वच्शब्दः । 'चोः कुः' इति कुत्वम् । 'वावसाने' त्वक्-त्वग् त्वचौ त्वचः । हेत्वक्-हेत्वग् हेत्वचौ हेत्वचः । त्वचम् त्वचौ त्वचः । त्वचा त्वग्भ्याम् त्वग्भिः । त्वक्षु ॥ एवं ऋच्वाच्प्रभृतयः ॥**

चकारान्तस्त्वच्शब्दस्तस्य रसे पदान्ते च 'चोः कुः' इति चस्य कः । सौ धौ च 'हसेपः से०' इति सिलोपे कृते चस्य कत्वे कृते 'वावसाने' वा कस्य गकारः । त्वक्-त्वग् । हेत्वक्-हेत्वग् । भकारादौ तु कत्वे 'झबे जबाः' कस्य गः 'स्वरहीनं०' त्वग्भ्यां त्वग्भिरित्यादि । सुपि 'चोः कुः' किलात्षः सः 'कषसंयोगे क्षः' । त्वक्षु । स्वरादौ तु सर्वत्र 'स्वरहीनं०' त्वचौ त्वचः । एवम् ऋच्वाच्शुच्प्रभृतयोऽपि चकारान्ता ज्ञेयाः । ऋक्-ऋग् ऋचौ ऋचः ॥ वाक्-वाग् वाचौ वाचः इत्यादि ॥

तकारान्तायोषित् सरित् तडित् विद्युत् प्रभृतयः ॥

**पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गः । 'न्सम्महतोऽधौ दीर्घः शौ च' । आपः अपः ॥ भि द्पाम् ॥ भि द् अपाम् । अबादीनां भकारे परे दत्वं भवति ॥ अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु । हे आपः ॥**

१ अबादीनामित्यादिग्रहणं गौणत्वेऽपि दत्वार्थम् । अप्शब्दस्य पञ्चसु यद्रूपं तत् स्वप्शब्दस्य रूपम् ।

पकारान्तः अप्शब्दो नित्यं बहुवचनान्तः । स्त्रीलिङ्गे अप् अस् इति स्थिते सति । 'न्सम्महतो०' इति दीर्घः । 'स्वरहीनं०' आपः । शसि पञ्चस्विति विशेषणान्न दीर्घः । किंतु 'स्वरहीनं०' 'स्रोर्वि०' अपः । भकारादौ विशेषः । सूत्रम्—'भि दपाम्' ॥ भि सप्तम्येकवचनान्तम् 'स्वरहीनं०' । द् प्रथमैकवचनान्तम् 'हसेपः०' । अपामिति अप्शब्दस्य षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ त्रिपदम् ॥ अबादीनामित्ययुक्तः[1] पाठः । किंतु अप्शब्दस्य अप्शब्दसंबन्धिनः पकारस्य स्यादौ भकारे परे दकारो भवति । सूत्रे अपामिति बहुवचनमप्शब्दस्य बहुवचनान्तत्वज्ञापकम् । अनेन पस्य दः । अद्भिः अद्भ्यः अद्भ्यः । आमि सुपि च 'स्वरहीनं०' अपाम् अप्सु ॥

**शकारान्तो दिश्शब्दः ॥ दिशां कः ॥ दिश् दृश् स्पृश् इत्यादीनां रसे पदान्ते च कुत्वं भवति ॥ वावसाने दिक्-दिग् हेदिक्-हेदिग् । दिशौ दिशः । दिशम् दिशौ दिशः दिशा दिग्भ्याम् दिग्भिः । दिशे । कत्वम् । 'किलात्' दिक्षु ॥**

शकारान्तो दिश्शब्दस्तस्य रसे पदान्ते च विशेषः । सूत्रम्—'दिशां कः' ॥ दिशां षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः' । कः प्रथमैकवचनान्तम् । 'स्रो०' ॥ दिश् दृश् स्पृश् दधृष् ऋत्विज् स्रज् उष्णिह् अञ्च् युज् असृज् इत्यादीनां शकारस्य अन्तस्य च कत्वमित्यर्थः । रसे परे पदान्ते च । शेषं कण्ठ्यम् । अनेन रसे पदान्ते च शस्य कः 'वावसाने' त्वच्शब्दवत् प्रक्रिया । ततः दिक् दिग् हे दिक् हे दिग् दिशौ दिशः दिग्भ्यां दिग्भिः दिशाम् । 'झबे जबाः' दिक्षु । 'दिशाम्' इति कत्वं 'किलात्षः सः०' 'कषसंयोगे क्षः' इत्यादि ॥ एवं दृक्प्रभृतयः[2] दृक्-दृग् दृशौ दृशः ॥ मर्मस्पृक्-मर्मस्पृग् मर्मस्पृशौ मर्मस्पृशः । ऋत्विक्-ऋत्विग् ऋत्विजौ ऋत्विजः ॥ दधृक्-दधृग् दधृषौ दधृष इत्यादयः ॥

**षकारान्तस्त्विष्शब्दः । 'षो डः' 'वावसाने' त्विट्-त्विड् त्विषौ त्विषः । हेत्विट्-हेत्विड् हेत्विषौ हेत्विषः । त्विषम् त्विषौ त्विषः । त्विषा त्विड्भ्याम् त्विड्भिः । त्विट्त्सु त्विट्सु ॥**

षकारान्तस्त्विष्शब्दस्तस्य रसे पदान्ते च 'षोडः' इति डत्वम् । सौ धौ च 'हसेपः' 'वावसाने' डकारटकारौ । त्विट्-त्विड् । हेत्विट्-हेत्विड् । भकारादौ 'षो डः' 'स्वरहीनं०' त्विड्भ्यामित्यादि । सुपि 'षो डः' 'खसे चपाझसानाम्' डस्य टः 'स्वरहीनं०' त्विट्सु ॥ एवं प्रावृष्विप्रुष्रुष्तृष्शब्दाः ॥

**आशिष्शब्दः सजुष्शब्दवज्ज्ञेयः ॥ आशीः आशिषौ आशिषः । हे-**

---

1 अबादीनामित्यत्र अपः पाठे अप्शब्दस्यैव वक्तव्ये अपामित्यत्र बहुवचनात् अप् स्वप् बह्वप् एते ग्राह्याः । स्वाम्भि तडागानि । बह्वाम्भि तडागानि । शोभना आपो यस्मिन् प्रदेशे स्वाप् स्वापौ स्वापः हेस्वाप् इत्यादि ॥ अधिकः पाठः ॥

2 दृक्-दृग् दृशौ दृशः ॥ स्पृक्-स्पृग् स्पृशौ स्पृशः ॥ स्रक्-स्रग् स्रजौ स्रजः ॥ ऋत्विक्-ऋत्विग् ऋत्विजौ ऋत्विजः ॥ दधृक्-दधृग् दधृषौ दधृषः ॥ उष्णिक्-उष्णिग् उष्णिहौ उष्णिहः इत्यधिकः पाठः ॥

आशीः हेआशिषौ हेआशिषः । आशिषम् आशिषौ आशिषः । आशिषा आशीर्भ्यां आशीर्भिः । आशीःषु-आशीष्षु । इत्यादि ॥

आशिष्शब्दः सजुष्शब्दवत् ज्ञेयः । 'दोषाम्' इति षस्य रः ॥ 'सजुषाशिषो रसे पदान्ते च दीर्घः' । 'स्रोर्विसर्गः' आशीः । स्वरादौ 'स्वरहीनं०' आशिषौ आशिषः । आशिषम् आशिषौ आशिषः । 'दोषां रः' सजुषाशिषो रसे पदान्ते च दीर्घः । जलतु० आशीर्भ्याम् आशीःषु । इत्यादि ज्ञेयम् ॥

स्त्रीलिङ्गस्यादस्शब्दस्य सौ न विशेषः । असौ । द्विवचनादौ 'त्यदादेष्टेरः स्यादौ' अत्वे कृतेऽनन्तरम्—'आबतः स्त्रियाम्' इत्याप् । 'सवर्णे दीर्घः सह' विभक्तिकार्यं प्राक् पश्चात्—'मादू' अमू अमूः । अमूम् अमू अमूः । अमुया अमूभ्याम् अमूभिः । अमुष्यै अमूभ्याम् अमूभ्यः । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु ॥ इति हसान्तस्त्रीलिङ्गप्रक्रिया ॥

सकारान्तस्य अदस्शब्दस्य स्त्रीलिङ्गस्य सौ विशेषो न, सिविषये यथा पुंलिङ्गे रूपं तथैवात्रापि । 'त्यदादेष्टे०' इत्यकारः । 'आबतः स्त्रियाम्' 'सौ सः' 'सेरौ' 'ओ औ औ' असाविति सिद्धम् । द्विवचनादौ सर्वत्र टेरत्वे कृते 'दस्य मः' ततः 'आबतः स्त्रियाम्' इत्यादि कृते स्त्रीलिङ्गे सर्वाशब्दवत् विभक्तिकार्ये कृते 'औरी' 'अइए' पश्चात् 'मादू' इति ह्रस्वस्य ह्रस्व उकारः । दीर्घस्य दीर्घ उकारः । असौ अमू अमूः । 'सवर्णे दीर्घः०' 'मादू' 'स्रोर्वि०' अमूम् अमू अमूः । अमुया 'टौसोरे' । अमूभ्याम् 'मादू' । अमुष्यै 'ङितां यट्' 'यटोच्च' पूर्वस्यापोऽकारः । 'किलात्षः सः०' 'स्वरहीनं०' 'ए ऐ ऐ' । अमूभ्याम् 'मादू' । अमूभ्यः । 'मादू' । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः । अमुयोः 'टौसोरे' 'ए अय्' 'स्वरहीनं०' 'मादू' । अमूषाम् 'सुडामः' 'मादू' 'किलात्षः सः०' । अमुष्याम् 'आम्ङे' 'ङितां यट्' 'यटोच्च' पूर्वस्यापोऽकारः 'मादू' 'किलात्षः सः०' 'स्वरहीनं०' । अमुयोः । 'टौसोरे' । अमूषु । 'मादू' 'किलात्षः सः०' ॥ अमुका अमुके अमुकाः इत्याद्या ज्ञेयाः ॥ सुमनस् अप्सरस् सुवचस् प्रभृतयः [ पुंवत् ] ज्ञेयाः ॥ इति हसान्तस्त्रीलिङ्गसाधनम् ॥

---

## हसान्ता नपुंसकलिङ्गाः ११

अथ हसान्ता नपुसकलिङ्गाः प्रदर्श्यन्ते ॥

अथ हसान्तनपुंसके किंचित्साधनमुच्यते । अथ मुख्यवृत्त्या हकारान्तः शब्दो नास्ति । गौणत्वे तु सुष्ठु अनड्वान् यस्य तत् स्वनडुह् शब्दस्य प्रथमैकवचने । 'नपुंसकात्स्यमोर्लुक्' 'वसां रसे' 'वावसाने' स्वनडुत्-स्वनडुद् स्वनडुही । स्वनड्वांहि 'चतुरनडुहो०' इत्याम् । एवं गोधुक् गोदुही गोदुंहि ॥ अनुपानत् अनुपानद् अनुपानही अनुपानंहि । इत्यादि ॥

रेफान्तो वार्शब्दः । 'नपुंसकात्स्यमोर्लुक्' रेफस्य विसर्गः । वाः । 'ईमौ' वारी । अयम इति विशेषणान्नुम्न भवति । 'जश्शसोः शिः' वारि । हे वाः हे

वारी हेवारि । पुनरपि वाः वारी वारि । वारा वाभ्याम् वार्भिः । वार्षु ॥
चतुर्शब्दस्य । 'चतुराम् शौ च' इत्याम् । चत्वारि चत्वारि चतुर्भिः चतुर्भ्यः
चतुर्भ्यः । 'रः संख्यायाः' चतुर्णाम् चतुर्षु ॥

अथ रेफान्तो वार्शब्दस्तस्य 'नपुंसकात्स्यमोर्लुक्' 'स्रोर्वि०' वाः हे वाः । द्वित्वे तु—'ईमौ' 'स्वरहीनं०' वारी हे वारि । जसि च 'जश्शसोः शिः' इति शौ कृते अयम इति विशेषणात् यमप्रत्याहारान्तस्य नुमागमनिषेधत्वान्नुमागमो न भवति । तेन 'स्वरहीनं०' वारि । हेवारि । पुनरपि द्वितीयायां वाः वारी वारि । तृतीयादौ 'स्वरहीनं०' । हसादौ तु-जलतुम्बिका० । सुपि 'किलात्षः सः' जलतुम्बि० । वारा वार्भ्यां वार्षु इत्यादयः ॥ चतुर्शब्दस्य बहुवचनान्तस्य 'जस्शसोः शिः' इतीकारे कृते । 'चतुराम् शौ च' इत्याम् । 'उवम्' 'स्वरहीनं०' चत्वारि चत्वारि चतुर्भिः चतुर्भ्यः । चतुर्भ्यः । आमि—'रः संख्यायाः' इति नुडागमः । 'षरुर्नोणो०' 'राद्यपो द्विः' 'स्वरहीनं०' सुपि—'किलात्षः सः०' चतुर्णां चतुर्षु ॥ शेषं कण्ठ्यम् ॥ गौणत्वेऽपि प्रियाश्चत्वारः पुरुषा यस्य तत् प्रियचतुः प्रियचतुरी प्रियचत्वारि । प्रियाश्चतस्रः स्त्रियो यस्य तत् प्रियचतसृ प्रियचतसृणी प्रियचतसृणि प्रियचतसृणाम् ॥

नकारान्तोऽहन्शब्दः ॥ अह्नः सः ॥ अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च ॥ 'नपुंसकात्स्यमोर्लुक्' । 'स्रोर्विसर्गः' अहः । 'ईमौ' । 'वेङ्यो:' अह्नी-अहनी । अहानि ॥ पुनरपि अहः अह्नी-अहनी अहानि । हेअहः हेअह्नी-हेअहनी हे अहानि ॥ अह्ना । अहोभ्याम् अहोभिः । अह्ने अहोभ्यां अहोभ्यः । अह्नी-अहनि । अहस्सु-अहःसु ॥ ब्रह्मन्शब्दस्य रसे पदान्ते च न लोपः । ब्रह्म ब्रह्मणी ब्रह्माणि । पुनरपि ब्रह्म ब्रह्मणी ब्रह्माणि । हे ब्रह्मन् । ब्रह्मणा ब्रह्मभ्याम् ब्रह्मभिः । ब्रह्मणे ब्रह्मभ्याम् ब्रह्मभ्यः । ब्रह्मसु इत्यादि ॥ एवं चर्मन्वर्मन्कर्मन्शर्मन्प्रभृतयः ॥

नकारान्तोऽहन्शब्दः । सूत्रम्—'अह्नः सः' ॥ अह्न इति अहन् शब्दस्य षष्ठ्येकवचनान्तम् । 'अल्लोपः स्वरे०' 'स्वरहीनं०' 'स्रोर्वि०' स प्रथमैकवचनान्तम् 'स्रोर्विसर्गः' ॥ अहन्शब्दस्य सकारो भवति । षष्ठीनिर्दिष्टत्वादन्त्यस्य रसे पदान्ते च । अनेन सौ धौ च अमि-च 'नपुंसकात्स्यमोर्लोपे' इति स्यमोर्लोपे कृते । 'अहः स०' इति नकारस्य सकारे कृते 'स्रोर्वि०' अहः । द्विवचने तु 'ईमौ' इति ईकारे कृते । 'वेङ्योः' इति वा अकारलोपः । 'स्वरहीनं०' अह्नी-अहनी । जस्शस्विषये तु 'जस्शसोः शिः' 'नोपधायाः' 'स्वरहीनं०' अहानि । यमप्रत्याहारान्तत्वान्न नुम् । स्वरादौ सर्वत्र । 'अल्लोपः' अह्ना अह्ने इत्यादि । भकारादौ—'अह्नः सः' इति नकारस्य सकारः 'स्रोर्वि०' 'हबे' 'उ ओ' अहोभ्याम् अहोभिरित्यादि । ङि वचने 'वेङ्योः' इति वा अल्लोपः 'स्वरहीनं०' अह्नी-अहनि । सुपि—'अह्नः

1 वार्षु इत्यत्र न विसर्गः । दोषामिति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यात् ॥

सः' इति सः । 'स्वरहीनं०' अहस्सु ॥ ब्रह्मन्शब्दस्य 'नपुंसकात्स्यमोर्लुक्' इति सौ अमि च लुप्ते । 'नाम्नो नो०' अधाविति विशेषणात् धौ नस्य लोपो न भवति । ब्रह्म हे । ब्रह्मन् । क्षेमेन्द्राचार्यास्तु संबोधनेऽपि वा नकारस्य लोपमिच्छन्ति । तेन हे ब्रह्म इत्यपि स्यात् ॥ प्रक्रियाकौमुद्यां च 'संबुद्धौ वा नपुंसकानां नलोपो वाच्यः' इति ॥ द्विवचने तु—'ईमौ' इति ईकारे कृते । अम्वयुक्तादिति विशेषणादल्लोपनिषेधः । 'ष्टुर्नोणो०' 'स्वरहीनं०' ब्रह्मणी । बहुत्वद्वये—'जस्शसोः शिः' 'ष्टुर्नोणो०' 'स्वरहीनं०' ब्रह्माणि । अग्रे स्वरादौ सर्वत्र 'ष्टुर्नोणो०' 'स्वरहीनं०' ब्रह्मणा । रसे परे च—'नाम्नो नो०' ब्रह्मभ्यां ब्रह्मभिः । ब्रह्मसु । एवं चर्मन्वर्मन्शर्मन्कर्मन्नर्मन्पर्वन्प्रभृतयः 'अल्लोपः स्वरे' इत्यकारलोपानर्हाः । तथा सामन् दामन् व्योमन् लोमन् प्रेमन् धामन् हेमन् प्रभृतयो [ अकारलोपार्हाः ] नान्ताः शब्दाः साध्याः । नाम [ नाम्नी ]—नामनी नामानि ॥ एवं दण्डिन् दण्डि दण्डिनी दण्डीनि ॥

**नान्तादद्न्ताच्छन्दसि ङिश्योर्वा लोपो वक्तव्यः ॥ छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ ॥ परमे व्योमन् । सर्वा भूतानि ॥**

पुनर्विशेषमाह—'नान्तादद्न्ताच्च छन्दसि ङिश्योर्वा लोपः' 'छन्दसि वेदे' नान्तान्नकारान्तात् अदन्तादकारान्ताच्छब्दात् परयोर्नपुंसकलिङ्गसंबन्धिनोर्ङिश्योर्वा लोपः । ङि सप्तम्येकवचने । शिः 'जस्शसोः शिः' इति एतयोर्वा बहुलं लोपो भवति । यथा । परमे सप्तम्येकवचनान्तम् । व्योमन् सप्तम्येकवचनान्तम् । उभयत्रापि सप्तम्येकवचने ङि । एकत्र 'अ इ ए' अन्यत्र ङिलोपः । छान्दसिकत्वात् 'नाम्नो नो०' इत्यपि न भवति । यद्वा छन्दस्यागमजानागमजयोर्नकारयोर्लोपालोपौ कचिद्वक्तव्यौ इति ॥ सर्वा इति सर्वशब्दस्य प्रथमाबहुवचनम् । भूतानीति भूतशब्दस्य प्रथमाबहुवचनम् । उभयत्रापि प्रथमाबहुवचने । 'जस्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'ष्टुर्नोणो०' 'स्वरहीनं०' ततः शिलोपः । छान्दसिकत्वाच्च नकारस्यापि लोपो भवति । यद्वा निमित्ताभावे नैमित्तिकस्याप्यभावः । छान्दसत्वादेव दीर्घत्वं तु न निवर्तते । भूतशब्दात्प्रथमाबहुवचने । 'जस्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०' परमे प्रकृष्टे व्योमन्नाकाशे सर्वा भूतानि सर्वाणि भूतानि वर्तन्त इत्यर्थः । यथा परमे व्योमन्नित्यत्र ङिलोपः । छान्दसिकत्वात्सर्वाणि भूतानि इत्यत्र नुमसहितशिलोपः । 'परमे व्योमन् सर्वा भूतानि' इति छान्दसिकः प्रयोगः ॥ असृक् असृजी असृंजि । दिशाम् इति कत्वम् ॥

दकारान्तास्त्यदादयः । त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न, स्यादाविति विशेषणात् । द्विवचनादौ तु टेरत्वे कृते सर्वशब्दवत् प्रक्रिया । 'वावसाने' त्यत्-त्यद् । त्ये । त्यानि । पुनरपि । शेषं सर्ववत् ॥ तत्-तद् ते तानि । पुनरपि ॥ यत्-यद् ये यानि । पुनरपि ॥ एतत्-एतद् एते एतानि । पुनरपि ॥ इदमेतदोर्द्वितीयैकवचने नपुंसके एनद्वा वाच्यः ॥ एतत्-एतद् एनत्-एनद् एते-एने एतानि-एनानि । एतेन-एनेन । इत्यादि । किम् के कानि ।

**पुनरपि ॥ इदं इमे इमानि । पुनरपि । इदं-एनत् इमे-एने इमानि एनानि । अनेन-एनेन इत्यादि ॥**

अथ दकारान्तास्त्यदादयः । तेषां त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति, स्यादौ विभक्तौ परे एव भवति । नलुकि कृते इति विशेषणात् (ऽ) 'लुकि' न तन्निमित्तमिति । अत एव 'स्तः' इति सत्वमपि न भवति । तत् । द्विवचनादौ 'त्यदादेष्टे०' 'ईमौ' 'अ इ ए' ते । तानि तद् 'त्यदादेष्टे०' 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०' ॥ तृतीयादौ सर्वत्र 'त्यदादेष्टे०' 'टेन' । ताभ्याम् 'अद्भि' । तैः 'भ्यः' 'अ इ ए' 'ए ऐ ऐ' । तस्मै 'सर्वादेः स्मट्' 'ए ऐ ऐ' । ताभ्याम् 'अद्भि' । तेभ्यः 'एस्भि बहुत्वे' । तस्मात् 'ङसिरत्' 'अतः' इति स्मडागमः 'सवर्णे०' । ताभ्याम् 'अद्भि' । तेभ्यः 'एस्भि बहुत्वे' । तस्य 'ङस्स्य' । तयोः 'ओसि' 'ए अय्' तेषाम् 'सुडामः' 'एस्भि बहुत्वे' 'किलात्षः सः०' 'स्वरहीनं०' 'मोऽनुस्वारः' । तस्मिन् 'ङिस्मिन्' । तयोः 'ओसि' 'ए अय्' । तेषु 'किलात्षः सः०' त्यदादीनां धेरभावः ॥ एवम्—एतत् एते एतानि । द्वितीयायाम् 'एतदोऽन्वादेशे' इत्यस्य प्राप्तौ अमिविषये वक्तव्ये विशेषमाह—'निपुंसके एतदोऽन्वादेशे अमि एनदिति वक्तव्यम्' एतत्-एनत् एते-एने एतानि-एनानि । शेषं पुंवत् । केचित्तु इदम्शब्दस्याप्यन्वादेशे नपुंसके अमि एनदिच्छन्ति ॥ मकारान्तः किम् शब्दस्तस्य नपुंसकात्स्यमोर्लुकि कृते 'त्यदादेष्टे०' इति अत्वं न भवति किं तु 'मोऽनुस्वारः' । अन्यत्र तु 'त्यदादेष्टे०' अत्वे कृते नपुंसके सर्वशब्दवत् । किं के कानि । एवम् इदम् इमे इमानि । तृतीयादौ सर्वत्र पुंवत् पुंलिङ्गवत् ॥

**चकारान्तः प्रत्यच्शब्दः । 'चोः कुः' । 'वावसाने' प्रत्यक्-प्रत्यग् । प्रतीची । प्रत्यञ्चि । पुनरपि । शेषं पूर्ववत् ॥**

चकारान्तः प्रत्यच्शब्दः । 'नपुंसकात्स्यमोर्लुक्' 'चोः कुः' 'वावसाने' प्रत्यक् प्रत्यग् । द्विवचने 'ईमौ' 'अञ्चेरलुक् दीर्घश्च' 'स्वरहीनं०' प्रतीची । बहुत्वे—'जश्शसोः शिः' 'नुमयमः' 'नश्चापदान्ते०' प्रत्यञ्चि । अग्रे तृतीयादौ पुंवत् । स्वरादौ 'अञ्चेरलुक् दीर्घश्च' । भकारादौ—'चोः कुः' 'झबे जबाः' प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः इत्यादि । सुपि 'चोः कुः' 'किलात्षः सः०' 'कषसंयोगे क्षः' । प्रत्यक्षु ॥ तिर्यक् तिरश्ची तिर्यञ्चि ॥ अन्वक् अनूची अन्वञ्चि । गवाक् गोची गवाञ्चि । गां अञ्चतीति गो अच् । 'नो लोपः' 'गवादेरवर्णागमः' 'ओ अव्' गवाक् गवाग् । औ 'अंचेरलोपे' 'निमित्तापाये नैमित्तिकस्याप्यपायः' इत्यवर्णागमस्यापि लोपः 'ओ अव्' इत्यस्यापि निषेधः । गोची । गवाच् अस् 'जश्शसोः शिः' 'नुमयमः' इत्यादि ॥

**तकारान्तो जगच्छब्दः । 'वावसाने' जगत्-जगद् जगती जगन्ति । पुनरपि ॥ महत्-महद् महती महान्ति । पुनरपि ॥ सकारान्ताः पयस्वचस्तेजस्यशस्प्रभृतयः । पयः पयसी पयांसि । पुनरपि ॥**

तकारान्तो जगत्शब्दः । स्यमोर्लुक् जगत् । द्वित्वे 'ईमौ' 'स्वरहीनं०' । बहुत्वे 'जश्शसोः शिः' 'नुमयमः' 'नश्चापदान्ते०' जगती जगन्ति ॥ शेषं कण्ठ्यम् । एवं यकृत्

यक्रुति यक्रन्ति ।। महच्छब्दोऽप्येवम् । न वरम् । शौ विषये 'न्सम्महत०' इति दीर्घत्वम् । महत् महती महान्ति । महता महद्भ्यामित्यादि पुंवत् ।।

सकारान्तः पयस्शब्दः । पानीयं दुग्धं च पयः । स्यमोर्लुकि कृते 'स्रोर्वि०' ।। द्वित्वे 'ईमौ' 'स्वरहीनं०' ।। बहुत्वे 'जश्शसोः शिः' 'नुमयमः' 'न्सम्महतः०' इति दीर्घः । पयः पयसी पयांसि । तृतीयादौ स्वरादौ 'स्वरहीनं०' ।। भकारादौ 'स्रोर्वि०' 'हबे' 'उ ओ' पयसा पयोभ्यां पयोभिः ।। एवं तेजस् महस् वचस् यशस् वयस् शिरस् तपस् ओजस् मनस् तमस् अम्भस् नभस् एनस् सरस् वासस् रजस् छन्दस् अनस् अयस् स्रोतस् रक्षस् श्रेयस् उषस् वर्चस् मेदस् शेफस् श्रवस् अर्शस् तरस् रंहस् ऊधस् यादस् आगस् एधस् ओकस् प्रभृतयः ।। हविष्शब्दे 'दोषां रः' 'नपुंसकात्स्यमोर्लुक्' 'स्रोर्वि०' हविः । हविषी 'ईमौ' । हवींषि 'जश्शसोः शिः' 'नुमयमः' 'न्सम्महतो०' इति दीर्घे कृते नुमि सकार एवास्तीति न्सन्तत्वम् । ततो नुम्विसर्गव्यवधानेऽपि षत्वम् । हविषा । भ्यांभ्यस्सुपूविषये 'दोषां रः' जलतुम्बिका० । हविर्भ्यां हविर्भिः हविःषु ।। एवं सर्पिः सर्पिषी सर्पींषि । धनुः धनुषी धनूंषि । आयुः आयुषी आयूंषि इत्यादि ।।

**अदस्शब्दस्य स्यमोर्लुकि कृते 'स्रोर्विसर्गः' । अदः अमू अमूनि । पुनरपि ।। अमुना । अमूभ्याम् अमीभिः । इत्यादि शेषं पुंवत् ।। इति हसान्तनपुंसकलिङ्गप्रक्रिया ।।**

अदस्शब्दस्य प्रथमाद्वितीययोर्विशेषस्तत्रैकवचने—'नपुंसकात्स्यमोर्लुक्' लुकि कृते 'त्यदादेष्टे०' अत्वं न भवति 'किंतु 'स्रोर्वि०' अदः ।। द्वित्वे—'त्यदादेष्टे' अकारः 'दस्य मः' 'ईमौ' 'अ इ ए' 'मादू' एकारस्य ऊकारः । अमू ।। बहुत्वे 'त्यदादेष्टे०' 'दस्य मः' 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'मादू' आकारस्य ऊकारः अमूनि ।। तृतीयादौ सर्वत्र पुंवत् । तृतीयैकवचने—'त्यदादेष्टे०' 'मादू' 'टा ना स्त्रियाम्' अमुना । तृतीयाद्विवचने—'त्यदादेष्टे०' 'अद्भि' 'मादू' अमूभ्यां । तृतीयाबहुवचने—'भिस् भिस्' 'ए स्भि बहुत्वे' 'एरी बहुत्वे' अमीभिः । चतुर्थ्येकवचने—'त्यदादेष्टे०' 'दस्य मः' 'सर्वादेः स्मट्' 'मादू' 'किलात्षः सः०' 'ए ऐ ऐ' अमुष्मै । चतुर्थीद्विवचने 'अद्भि' 'मादू' अमूभ्याम् । चतुर्थीबहुवचने—'ए स्भि बहुत्वे' 'एरी बहुत्वे' अमीभ्यः । पञ्चम्येकवचने—'त्यदादेष्टे०' 'दस्य मः' 'अतः' 'मादू' 'किलात्षः' अमुष्मात् । पञ्चमीद्विवचने 'अद्भि०' 'मादू' अमूभ्याम् । पञ्चमीबहुवचने 'एस्भि बहुत्वे' 'एरी बहुत्वे' अमीभ्यः । षष्ठ्येकवचने 'त्यदादेष्टे०' 'ङस्य' 'दस्य मः' 'मादू' 'किलात्षः सः०' अमुष्य । षष्ठीद्विवचने—'ओसि' 'ए अय्' 'मादू' अमुयोः । षष्ठीबहुवचने—'त्यदादेष्टे०' 'दस्य मः' 'सुडामः' 'एस्भि बहुत्वे' 'एरी बहुत्वे' 'किलात्षः स०' अमीषाम् । सप्तम्येकवचने—'त्यदादेष्टे०' 'दस्य मः' 'ङि स्मिन्' 'मादू' 'किलात्षः सः०' । सप्तमीद्विवचने 'त्यदादेष्टे०' 'दस्य मः' 'ओसि' 'ए अय्' 'स्वरहीनं०' 'मादू' अमुयोः । सप्तमीबहुचचने 'ए स्भि बहुत्वे' 'एरी बहुत्वे' 'किलात्ष सः०' अमूषु । इति हसान्तनपुंसकलिङ्गसाधनम् ।।

---

## युष्मदस्मत्प्रक्रिया १२

**अथ युष्मदस्मदोः स्वरूपं निरूप्यते ॥ तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समानं रूपम् ॥ त्वमहं सिना ॥ सिसहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन ॥ त्वम् । अहम् ॥**

अथेति । संज्ञासंधिस्वरान्तहसान्तलिङ्गत्रयसाधनानन्तरं युष्मदस्मदोः युष्मच्च अस्मच्च युष्मदस्मदौ तयोः स्वरूपं मुख्यस्वरूपमेव निरूप्यते कथ्यते । न तु गौणत्वविशेषादिकमित्यर्थः । अत्राह परः—ननु यथा सर्वादयो लिङ्गत्रये साधितास्तथा एतावपि कथं न साधितौ । तत्रोत्तरमाह—तयोर्युष्मदस्मच्छब्दयोर्वाचि वचने वाग्व्यवहारेऽलिङ्गत्वात् स्वविषये लिङ्गोद्योताभावात् त्रिष्वपि पुंस्त्रीनपुंसकलिङ्गेषु समानं सदृशमेव रूपम् । यथा त्रिषु लिङ्गेषु सर्वो जनः, सर्वा जगती, सर्वं जगत् इत्यादिरूपभेदो दृश्यते, न तथैतयोः । यथा त्वं देवः, त्वं देवी, त्वं ब्रह्म इत्यादौ न कोऽपि रूपभेदः । अतः प्राग् न साधितावित्यर्थः । अथ वाच्यमिति नामशब्दरूपम् अभिधेयं विशेष्यपदमित्यर्थः । तस्यैव लिङ्गो विद्यते ययोस्तौ वाच्यलिङ्गौ ॥ यदि वा वाच्यस्य पुरुषस्त्रीकुलादेर्लिङ्गमेव लिङ्गं ययोरिति बहुव्रीहिः । यदुक्तम्—'वाच्यमित्युच्यते भेद्यं तल्लिङ्गं भजते तु यः । विशेषणत्वमापन्नो वाच्यलिङ्गः स उच्यते ॥' अनयोः साधनमुच्यते । प्रथमैकवचने सूत्रम्—'त्वमहं सिना'॥ त्वं च अहं च त्वमहं प्रथमाद्विवचनान्तं सांकेतिकम् । सिना सिशब्दस्य तृतीयैकवचनान्तम् 'टाना स्त्रियाम्' ॥ युष्मद० । वृत्तिः कण्ठ्या । युष्मदः सिना सह त्वम् इत्यादेशः । अस्मदश्च सिना सह अहम् इत्यादेशः ॥

**युवावौ द्विवचने ॥ युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः ॥ आमौ ॥ युष्मदस्मदोः पर औ आम् भवति । सवर्णे दीर्घः सह । युवाम् आवाम् ॥**

द्विवचने । युष्मद् औ अस्मद् औ इति स्थिते सति । सूत्रम्—'युवावौ द्विवचने'॥ युवश्च आवश्च युवावौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' । द्विवचने सप्तम्येकवचनान्तम् 'अ इ ए' ॥ युष्म० । युष्मदः सर्वविभक्तिद्विवचने युव आदेशः । अस्मदश्च आव इत्यर्थः ॥ युव औ आव औ इति स्थिते सूत्रम्—'आमौ' ॥ आम् प्रथमैकवचनान्तम् । 'हसेपः०'॥ औ प्रथमैकवचनं सांकेतिकम् । 'स्वरहीनं०' सिद्धम् । वृत्तिः सुगमा । यदादेशस्तद्वदिति । ननु आम् किमिति क्रियते अमेव कथं न क्रियते 'मात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इति । सत्यम् । अमि कृते 'अम्शसोरस्य' इत्यलोपः स्यादिति आमेव युक्तः । अनेन औ इत्यस्य आम् 'सवर्णे०' युवाम् आवामिति सिद्धम् ॥

**यूयं वयं जसा ॥ जसा सहितयोर्युष्मदस्मदोर्यूयं वयमित्येतावादेशौ भवतः ॥ यूयम् वयम्॥**

बहुत्वे युष्मद् अस् अस्मद् अस् । सूत्रम्—'यूयं वयं जसा' ॥ यूयं च वयं च यूयंवयं प्रथमाद्विवचनान्तं सांकेतिकम् । जसा इति जस्शब्दस्य तृतीयैकवचनान्तम् । 'स्वरहीनं०'

सिद्धम् । जसा० । अनेन जस्सहितस्य युष्मदो यूयमित्यादेशः अस्मदश्च वयमित्यादेशः । यूयं वयमिति ॥

**त्वन्मदेकत्वे ॥ युष्मदस्मदोः त्वन्मदित्येतावादेशौ भवत एकत्वे गम्यमाने ॥ आम्स्भौ ॥ आ अम्स्भौ । युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे । अम्शसोरस्य । त्वाम् माम् । युवाम् आवाम् ॥**

अमि सूत्रम्—'त्वन्मदेकत्वे' ॥ त्वच्च मच्च त्वन्मत् प्रथमाद्विवचनान्तम् । सांकेतिकम् । एकस्य भाव एकत्वं तस्मिन्नेकत्वे सप्तम्येकवचनान्तम् । 'अ इ ए' 'चपा अबे जबाः' 'स्वरहीनं०' सिद्धम् । अग्रे वृत्तिः कण्ठ्या । एकवचने एकार्थवाचित्वे वा युष्मदस्त्वत् अस्मदश्च मत् आदेशः । त्वत् अम् मत् अम् इति स्थिते सूत्रम्—'आम्स्भौ' ॥ आ प्रथमैकवचनान्तं सांकेतिकम् । अम् च स् च भिस् च अम्स्भिः देशैकग्रहणे देशीयग्रहणम् । तस्मिन् अम्स्भौ सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टिलोपः । 'स्वरहीनं०' आ अग्रे अम्स्भौ 'सवर्णे०' ॥ युष्मदः० । अनेन त्वत् इत्यस्य त्वा, मत् इत्यस्य च मा । 'अम्शसोरस्य' 'मोऽनुस्वारः' त्वां माम् ॥ द्विवचनेषु प्राग्वत् ॥

**'त्यदादेष्टेरः स्यादौ' इत्यत्वे कृते शसि दीर्घत्वम् ॥ शसो नो वक्तव्यः ॥ युष्मान् । अस्मान् ॥**

शसि युष्मद् अस् अस्मद् अस् इति स्थिते । 'त्यदादेष्टे०' अकारे कृते । 'अम्शसोरस्य' इत्यकारलोपः । 'शसि' इति दीर्घः । वाच्यलिङ्गत्वात्केवलं पुंलिङ्गत्वाभावात् 'सो नः पुंसः' इति सूत्रेण सकारस्य नकारो न भवति । तेन विशेषमाह—'शसो नो वक्तव्यः' शसः सकारस्य नकारो भवति इत्यर्थः । युष्मदस्मदोरेवेति शेषः । युष्मान् अस्मान् इति सिद्धम् ॥

**त्वन्मदेकत्वे ॥ ए टाङ्योः ॥ युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः ॥ ए अय् । त्वया मया । युवाभ्याम् आवाभ्याम् । युष्माभिः अस्माभिः ॥**

तृतीयैकवचने त्वन्मदादेशे कृते । 'त्यदादेष्टे०' अकारः ॥ त्व आ म आ इति स्थिते । सूत्रम्—'ए टाङ्योः' ॥ ए प्रथमैकवचनान्तं सांकेतिकम् । टाङ्योः टा च ङिश्च टाङी तयोः सप्तमीद्विवचनान्तम् । 'इयं स्वरे' 'स्वरहीनं०' सिद्धमिदं सूत्रम् । वृत्तिः कण्ठ्या । आदेशिवदादेशो भवतीति न्यायात् । अनेन यथाक्रमं त्वेमे 'एअय्' 'स्वरहीनं०' त्वया मया इति रूपद्वयं सिद्धम् ॥

द्विवचने भ्याम् । 'युवावौ द्विवचने' 'अद्भि' युवाभ्याम् आवाभ्याम् । एवं चतुर्थीपञ्चमीद्वित्वेऽपि ॥

भिसि 'आम्स्भौ' इति टेराकारः । युष्माभिः अस्माभिः ॥

**तुभ्यं मह्यं ङया ॥ ङया सहितयोर्युष्मदस्मदोस्तुभ्यं मह्यं इत्येतावादेशौ भवतः ॥ तुभ्यम् मह्यम् । युवाभ्याम् आवाभ्याम् ॥ भ्यस् भ्यम् ॥ युष्मदस्मदोः परो भ्यस् शभ्यं भवति ॥ शकारो भकारादेशव्यावृत्त्यर्थः । तेनात्वैत्वे न भवतः । युष्मभ्यम् अस्मभ्यम् ॥**

चतुर्थ्येकवचने सूत्रम्—'तुभ्यं मह्यं ङया' ॥ तुभ्यं च मह्यं च तुभ्यं मह्यं प्रथमाद्विवचनान्तं सांकेतिकम् । ङया इति ङेशब्दस्य तृतीयैकवचनान्तम् । 'ए अय्' 'स्वरहीनं०' ॥ वृत्तिः सुबोधा । अनेन यथाक्रमं ङेसहितयोः युष्मदस्मदोस्तुभ्यं मह्यम् आदेशौ भवतः ॥ चतुर्थ्या बहुवचने—सूत्रम्—'भ्यस् श्भ्यम्' ॥ भ्यस् प्रथमैकवचनान्तं सांकेतिकम् । श्भ्यम् प्रथमैकवचनान्तम् । 'हसेपः०' ॥ युष्मदस्मच्छब्दाभ्यां परं यच्चतुर्थीबहुवचनं तस्य कृत्स्नस्यापि श्भ्यं भवति । भ्यमादेशस्य गुरुत्वात्सर्वस्य प्राप्तौ शकारग्रहणं किमर्थमित्याह—शकारो भकारादित्वनिषेधकः । उच्चारणमात्रः शकारो भकारादित्वव्यावृत्त्यर्थः भकार एव आदिर्यस्य स भकारादिस्तस्य भावो भकारादित्वं तस्य व्यावृत्त्यर्थो निषेधार्थः । भ्यम् इत्येव चेत् क्रियते, तदा 'अद्भि' 'एस्मि बहुत्वे' एतयोः सूत्रयोः प्राप्तिर्भवति भकारपरत्वात् । अतस्तन्निवारणार्थं श्भ्यमिति क्रियते । तेन 'अद्भि' इत्यात्वम् 'एस्मि बहुत्वे' इति एत्वं च न भवति । अनेन चतुर्थीबहुवचनस्य श्भ्यम् । 'त्यदादेष्टे०' 'मोऽनुस्वारः' । युष्मभ्यम् अस्मभ्यम् ॥

**ङसिभ्यसोः श्तुः ॥ पञ्चम्या ङसिभ्यसोः श्तुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । त्वत् मत् । युवाभ्याम् आवाभ्याम् । युष्मत् अस्मत् ॥**

पञ्चम्येकवचने—त्वन्मदादेशे कृते त्वत् अस् मत् अस् इति स्थिते ॥ सूत्रम्—'ङसिभ्यसोः श्तुः' ॥ ङसिश्च भ्यस् च ङसिभ्यसौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' । श्तुः प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ पञ्चम्या एकवचनस्य बहुवचनस्य च श्तुः इत्या 'देशो भवति । अनेन ङसिस्थाने श्तुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । तु इति स्थितम् । 'त्यदादेष्टे०' । त्वत् मत् ॥ युवाभ्याम् आवाभ्याम् । बहुवचने भ्यसूस्थाने तु । 'त्यदादेष्टे०' युष्मत् अस्मत् ॥

**तवमम ङसा ॥ ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः ॥ तव मम । युवयोः आवयोः ॥**

षष्ठ्येकवचने । सूत्रम्—'तव मम ङसा' ॥ तव च मम च तवमम प्रथमाद्विवचनान्तं सांकेतिकम् । ङसेति ङस्शब्दस्य तृतीयैकवचनान्तम् । 'स्वरहीनं०' ङसा० । अनेन ङस्सहितस्य युष्मदस्तव अस्मदो मम इत्यादेशः । तव मम ॥ ओस्विषये युव आवादेशे कृते 'ओसि' 'ए अय्' 'स्वरहीनं०' युवयोः आवयोः । एवं सप्तमीद्विवचनेऽपि ॥

**सामाकम् ॥ युष्मदस्मदोः परः सामाकं भवति ॥ युष्माकम् अस्माकम् ॥**

आमि 'त्यदादेष्टे०' 'सुडामः' 'स्वरहीनं०' युष्मासाम् अस्मासाम् इति स्थिते ॥ सूत्रम् । 'सामाकम्' ॥ साम् प्रथमैकवचनान्तम् । 'हसेपः०' आकम् प्रथमैकवचनान्तम् । 'हसेपः०' 'स्वरहीनं०' युष्मदस्मद्भ्यां परस्य सुट्सहितस्य आमः आकम् इत्यादेशो भवति । अनेन आकम् । 'सवर्णे०' युष्माकम् अस्माकम् । सुट्सहितस्यामः आकमादेशविधानम् 'एस्मि बहुत्वे' इत्येकारनिवृत्त्यर्थं, न तु 'आम्स्भौ' इत्याकारस्य निवृत्त्यर्थं कृते तस्मिन्न रूपविपर्ययः स्यादिति ॥

त्वयि मयि । युवयोः आवयोः । युष्मासु अस्मासु ॥

सप्तम्येकवचने 'त्वन्मदेकत्वे' 'त्यदादेष्टे०' 'ए टाङ्योः' 'ए अय्' 'स्वरहीनं०' त्वयि मयि । युवयोः आवयोः । सुपि । 'आम्भौ' युष्मासु अस्मासु ॥

त्यदादित्वात्संबोधनाभावः ॥

तथा समासान्तत्वे प्राधान्ये च युष्मदस्मदोः सिजसूङिङस्सु एत एव पूर्वोक्ताः त्वम् अहम् यूयम् वयम् तुभ्यम् मह्यम् तव मम आदेशाः स्युर्नान्यत्र । अन्यत्र तु सिऔजसूङेङस्वर्जितेषु सप्तदशसु वचनेषु एकत्वे त्वमौ, द्विवचने युवावौ, बहुत्वे युष्मास्मौ ॥ [यथा—त्वामतिक्रान्तोऽतित्वम् अतित्वाम् अतियूयम् । अतित्वाम् अतित्वाम् अतित्वान् । अतित्वया अतित्वाभ्याम् अतित्वाभिः । अतितुभ्यं अतित्वाभ्याम् अतित्वभ्यम् । अतित्वत् अतित्वाभ्याम् अतित्वत् । अतितव अतित्वयोः अतित्वाकम् । अतित्वयि अतित्वयोः अतित्वासु ॥ एवं युवामतिक्रान्तः अतित्वम् अतियुवाम् अतियूयम् । अतियुवाम् अतियुवाम् अतियुवान् । अतियुवया अतियुवाभ्याम् अतियुवाभिः । अतितुभ्यम् अतियुवाभ्याम् अतियुवभ्यम् । अतियुवत् अतियुवाभ्याम् अतियुवत् । अतितव अतियुवयोः अतियुवाकम् । अतियुवयि अतियुवयोः अतियुवासु ॥ एवं युष्मानतिक्रान्तः अतित्वम् अतियुष्माम् अतियूयम् । अतित्वाम् अतियुष्माम् अतियुष्मान् । अतियुष्मया अतियुष्माभ्याम् अतियुष्माभिः । अतितुभ्यम् अतियुष्माभ्याम् अतियुष्मभ्यम् । अतियुष्मत् अतियुष्माभ्याम् अतियुष्मत् । अतितव अतियुष्मयोः अतियुष्माकम् । अतियुष्मयि अतियुष्मयोः अतियुष्मासु ॥ ]
उक्तं च प्रक्रियाकौमुद्याम्—'सुजसूङेङस्सु परत आदेशाः स्युः सदैव ते ॥ त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ एते परत्वाद् बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥' यथा—प्रियस्त्वम् प्रियौ युवां प्रिया यूयं वा यस्य प्रियत्वम् । एवं प्रियोऽहम् प्रियौ आवां प्रिया वयं वा यस्य स प्रियाहम् । एवं जसि प्रिययूयं प्रियवयम् । ङेविषये प्रियतुभ्यं प्रियमह्यं । ङसि प्रियतव प्रियमम ॥ तथा त्वामतिक्रान्त इत्यतित्वम् अत्यहमित्यत्रापि सिजसूङेङस्सु प्रागवदेवादेशाः स्युः । तथा द्विवचने युवावादेशौ च न भवतः । यथा अतित्वम् अत्यहम् अतित्वाम् अतिमाम् अतियूयम् । अतिवयम् । अतित्वाम् अतिमाम् । द्वित्वेपि अतित्वाम् अतिमाम् अतित्वान् अतिमान् । अतित्वया अतिमया अतित्वाभ्याम् अतिमाभ्याम् अतित्वाभिः अतिमाभिः । अतितुभ्यम् अतित्वाभ्याम् अतिमाभ्याम् अतित्वत् अतिमत् । अतितव अतिमम अतित्वयोः अतिमयोः अतित्वाकम् अतिमाकम् । केचित्तु अतित्वयाम् अतिमयामिति । अतित्वयि अतिमयि अतित्वयोः अतिमयोः अतित्वासु अतिमासु ॥ एवं युवामावां वा अतिक्रान्त इत्यत्रापि सिजसूङेङस्सु प्राग्वत् । अतित्वम् अत्यहम् अतियुवाम् अत्यावाम् अतियूयम् अतिवयम् । अतियुवाम् अत्यावाम् अतियुवाम् अत्यावाम् अतियुवान् अत्यावान् । अतियुवया अत्यावया अतियुवाभ्याम् अत्यावाभ्याम् इत्यपि ॥ एवं युष्मान् अस्मान्वा अति-

१ एकस्यातिक्रमे ॥ २ द्वयोरतिक्रमे ॥ ३ बहूनामतिक्रमे ॥ ४ कोष्ठकान्तर्गतः पुनरपि वक्ष्यते ॥

क्रान्त इत्यत्रापि सिजसूङेङस्सु प्राग्वत् । अतित्वम् अत्यहम् अतियुष्मान् अत्यस्मान् अति-युष्मान् अत्यस्मान् । अतियुष्मया अत्यस्मया इत्यादि । एवं परमत्वं परमाहं परमयूयं परमवयं परमतुभ्यं परममह्यम् परमतव परममम इत्यादिलोकाज्ज्ञेयम् । इति युष्म-दस्मत्साधनम् ॥

---

## आदेशविशेषाः १३

**अथानयोरादेशविशेषविधिर्निरूप्यते ॥ युष्मदस्मदोः षष्ठीचतुर्थीद्विती-याभिस्तेमे वांनौ वस्नसौ ॥ युष्मदस्मदोर्यथासंख्येनामी आदेशाः स्युः ॥ कीदृशयोः । षष्ठीचतुर्थीद्वितीयासंहितयोः । तत्रैकवचनेन सह तेमे भवतः । द्विवचनेन वांनौ । बहुवचनेन वस्नसौ च ॥**

पुनर्विशेषमाह—अथेति । युष्मदस्मच्छब्दयोः साधनानन्तरं कश्चित् आदेशस्य विशेष आदेशविशेषस्तस्य विधिः । आदेशाः पूर्वं कथिताः । अथ आदेशविशेषविधिः कथ्यते इत्यध्याहारः ॥ सूत्रम्—'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ' ॥ युष्म-दस्मदोः षष्ठीद्विवचनान्तम् । षष्ठीचतुर्थीद्वितीयाभिः तृतीयाबहुवचनम् । तेमे प्रथमाद्वि-वचनान्तं सांकेतिकम् । वांनौ प्रथमाद्विवचनान्तं सांकेतिकम् । वस्नसौ प्रथमा-द्विवचनान्तम् । 'स्वरहीनं०' पञ्चपदमिदं सूत्रम् ॥ युष्म० । युष्मदस्मदोः षष्ठीचतुर्थी-द्वितीयानामेकवचनबहुवचनेषु क्रमेण अमी अग्रे वक्ष्यमाणाः तेमे वांनौ वस्नस् आदेशा भवन्ति । अयं भावः—षष्ठीचतुर्थ्येकवचनेन सह युष्मदस्ते अस्मदश्च मे आदेशः । द्वितीयैकवचनस्य त्वा मा इति विशेषविधानात् ते मे न भवतः । षष्ठीचतुर्थीद्वितीया-द्विवचने युष्मदो वां अस्मदश्च नौ आदेशः । षष्ठीचतुर्थीद्वितीयाबहुवचने युष्मदो वस् अस्मदश्च नस् आदेशः । द्वितीयाचतुर्थीषष्ठीति वक्तव्ये व्युत्क्रमेण षष्ठीचतुर्थीद्वितीयाभि-रित्युक्तत्वात् कचित्त्वया मयेत्यस्मिन्नर्थे तेमे भवतः इत्यपि सूचितम् । यथा 'श्रुतं ते नि-खिलं पार्थ' इत्यादि प्रयोगेषु । तथा च । 'कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम्' । तथा च रघुकाव्ये—'क्षेये केन विनीतौ वां' इत्यादि प्रथमाद्विवचनेऽपि वामित्यादेशार्थम् । केचित्तु वामित्यव्ययं मन्यन्ते ॥

'विपर्ययविधानेन नियमो नेष्यते बुधैः ॥
'अतो विभक्तिष्वन्यासु भवन्ति वस्नसादयः' ॥

यद्वा षष्ठीचतुर्थ्योरत्र षष्ठ्या अल्पस्वरत्वात् पूर्वं निपातः । द्वितीयापेक्षया चतुर्थ्याश्च समस्वरत्वात्पूर्वनिपातः (?) ॥ इति द्वन्द्वः ॥

**स्वामी ते स समायातः स्वामी मे सांप्रतं गतः ।**
**नमस्ते भगवन् भूयो देहि मे मोक्षमव्ययम् ॥ ४९ ॥**

---

१ सहितग्रहणाद्युवयोः पुत्रः युष्मत्पुत्रः । आवयोः पुत्रः अस्मत्पुत्र इत्यादौ विभक्तिलोपे कृते आदेशा नेति ज्ञेयम् । २ 'द्वितीयाचतुर्थ्योश्च समस्वरत्वात् पश्चान्निपातः इति पाठान्तरम्' ॥ ३ 'इति सिद्धम्' ॥

**स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयातनाम्।**
**राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः॥ ५०॥**
**देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः।**
**स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः॥ ५१॥**
**नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम्।**
**सानन्दान्वः प्रपश्यामः पश्यामो नः सुदुःखिनः॥ ५२॥**

तत्रोदाहरणानि श्लोकैर्व्यञ्जयति—यथा स्वामी० । स ते तव स्वामी समायातः। मे मम स्वामी सांप्रतं गतः। अत्र स्वामित्वे षष्ठी तस्या एकत्वे ते मे इत्यादेशौ दर्शितौ। चतुर्थ्येकवचने दर्शयति—नमः भगो ज्ञानमस्यास्तीति भगवान् तस्यामन्त्रणे हे भगवन् भूयः पुनरपि वारंवारं ते तुभ्यं नमः। अत्र नमःशब्दयोगे चतुर्थी। तत्र युष्मदस्ते आदेशः। मे मह्यम् अक्षयं मोक्षं देहि प्रयच्छ। अत्र दानार्थे चतुर्थी। अस्मदो मे आदेशः एकवचनत्वात्॥ द्विवचनादेशं दर्शयति—स्वामी० । स वां युवयोः स्वामी उच्चैरतिशयेन जहास अहसत्। किं कृत्वा? नौ आवयोः दानयातनां पीडां दृष्ट्वा। अत्र षष्ठीद्विवचने युष्मदो वाम् अस्मदो नौ। वां युवाभ्यां राजा भूपतिर्दानं दास्यते मधुसूदनः कृष्णः आवाभ्यां ज्ञानं तत्त्वावबोधं दास्यते। अत्र चतुर्थीद्विवचनम्॥ वां युवां विष्णुर्देवोऽवतात् पातु। जनार्दनः कृष्णो नौ आवां नरकाद्रक्षतु। अत्र द्वितीयाद्विवचनम्॥ बहुत्वं दर्शयति—स्वामी० । वो युष्माकं स्वामी राजा बलवान् बलयुक्तः नोऽस्माकम् असौ जनार्दनः कृष्णः स्वामी। षष्ठीबहुत्वे रूपमिदम्। युष्मदो वस् अस्मदो नस्॥ चतुर्थीबहुवचने वो युष्मभ्यं नमः। किंविशिष्टेभ्यो वः? ब्रह्म विशेषेण जानन्तीति ब्रह्मविज्ञास्तेभ्यः। ज्ञानज्ञातृभ्य इत्यर्थः। नोऽस्मभ्यं ज्ञानं धनं ज्ञानमेव धनं दीयताम्। चतुर्थीबहुत्वरूपम्॥ वो युष्मान् वयं सानन्दान् सह आनन्देन वर्तमानान् सुदुःखिनोऽतीव दुःखयुक्तान् पश्यामः। 'पश्य त्वं नः सुखान्वितान्' इति पाठः। द्वितीयाबहुवचनरूपमिदम्॥

**त्वामामा॥ अमा सहितयोर्युष्मदस्मदोस्त्वा मा इत्येतावादेशौ भवतः॥**
**पश्यामि त्वा मदालीढं पश्य मा मदभेदकम्।**

अमि विशेषमाह—सूत्रम्—'त्वामाऽमा'॥ त्वामा प्रथमाद्विवचनान्तं सांकेतिकम्। अमा इति अम्शब्दस्य तृतीयैकवचनान्तम्। 'स्वरहीनं०' 'सवर्णे०' अमा० युष्मदः अम्सहितस्य त्वा अस्मदः मा आदेशः। अत्रोदाहरणम्—पश्यामि॥ त्वा त्वाम् अहं मदालीढं मदव्याप्तं गर्वयुक्तं पश्यामि। मा मां मदभेदकं मदोत्तारकं पश्य॥

**नादौ॥ पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति॥**
**तव ये शत्रवो राजन्मम तेऽप्यतिशत्रवः।**
**तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि।**

---

१ 'दानयाचनाम्' इति पाठः०॥

पुनरादेशनिषेधमाह—सूत्रम्—'नादौ' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । आदाविति आदिशब्दस्य सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टिलोपः पश्चात् 'स्वरहीनं०' ॥ सिद्धम् । पादः श्लोकचतुर्थांशः तस्यादौ तेमे वांनौ वस् नस् इत्येते आदेश न भवन्ति । अत्रोदाहरणम् तवेत्यादि । हे राजन् ये तव शत्रवः ते ममापि अतिशत्रवः ॥

[युष्माकं भगवान् देवश्चास्माकं पापनाशनः ॥] अत्र पादादित्वात्ते मे आदेशौ न भवतः ॥ "संबोधनपदादग्रे न भवन्ति वसादयः ॥" संबोधनमामन्त्रणं तदन्तं यत्पदं तदग्रे वस्नसादय आदेशा न भवन्ति । यथा 'राजन् मम' इत्येवोदाहरणम् । अथवा 'हे देव तव दासोऽस्मि । देव तुभ्यं नमः सदा ।' पादादाविति किम् । पादादावेव एतेषामादेशानां निषेधो न तु पादमध्ये । तत्रोदाहरणं श्लोकः—"पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः । हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः ॥" नरसिंहस्य नरसिंहावतारस्य नखलाङ्गलकोटयः नखा एव लाङ्गला हलास्तेषां कोटयोऽग्रभागा वो युष्मान् पान्तु रक्षन्तु । कथंभूताः ? हिरण्यकशिपुनाम्नो दैत्यस्य यद्वक्षो हृदयं तदेव क्षेत्रं तत्र योऽसौ असृजो रुधिरस्य कर्दमः पङ्कस्तेन अरुणा रक्ताः एवंविधा नरसिंहरूपधारिणो विष्णोर्नखरूपहलाग्रभागा रक्षन्त्वित्यर्थः । पान्तु वः इत्यत्र पादाद्यभावात् न प्रतिषेधः ॥

**चादिभिश्च ॥ चादिभिरपि योगे नैते आदेशा भवन्ति ॥**

पुनर्निषेधान्तरमाह—सूत्रम्—'चादिभिश्च' ॥ च आदिर्येषां ते चादयस्तैश्चादिभिः । तृतीयाबहुवचनान्तम् । 'स्रोर्विं०' । च प्रथमैकवचनान्तम् । 'अव्यया०' 'विसर्जनी०' 'स्तोः श्चुभिः श्चुः' सिद्धमिदम् । चादिभिरपि सह योगे च वा ह अह एव एतेषां पञ्चानामव्ययानां योगेऽपि समीपवर्तित्वे सति एते तेमे वांनौ वस् नसूरूपा आदेशाः प्रायो न भवन्ति । यथा ॥

'तव मम च समागमस्तदासीत्तव मम वा न किमप्यसाध्यमस्ति ॥

---

१ अग्ने तव । देवास्मान्पाहि ॥ पदात्परयोरनयोरेते आदेशा वक्तव्याः ॥ त्वां पातु मां पातु ॥ एते आदेशा अन्वादेशे नित्यमनन्वादेशे वा वक्तव्याः ॥ यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः । अनन्वादेशे तु त्वं मे मम वा देवोऽसि ॥ विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा वक्तव्याः ॥ भक्तस्त्वमप्यहं तेन हरिस्त्वा त्रायते स मा ॥ अचाक्षुषज्ञानार्थधातूनां योगे नैते आदेशा वक्तव्याः ॥ चेतसा त्वामीक्षते ध्यायति स्मरतीति वा ॥ चक्षुषज्ञानार्थधातुयोगे तु भक्तस्त्वा पश्यति चक्षुषा । युक्तयुक्तेऽपि निषेधः । भक्तस्तव रूपं ध्यायति ध्यायते । रूपेण सह सम्बन्धाद्ध्यानेन युक्तं रूपं तद्रूपेण युक्तस्य तवेत्यस्य युक्तयुक्तत्वात् ॥ 'संबोधनपदादग्रे न भवन्ति वसादयः ।' विशेष्यपूर्वं संबोधनं हित्वा अन्यस्मात्संबोधनात्परयोर्नैते आदेशा भवन्ति ॥ इति केचित् ॥ 'देवास्मान्पाहि नृहरे विष्णोऽस्मान्पाहि सर्वतः ॥' विशेष्यपूर्वात् । हरे कृपालो नः पाहि । संबोधनेतरपूर्वात् । सर्वदा रक्ष देव नः ॥ अस्योपन्यासः 'ते मे आदेशौ न भवतः' इत्युपसंहारविरुद्धः । २ युवयोरावयोश्चेशो हरिर्मामेव रक्षतु । तुभ्यं मह्यं च देवेशो दद्याच्छं तुभ्यमेव च ॥ च वा ह अह एव । आदिशब्देनैते पञ्चैव गृह्यन्ते नान्ये । 'नच वाहाहैवयोगे' इति पाणिनीयवचनात् ॥ साक्षाद्योगेऽयं निषेधः । न पुनर्युक्तयुक्ते । शिवो हरिश्च मे स्वामीत्यादौ इत्यधिकम् ॥

"तव मम इह महच्चकास्ति सख्यं न तव ममाह कचिद्भवेद्वियोगः" 'सदा तवैव भक्तोस्मि' इत्यादि ॥ द्विवचनादावपि प्रयोगवशाच्च ज्ञेयम् ॥

इति युष्मदस्मत्प्रक्रिया ॥

---

**चादिर्निपातः ॥ च वा ह अह एव एवं नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् पुनर् भूयस् आहोस्वित् सह नमः ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् । अमानोनाः प्रतिषेधे । ईषत् किल खलु वै आरात् दूरात् भृशं यत् तत् ॥ स्वराश्च । इत्येवमादिर्गणो निपातसंज्ञो भवति ॥ द्रव्यवचनो नेति ज्ञेयम् ॥**

अथ चादीन्निपातानाह—सूत्रम्—'चादिर्निपातः' ॥ चादिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । निपतत्यनेकेष्वर्थेष्विति निपातः । 'स्रो०' सिद्धम् । च वा ह इत्यादि यावत् 'स्वराश्च' इत्येवमादिर्गणो निपातसंज्ञो भवति । एते निपाता उच्यन्ते । अथैतेषां किंचिद्विवरणं लिख्यते । च पुनरर्थे समुच्चयादिषु च । वा विकल्पार्थे उपमानार्थे च । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च । अहह इत्यपि खेदे आश्चर्ये च । एव निश्चयार्थे अवधारणे औपम्ये वा । एवम् अमुना प्रकारेण अङ्गीकारे च पूर्वोक्तस्मरणे च उपमायां च । नूनं निश्चये पृथक् भिन्नार्थे । विनाऽभावार्थो वर्जनार्थश्च । नाना बहुप्रकारवाची । स्वस्ति कल्याणार्थे । अस्ति सत्तार्थे । दोषा रात्र्यर्थे । मृषा मिथ्या एतौ द्वावसत्यार्थे । मिथस् परस्परार्थः । अथ अथो एतौ आनन्तर्यार्थे मङ्गलारम्भयोश्च अर्थान्तरकथने च । ह्यस्शब्दो गतदिनार्थे । श्वस् आगामिदिनार्थे । उच्चैस् उच्चत्ववाचकः अतिशयार्थवाचकश्च । एवम् उच्चकैरपि । एवं नीचैः नीचकैः नीचत्वार्थः हीनत्वार्थश्च । स्वर् स्वर्गार्थः । अन्तर् मध्ये । प्रातः प्रभाते । पुनर्भूयस् एतौ द्वौ पौनःपुन्ये । आहोस्वित् वितर्के । कुतश्चित् इत्यपि वितर्के । उत अथवार्थे । ऋते विनार्थे । सह सहार्थे । अन्तरेण विनार्थे । अन्तरा मध्यार्थः । नमस् नमस्कारे । अलं भूषायां निवारणे च पर्याप्ते सामर्थ्ये च । कृतं निवारणे पूरणार्थे च । अ मा नो न एते चत्वारः प्रतिषेधार्थे । ईषत् स्तोकार्थे इत्यर्थः । किल खलु वै एते त्रयो निश्चयार्थे स्मरणार्थे च । आरात् निकटार्थे दूरार्थे च । दूरात् दूरार्थे च । भृशम् अत्यर्थे । यत् यस्मात्कारणात् । तत् तस्मात्कारणात् । स्वराश्च । अ आ इ ई उ ऊ ऋ ॠ ए ऐ ओ औ एतेऽपि निपाताः । तत्र अ संबोधने निर्भर्त्सने च । आ वाक्यस्मरणे च । इ संबोधने । ई दुःखचिन्तने च । उ रोषोक्तौ निवारणे च । ऊ प्रश्ने निश्चये रोषे च । ऋकारऌकारौ क्षोभवाचकौ लोभवाचकौ च । लोभो दोषवृद्धिः । विश्रामवाचकौ वा । ए संबोधने । ऐ आश्चर्ये । ओ अनुनये । औ भवत्यर्थे । अं अङ्गीकारे । अः भये आश्चर्ये च इत्यादिर्गणो निपातसंज्ञो भवति । आदिशब्दादन्येऽपि ज्ञेयाः । सह साकं सार्धं सत्रा अमा एते सहार्थे । कच्चित् इष्टपरिप्रश्ने । अये कोमलामन्त्रणे । ननु निश्चये वितर्के च । नु वितर्के । नक्तं रात्रिवाचकं स्यात् । अनैकान्त्यपर्याया अनेकार्थवाचका इत्यर्थः(?) इति समाप्त्यर्थे । नाम इति कोमलामन्त्रणे । मन्ये इति

वितर्के विचारणे च । एतेषु च केचिद्वाचकाः केचित्सूचकाः । तत्र वाचकाः पृथगादयः ते ह्यर्थं वदन्ति । सूचकाश्चादयः ते किल सूचयन्त्यतः सूचका उच्यन्ते ॥ 'केऽप्येषां द्योतकाः' केऽपि वाचकाः, केऽप्यनर्थकाः । आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः ॥'

**तत्रादिगणो विभक्त्यर्थे निपात्यते ॥ तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । अन्यस्मिन्काले अन्यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वथा उभयथा अन्यथा अन्यतरथा इतरथा । तस्मादिति ततः । यस्मादिति यतः । अस्मादिति अतः । कुतः अमुतः युष्मत्तः अस्मत्तः भवत्तः । सार्वविभक्तिकस्तस् इत्येके । पूर्वतः सर्वतः । पूर्वस्मिन्निति पुरस्तात् । अधरस्मिन्नित्यधस्तात् । परस्मिन्निति परेण-परस्तात् ॥ आहिच दूरे ॥ दूरेऽर्थे वाच्ये सति आहिच् प्रत्ययो भवति । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति चाण्डालाः । चकारादाच् । दक्षिणा ॥**

अथ विभक्त्यर्थसूचकान्निपातानाह—तत्रादिगणो विभक्त्यर्थे निपात्यते । तत्र सप्तम्यर्थे यथा सप्तम्येकवचने तस्मिन्नित्यर्थे तत्र निपातः । एवं तयोः तेषु तस्यां तयोः तासु एतेष्वपि तत्रेति निपातः । एवं सप्तम्यर्थे वर्तमानात्तच्छब्दात् त्रप्रत्ययः दलोपश्च । एवं सप्तम्यर्थे वर्तमानाद्यच्छब्दात् त्रप्रत्ययो दलोपः । यस्मिन्नित्यस्य यत्र । किम्शब्दात् त्रप्रत्ययः किमः कुआदेशश्च । एवं सप्तम्यर्थे किम्शब्दात् अप्रत्ययः कुआदेशः । 'उवम्' स्वरहीनं० क । कस्मिन्नित्यस्य कुत्र कुह क ॥ एवं द्वि भवत् युष्मदस्मदौ च वर्जयित्वा सर्वादिगणात् सप्तम्या अर्थे त्र इति भवति । सर्वत्र उभयत्र अन्यत्र एकत्र पूर्वत्र परत्र इत्यादि । तस्मिन् काले तदा । यस्मिन्काले यदा । कस्मिन् काले कदा । एकस्मिन् काले एकदा । एवं सदा सर्वदा अन्यदा । येन प्रकारेण यथा । केन प्रकारेण कथं । अनेन प्रकारेण इत्थं । सर्वेण प्रकारेण सर्वथा । एवम् अन्यथा इतरथा अपरथा ॥ तस्प्रत्ययान्तानाह—पञ्चम्यर्थे तस् । तस्मादिति ततः । यस्मादिति यतः । कस्मादित्यर्थे कुतः । अस्मादित्यर्थे इतः अतः । एवं ग्रामतः लोकतः सर्वतः ॥ सार्व० । एके आचार्या इत्याहुः । तस्प्रत्ययः सर्वविभक्तिषु भवति । सर्वासां विभक्तीनामर्थे भवतीत्यर्थः । स्वमते तु पञ्चम्यर्थे एव । कस्मादिति कुतः । पार्श्वे इति पार्श्वतः । पूर्वस्यामिति पूर्वतः । एवं सर्वतः इतः इत्यादयोऽवसेयाः । पूर्वस्मिन्निति पुरस्तात् पूर्वस्मिन् काले देशे च पूर्वस्यां दिशि वेत्यर्थः । तथा च कालापके—'पूर्वशब्दात् दिग्देशकालार्थात्सप्तमीपञ्चमीप्रथमान्तादस्तातिः पूर्वस्य पुरनिपातः अनद्यतने काले' । एवम् अधस्तात् अध इति । एवमुपरिष्टात् उपरि इति । परस्मिन्निति परस्मिन् देशे काले परस्यां दिशि वेति परेण । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि चाण्डाला वसन्ति । दक्षिणस्यां दिशि दूरे वसन्तीत्यर्थः । एवम् उत्तराहि वसन्ति कौरवाः । उत्तरस्यां दिशि दूरे वसन्तीत्यर्थः ॥

**किमः सामान्ये चिदादिः ॥ सर्वविभक्त्यन्तात्किंशब्दात्सामान्येऽर्थे चित् चन च इत्येते प्रत्यया भवन्ति ॥ कश्चित् कश्चन कचित् कचन ॥**

'किमः सामान्ये चिदादिः' त्रिषु लिङ्गेषु सिद्धादेव किंशब्दात् सामान्ये अज्ञाताद्यर्थे अनिर्धारणेऽर्थे सप्तसु विभक्तिषु चिदादिरिति । चित् चन प्रत्ययो भवति इत्यर्थः । अज्ञातः कः कश्चित् कौचित् केचित् काचित् किंचित् कुत्रचित् कचित् कश्चन काचन किंचन कचन । एवं सप्तस्वपि विभक्तिषु ॥

**तदधीनकात्स्न्र्ययोर्वा सात् ॥ तदधीनार्थे कात्स्न्र्यार्थे वा सात्प्रत्ययो भवति ॥ राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् । अग्नेः अधीनमित्यग्निसात् ॥ सात्प्रत्ययस्य षत्वं नेच्छन्ति ॥ ऊर्युररयङ्गीकरणे ॥ ऊरीकृत्य उररीकृत्य ॥ सद्यादिः काले निपात्यते ॥ सद्य अद्य सपदि अधुना इदानीम् सम्प्रति साम्प्रतम् पूर्वेद्युः परेद्युः आशु शीघ्रम् झटिति तूर्णम् अपरेद्युः यर्हि तर्हि जोषम् मौनम् अन्येद्युः ॥**

पुनर्निपातान्तरमाह—'तदधीनकात्स्न्र्ययोर्वा सात्' । तदधीनेति । यद्यस्याधीनमायात्तं तत्तदधीनं । कृत्स्नस्य समग्रस्य भावः कात्स्न्र्यं समग्रत्वं तदधीनं च कात्स्न्र्यं च तदधीनकात्स्न्र्ये तयोः । तत एतयोरर्थे नाम्नः पुरतः सात् प्रत्ययो निपात्यते । राजन् भस्मन् । राज्ञोऽधीनं राजसात् । सर्वं भस्म भवति इति भस्मसात् । 'तदधीनकात्स्न्र्ययोः' इति सात्प्रत्ययः । 'नाम्नो नो०' राजसात् । भस्मसात् । सात्प्रत्ययस्य षत्वं नेच्छन्ति । यथा । अग्निसात् । 'ऊर्युररयङ्गीकरणे' । अङ्गीकरणेऽर्थे ऊरी उररी शब्दौ निपात्येते । ऊरीकृत्य उररीकृत्य अङ्गीकृत्येत्यर्थः । ऊरीकृतम् । उररीकृतम् । उररीकरोति । सद्य० । आदिकाले अर्थे कालविशेषे सद्यादिर्निपात्यते । सद्यस्तत्कालम् । अद्य सांप्रतदिने । सपदि शीघ्रम् । अधुना इदानीम् । एतौ वर्तमानक्षणार्थे । अक्षिपक्ष्मावच्छिन्नकालः क्षणः । एवं संप्रति सांप्रतमपि । झटिति शीघ्रम् तूर्णम् एते त्रयः औत्सुक्यार्थाः । पूर्वेद्युरिति गतदिवसार्थवाचकम् । परेद्युर्दिवसान्तरवाचकम् ॥ यर्हि यदि तर्हि तदा कर्हि कदा । आदिशब्दात् परुत् परारिः एषमः अपरेद्यवि अपरेद्युः उत्तरेद्युः उभयेद्युः इत्यादयो ज्ञेयाः ॥

**प्रादिरुपसर्गः ॥ प्र परा अप सम् अनु अव निर् निस् दुर् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप श्रत् अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ॥**

सूत्रम्—'प्रादिरुपसर्गः' ॥ प्र आदिर्यस्य स प्रादिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । उपसृज्यते धातोः समीपे क्रियते इत्युपसर्गः । प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ प्रादि० । अग्रे उपसर्गः । 'नामिनोरः' द्विपदं सूत्रम् । प्र आरभ्य यावत् आविः प्र, परा, अप इत्यादि । 'प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिःप्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना' । अयं प्रादिः आविःपर्यवसानो गण उपसर्गसंज्ञकः । तत्र प्रशब्दः प्रकर्षार्थः । यथा प्रणम्य प्रवादः । 'प्रादिकर्मणि दीर्घे च सामर्थ्ये भृशसंभवे । वियोगशुद्धिशक्तीच्छाशान्तिपूजाप्रदर्शने' । आदिकर्मणि प्रारब्धं प्रकृतम् । आयामे प्रलम्बः । सामर्थ्ये प्रभुः । भृशार्थे प्रतपति । संभवे प्रभवति । प्रीणने प्रतुष्यति । गमने प्रयाति । इ-

इच्छायां प्रार्थयते। शान्तौ प्रशान्तः। मुख्ये प्रवरः। अवलोकने प्रपश्यति। शुद्धौ प्रसन्ना आपः। प्रसन्नेन्द्रियः। प्रीतौ प्रसीदति राजा। पूजायां प्राञ्जलिः प्रह्वः। तत्परः पितामहात्परः प्रपितामहः। एवं प्रपौत्रः प्रशिष्यः इत्याद्यर्थेषु उपसर्गो ज्ञेयः॥ परा इति विपरीतार्थे पराजयार्थे विमुखार्थे दूरीकरणे च। यथा पराजितः पराभूतः पराकृतः पराङ्मुखः। परावृतः पराक्रमः परामर्शः। अप असत्यार्थविकारवर्जनस्तेनकर्षणादौ। यथा अपकर्षति अपचरति। अपकृतः। अपहरति। सम् संभवसम्यक्प्रकारादौ। यथा संभवति। मिलने संगच्छति। समवाये संकरः। एवं संधिः संकेतः संस्कृतः संशयः संरम्भः संवृतम्। अनु अनुज्ञापश्चाद्भावसादृश्याभिमुखहीनसामीप्यादीप्सादौ। अनुजानाति अनुवदति अनुगच्छति अनुकरोति अनुहरति। वत्सो मातरमनुधावति। अन्वर्जुनं योद्धारः। अनुमेघम्। अनुगृहम्। अव अवज्ञालम्बज्ञानशुद्धिव्याप्त्यादौ। अवगणयति। अवजानाति। यष्टिमवष्टभ्य तिष्ठति। अवगतोऽर्थः अवदानम् अवकीर्णः। निर् निश्चयनिगमनातिशयनिषेधनिर्णयादौ। निर्णयति निर्गतः निरुपमः निष्पन्नः निश्चयः निर्मक्षिकम्। दुरिति दुष्टे दुःखकष्टाद्यर्थे। दुर्जनः दुष्करम्। वि इति नानार्थवियोगविदीर्णवैषम्यवैमनस्यविशेषणाद्यर्थे। विविधं विदारितः विकटः विमनाः विराजते विशेषणादौ यथा। विशिनष्टि विरूपः विलोमः विस्मितः विष्यन्नः विप्रकृष्टः विमुखः विनयः। आङ् इति मर्यादाभिविधीषत्समन्तादाशंसनोपदेशागमादौ। यथा आसमुद्रक्षितीशानाम् आजन्मशुद्धानाम् आगच्छति आरोहति आशास्ते आलभते आलिङ्गति आरभते आदत्ते आसन्नः आशयः॥ नि नितरं निक्षेपणादौ। निपीय निहितं निक्षिपति॥ अधि इति अध्ययनाधीनाधिपत्याधिकाधिष्ठानादौ। यथा अधीते अधिगुणः अधितिष्ठति॥ अपि आच्छादनादौ। अपिदधाति। यतः 'अपि संभावना प्रश्नशङ्कागर्हासमुच्चये'॥ अति अतिशयादौ 'अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽप्यति'। यथा अतिरथः अतितमं अतिक्रामति अतिशेते॥ सु इति प्रशंसनातिशयसुखशोभनशुभादौ। सुकरः॥ उत् प्राबल्ये ऊर्ध्वक्रियोत्कर्षादौ। 'उत् प्राबल्ये वियोगे च प्रकाशे चोर्ध्वकर्मणि'। उत्कर्षति॥ अभि अभिवादनेच्छारूपसंमुखपराभवादौ। यथा अभिवदति अभिगच्छति॥ प्रति प्रतिष्ठा प्रतिज्ञासादृश्यग्रहणाभिमुख्यसमीपहिंसाप्रतिषेधादौ। यथा प्रतितिष्ठति॥ परि सामस्त्यंदोषकथालिङ्गनपरिभवादौ परिभवति॥ उप इति समीपव्याप्तोपरमप्रतिक्रियाध्ययनपुष्ट्यादौ। उपतिष्ठते॥ श्रत् श्रद्धायामास्तिक्यबुद्धौ च। अन्तर्मध्ये। आविः प्राकट्ये। आविःकरोति। अन्ये अर्था बृहद्वृत्तिभ्यो ज्ञेयाः। अयं प्रादिर्गणः उपसर्गसंज्ञकः। एतेऽपि बाधकानुवर्तकविशेषनिरर्थकभेदाच्चतुर्धा। यतः 'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते। तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते'। बाधते यथा—पराजयते 'उपसर्गेण धात्वर्थः' इति वचनात्॥ तं धात्वर्थमनुवर्तते। यथा—विजयते॥ विशिनष्टि विशेषयति। यथा—प्रभवति॥ निरर्थकस्तु अशोभमानार्थकः। यथा—प्रलोकते॥

**प्राग्धातोः॥ उपसर्गाः धातोः प्राक् प्रयोक्तव्याः॥**

अथैतेषां प्रयोजनमाह—सूत्रम्—'प्राग्धातोः'॥ प्राक् प्रथमैकवचनान्तम्। 'अव्यया०।' धातोरिति धातुशब्दस्य षष्ठ्येकवचनान्तम्। 'ङिति' 'ङस्य' 'स्रोर्वि०' सिद्धम्। उपसर्गा धातोः भ्वादेः क्रियायोगे प्राक् पूर्वमादौ प्रयोक्तव्याः। यथा प्रभवतीत्यादि।

**तदव्ययम् ॥ तदिदं प्रादिचादिशब्दरूपमव्ययसंज्ञं भवति ॥ क्त्वाद्यन्तं च ॥**

अथ चादीनां संज्ञामाह—सूत्रम्—'तदव्ययम्' ॥ तत् प्रथमैकवचनान्तम् । 'नपुंसकात्स्य०' अव्ययं न व्येति न क्षयं यातीत्यव्ययम् प्रथमैकवचनान्तम् । 'अतोऽम्' 'अम्शसो०' 'मोऽनुस्वारः' पश्चात् 'स्वरहीनं०' तदिदं पूर्वोक्तं चादि चवाहेत्यारभ्य आविः-पर्यन्तं यच्छब्दरूपं तदव्ययसंज्ञं भवति ॥ च पुनः 'क्त्वाद्यन्तम्' 'पूर्वकाले क्त्वा' इति सूत्रोत्पन्नः क्त्वा आदौ यस्य स क्त्वादिः । 'भुवो भावे क्यप्' इति यावत् सोऽन्ते यस्य तत् क्त्वाद्यन्तं क्त्वा तुम् क्यप् धा कृत्वस् शस् णम् वत् आम्प्रत्ययान्तः शब्दः तदप्यव्यय-संज्ञं भवतीत्यर्थः ॥ यथा—कृत्वा कर्तुम् प्रणम्य द्विधा पञ्चकृत्वः कारं कारम् घटवत् किंतराम् बहुशः द्विः इत्यादि ॥

**अव्ययाद्विभक्तेर्लुक् ॥ अव्ययात्परस्या विभक्तेर्लुग् भवति ॥ न तु शब्दनिर्देशे ॥ अव्ययानां च न लिङ्गादिनियमः । तदुक्तं च—**

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ ५९ ॥**

**उक्तान्यलिङ्गान्यव्ययानि ॥**

ततः किं कार्यमित्याह—'अव्ययाद्वि०' ॥ अव्ययात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' । विभक्तेरिति विभक्तिशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'चपा अबे०' ॥ लुक् प्रथमैकवचनान्तम् 'हसेपः०' 'नामिनो०' ॥ अव्ययात्परा या विभक्तिस्तस्या लुग्भवति । तत्रापि विशेषः—न तु शब्दनिर्देशे ॥ तु परं शब्दनिर्देशे विभक्तेर्लुक् न भवति । शब्दस्वरूपत्वेन प्रतिपादनं शब्दनिर्देशः अव्ययस्य नामग्रहणमित्यर्थः । नतु तदर्थवाचकत्व-मित्यर्थः । यथा 'अवाप्योरुपसर्गयोः' इति । तथा द्वितीयवृत्तौ—'क्रीडोऽनुसंपरिभ्यः' 'समवप्रविभ्यः स्थः' 'उद्विभ्यां तपः०' इत्यादौ शब्दनिर्देशत्वादव्ययात्परस्याया अपि विभ-क्तेर्न लुक् । च पुनः अव्ययानां लिङ्गादिनियमो नास्ति लिङ्गवचनविभक्तिभेदो न । उक्तं च शास्त्रान्तरे । सदृशं० । यत्त्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु सदृशं, च पुनः सर्वासु प्रथमादिषु सप्तम्यन्तासु विभक्तिषु सदृशं, सर्वेषु वचनेषु च एकद्विबहुवचनेषु सदृशं समानरूपं, यन्न व्येति व्ययं न याति रूपान्तरं न भजति तदव्ययमित्युच्यते । अव्ययोपसंहारमग्रेतनसूत्र-संबन्धं व्याचिकीर्षुः फक्किकामाह—उक्ता० । अव्ययानि उक्तानि कथितानि । किंभूतानि ? अलिङ्गानि पुंस्त्वादिलिङ्गभेदरहितानि ॥

---

## स्त्रीप्रत्ययप्रक्रिया १४

**अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ॥ आवतः स्त्रियाम् ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति ॥ जाया माया श्रद्धा मेधा धारा इत्यादि ॥ [1]अजादेश्चाप् वक्तव्यः ॥ अजा एडका कोकिला बाला शूद्रा गणिका इत्यादि ॥**

---

१ अजाश्वाकोकिलाबालावत्सादौ त्रिफलादिके । इबादेरपवादार्थमजादेर्ग्रहणं पृथक् ॥ अजादेश्चेति चका-

अधुना वक्ष्यमाणसूत्रैर्लिङ्गविशेषविजिज्ञापयिषया लिङ्गरूपो विशेषः तस्य विशेषेण ज्ञापयितुमिच्छया स्त्रीलिङ्गज्ञापनाय स्त्रीप्रत्ययाः स्त्रीत्वसूचका ये प्रत्ययास्ते प्रस्तूयन्ते प्रारभ्यन्ते इत्यर्थः। सूत्रम्—'आबतः स्त्रियाम्'॥ आप् प्रथमैकवचनान्तम्। 'हसेपः०'। अत इति अत्शब्दस्य पञ्चम्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्वि०' 'चपा अबे०'। स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनम्। 'स्त्रियां योः' 'स्त्रीभ्रुवोः' 'वेयुवः' 'स्वरहीनं०'। सिद्धं त्रिपदम्॥ आकारान्तं स्त्रियां वर्तमानं स्त्रीलिङ्गत्वेन निर्दिष्टं यन्नाम तस्मात्पुरत आप् प्रत्ययो भवति। पकारः सिलोपार्थः। उदाहरणम् जाय माय मेध श्रद्ध धार अनेन आप् प्रत्ययः। 'सवर्णे०' 'आपः' इति सेर्लोपः। अग्रे गङ्गावत्॥ पुनर्विशेषमाह—'आबतः स्त्रियाम्' इत्याप्सिद्धौ पुनः 'अजादे०' इति 'जातेरयोपधात्' इतीपो निषेधार्थं पठ्यते। अजादेरिति अजादेः। शब्दगणाज्जातिवाचित्वेऽपि आप् प्रत्ययो भवति। अजा एडका कोकिला बाला शूद्रा गणिका। अत्र शूद्रा अभीरजातिः। एवम् अश्वा चटका मूषिका इत्यजादयः। अत्र। 'अजादे०' इत्याप्। 'सवर्णे०'। प्रथमैकवचनम्। 'आपः'॥

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।**
**आपं चैव हलन्तानां यथा वाचा निशा दिशा॥ ६१॥**

**अवगाह्य वगाह्य। अपिहितम् पिहितम्। अपिधानम् पिधानम्॥**

अथ आप्प्रत्ययाधिकारे व्यञ्जनेभ्योऽपि तत्करणसूचकं श्लोकमाह—वष्टिभागु०। भागुरिराचार्यः अतोऽकारस्य लोपं वष्टि अभिलषति। कयोः? अव अपि इत्येतयोर्द्वयोरुपसर्गयोः। यथा पिदधाति मुखम्। अपिधानं पिधानम्। अवगाहः वगाहः विमलगिरिवितंसः तोयनिधी वगाह्य इत्यादयः। च पुनः। एव अवधारणे। हसान्तानां शब्दानामापम् आप् प्रत्ययं वष्टि। यथेत्युदाहरणोपन्यासे। वाच् निश् दिश् सर्वत्र आप् 'स्वरहीनं०' 'आपः' इति श्लोकव्याख्या॥ 'सीमन् शब्दस्य वा आप् टिलोपश्च'॥ सीमा॥

**काप्यतः॥ कापि इ अतः। स्त्रियां कापि परे पूर्वस्याकारस्य इकारो भवति॥ कारिका। पाचिका। पाठिका॥**

सूत्रम्—'काप्यतः'॥ ककारेण सहित आप् काप् तस्मिन् कापि सप्तम्येकवचनान्तम्। अग्रे इ प्रथमैकवचनान्तं सांकेतिकम्। अग्रे अतः इति षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्वि०'॥ कापि अग्रे इ 'सवर्णे०' अतः 'इ यं स्वरे' 'स्वरहीनं०' सूत्रं सिद्धम्॥ स्त्रियामिति स्त्रीलिङ्गे कसहिते आपि परे अकारस्य इकारो भवति। उदाहरणं च—'डुकृञ् करणे'। कृ। 'डुपचष् पाके' पच्। करोतीति कारकः। पचतीति पाचकः। पठतीति पाठकः 'वृवुणौ' इति वुण् प्रत्ययः। वु। 'धातोर्ना०' इति वृद्धिः। कृ इत्यस्य कार्। पच इत्यत्र 'अत उपधायाः' इति प इत्यस्य पा। 'युवोरनाकौ' इति वु इत्यस्य अकादेशः। 'स्वरहीनं०' कारकः पाचकः पाठकः इति सिद्धम्। ततः 'आबतः स्त्रियाम्' 'सवर्णे०'

---

१ रग्रहणाच्छूद्राकन्यकेत्यादौ प्रथमवयोवाचकत्वेन जातिवाचकत्वेन च ईप् प्राप्तः सोऽजादित्वान्न भवतीति सूचितम्॥

ततः । 'काप्यतः' इत्यनेन अकारस्य इकारो भवति प्रथमैकवचने स् 'आपः' इति सेर्लोपः । कारिका पाचिका पाठिका इति रूपत्रयम् । 'कारिका तु स्वल्पवृत्तौ बहोरर्थस्य सूचिका' । एवमन्यान्यप्यवसेयानि । वाटिका शाटिका ॥ कन्यायाः कापि परे ह्रस्वतैव नत्विकारः । कन्यका इत्यादि । कचिन्न भवति यथा बहुपरिव्राजका । बहुपाठका ॥

**ह्रस्वो वा ॥ स्त्रियां कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति ॥ वेणिका वेणीका । नदिका । नदीका । श्रेयसितरा श्रेयसीतरा ॥**

अज्ञाते कुत्सिते चैव संज्ञायामनुकम्पने । तद्युक्तनीतावप्यल्पे ह्रस्वे स्वार्थे च कः स्मृतः ॥ अज्ञाते—अश्वकः, संज्ञायां देवदत्तकः, तद्युक्तनीतौ गुडेन मिश्रा धाना गुडधानका, अल्पे तैलकम्, ह्रस्वत्वे वृक्षकाः, चकारात् स्वार्थेपि, चौर एव चौरकः ॥ अथ कावधिकारात् कापि परे अन्यत्कृत्यमाह—सूत्रम्—'ह्रस्वो वा' ॥ ह्रस्वः प्रथमैकवचनान्तम् । 'स्रोर्विं०।' वा प्रथमैकवचनान्तम् । 'अव्यया०' 'ह्वे' 'उओ' ॥ स्त्रियामित्यादिवृत्तिः सुगमा । न वरम् । तरादाविति । तरतमौ तद्धितप्रत्ययौ । 'तरतमेयस्विष्ठाः प्रकर्षे' इति सूत्रोत्पन्नौ । उदाहरणम्—वेणी नदी । वेण्येव वेणीका वेणिका वा । नद्येव नदीका । नदिका वा । 'स्वार्थेऽपि' इति कप्रत्ययः । यद्वा ह्रस्वा वेणी वेणीका वेणिका वा । ह्रस्वा नदी नदीका नदिका वा । ह्रस्वात्कप्रत्ययः । 'आबतः स्त्रियाम्' इत्याप् । अनेन सूत्रेण एकत्र णी इत्यस्य णि नदी । सर्वत्र प्रथमैकवचने स् 'आपः' 'सेतौ चावरणे वेणी नदीवाहे कचोचये ।' अग्रे श्रेयसितरा अतिशयेन श्रेयसी श्रेयसितरा श्रेयसीतरा वा । 'तरतमेयस्विष्ठाः' इति तर-प्रत्ययः । 'ह्रस्वो वा' इति सी इत्यस्य वा सि ॥ एवं श्रेयसीतमा श्रेयसितमा ॥

**नौकादौ न भवति । नौका ॥ वाग्रहणादेवेयं विवक्षा । निश्चीय पतन्त्यनेके ष्वर्थेष्विति निपाताः । निपातानामनेकार्थत्वात् ॥**

प्रयोगान्तरे ह्रस्वनिषेधमाह—नौकादाविति । नौकादौ ह्रस्वो न भवति ॥ ह्रस्वा नौः नौका इत्यादौ शब्दे तु का इति पदं न भवति । एवं सुरैका सुग्लौका द्यौः ॥ एवमन्येऽपि यथासंभवमवसेयाः ॥ कुतो ह्रस्वनिषेध इत्याह—वाग्रहणादेवेति । सुगमम् । अत्राह परः—ननु विकल्पसूचको वाशब्दः कथं निषेधार्थं सूचयति ? तत्राह—निपातानामनेकार्थत्वात् । कथं ? निपतन्त्यनेकेषु बहुष्वर्थेष्विति । यथा चशब्दः पुनरर्थे समुच्चयार्थे च । एवं वाशब्दो विकल्पार्थो निषेधार्थश्चेति कुत्रचिद् विकल्पं कुत्रचिन्निषेधं सूचयतीति न दोषः ॥

**न्रण ईप् ॥ नकारान्ताटकारान्तादणन्ताच्च स्त्रियामीप् प्रत्ययो भवति ॥ दण्डिनी करिणी मालिनी । ईपि राज्ञः अलोपो वक्तव्यः ॥ राज्ञी । शुनी कर्त्री हर्त्री । औपगवी ॥ यस्य लोपः ॥ इश्च अश्च यः तस्य लोपो भवति स्वरे यकारे च परे ॥**

---

१ तरतः पूर्वस्य पुंवत् ॥ श्रेयस्तरा । विदुषितरा-विदुषीतरा विद्वत्तरा । भवतितरा-भवतीतरा-भवत्तरा । सतितरा-सतीतरा-सत्तरा इत्यधिकम् ॥ २ आबन्तस्यानाबन्तस्यापि कप्रत्यये परे बहुव्रीहौ वा ॥ बहुमालकः बहुमालाकः । सुसोमपाकः-सुसोमपकः ॥ ३ उक्तं हि । निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ ४ विभक्तिस्वरं युप्रत्ययं च वर्जयित्वान्यस्मिन्स्वरे यकारे च

स्त्रीप्रत्ययाधिकारादाप्प्रत्ययमुक्त्वा ईप्प्रत्ययमाह—सूत्रम्—'न्रण ईप्' ॥ न ऋ अण् । न च ऋश्च अण् च न्रण् तस्मान् न्रणः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'ऋ रम्' 'स्रोर्वि०' । ईप् प्रथमैकवचनान्तम् । 'हसेपः०' । नकारान्ता इन्प्रत्ययादयः, ऋकारान्तास्तृप्रत्ययादयः, अणन्ता औपगवादयः, एतेभ्यः शब्देभ्यः स्त्रियां स्त्रीलिङ्गे ईप् प्रत्ययो भवति । उदाहरणम्—दण्ड दन्त कर माला । दण्डोऽस्त्यस्या इति दण्डिनी । दन्तोऽस्त्यस्या इति दन्तिनी । करोऽस्त्यस्या इति करिणी । माला अस्त्यस्या इति मालिनी । 'मान्तोपधात्' इति इन्प्रत्ययः । 'यस्य लोपः' इति अवर्णलोपः । 'स्वरहीनं०' अग्रे 'न्रण ईप्' इति सूत्रेण ईप्प्रत्ययः । 'स्वरहीनं' प्रथमैकवचने स् 'हसेपः०' ॥ करिणी इत्यत्र 'रुर्नो णो०' इति सूत्रेण नस्य णः ॥ एवं राजन् अग्रे ईप् प्रत्ययः । ईपि परे राज्ञो राजन्शब्दसंबन्धिनोऽकारस्य लोपो वक्तव्यः । अनेन उपधाया अकारस्य लोपः । 'स्तोः श्चुभिः श्चुः' इति नस्य ञः । 'जञोर्ज्ञः' 'स्वरहीनं' राज्ञी । अन्येऽपि शुनी मघोनी इत्यादयो नान्ताः । अथ ऋकारान्ताः । हृञ् हरणे । हृ । डुकृञ् करणे । कृ । हरतीति हर्त्री । करोतीति कर्त्री । शीले तृन्प्रत्ययो गुणः कर् हर् 'राद्यपो द्वि' जलतुम्बि० । ऋकारान्तत्वात् 'न्रण ईप्' इतीप् । 'ऋरम्' 'स्वरहीनं०' ॥ अथ अणन्ताः । उपगु उपगोरपत्यमौपगवी । 'अपत्येऽण्' 'आदिस्वरस्य ञ्णिति वृद्धिः' उ इत्यस्य औ, 'वोव्य स्वरे' इति उकारस्य अव्, 'स्वरहीनं०' अणन्तत्वादीप् । औपगव ई इति स्थिते । सूत्रम्—'यस्य लोपः' ॥ इश्च अश्च यस्तस्य यस्य षष्ठ्येकवचनान्तम् । ङस् 'ङस्य' 'इ यं स्वरे' 'स्वरहीनं०' लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' सिद्धम् । यद्वा इश्च ई च ई 'सवर्णे०' अश्च आ च आ 'सवर्णे०' ततः ईश्च आश्च या । यस्येति याशब्दस्य षष्ठ्येकवचनान्तम् । 'नपुंसकस्य' इति ह्रस्वः । 'ङस्य' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' इति इकारस्य ईकारस्य च अकारस्य आकारस्य च लोपो भवति । वृत्तिः कण्ठ्या । न वरम् । यस्येति । इवर्णस्य अवर्णस्य च लोपो भवति ईपि प्रत्यये परे तद्धिते स्वरे परे यकारे च परे । अनेन वकारस्य अलोपः । 'स्वरहीनं०' औपगवीति सिद्धम् । अणन्ताच्चेति चकारात् पञ्चादीनां नकारान्तत्वेऽपि स्वस्रादीनाम् ऋकारान्तत्वेऽपि ईप् न स्यात् । पञ्च सप्त स्वसा दुहिता ननान्दा माता तिस्रः चतस्रः इत्यादि ॥

**ष्ट्वितः ॥ षकारटकारउकारऋकारानुबन्धाच्च स्त्रियामिप् प्रत्ययो भवति ॥**
**ष् वराकी । ट् कुरुचरी । उ गोमती । ऋ पचन्ती । पठन्ती इत्यादि ॥**

सूत्रम्—'ष्ट्वितः' ॥ ष् च ट् च उश्च ऋश्च ष्ट्वृ ते इतो यस्य स ष्ट्वित् तस्मात् ष्ट्वितः पञ्चम्ये-

---

परे इति ज्ञेयम् । तेन देवे वातायुः ऊर्णायुः इत्यत्र न भवति ॥ समासतद्धितस्त्रीप्रत्ययेष्वयं विधिर्वेदितव्यः ॥ स्वस्रादीनामन्नन्तानां संख्यावाचिनां च नेप् वक्तव्यः ॥ स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा दुहिता सीमा पञ्चेत्यादि ॥ पादन्तात्स्त्रियामीप् वा वक्तव्यः ॥ द्विपदी-द्विपात् ॥ ऋचि पादन्तादावेव वक्तव्यो न ईप् ॥ पादः पद् द्विपदा ऋक् ॥ अन्नन्ताद्बहुव्रीहेर्डाप् वा वाच्यः । बहुसीमा बहुसीमे बहुसीमाः । पक्षे बहुसीमा बहुसीमानौ बहुसीमानः । बहुयज्वा बहुयज्वे बहुयज्वाः । पक्षे बहुयज्वा बहुयज्वानौ बहुयज्वानः ॥ उपधालोपिनोऽन्नन्ताद्बहुव्रीहेरीप् वा ॥ बहुराज्ञी बहुराज्ञ्यौ । पक्षे डाप् । बहुराजा बहुराजे । डापोऽप्यभावे बहुराजा बहुराजानौ ॥ संख्यादेर्दाम्न ईप् ॥ द्विदाम्नी । इत्यधिकम् ॥

कवचनान्तम् । अस् । मध्ये 'उवम्' 'ऋरम्' 'स्वरहीनं०' 'स्त्रोर्वि०' इत् इति पदं षकारादिषु प्रत्येकं योज्यम् । तेन षकारानुबन्धाः षाकप्रत्ययान्तादयः, टकारानुबन्धाः टप्रत्ययान्तादयः, उकारानुबन्धा मत्वन्तादयः, ऋकारानुबन्धाः शतृप्रत्ययान्तादयः, तत एतेभ्यः स्त्रियामीप् प्रत्ययो भवति ॥ षानुबन्धमाह—वर निवारणे । 'षाको कणः' इति षाकप्रत्ययः । षकारस्येत्संज्ञत्वाल्लोपः । आकः 'स्वरहीनं०' षकारानुबन्धत्वात् 'ष्ट्रितः' अनेन ईप्प्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' स् । 'हसेपः०' । टानुबन्धो यथा—चर गतिभक्षणयोः । चर् कुरुपूर्वः । कुरुषु देशेषु चरतीति कुरुचरी । 'अटौ' इति टप्रत्ययः । टकारः इत् । अ इति । 'स्वरहीनं०' ईप्प्रत्ययादिकं प्राग्वत् ॥ उकारानुबन्धो यथा—गो गौरस्या अस्तीति गोमती । अस्त्यर्थे मतु मत् । उकारानुबन्धत्वादीप् प्रत्ययः शेषं प्राग्वत् । ऋकारानुबन्धो यथा—'डुपचष् पाके' पच् । 'पठ व्यक्तायां वाचि' पठ् । 'शतृशानौ' इति शतृ प्रत्ययः । ऋकार इत् अत् । 'अप् कर्तरि' इत्यप् प्रत्ययः । अ 'स्वरहीनं०' 'अदे' इत्यप्रत्ययाकारस्य लोपः । 'स्वरहीनं' ऋकारानुबन्धत्वात् ईप्प्रत्ययः । 'अप्ययोरान्नित्यम्' इति नुमागमः । 'नश्चापदान्ते०' 'स्वरहीनं०' शेषं प्राग्वत् । 'ष्ट्रितः' इति केवलधातोर्न भवति तेन—'त्रपूष् लज्जायाम्' त्रपा । 'क्षमूष् सहने' क्षमा ॥

**नदादेः ॥ नदादेर्गणात्स्त्रियामीप्प्रत्ययो भवति । नदी गौरी गौतमी ॥**[1]

सूत्रम्—'नदादेः' ॥ नद आदिर्यस्य स नदादिस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङिति' इतीकारस्य एकारः । 'ङस्य' इत्यकारलोपः । 'स्त्रोर्वि०' नदादिर्योऽसौ गणस्तस्मात्स्त्रीलिङ्गे ईप् प्रत्ययो भवति । नद गौर गौतम । अनेन ईप्प्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' नदादिराकृतिगणो द्रष्टव्यः । यथा नर्तकी तैषी पौषी मत्सी अनडुही अनड्वाही मातामही पितामही महिषी सूरी आगस्ती त्रिदशी ॥

**इन्द्रादेरानीप् च**[2] **॥ इन्द्रादेर्गणात्स्त्रियामानीप्प्रत्ययो भवति ॥ इन्द्राणी भवानी रुद्राणी मृडानी वरुणानी । चकारान्मातुलोपाध्यायक्षत्रियाचार्यसूर्यार्याद्वा ॥ अर्यक्षत्रियाभ्यां वा स्वार्थे ॥ मातुलानी मातुली उपाध्यायानी उपाध्यायी क्षत्रियाणी क्षत्रिया आचार्यानी आचार्या । आचार्यादणत्वम् । सूर्याणी सूर्या अर्याणी अर्या ॥ हिमारण्ययोर्महत्त्वे ॥ महद्धिमं हिमानी । महदरण्यमरण्यानी ॥ यवनाल्लिप्याम् ॥ यवनानां लिपिर्यवनानी ॥ यवाद्दोषे ॥ दुष्टो यवो यवानी ॥**

सूत्रम्—'इन्द्रादे०' ॥ पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्त्रोर्वि०' । आनीप् प्रथमैकवचनान्तम् । 'हसेपः०' पश्चात् 'नामिनोरः' 'स्वरहीनं' ॥ इन्द्रादेर्गणात् स्त्रियामानीप् प्रत्ययो भवति । इन्द्र भव शर्व मृड वरुण ब्रह्म रुद्र । अनेन सूत्रेण आनीप् प्रत्ययो भवति ।

---

१ नदादिराकृतिगणः । तेन चतुर्थी पञ्चमी द्वादशी पौर्णमासी इत्यादि ॥ ईप्यनडुहो वाम् वक्तव्यः ॥ अनड्वाही अनडुही ॥ हायनाद्वयसि च ॥ द्विहायनी चतुर्हायणी ॥ पुरुषाद्वा परिमाणे ॥ द्विपुरुषी-द्विपुरुषा वा परिखा इत्यधिकम् ।　२ इन्द्रादेरित्यादिशब्दादिन्द्र-ब्रह्म-रुद्र-भव-शर्व-मृड-वरुणादयः ॥

यथासंभवं नकारस्य णकारः । 'यस्य लोपः' इन्द्रस्य स्त्री इन्द्राणी । 'स्वरहीनं०' 'हसेपः०' ॥ मातुलश्च उपाध्यायश्च क्षत्रियश्च आचार्यश्च सूर्यश्च अर्यश्च मातुलोपाध्यायक्षत्रियाचार्यसूर्यार्य तत एतस्माच्छब्दषट्ककाद्वा आनीप् प्रत्ययो भवति । अर्यक्षत्रियाभ्यां च स्वार्थे एव वा आनीप् ॥ मातुल २ एकत्र आनीप् अन्यत्र ईप् । 'यस्य लोपः' शेषं सुकरम् । एवम् उपाध्याय २ एकत्र आनीप् अन्यत्र 'पुंयोगे च' इतीप् । मातुलानी मातुली उपाध्यायानी उपाध्यायी । एवं क्षत्रियसूर्ययोः । 'ष्रुर्नोणो०' भवति ॥ आचार्यादणत्वम् इति । आचार्यानी आचार्या । क्षत्रियाणी क्षत्रिया । सूर्याणी सूर्या । अर्याणी अर्या । पुंयोगे तु ईप् एव अर्यी क्षत्रियी उपध्यायी ॥ स्वयं व्याख्यात्री तु उपाध्याया । अत्र आप् ॥ 'हिमारण्ययोर्महत्त्वे आनीप् प्रत्ययो भवति' महत् हिमं हिमानी । महत् अरण्यमरण्यानी ॥ यवनशब्दाल्लिप्यामानीप् । यवनानां तुरुष्काणां लिपिर्यवनानी ॥ यवाद्दोषे आनीप् । दुष्टो यवो यवानी ॥

**ईप्समाहारे गुणश्च ॥ त्रयाणां समाहारः त्रयी ॥ पुंयोगे च ॥ पुंयोगे च स्त्रियामीप्प्रत्ययो भवति । शूद्रस्य भार्या शूद्री । गणकी ॥**[1]

सूत्रम्— 'ईप् समाहारे गुणश्च' ॥ समाहार एकीभावस्तत्रार्थे ईप् प्रत्ययो भवति नामिनो गुणश्च । त्रि त्रयाणां समाहारस्त्रयी समाहारत्वात् ईप् । इकारस्य एकारो गुणः । 'ए अय्' 'स्वरहीनं०' 'हसेपः०' ॥ केचित्तु ईप्समाहारे गुणश्च इति न मन्यन्ते । तन्मते 'तयायटौ संख्यायाम्' इति त्रिशब्दादयटि कृते 'यस्य०' इतीकारलोपे टित्त्वात् 'स्त्रितः' इतीप् । पुनः 'यस्य लोपः' 'स्वरहीनं०' त्रयोऽवयवा यस्या इति त्रयी । सूत्रम्—'पुंयोगे च' ॥ पुमान् पुरुषः तस्य योगेऽपि ईप् प्रत्ययो भवति । शूद्र गणक । शूद्रस्य भार्या शूद्री । जात्या या काचित् भवतु परं शूद्रस्य पुरुषस्य स्त्रीत्वात् शूद्री । गणकस्य भार्या गणकी । ईप्प्रत्ययः । 'यस्य लोपः' शेषं सुकरम् ॥

**जातेरयोपधात् ॥ जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रियामीप्प्रत्ययो भवति ॥**[2] **सूकरी हंसी कुक्कुटी ब्राह्मणी इत्यादि ॥ अयकारोपधग्रहणात्क्षत्रिया वैश्या ॥**[3]

सूत्रम्—'जातेरयोपधात्' ॥ जातेरिति पञ्चम्येकवचनान्तम् । 'ङिति' इकारस्य एकारः । 'ङस्य' इत्यकारलोपः । 'स्तोर्वि०' । अयोपध० । यो यकारः उपधा यस्य स योपधः न योपधः अयोपधस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' पश्चात् 'नामिनो रः' 'स्वर०' । सिद्धम् ॥ जातिं मेषादिकां वक्तीति जातिवाची तस्मात् । जातिवाची शब्दो यकारोपधोऽपि स्यादत आह अयकारोपधादिति । यकारोपधावर्जितादित्यर्थः । यकारोपधावर्जिता अपरेऽपि स्वराः स्युरत आह—अकारान्तादिति सुगमम् ॥ जातिलक्षणमाह

---

१ गोपालिकादीनां न ॥ गोपालिका पशुपालिका ॥ सूर्याद्देवतायां चाप् ॥ सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ॥ २ अस्त्रीविषयादिति वाच्यम् । तेन मक्षिका बलाका इत्यादौ न ॥ गवयहयमुकयमत्स्यमनुष्याणां न निषेधः ॥ गवयी । ३ शूद्राज्जातौ न । शूद्रस्य जातिः शूद्रा ॥ महत्पूर्वात्तु ईप् ॥ महाशूद्री आभीरजातिः ॥ पुंयोगे च ॥ महाशूद्रस्य भार्या महाशूद्री इत्यधिकम् ॥

'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह' इति । आकृतिः आकारः ग्रहणं व्यञ्जकं यस्याः सा ॥ च पुनर्लिङ्गानां सर्वभाक् न सर्वलिङ्गानि न भजतीत्यर्थः । यथा ब्राह्मणः पुंसि स्त्रियाम् । च पुनः सकृदुपदिष्टा सति निर्ग्राह्या निश्चेतुं शक्या सा जातिः ॥ [अपत्यप्रत्ययान्तस्य चरणसंज्ञा गोत्रमपत्यप्रत्ययान्तः शब्दोऽपि जातिः चरणैः अपत्यैः सह गोत्रं जातिरुच्यते ।] यद्वा नित्या एका अनेकसमवेता सामान्यरूपा जातिः । यदि नित्या न तर्हि पिण्डे नष्टे सैव नश्यति । यद्येका न, तर्हि अनेकेष्वप्येका जातिर्न स्यात् । यद्यनेकसमवेता न, तर्हि यस्मिन् पिण्डे उक्ता तस्मिन्नष्टे अन्यतरे पिण्डे न प्रतीयत इति । तस्माज्जातिवाचकशब्दादीप् प्रत्ययो भवति । 'यस्य लोपः' प्रथमैकवचने 'हसेपः०' शेषं सुकरम् ॥ क्षत्रिया वैश्या । अत्र जातिवाचिनोऽपि यकारोपधत्वादीप् प्रतिषेधः । तत आप्प्रत्ययः ॥ मत्स्यमनुष्यहयगवयानां यकारोपधत्वेऽपि ईप्प्रतिषेधो न । मत्स्य ईप् प्रत्ययः 'यस्य लोपः' 'यलोपश्च' 'स्वरहीनं०' मत्सी ॥ जातेः किम् । मुण्डा ॥ अकारान्तात्किम् । गौः ॥

**प्रथमवयोवाचिनोऽत ईप् वक्तव्यः ॥ [ कन्याशब्दान्न । ] कुमारी किशोरी कलभी ॥ प्रथमवयोग्रहणाद्वृद्धा स्थविरा इत्यत्र न । अद्ग्रहणाच्छिशुः ॥**

प्रथम० । कालकृता शरीरावस्था वयः । प्रथमवयो बाल्यं तद्वक्तीत्येवंशीलादकारान्ताच्छब्दादीप्प्रत्ययो भवतीत्यर्थः । कुमार किशोर कलभ अनेन ईप् प्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'हसेपः०' ॥ वृद्ध स्थविर । अत्र प्रथमवयोवर्जितत्वादाप्प्रत्ययः नत्वीप् ॥ शिशुः । अत्र प्रथमवयोवाचित्वे सत्यपि अकारान्तत्वाभावादीप्प्रत्ययप्रतिषेधः । प्रथमैकवचने 'स्त्रोर्वि०' ॥

**स्वाङ्गाद्वा ॥ स्वाङ्गवाचिनो वा स्त्रियामीप्प्रत्ययो भवति ॥[2] सुमुखी-सुमुखा ॥ मृगाक्षी-मृगाक्षा ॥ तन्वङ्गी तन्वङ्गा ॥**

सूत्रम्—'स्वाङ्गाद्वा' ॥ स्वं स्वकीयमङ्गं स्वाङ्गं तद्वाची शब्दोऽपि स्वाङ्ग इत्युच्यते । यद्वा सुष्ठु शोभनमङ्गं स्वङ्गम् स्वङ्गमेव स्वाङ्गम् । यद्वा सुष्ठु शोभनं आसमन्तात् अङ्गम् स्वाङ्गम् । स्वस्य प्राणिनोऽङ्गं स्वाङ्गम् तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया' 'चपा अबे०' 'स्वरहीनं०' । सिद्धम् । स्वाङ्गेति 'प्राणिस्थमद्रवं मूर्तं स्वाङ्गं स्यादविकारजम् । तत्र दृष्टमतत्स्थं चेत्स्थितं तद्वच्च तादृशि' ॥ प्राणिस्थं चेतनशरीरे

---

१ 'अपत्यप्रत्ययान्तस्य 'गोत्रम्' इतिसंज्ञा, शाखाध्येतृवाचिनः 'चरणसंज्ञा,' अपत्यप्रत्ययान्तः शाखाध्येतृवाची च जातिरुच्यते' इत्येवं पाठो योग्यः ॥ २ सुष्ठु आसमन्तादङ्गं स्वाङ्गम् ॥ स्वस्य प्राणिनो अङ्गं स्वाङ्गमित्युक्तेऽङ्गाङ्गिभावेन ज्ञानादेरपि स्वाङ्गत्वं स्यात् । अतः स्वाङ्गलक्षणमाह ॥ स्वाङ्गं स्यादद्रवं मूर्तं प्राणिस्थमविकारजम् । तत्र दृष्टमतत्स्थं चेत्स्थितं तद्वच्च तादृशि ॥ पूर्वार्धस्य प्रत्युदाहरणानि ॥ सुमुखा शाला अप्राणिस्थत्वात् ॥ सुस्वेदा द्रवत्वात् ॥ सुज्ञाना अमूर्तत्वात् ॥ सुशोफा विकारजत्वात् । उत्तरार्धस्योदाहरणानि ॥ सुकेशी-सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥ सुस्तनी-सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ॥ स्वाङ्गत्वेऽपि वाशब्दस्य व्यवस्थितत्वात् । ओष्ठादिषु विकल्पः । वदनादिषु न वक्तव्यः । बिम्बोष्ठी-बिम्बोष्ठा ॥ चारुकर्णी-चारुकर्णा । समदन्ती-समदन्ता ॥ पद्मवदना । मृगनयना इत्यादौ ईप् ॥ नखमुखयोश्च संज्ञायां नेप् ॥ शूर्पणखा । गौरमुखा ॥ नासिकाशब्दात्केवलान्नेप् ॥ नासिकेत्यधिकम् ॥

वर्तमानम्। पुनः अद्रवं स्वेदादिरहितम् पुनर्मूर्तम् आकारसहितम् पुनः अविकारजं शोफादिविकाररहितं तत् स्वाङ्गमुच्यते। पुनर्मूर्तं तत्र प्राणिनि दृष्टं पश्चात् यदि अतत्स्थं अप्राणिस्थं भवति तदपि स्वाङ्गम्॥ च पुनः तद्वत् प्राणिवत् तादृशि प्राणिसदृशे अप्राणिन्यपि स्थितं भवति तदपि वा स्वाङ्गम्। यत्तु अप्राणिस्थं द्रवरूपं अमूर्तम् अरूपम् विकाराज्जातम्, तत् स्वाङ्गं न। यथा सुमुखा शाला अप्राणिस्थत्वात्। बहुस्वेदा द्रवत्वान्नेप्। सुज्ञाना अमूर्तत्वात्। बहुशोफा विकारजत्वान्नेप्। सुकेशी सुकेशा वा रथ्या प्राणिस्थस्य अप्राणिनि दृष्टत्वात्, सुस्तनी सुस्तना वा प्रतिमा प्राणिवत् प्राणिसदृशे स्थितत्वात्। इत्यादौ विकल्पेनेप्। स्वाङ्गं मुखकर्णादि तद्वाचिनः शब्दात् स्त्रियामीप्प्रत्ययो भवति। वाशब्दः प्रयोगान्तरे निषेधार्थो न विकल्पार्थः। सुमुख मृगाक्ष तन्वङ्ग। सुष्ठु मुखं यस्याः सा सुमुखी। मृगवत् अक्षिणी यस्याः सा मृगाक्षी। तनु कृशमङ्गं यस्याः सा तन्वङ्गी 'स्वाङ्गा०' इतीप्। 'यस्य लोपः' 'स्वरहीनं' 'हसेपः'॥ वाशब्दस्य निषेधार्थत्वात् पद्मवदना कमलनयना इत्यादौ ईप्प्रत्ययो न भवति॥

**कृदिकारादक्तेरीप् वा वक्तव्यः॥ अङ्गुली-अङ्गुलिः॥ धूली-धूलिः॥ आजी—आजिः॥ अक्तेरिति विशेषणात्कृतिः मतिः भूतिः॥**

'कृदिकारा०'॥ कृदिति तृतीयावृत्तिः। तत्प्रत्ययोत्पन्नो योऽसौ इकारस्तस्मादीप्प्रत्ययो भवति। किंविशिष्टात्? अक्तेः क्तिप्रत्ययवर्जितादिकारादित्यर्थः। उदाहरणम्—धू। 'ध्वादेरुलिः' इति उणादित्वादुलिप्रत्ययः। 'सवर्णे०' धूलिः धूली॥ अगि रगि लगि गत्यर्थाः। अग उलिप्रत्ययः। 'इदित०' इति नुमागमः। 'नश्चापदा०' 'स्वरहीनं०' अङ्गुलिः अङ्गुली॥ अज गतौ क्षेपणे च। अज्। लणादौ इण् प्रत्ययः। णित्त्वात् 'अत उपधायाः' इति वृद्धिः। 'स्वरहीनं०' आजिः आजी। अनेन वा ई प्रत्ययः। 'यस्य लोपः' 'स्वरहीनं०' 'हसेपः' प्रथमैकवचने। अन्यत्र 'स्रोर्विः०'॥ अक्तेरिति किम्। डुकृञ् करणे। कृ। मनु ज्ञाने। मन्। भू सत्तायाम्। भू। 'क्तिरापा०' इति क्तिप्रत्ययः। ति मन् इत्यत्र। 'लोपस्त्वनुदात्ततनाम्' इति नलोपः। अक्तेरिति विशेषणादीप्प्रत्ययप्रतिषेधः॥

**ऐ च मन्वादेः॥ मन्वादेर्गणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च॥ आदिशब्दान्मन्वग्निवृषाकपिपूतक्रतुकुसितकुसिदा ग्राह्याः॥ मनोर्भार्या मनायी वृषाकपायी। चकारान्मनोष्टेरौ वा॥ मनावी॥[1]**

सूत्रम्। 'ऐच मन्वादेः'॥ ऐ प्रथमैकवचनान्तं सांकेतिकम्। च प्रथमैकवचनान्तम्। 'अव्यया०' मनुरादिर्यस्य स मन्वादिस्तस्मात् पञ्चम्येकवचनान्तम्। 'ङिति' 'ङस्य' 'स्रोर्विः०'॥ मन्वादेरिति वृत्तिः सुकरा। अन्त्यस्वरस्य च ऐकारादेशो भवति। उदाहरणम्—मनु। मनोर्भार्या मनायी। वृषाकपि। वृषस्य धर्मस्य आसमन्तात् कं फलं पिबतीति वृषाकपिस्तस्य भार्या वृषाकपायी। उकार—इकारयोश्चैकारः। 'ऐ आय्' 'स्वरहीनं०' प्रथमैकवचनान्तं 'हसेपः'॥ चकारान्मनुशब्दसंबन्धिन उकारस्य औकारो भवति। तत 'औ आव्' 'स्वरहीनं०' मनावी। एवम् अग्नायी स्वाहा वह्निप्रिया। पूतक्रतोः स्त्री पूतक्रतायी।

---

1 अग्नेर्भार्या अग्नायी॥ पूताः क्रतवो यस्येति पूतक्रतुः। पूतक्रतोर्भार्या पूतक्रतायी इत्यधिकम्॥

'यया तु क्रतवः पूताः स्यात् पूतक्रतुरेव सा'। कुसित ऋषिस्तस्य भार्या कुसितायी। कुसिदो वृद्धिजीविकः तस्य भार्या कुसितायी ॥

**पत्न्यादयः ॥ पत्न्यादयः शब्दा निपात्यन्ते ॥ अन्तर्वत्नी । पतिवत्नी । सखी । अशिश्वी । अर्धजरती । युवती ॥ प्राची । प्रतीची ॥ उदीची । नारी । दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गः । दाराः । दारान् । दारैः । दारेभ्यः । दारेभ्यः । दाराणाम् । दारेषु ॥**

सूत्रम्—'पत्न्यादयः'॥ पत्नी आदिर्येषां ते पत्न्यादयः। प्रथमाबहुवचने जस्। 'ए ओ जसि' 'ए अय्' 'स्वरहीनं' 'स्रोर्विं०'॥ पत्न्यादयः शब्दा ईप्प्रत्ययान्ता निपात्यन्ते । नवरम् । पत्नी भार्या । अन्तर्वत्नी गुर्विणी । नारी स्त्री । सखी प्रसिद्धा । पतिवत्नी जीवद्भर्तृका । अशिश्वी अप्रसूता । अर्धजरती अर्धवृद्धा युवती स्त्री । प्राची पूर्वादिक् । प्रतीची पश्चिमा दिक् । एवमन्येऽप्यूह्याः । सपत्नी एकपत्नी वीरपत्नी इत्यादि ईप्प्रत्ययान्ता निपातसिद्धा इत्यर्थः । तथा उदीची मत्सी मानुषी आगस्ती पाणिगृहीती असिक्नी पलिक्नी पितामही स्थाली कुण्डी गोणो स्थली कबरी नागी कलशी कामुकी इत्यादयः पत्न्यादिषु ज्ञेयाः ॥ अकारान्तो दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गे कलत्रवाची । तत आपप्रत्ययः ईप्प्रत्ययोऽपि न भवति । किंतु दाराः दाराम् दारैः दारेभ्यः दारेभ्यः दाराणां दारेषु । देवशब्दस्य बहुवचनान्तवत्साध्यः ॥

**वौर्गुणात् ॥ उकारान्ताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति ॥ पट्वी-पटुः । मृद्वी-मृदुः । तन्वी-तनुः ॥**

सूत्रम् । 'वौर्गुणात्' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया०' । ओरिति उशब्दस्य पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यकारलोपः । 'स्रोर्विं०' 'ओ औ औ' । अग्रे गुणादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' 'नामिनो०' जलतुम्बि० ॥ गुणा रूपादयश्चतुर्विंशतिः । 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥ बुधैः स गुण उच्यते । स कः ? यः सत्त्वे द्रव्ये निविशते वर्तते इत्यर्थः । पुनः तस्माद् द्रव्यात् अपैति याति । च पुनः पृथग् जातिषु द्रव्यत्वावान्तरजातिषु दृश्यते । च पुनः आधेयः उत्पाद्यः यथा कस्तूरिकासंयोगाद् वस्त्रे गन्धः । पुनः अक्रियाजः अनुत्पाद्यः यथा आकाशादौ महत्त्वादि । पुनः असत्त्वप्रकृतिः अद्रव्यस्वभावः स गुणस्तद्वाची उकारान्तो यः शब्दस्तस्मात् स्त्रियां स्त्रीलिङ्गे वा ईप् प्रत्ययो भवति । पटु २ अनेन वा ईप्प्रत्ययः । 'उवम्' 'स्वरहीनं' प्रथमैकवचने 'हसेपः' । अन्यत्र प्रथमैकवचने 'स्रो०' ॥ एवं मृद्वी-मृदुः । तन्वी-तनुः । बह्वी-बहुः । ऋज्वी-ऋजुः । वाग्रहणादेव खरुः पाण्डुः इत्यादौ नेप्प्रत्ययः । गुणग्रहणात् धेनुः रज्जुः अणुः इत्यादौ नेप् ॥

**उत ऊः ॥ उकारान्ताद्वा ऊप्रत्ययो भवति ॥ पङ्गुः पङ्गूः ॥ वामोरुः-वामोरूः ॥[2] यूनस्तिः ॥ युवन्शब्दात्स्त्रियां तिप्रत्ययो भवति । युवतिः ॥**

---

१ खरुसंयोगोपधान्न ॥ खरुः पाण्डुः ॥ २ वाशब्दादङ्गवादौ न भवति । रज्जुः धेनुः इत्यधिकम् ॥

**एभ्यो नामत्वात्स्यादयः ॥ आबन्तात् 'आपः' इति, ईबन्तात् 'हसेपः सेर्लोपः' इति सिलोपः पूर्ववत्प्रक्रिया । इति स्त्रीप्रत्ययप्रक्रिया ॥**

सूत्रम्—'उत ऊः' ॥ उत इति उत्शब्दस्य पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । ऊः प्रथमैकवचनान्तं 'स्रोर्वि०' मध्ये । 'आदवे लोपश्' वृत्तिः कण्ठ्या । नवरम् । गुणवाचिनोऽगुणवाचिनोऽपि मनुष्यजातिवाचिन उकारान्तात् ऊ प्रत्ययो वा भवति ॥ उदाहरणम्—पङ्गु अनेन ऊप्रत्ययः । 'सवर्णे०' 'स्रोर्वि०' पङ्गुः-पङ्गूः ॥ एवं वामोरुः-वामोरूः करभोरुः-करभोरूः ॥ 'यूनस्तिः' युवन्शब्दात् तिप्रत्ययो भवति स्त्रियाम् । ईपूनिषेधः ॥ युवन् अग्रे तिप्रत्ययः । 'नाम्नोनो०' 'स्रोर्वि०' ॥ एवं स्त्रीप्रत्यया ज्ञेयाः ॥ अथैतेषां विभक्तिकार्यमाह—एभ्य इति । एभ्यः पूर्वोक्तस्त्रीप्रत्ययान्तेभ्यः शब्देभ्यो 'अविभक्ति नाम' इति सूत्रोक्तलक्षणनामत्वात् स्यादयो विभक्तयो दीयन्ते । तत्र आबन्तात् 'आपः' इति सूत्रेण सिलोपः । ईबन्तात् 'हसेपः०' इति सेर्लोपः । तत्र आबन्ता गङ्गाशब्दवत्साध्याः । ईबन्ता नदीशब्दवत् । इकारोकारान्ता बुद्धिरज्जुवत् । ऊकारान्ता वधूवत् । इति स्त्रीप्रत्ययावचूरिः ॥

---

## कारकप्रक्रिया १५

**अथ विभक्त्यर्थो निरूप्यते ॥**[1]

**लिङ्गार्थे प्रथमा ॥ धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिङ्गं तस्यैवार्थे सन्मात्रे प्रथमा विभक्तिर्भवति ॥**[2] **लिङ्गादयोऽपि प्रथमार्था इति केचित् ॥**

एवं ये पुंलिङ्गादयः स्त्रीप्रत्ययान्ता उक्तास्ते विभक्तिमन्तरा न शब्दतां प्राप्नुवन्तीति विभक्तिकार्यसंबन्धमाह—अथेति । संज्ञासंधिकार्यस्वरान्तहसान्तलिङ्गत्रयप्रक्रियायुष्मदस्मद्स्त्रीप्रत्ययकथनानन्तरं विभक्तीनां कर्तृत्वादिसूचकानां प्रथमादीनामर्थोऽभिधेयो निरूप्यते ॥ तत्र प्रथमाविभक्तेः कार्यमाह—सूत्रम्—'लिङ्गार्थे प्रथमा' ॥ लिङ्गार्थे लिङ्गस्यार्थो लिङ्गार्थस्तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' । प्रथमा इति प्रथमैकवचनान्तम् । 'आपः' सिद्धं सूत्रम् । लिङ्ग्यन्ते चिह्न्यन्ते ज्ञायन्ते पुंस्त्रीनपुंनकतया शब्दा अनेनेति लिङ्गम् । तत्किंविशिष्टं ? धातुप्रत्ययातिरिक्तमिति । धातुर्भ्वादिः, प्रत्ययाः कृदादयस्तेभ्योऽतिरिक्तमधिकमन्यत् पृथक् यत् पुंस्त्रीनपुंसकलिङ्गभेदज्ञापकं तल्लिङ्गम् । 'नामैव लिङ्गम्' इति कौमाराः । 'संस्त्यानप्रसवौ लिङ्गम्' इति महाभाष्यकारः । संस्त्यानं स्त्रीत्वम् । प्रसव उपचयः । क्रमादुपचयापचयस्थितिरूपो वस्तुधर्मः । उपचये यथा हरिः रविः । अपचये गङ्गा शाला । क्वचिदुपचयापचयाभावः कुलं ज्ञानम् ॥ तस्य लिङ्गस्य एवार्थे अभिधेये । सन्मात्रे सत्तामात्रे विद्यमानमात्रे । वाच्यमाने प्रथमा सिऔजसूरूपा विभक्तिर्भवति ॥ लिङ्गादयोऽपि प्रथमार्थाः इति मतान्तरवाचकं पदम् । लिङ्गं पुंलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गम् ॥

---

१ 'तत्र क्रियासिद्ध्युपकारकं कारकम् । तच्च षड्विधम् ॥ कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट् । उक्ते तु प्रथमैव स्यादनुक्ते तु यथाक्रमम् ॥' तानि विभक्तिरित्यभिधीयन्ते ॥ २ 'लिङ्गार्थे प्रथमा । एतस्य सूत्रस्येमान्युदाहरणानि । उच्चैः नीचैरित्यादीनि ॥ सकलकारकभेदशून्यं वस्तु सत्ता इत्यधिकम् ॥'

आदिशब्दाल्लिङ्गवचनपरिमाणमात्रेऽपि प्रथमा ॥[1]

तत्सद्ब्रह्म ।

रविरिव राजते राजा रोषात्कुमारी रोरूयते ।
बोभुज्यते भुवं भूपालः प्रागास्तां रामलक्ष्मणौ ॥
सन्ति[2] सन्तः क्रियन्तः ॥
कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः ।
जेगीयन्ते च गीतज्ञा मेम्रीयन्ते रुजार्दिताः ॥

आदिशब्दात्परिमाणवचनप्रभृतयः । प्रथमैव अर्थो येषां ते प्रथमार्थाः । लिङ्गवचनपरिमाणानां त्रयाणामप्यर्थे प्रथमा विभक्तिर्भवतीत्यर्थः ॥ यथा देवः श्रीः ज्ञानं खारी द्रोणः आढकम् एकं द्वौ बहवः ॥ उदाहरणम्—'तत्सद्ब्रह्म' तदिति ज्ञानदृष्टिगोचरं सदिति वर्तमानम् अविनाशि प्रधानं वा । ऐवंविधं[3] ब्रह्म परब्रह्म वर्तते । तत्सद्ब्रह्म इति त्रिष्वपि स्थानेषु नपुंसकलिङ्गस्य प्रथमाया उदाहरणम् ॥ रविरिव० राजा राजते । क इव? रविरिव सूर्य इव । राजा इत्यत्र पुंलिङ्गे प्रथमैकवचनोदाहरणम् ॥ पुनः कुमारी रोरूयते अतिशयेन रोदिति । कस्मात्? रोषात् ॥ कुमारी । अत्र स्त्रीलिङ्गप्रथमैकवचनोदाहरणम् । भूपालो राजा भुवं पृथ्वीं बोभुज्यते अतिशयेन पालयतीत्यर्थः । भूपालः अत्रापि पुंलिङ्गे प्रथमैकवचनोदाहरणम् । रामलक्ष्मणौ प्राक् पूर्वमास्तामभूताम् रामलक्ष्मणाविति पुंलिङ्गे प्रथमाद्विवचनस्योदाहरणम् ॥ सन्तः सज्जनाः कियन्तः सन्ति ॥ कुमाराः बालकाः स्वैरं स्वेच्छया शेरते । तु पुनः नारकाः नरकस्थाः रोरूयन्ते । अतिशयेन फूत्कुर्वन्ति । पाठान्तरे तु रोरूयन्ते कुमारिकाः इति । गीतज्ञा जेगीयन्ते अत्यर्थं गायन्ति । रुजा रोगेण जिता ग्रस्ताः पुरुषा मेम्रियन्ते । सन्तः कुमाराः नारकाः गीतज्ञाः । अत्र सर्वत्रापि पुंलिङ्गे प्रथमाबहुवचनस्योदाहरणानि ॥

आमन्त्रणे च ॥ आमन्त्रणे अभिमुखीकरणे प्रथमा विभक्तिर्भवति ॥

मां समुद्धर गोविन्द प्रसीद परमेश्वर ।
कुमारौ स्वैरमासाथां क्षमध्वं भो तपस्विनः ॥

सूत्रम्—'आमन्त्रणे च' ॥ आमन्त्र्यते आहूयन्ते पुरुषा अनेनेत्यामन्त्रणं तस्मिन्नामन्त्रणे सप्तम्येकवचनान्तम् । 'अ इ ए' अपि प्रथमैकवचनान्तम् । 'अव्यया०' आमन्त्रणमभिमुखीकरणमित्यादि सुगमम् । उदाहरणम्—श्लोकः—मां समुद्धर ॥ व्याख्या—हे गोविन्द, मां समुद्धर भवसमुद्रादिति गम्यम् । हे परमेश्वर, प्रसीद प्रसन्नो भव । हे कुमारौ स्वैरं

---

१ कृष्णः श्रीः ज्ञानम् ॥ वचने । एकः द्वौ बहवः ॥ परिमाणे । खारी द्रोणः आढकम् ॥ अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ च पुष्कलम् ॥ पुष्कलानि च चत्वारि आढकं परिकीर्तितम् ॥ चतुर्भिराढकैर्द्रोणः खारी षोडशभिश्च तैः इत्यधिकम् ॥ २ 'मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः' इति श्लोकस्य पूर्वशेषः ॥ ३ 'एवंविधं ब्रह्म ज्ञानस्वरूपं ब्रह्म वर्तते' इति पाठान्तरम् ॥

स्वेच्छया सुखेन आसाथामुपविशताम् । भो तपस्विनः यूयं क्षमध्वं क्षमां कुरुध्वम् । अत्र गोविन्द परमेश्वर प्रथमैकवचनान्तम् । कुमारौ प्रथमाद्विवचनान्तम् । तपस्विनः प्रथमा-बहुवचनान्तम् । अत्र यथाक्रमं प्रथमाया एकद्विबहुवचनानि ॥

**भोसः ॥ भोस् भगोस् अघोस् ॥ एते शब्दा निपात्यन्ते धिविषये ॥**

**क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तु ते ।**
**अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम् ॥**

सूत्रम्—'भोसः' ॥ भोसः इति भोस्शब्दस्य प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'एक-ग्रहणे तज्जातीयान्यशब्दस्य ग्रहणम्' इति न्यायात् भोस इत्यनेन भोस् भगोस् अघोस् इति त्रयाणामपि ग्रहणम् । सूत्रपाठे तु 'भोभगोअघोस्' इत्येव सूत्रं दृश्यते । तेन भवन्नित्यस्य भो इति निपातः । भगवन्नित्यस्य भगो इति निपातः । अघवन्नित्यस्य अघो इति निपातः । यतः 'भवद्भगवदघवतां भो भगो अघोः एते शब्दा वा निपात्यन्ते धौ विषये संबोधने इत्यर्थः । भो इत्यामन्त्रणे । भगो इति पूजामन्त्रणे । अघो इति पापजनवाचि संबोधनविषये एते शब्दा निपात्यन्ते ॥ उदाहरणम्—क्षमस्व भो० ॥ भो दुराराध्य दुःखेन आराध्यते इति दुराराध्यस्तस्यामन्त्रणं भो दुराराध्य । क्षमस्व क्षमां कुरु । न विद्यते स्तुतिर्वचनगोचरा यस्य सः अस्तुतिस्तस्यामन्त्रणं हे अस्तुते, वचनागोचर स्तवनातीत इति संबोधनपदम् । यद्वा न स्तौति अन्यं कंचन इति अस्तुत तस्मै अस्तुते तुभ्यम् इति चतुर्थ्यन्तम् । एवंविध हे भगवन् तुभ्यं नमः । अथवा 'भगोस्तुभ्यं नमोनमः' इति पाठे सुगमम् भो महाप्राज्ञ महांश्चासौ प्राज्ञश्च महाप्राज्ञस्तस्यामन्त्रणं भो महाप्राज्ञ त्वम् आधीष्व पठ । घातया० ॥ हे अघो हे पापिष्ठ स्वघस्मरं स्वभक्षकमर्थात्स्वपापं कालं वा घातय विनाशयेति श्लोकार्थः ॥

**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्ध आधारभा-वयोः ॥ शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति ॥ कार्ये कर्मकारके उत्पाद्ये आप्ये संस्कार्ये च द्वितीया विभक्तिर्भवति ॥**

**कटं करोति कारुको रूपं पश्यति चाक्षुषः ।**
**राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥**

इत्थं प्रथमार्थमुक्त्वा इदानीं द्वितीयादिशेषविभक्तिसूचकं सूत्रमाह—'शेषाः कार्ये' ॥ शेषाः प्रथमाबहुवचनान्तम् 'सवर्णे०' 'स्रोर्वि०' । कार्ये क्रियते इति कार्यं तस्मिन् सप्त-म्येकवचनान्तम् 'अ इ ए' । कर्तृसाधनयोः । करोतीति कर्ता साध्यते छिदादिक्रिया अने-नेति साधनम्, कर्ता च साधनं च कर्तृसाधने तयोः सप्तमीद्विवचनान्तम् 'ओसि' 'ए अय्'

---

१ तच्च कर्मकारकं चतुर्विधम् । उत्पाद्यं आप्यं संस्कार्यं विकार्यं च । उत्पत्त्यर्थमुत्पाद्यं वा यदभूत्वा भावि तदुत्पाद्यम् ॥ यत्सिद्धमेव प्राप्यते तदाप्यम् ॥ संस्कारो नाम प्राक्तनकर्मजो गुणः कश्चिद्गुणातिशयो वा गुणाधानं मलापकर्षो वा इति चतुर्विधः संस्कारः । संस्कारमर्हतीति संस्कार्यम् ॥ विकारो नाम पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिः ॥ कटादिकमुत्पाद्यादि चतुर्विधं कर्म ॥ गुणातिशयः संस्कार्यम् ॥ व्रीहीन्यवान्वा प्रोक्षति । प्रोक्षणेन व्रीहिषु कश्चिद्गुणातिशयो जन्यते ॥ गुणाधानमलापकर्षयोरुदाहरणम् ॥ वस्त्रं रञ्जयति देवदत्तः । रजको वस्त्रं क्षालयति ॥

'स्वरहीनं'। दानार्थे पात्रं दानपात्रं तस्मिन् सप्तम्येकवचनान्तम्. 'अ इ ए' पश्चात् 'नामिनोरः' जलतु०। अग्रे विश्लेषावधौ विश्लेषे विश्लेषं प्रति वा अवधिः विश्लेषावधिस्तस्मिन् सप्तम्येकवचनान्तम्। 'ङेरौ डित्' टिलोपः। 'स्वरहीनं'। अग्रे संबन्धे संबध्यते भृत्यस्वाम्यादिरनेनेति संबन्धस्तस्मिन् सप्तम्येकवचनान्तम्। 'अ इ ए'। आधारभावयोः आध्रियते स्थाप्यते वस्तु यत्र स आधारः। भूयते क्रियालक्षणतया अनेनेति भावः। ततश्च आधारश्च भावश्च आधारभावौ तयोः। सप्तमीद्विवचनान्तम्। 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विं०' पश्चात्। 'य्वोर्लो०' सिद्धं सूत्रम्॥ शेषाः०। प्रथमा उक्ता। अतः शेषाः द्वितीयाद्याः षट् विभक्तय इत्यादिवृत्तिः तत्र कार्ये द्वितीया। कर्तृसाधनयोस्तृतीया। दानपात्रे चतुर्थी। विक्षेपावधौ पञ्चमी। संबन्धे षष्ठी। आधारभावयोः सप्तमी। इति संक्षेपार्थः॥ अथ विस्तरार्थः—कार्य इत्यादि। कार्ये द्वितीया विभक्तिर्भवतीति योगः। कार्य इति कोऽर्थः? । कर्मकारके। क्रियते यत्तत्कर्म नाम कारकं तस्मिन् कर्तुः कर्मतापन्ने वस्तुनीत्यर्थः। यद्वा कार्यं कर्म तत्कारकसंज्ञत्वात्कारकम् कर्मकारकं षष्ठीं विना अन्या विभक्तयः कारकसंज्ञाः क्रियाहेतुः कारकम्। षष्ठ्यास्तु क्रियाहेतुत्वाभावेन कारकसंज्ञा न। यतः—'कर्ता कर्म च करणं संप्रदानं तथैव च। अपादानाधिकरणे इत्याहुः कारकाणि षट्'। इति॥ तस्मिन् कर्मकारके कथंभूते? इत्याह—उत्पाद्ये आप्ये संस्कार्ये विकार्ये एवं चतुर्विधे। तत्र उत्पाद्ये यन्नवीनं क्रियते तदुत्पाद्यम्। यदाप्यते सिद्धं प्राप्यते तदाप्यम्। संस्क्रियते इति संस्कार्यम्। संस्कारो नाम कश्चिदतिशयस्तदर्हं संस्कार्यम्' संस्कारो द्विधा—गुणाधानं मलापकर्षो वा। पूर्वजन्मकृतः शुभोऽशुभो वा संस्कारः तस्माद् भवं संस्कार्यं सिद्धमेव। रूपं पश्यतीत्यत्र गुणाधानम्। यद्वा रूपमिति चक्षुर्ग्राह्यत्वादाप्यमिति केचित्। राज्यमिति। राज्ञः संस्कारात् संस्कार्यम्। विकार्ये इति विक्रीयते अवस्थान्तरं भजते इति विकार्यं। ततः एवं चतुर्विधेऽपि कर्मकारके द्वितीयाविभक्तिर्भवति। उदाहरणं—कटमित्यादिश्लोकः। कारुकः पुमान् कटं करोतीत्यत्र घटस्य उत्पाद्यकार्यत्वात् द्वितीयान्तत्वम्। एवं चाक्षुषो नेत्रवान् जनो रूपं पश्यतीति रूपम् आप्यं कर्म तत्र द्वितीया॥ केचित्तु रूपस्य नेत्रेन्द्रियेण गुणस्थापने संस्कार्ये द्वितीया। धर्मिष्ठः पुमान् राज्यं प्राप्नोति। अत्र राज्यं संस्कार्यम्। तत्र द्वितीया। केचित्तु राज्यमाप्यं तत्र द्वितीया। सोमममृतवल्लीरसं पिबतीति सोमपाः ब्राह्मणः सोमममृतवल्लीं सुनोति ख(क)ण्डयतीत्यर्थः। अत्र सोमस्यामृतवल्ल्याः ख(क)ण्डनरूपो विकारस्तत्र द्वितीया। अवस्थान्तरापादनं विकार इति॥

**अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥[1]**

अभितोग्रामं सर्वतोग्रामं नदी वहति। धिग्देवदत्तम्॥ देवदत्तस्य धिक्॥ उपर्युपरि पुरोहितं याचकाः पतन्ति॥ अधोऽधो नगरं निधानानि सन्ति॥ **कालाध्वनोर्नैरन्तर्ये॥** कालाध्ववाचकशब्दानां नैरन्तर्येऽर्थे वाच्ये सति द्वितीया विभक्तिर्भवति॥ मासमधीते देवदत्तः॥ क्रोशं पर्वतः॥

१ उपर्यध्यधसः सामीप्ये॥ एषां द्वे स्तो देशतः कालतश्च सामीप्ये॥ तस्य परमाम्रेडितम्॥ द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् इत्यधिकम्॥ २ अविच्छिन्नसंयोगत्वं नैरन्तर्यम्।

एवं द्वितीयार्थमाख्यायाधुना तदधिकारात् पुनर्वृत्तिकार उपपदद्वितीयार्थमाह—अभिसर्वतसोः इत्यादि श्लोकः। तस् च तस् च तसौ अभिश्च सर्वश्च अभिसर्वौ ताभ्यां सहितौ तसौ अभिसर्वतसौ । अभितस्सर्वतसावित्यर्थः । अथवा द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संवध्यते इति तयोरर्थयोगे षष्ठ्यर्थे द्वितीया विभक्तिः कार्येति योगः । पुनर्धिगिति धिगर्थेऽपि धिक्शब्दयोगेऽपि द्वितीया कार्या । 'धिक् निर्भर्त्सननिन्दयोः' । पुनस्त्रिषूपर्यादिष्विति । उपरि अधः अधि इत्येवं त्रिष्वव्ययेषु प्रयुज्यमानेषु द्वितीया विधेयेति । कथंभूतेषु ? आम्रेडितान्तेषु आम्रेडितमिति द्विस्त्रिर्भाषणं तदन्तं येषां ते आम्रेडितान्ताः द्विर्वारमुच्चरिता इत्यर्थः । यथा उपर्युपरि अधोऽधो अधिअधिरूपास्तेषु । तत इति अभितः सर्वतसादिव्यतिरिक्तेऽन्यत्र अन्यस्मिन्नप्यर्थे षष्ठ्यर्थे द्वितीया दृश्यते रूढिवशादिति ॥ तत्रोदाहरणम्—अभि० । अभितो ग्रामं ग्रामस्याभितः अभितोग्रामम् अनेन द्वितीया । अभितोग्राममिति ग्रामस्य समीपे चतुर्दिक्षु वेत्यर्थः । तत्र नदी वहति । एवं सर्वतोग्रामं वनं ग्रामस्य सर्वतः चतुर्दिक्षु वनमित्यर्थः । एवं धिग्देवदत्तमित्यत्र धिगर्थे द्वितीया । उपर्युपरि ग्रामं पक्षिणो गच्छन्ति । ग्रामस्योपरीत्यर्थः । अधोऽधोग्रामं निधानं दृश्यते ग्रामस्याध इत्यर्थः । अध्यधिग्रामं ग्रामे ग्रामे तापसास्तिष्ठन्ति । एवमत्र त्रिष्वप्याम्रेडितान्तेषु द्वितीया । ततोऽन्यत्रापि दृश्यत इति वचनात् उभयतः, परितः, समया, निकषा, हा, प्रति, अनु, एतेषां योगेऽपि द्वितीया । [उभयतः कृष्णं गोपाः कृष्णस्य पार्श्वद्वयेपीत्यर्थः । परितः कृष्णम् कृष्णस्य सर्वदिक्षु] समया ग्रामं तीर्थं वर्तते । निकषाग्रामं हृतः शत्रुः ग्रामस्य समीप इत्यर्थः । एवं ग्रामं ग्रामं प्रति प्रतिग्रामं हा स्वासिनमित्यादि ॥ अनुग्रामं ग्रामस्यानु पश्चात् सीमा वर्तते ॥ कालाध्वनोरितीयं फक्किका । अन्तरेण रहितं निरन्तरं तस्य भावो नैरन्तर्यं तस्मिन्नैरन्तर्ये वाच्यमाने । तथा कालो दिवसादिः, अध्वा मार्गः, क्रोशयोजनादिस्तत एतयोर्द्वयोर्विषये द्वितीया कार्या । नैरन्तर्ये कालवाचकशब्दात् अध्वशब्दाच्च द्वितीया भवतीत्यर्थः । तत्रोदाहरणम्—काले—मासमधीते मासंयावत् निरन्तरमधीते पठति । अत्र नैरन्तर्ये द्वितीया । अन्यथा मासस्य द्विरधीते मासे वा दश द्विवसानधीते इति भवति । एवं मार्गे क्रोशं पर्वतः क्रोशं यावन्निरन्तरं पर्वत इत्यर्थः । क्रोशप्रमाणलम्ब इत्यर्थः । अन्यथा क्रोशस्यैकभागे पर्वत इत्यर्थः । अन्यत्रापीति ग्रहणात् अन्तर्ग्राममुपग्राममित्यादयः शब्दा ज्ञेयाः ॥ इति ॥

**कर्तरि प्रधाने क्रियाश्रये साधने च ॥ प्रधाने कर्तरि क्रियासिद्ध्युपकारके करणेऽर्थे च तृतीया विभक्तिर्भवति ॥**[1]

**भिन्नः शरेण रामेण रावणो लोकरावणः ।**
**कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥**[2]

अथ तृतीयार्थसूचकं कर्तृसाधनयोरिति पदं व्याचिख्यासुराह—'कर्तरि०' कर्तरि कर्तृ-

---

१ क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ २ प्रकृत्यादिभ्यः ॥ प्रकृत्यादिभ्यः शब्देभ्यस्तृतीया स्यात् ॥ प्रकृत्या चारुः । प्रायेण अलसः । सुखेन याति । गोत्रेण गार्ग्यः । गार्ग्योऽस्य गोत्रमित्यर्थः । इत्यधिकम् ॥

विषये तृतीया विभक्तिर्भवति । कथंभूते कर्तरि? प्रधाने मुख्ये क्रियाया आश्रये मुख्यवृत्त्या कार्यस्य कारके उत्पादके ईदृशे कर्तरि तृतीया भवति ॥ च पुनः साधनेऽपि तृतीया भवति । कथंभूते साधने ? क्रियासिद्ध्युपकारके क्रियासिद्धेः उपकारके कार्यस्य साहाय्यकारके ॥ पुनः करणनामकारके साधनेऽपि तृतीया । यः प्रधानभूतः सन् क्रियाया आश्रयभूतः स्वातन्त्र्येण क्रियां कर्तुं प्रवृत्तः स कर्ता तस्यार्थे तृतीया भवति । च पुनः क्रियासिद्धेः उपकारके करणे प्रकृष्टकारणभूते साधनेऽपि तृतीया भवति । करोतीति कर्ता । स क उच्यते ? इत्याह—क्रियाश्रयः क्रियायाः कार्यस्य आश्रयः ॥ क्रियाया आश्रयोऽप्रधानोऽपि भवति । पटोत्पत्तौ तुरीवेमादिवदित्याह—प्रधान इति । सकलकारकप्रयोक्तृत्वे सति इतरकारकाप्रयोज्यत्वमत्र प्रधानत्वम् । तस्मिन् किंविशिष्टे साधने ? क्रियासिद्ध्युपकारके क्रियायाः सिद्धिमुपकरोतीति क्रियासिद्ध्युपकारकं क्रियासिद्धेः साहाय्यदायकं तस्मिन् । पुनः कीदृशे साधने ? करणे । 'साधकतमं करणं' क्रियासिद्धेः प्रकृष्टं कारणं । यद्वा करणं करणनाम कारकं तस्मिन् । एवं कर्तृसाधनयोर्द्वयोरर्थे तृतीया भवति ॥ उदाहरणम्—भिन्नः शरेणेत्यादिश्लोकः । रामेण रावणो भिन्नः । केन ? शरेण । रामेण इति कर्तरि तृतीया । शरेणेति साधने तृतीया । कथंभूतो रावणः ? लोकरावणः । लोकान् रावयति क्रन्दयतीति लोकरावणः । उदाहरणान्तरमाह—तथा रावणो वानरैः कराग्रेण नखेन विदीर्णोऽपि विदारितोपि पुनः पुनरपि युध्यते । अत्र वानरैरिति कर्तृपदम् । कराग्रेणेति साधनपदम् । उभयत्रापि तृतीया । कराग्रेणेत्यत्र जातावेकवचनम् । पुनस्तृतीयार्थे 'विना सह' इत्यादिना अग्रे वक्ष्यति । इति तृतीयार्थः ॥

**दानपात्रे संप्रदानकारके चतुर्थी ॥ सम्यक् श्रेयोबुद्ध्या प्रदीयते यस्मै तत्संप्रदानकारकम् ॥[1] वेदविदे गां ददाति ॥ अन्यत्र राज्ञो दण्डं ददाति ॥ रजकस्य वस्त्रं ददाति ॥**

अथ चतुर्थ्यर्थमाह—दानपात्रे संप्रदानकारके चतुर्थी । दीयते इति दानं दानाय पात्रं दानपात्रम् । दत्तवस्तुनः स्वामी भवतीति यावत् । तस्मिन् दानपात्रे । कीदृशे दानपात्रे ? संप्रदाने नाम कारके । सम्यक् श्रेयोबुद्ध्या यस्मै प्रदीयते तत्संप्रदानम् । यस्मै दत्ते आमुष्मिकफलप्राप्तिर्भवति तत्संप्रदानमुच्यते । संप्रदानं च तत्कारकं च संप्रदानकारकं तस्मिन् । यदुक्तम्—

> 'ददाति दण्डं पुरुषो महीपतेर्न चात्र भक्तिर्न च दानकामना ।
> यद्दीयते वासनया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः' ॥

---

१ ददाति दण्डं पुरुषो महीपतेर्न चातिभक्त्या न च दानकाम्यया । यद्दीयते वासनया सुपात्रे तत्संप्रदानं कथितं कवीन्द्रैः ॥ अनभिहिते इत्येव । दानीयो विप्रः ॥ क्वचित्सम्यक्श्रेयोबुद्ध्यभावेऽपि चतुर्थी—व्याजेन रघवे करमिति महाकविप्रयोगदर्शनात् ॥ तच्च संप्रदानं त्रिविधम् । प्रेरकमनिराकर्त्रनुमन्तृ चेति ॥ त्यागेन कर्मणा व्याप्तं प्रेरकं चानुमन्तृ च । अनिराकर्तृ चेत्येतत्संप्रदानं त्रिधा स्मृतम् ॥ देहीति प्रेरयति तत्प्रेरकम् ॥ यथा । बटवे भिक्षां ददाति ॥ यत्तु इदमहं ददामीत्युक्तेऽनुमन्यते ओमित्याह तदनुमन्तृ ॥ यथा । शिष्यो गुरवे गां ददाति ॥ यत्तु नानुमन्यते न निराकरोति तदनिराकर्तृ ॥ यथा । सूर्यायार्घ्यं ददाति ॥ क्रियया यमभिप्रैति सोऽपि संप्रदानम् ॥ पत्ये शेते इत्यधिकम् ॥

तत्रोदाहरणम्—'वेदविदे गां ददाति । वेदं वेत्तीति वेदवित् तस्मै वेदविदे वेदज्ञाय ब्राह्मणाय कश्चित्पुरुषो गां ददाति । इत्यत्र वेदवित्त्वे सति दानपात्रत्वं संगतमेव । एवं साधवे अन्नं प्रतिलाभयति ॥ अन्यथा दानपात्राभावे—राज्ञो दण्डं ददाति । अत्र चतुर्थ्यभावः ॥

**विश्लेषावधौ पञ्चमी ॥ विश्लेषो विभागस्तत्र योऽवधिः स चलतया अचलतया वा विवक्षितस्तत्रापादाने पञ्चमी ॥ धावतोऽश्वादपतत् ॥ भूभृतोऽवतरति गङ्गा ॥**

अथ पञ्चम्यर्थमाचिख्यासुर्विश्लेषावधाविति पदं व्याकरोति—विश्लेष इत्यादि । विश्लेष इति कोऽर्थः । विश्लेषो विभागो विरहः पृथग्भावः बुद्ध्या स्वरूपेण वा एकाश्रयात्पृथक्भवनमित्यर्थः । तत्र विश्लेषे योऽवधिराश्रयो यस्माद्विभागो जायते स चलतया अश्वकरभादिभावेन, अचलतया पर्वतशिखरादिभावेन विवक्षितो वक्तुमिष्टः वाञ्छितः । तत्र विश्लेषावधौ अपादाननामकारके अपादीयते पृथक्क्रियते यस्मात्तदपादानम् । अपादानं च तत्कारकं च । तस्मिन् पञ्चमी विभक्तिर्भवति । उदाहरणम्—धावतोऽश्वादपतदित्यत्र अपतदिति विश्लेषः अश्वादि तस्यावधिः आश्रयः । धावत इत्यश्वस्य चलनक्रियाकारित्वाच्चलतया विवक्षितावधित्वम् । एवं भूभृतः पर्वतात् गङ्गा अवतरतीत्यत्र अवतरणात्मको विश्लेषः । भूभृत इति स्थिरावधिः । एवमन्येऽप्यवसेयाः ॥

**संबन्धे षष्ठी ॥**

**राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् ।**
**गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥**[२]

अथ षष्ठ्यर्थमाह—संबन्ध इति । संबध्यते जनादिरनेनेति संबन्धो जन्यजनकादिः स्वस्वामित्वादिः । यथा लिङ्गार्थकारकव्यतिरिक्तः स्वस्वामित्वादिलक्षणः । स चोभयनिष्ठश्च भवति । तस्मिन्नर्थे षष्ठी विभक्तिर्भवतीति । यतः—

'भेद्यभेदकयोः श्लिष्टिः संबन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात्' ॥

उदाहरणं श्लोकेनाह—राज्ञ इति । स पुरुषः पुमान् राज्ञो राजसंबन्धी ज्ञेयः । इत्येवं स्वामिसेवकसंबन्धः । एतत्समीपतरवर्ति पूजनं पूजनोपकरणम् । पित्रोरिति माता च पिता च पितरौ तयोः पित्रोः पितृमातृसंबन्धि, गुरूणां गुरुसंबन्धि वचनं जाड्यज्वरविमुक्तानां पथ्यवत् पथ्यतुल्यम् । कवीनां वचो वचनं रसवदिति रसयुक्तम् । एवमन्येऽप्यूह्याः ॥

---

१ विश्लेषो नाम संयोगपूर्वको विभागः ॥ आधाराधेययोर्मध्ये आधारत्वेन यो ज्ञायमानः सोऽवधिः ॥ आधीयतेऽनेनासौ आधारः ॥ आधातुं योग्यः आधेयः ॥ २ भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमुच्यते । द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम् । विशेष्यं तु प्रधानं स्यादप्रधानं विशेषणम् ॥ प्रधानाप्रधानयोर्मध्येऽप्रधाने षष्ठी ॥ क्रियान्वयि प्रधानम् ॥ क्रियानन्वय्यप्रधानम् ॥ सेव्यसेवकभावसंबन्धः पूज्यपूजकभावसंबन्धो बोध्यबोधकभावसंबन्धो वाच्यवाचकभावसंबन्ध इति संबन्धश्चतुर्विधः । इत्यधिकम् ॥

**आधारे सप्तमी ॥ आधारो नामाधिकरणम् ॥ षड्विधमधिकरणम् ।[1] औपश्लेषिकं सामीप्यकमभिव्यापकं वैषयिकं नैमित्तिकमौपचारिकं चेति ॥**

आधारभावयोरिति पदं व्याचिख्यासुः प्रथममाधारं प्रकटयन्नाह—आधारे सप्तमीति ॥ सुगमार्थः । आध्रियते स्थाप्यते षट्प्रकारा क्रिया अस्मिन्नित्याधारः क्रियाश्रयस्य कर्तुः क्रियाया आश्रयस्तत्र सप्तमी विभक्तिर्भवति । आधाराधिकरणौ एकपर्यायौ । आधारशब्देनाधिकरणमेवोच्यते अतोऽधिकरणस्याधारस्य भेदानाह—षड्विधमिति । अधिक्रियते आधारतया तदधिकरणम् । गुणानां गुणिवत् । तत्षड्विधमिति । षट्संख्याका विधाः प्रकारा यस्य तत्षड्विधम् । षोढेत्यर्थः । तानेव षड्भेदानाह—औपश्लेषिकमित्यादि । उप सामीप्येन श्लेषणं संघट्टनमुपश्लेषः एकदेशमात्रसंयोगे वा उपश्लेषः । यथा कटे शेते कटस्यैकदेशे इत्यर्थस्तेन निर्वृत्तमौपश्लेषिकम् । सामीपिकं समीपेन निर्वृत्तं सामीपिकम् । यदाधेयसमीपमात्रेण क्रियाहेतुः । यथा वटे वटसमीपे गावः सुशेरते । गङ्गायां घोषः गङ्गासमीपे इति । अभि समन्ताद्व्याप्नोतीत्यभिव्यापकम् आधेयेन समस्तावयवसंयोगोऽभिव्यापकः । यद्वा अपृथक्भूतयोराधाराधेययोर्यः सकलावयवसंबन्धः सोऽभिव्यापकः । यथा तिलेषु तैलम् ॥ विषये भवं वैषयिकम् । अनन्यत्र भवो विषयिकः । यथा नभसि तारकाः । आकाशे वायुः । हृदि ब्रह्मेत्यादि । हृदिविषये ब्रह्मैवं परं प्रकृष्टममृतमस्ति ॥ निमित्तेन भवं नैमित्तिकं यथा युद्धे युद्धनिमित्तमित्यादि ॥ अविद्यमानस्यारोपणमुपचारः उपचारेण भवमौपचारिकम् । एवं षड्विधेऽप्यधिकरणे सप्तमी विभक्तिर्भवतीति शेषः ॥

**कटे शेते कुमारोऽसौ वटे गावः सुशेरते ।**
**तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥**
**युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ।**

**भावे सप्तमी ॥ भावः क्रियालक्षणं भावस्तत्रापि सप्तमी ॥ प्रसिद्धक्रियया अप्रसिद्धक्रियाया लक्षणबोधनं भावः ॥ देवे वर्षति चौर आयातः ॥ पतत्यंशुमालिनि पतितोऽरातिः । काले शरदि पुष्यन्ति सप्तच्छदाः ॥**

अथ सार्धश्लोकेन षडप्याधारभेदोदाहरणान्याह—कटे शेते इत्यादि । असौ कुमारः कटे कटमुपश्लिष्य शेते । इत्यत्र उपश्लेषिकमधिकरणम् अत्र शयनक्रियाश्रयः कर्ता कुमारस्तदाधारः कटस्तत्रोपश्लेषः ॥ १ ॥ गावो धेनवः वटे इति वटसमीपे शेरते शयनं कुर्वते इति सामीपिकाधिकरणम् । नहि वटस्योपरि गावः शेरते किंतु समीपे ॥ एवं गङ्गायां घोषः गङ्गासमीपे घोषो गोकुलम् ॥ २ ॥ तिलेषु विद्यते तैलं तिलेषु सर्वत्राभिव्याप्य स्थितमित्यर्थः । इति अभिव्यापकम् ॥ ३ ॥ हृदीति हृदि विषये ब्रह्म परममसृतमित्येतद्वैषयिकाधिकरणम् ॥ ४ ॥ युद्धेषु युद्धनिमित्तं धीरः संनह्यते संनाहं परिदधाति इति नैमित्तिकम् ॥ ५ ॥ अङ्गुल्यग्रे अङ्गुल्यग्रेण प्रदश्यमानमित्यर्थः । करिणां हस्तिनां शतमित्युपचारमात्रत्वादौपचारिकं नतु साक्षाद्वर्तमानमिति ॥ ६ ॥ इत्थमाधारमाख्यायेदानीं भाव-

१ औपश्लेषिकं त्रिविधम् । एकदेशवृत्त्यभिव्याप्यवृत्ति व्यङ्ग्यवृत्तीति केषांचिन्मतम् ॥

पदस्यार्थमाह—भावः क्रिया लक्षणमिति। क्रिया गमनस्थानोत्थानादिका तस्या लक्षणं चिह्नं स भाव इति कथ्यते। प्रसिद्धक्रियया कृत्वा अप्रसिद्धक्रियाया लक्षणं बोधनं भाव इति। तत्रापीति तस्मिन्नर्थेऽपि सप्तमीविभक्तिर्भवतीति। उदाहरणम्—देवेति। देवे मेघे वर्षति सति चौरस्तस्करः आयात आगतः। अत्र मेघवर्षणरूपा प्रसिद्धा क्रिया। तया चौरागमनरूपा अप्रसिद्धा क्रिया लक्षिता। देवे मेघे वर्षतीति प्रसिद्धेन वर्षणेनाप्रसिद्धं चौरागमनं लक्ष्यत इति तत्र सप्तमी। एवमंशुमालिनि सूर्ये पतत्यस्तं गच्छति सति अरातिः शत्रुः पतित इति। युद्धार्थमागत्य पतित इत्यर्थः। यद्वा पतितो मृत इत्यर्थः। अत्र प्रसिद्धेन सूर्यस्यास्तमनेन अप्रसिद्धं शत्रोः पतनं लक्ष्यते। एवं गुरौ धर्ममुपदिशति सति शिष्यः शृणोतीत्येवमादयोऽवसेयाः। एवं द्वितीयादिविभक्तीनामर्थाः॥

**अथोपपदविभक्त्यर्थो निपात्यते॥ विनासहनमऋते निर्धारणस्वाम्यादिभिश्च॥ एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति॥ विना पापं सर्वं फलति॥ अन्तरेणाक्षिणी जीवितेन किम्॥ अन्तरा त्वां मां मध्वित्यादिपदाद्ग्राह्यम्॥**[1]

अथ पुनस्तासामुपपदानामर्थान् प्रकारान्तरेणाह—सूत्रम्—विनासहनमऋते निर्धारणे स्वाम्यादिभिश्च॥ ततो विना च सहचेत्यादिषट्कद्वन्द्वः। ते आदौ येषां तथा तैः तृतीयाबहुवचनान्तम्। 'स्नोर्वि०'। च प्रथमैकवचनम् 'अव्य०'॥ सिद्धं सूत्रम्॥ एतैर्विनादिभिरपि योगे द्वितीयाद्याः षट् विभक्तयः षट्स्वप्यर्थेषु यथाक्रमं भवन्ति। 'द्वन्द्वात्परतः श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति। आदिशब्दो विनादिषु प्रत्येकं योज्यः। विनादिवाचके शब्दे प्रयुज्यमाने द्वितीयाविभक्तिर्भवतीति। सहादियोगे तृतीया। नमआदियोगे चतुर्थी। ऋतेआदियोगे पञ्चमी। निर्धारणाद्यर्थे षष्ठी। स्वाम्याद्यर्थे सप्तमी॥ तत्रोदाहरणेन द्वितीयां व्यञ्जयति—विनापापमिति। पापं विना पापाभावेन सर्वमपि धर्मकृत्यादि फलति फलमावहति। एवमत्र विनार्थे वाच्यमाने विनाशब्दयोगे द्वितीया। चकारात् पापेन विना पापाद्विनेति तृतीयापञ्चम्यावपि। 'वृद्धत्वं जरसा विना'॥ अक्षिणी इति। नेत्रे अन्तरेण विना जीवितेन किं। जीवनेन न किमपीति भावः। अक्षिणी इत्यत्र द्वितीयाद्विवचनं नपुंसकान्तम्॥ अन्तरेत्यादि। त्वां मामन्तरा मध्ये विचाले मधु क्षौद्रं मद्यं वा वर्तते। त्वां मामिति युष्मदस्मदोर्द्वितीयैकवचनान्तत्वम्। आदिशब्दादन्तरेण अन्तरा इत्यर्थद्वयेऽपि द्वितीयाविभक्तिर्भवति। एतदेवाह—इत्यादिपदाद्ग्राह्यमिति। इत्युदाहरणद्वयम् आदिपदाद् विनादियोगे द्वितीया इत्यादिशब्दाद्ग्राह्यम् अवसेयमिति भावः। इति द्वितीयार्थाः॥

**[सहादियोगे तृतीयाऽप्रधाने॥]**[2] **सह शिष्येणागतो गुरुः॥ सदृशश्चैत्रो मैत्रेण॥ साकं नयनाभ्यां श्लक्ष्णा दन्ताः॥ सार्धं धनिना धृतः साधुः॥**[3]

---

१ अधिशीङ्स्थासां कर्म॥ अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात्॥ अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः॥ अभिनिविशश्च॥ अभिनीत्येतत्संघातपूर्वस्य विशतेर्धातोराधारः कर्मसंज्ञः स्यात्। ग्रामं अभिनिविशते॥ उपान्वध्याङ्वसः॥ उपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात्॥ आवसथ्यं आवसति उपवसति अनुवसति अधिवसति॥ २ सह सदृशं साकं सार्धं सममिति सहादयः॥ ३ समं शिष्याभ्याम-

अथ तृतीया [ सहादियोगे तृतीया ] । तत्र द्रव्यगुणक्रियाभिस्तुल्ययोग्यतायां विद्यमानायां सहार्थे तृतीयाविभक्तिर्भवतीति वृद्धाम्नायः । सह शिष्येणेति । गुरुः शिष्येण सह आगतः । अत्रागमनक्रियया शिष्यशब्दस्य गुरुणा तुल्ययोग्यतायां सत्यां तृतीयान्तत्वम् । सह पुत्रेण पिता धनी इत्यत्र धनद्रव्येण तुल्ययोग्यत्वे पुत्रस्य तृतीयान्तत्वम् ॥ सदृशश्चैत्रो मैत्रेण । चैत्रनामा कश्चित्पुरुषः मैत्रेण मैत्रनाम्ना पुरुषेण सदृशस्तुल्यः । साकं नयनाभ्यामिति । नयनाभ्यां साकं सहिताः श्लक्ष्णा मनोहराः । अत्र गुणेन तुल्यत्वे तृतीया ॥ एवमादिशब्दात्साधुः पुरुषः धनिभिर्धनवद्भिः पुरुषैः सार्धं धृतो गृहीतः बद्ध इत्यर्थः । वारणार्थालंयोगे तृतीया समर्थार्थालंयोगे चतुर्थीत्यर्थः । एतावता अलं विवादेन । धर्मेण अर्थः । गुडेन मिश्रः । शस्त्रेण कलहः । कर्मणा विना । पुण्येन हीन इत्यादयोऽपि शब्दात् अवसेयाः ॥ प्रक्रियामते तु तुल्यार्थे तृतीयाषष्ठ्यौ स्तः । कृष्णेन कृष्णस्य वा पुत्रः । यदुक्तं रघुकाव्ये—'धृतेश्च धीरः सदृशीर्व्यधत्त सः' ॥ इति तृतीया ॥

**[नमआदियोगे चतुर्थी ॥ नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषट् इन्द्राय ॥[1]**

अथ चतुर्थीं व्याचष्टे—नमआदियोगे चतुर्थी० ॥ नमःस्वस्तिस्वाहास्वधालंवषट् एतेषामव्ययानां योगे चतुर्थी वक्तव्या । सुगमम् । तत्र नम इति नमस्कारार्थः । स्वस्ति इति कल्याणवाचकमव्ययम् । स्वाहा इति होमावसरे मन्त्रावसानेऽक्षरद्वयोच्चारणम् हव्यवस्तुवाचकम् ॥ स्वधेति पितृकल्प्यं वस्तु । अलमिति सामर्थ्यार्थः । वषट् होतव्यं वस्तु ॥ नमो नारायणायेति । नमो नमस्कारार्थः । स्वस्ति राज्ञे । राज्ञे नृपाय कल्याणं भवतु । अत्र स्वस्ति कल्याणार्थे । सोमाय स्वाहा । सोमाय चन्द्राय स्वाहा हव्यवस्तु ॥ पितृभ्यः स्वधा संतानकल्पितं वस्तु ॥ अलमिति । मल्लो मल्लाय अलं समर्थः । इन्द्राय वषट् । होतव्यं वस्तु । इत्यादिष्वर्थेषु चतुर्थी ॥

**ऋतआदियोगे पञ्चमी ॥[2] ऋते ज्ञानान्न मुक्तिः ॥ अन्यो गृहाद्विहारः ॥ आराद्वनात् ॥ इतरो ग्रामात् ॥**

अथ पञ्चमी—ऋते इति । ज्ञानादृते मुक्तिर्न भवतीति शेषः । अत्र ऋतेशब्दयोगे ज्ञानादिति पञ्चमी । आदिशब्दात् गृहादन्यो विहारः विहरणं । विनापृथक्योगेऽपि । विनाकामात् । पृथक्ग्रामात् । एवं भिन्नो ग्रामादिति । इतरो ग्रामात् । प्राक्ग्रामात् । दक्षिणाहि ग्रामात् । गृहाद्बहिः । आरात् द्रुमादित्यादि ॥

**निर्धारणम् ॥ क्रियागुणजातिभिः समुदायात्पृथक्करणं यतस्तत्र षष्ठी । क्रिया-**

---

धीते ॥ समं शिष्येण गुरुणा भुज्यते ॥ अशिष्टव्यवहारे दानस्य प्रयोगे चतुर्थ्यर्थे तृतीया ॥ दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥ वारणार्थयोगे तृतीया ॥ अलं विवादेन इत्यधिकम् ॥

१ रुच्यर्थानां प्रीयमाणः ॥ रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानसंज्ञः स्यात् ॥ हरये रोचते भक्तिः ॥ २ ऋते अन्यः आरात् इतरः अञ्चूत्तरपदं दिग्वाचकः शब्दः आहि आच् एते ऋत आदयः ॥ अन्यशब्देनान्यार्था गृह्यन्ते ॥ ३ ऋतेयोगे च द्वितीयापि ॥ ज्ञानं ऋते ॥ चकाराद्विनादियोगे तृतीयापञ्चम्यौ स्तः ॥ विना ज्ञानात् । ज्ञानेन विना इत्यधिकम् ॥

**पराणां भगवदाराधकः श्रेष्ठः । गवां कृष्णा गौः संपन्नक्षीरा ॥ एतेषां क्षत्रियः शूरतमः ॥**

अथ षष्ठ्यर्थसूचकं निर्धारणं व्याचष्टे निर्धारणमिति । निर्ध्रियते पृथक्क्रियतेऽनेनेति निर्धारणं । काभिः ? क्रियागुणजातिभिः । क्रिया करणात्मिका गमनस्थानादिका । गुणो रूपादिः । जातिर्ब्राह्मणादिः । ततः क्रिया च गुणश्च जातिश्चेत्यादिना द्वन्द्वः । ततस्ताभिः कृत्वा यत्समुदायात् बहूनां समूहात् पृथक्करणमेकस्य तन्निर्धारणमुच्यते । तत्रार्थे षष्ठीविभक्तिर्भवतीति । तत्रोदाहरणम्—क्रियासु पराः क्रियासु निष्ठास्तत्परा इत्यर्थः । तेषां मध्ये यो भगवतश्चिदानन्दस्य आराधकः स एव श्रेष्ठः प्रशस्यः । अत्र सामान्यक्रियापरेषु भगवदाराधकत्वरूपक्रियया पृथक्करणे क्रियापरशब्दस्य षष्ठी ॥ गवां धेनूनां मध्ये या कृष्णा गौः सा संपन्नक्षीरा बहुदुग्धा । अत्र गोशब्दस्य कृष्णगुणेन निर्धारणे षष्ठी । एतेषां क्षत्रियः शूरतम इति ॥ एतेषां सर्वजातीयानां पुरुषाणां मध्ये क्षत्रियोऽतिशयेन शूरः इति शूरतमः । अत्र जात्या निर्धारणे षष्ठी ॥ व्याकरणान्तरमते तु निर्धारणे षष्ठीसप्तम्यौ द्वे अपि भवतः ॥

**स्वामित्वे षष्ठीसप्तम्यौ ॥ गोषु स्वामी गवां स्वामी ॥ गवामधिपतिः गोष्वधिपतिः ॥**

स्वामित्वे षष्ठीसप्तम्यौ ॥ स्वामिनो भावः स्वामित्वं तस्मिन् स्वामित्वे सप्तमी । चकारात् षष्ठ्यपि भवति । गोषु स्वामी गवां स्वामी । एवं गोष्वधिपतिः गवामधिपतिः इत्येतदपि ज्ञेयम् । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतशब्दयोगे षष्ठीसप्तम्यौ भवतः ॥

**कर्तृकार्ययोरक्तादौ कृति षष्ठी ॥ कर्तरि कार्ये च षष्ठीविभक्तिर्भवति क्तादिवर्जितकृदन्ते शब्दे प्रयुज्यमाने ॥ व्यासस्य कृतिः । भारतस्य श्रवणम् ।[1] स्मृतौ च कार्ये ॥ स्मृत्यर्थे धातौ प्रयुज्यमाने च कार्ये षष्ठी भवति ॥ मातुः स्मरति ॥**

पुनः षष्ठ्या अर्थान्तरमाह–सूत्रम्—'कर्तृकार्ययो०'॥ कर्ता च कार्यं च कर्तृकार्ये तयोः । सप्तमीद्विवचनान्तम् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' । अग्रे अक्तादि क्तप्रत्यय आदिर्यस्य सः क्तादिः न क्तादिरक्तादिस्तस्मिन् सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' पश्चात् 'नामिनोरः' 'स्वरहीनं०' ॥ कृति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अग्रे षष्ठी । षण्णां संख्यापूरणी षष्ठी । प्रथमैकवचनान्तम् । 'हसेपः०' सिद्धम् ॥ कर्तरीति । प्रागुक्तलक्षणे प्रधाने क्रियाश्रये अर्थे तथा कार्ये कर्मणि षष्ठीविभक्तिर्भवति । क सति ? कृदन्ते सति । कृत् तृतीयावृत्तिप्रोक्तः प्रत्ययसमूहः सोऽन्ते यस्य स कृदन्तस्तस्मिन् कृदन्ते शब्दे प्रयुज्यमाने वाच्यमाने सतीति भावः ॥ कथंभूते कृदन्ते शब्दे ? क्तादिवर्जिते क्तप्रत्ययादिरहिते । क्तादीत्यादिशब्दात् क्तक्तवतू ईषद्दुःसुषु खल् शतृशानौ क्वसुकानौ पूर्वकाले क्त्वा समासे क्यप् तुम् इष्णु स्नु क्नु इत्यादि कृत्प्रत्ययान् विहाय अन्येषु कृत्प्र-

---

१ उभयप्राप्तौ कर्मणि ॥ उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् ॥ चित्रं गवां दोहोऽगोपेन । इत्यधिकम् ॥

त्ययान्तेषु परेषु सत्सु इत्यर्थः ॥ तत्रोदाहरणम्—व्यासस्य कृतिः, व्यासेन क्रियते स्म इति । अत्र व्यासः कृतेः कर्ता । ततः कृतिरिति कृत्प्रत्ययान्ते शब्दे प्रयुज्यमाने व्यासस्येति कर्तरि षष्ठी । एवं भारतस्य श्रवणं, भारतं शृणोतीति । श्रवणमिति युडन्ते कृदन्ते प्रयुक्ते भारतस्येति कर्मणि षष्ठी । अत्रोभयत्रापि कृद्योगलक्षणा षष्ठी ॥ अक्तादाविति किम् । त्वया कृतम् । ग्रामं प्राप्तः । अत्र यथाक्रमं कर्तरि कर्मणिच तृतीयाद्वितीये क्तप्रत्ययान्तत्वात् । आदिशब्दात् शतृशानचूकसुकानइष्णुखुकुक्त्वातुमुक्यपूआद्यन्तेष्वपि शब्देषु परेषु षष्ठी न भवति किंतु द्वितीयैव । ग्रामं गच्छन् । अन्नं पचमानः । अन्नं पेचिवान् । शुभं चक्राणः । देवं दिदृक्षुः । आत्मानमलंकरिष्णुः । दैत्यान् घातुकः । दानवान् जिष्णुः । देवं नत्वा । गुरुं प्रणम्य । ग्रामं गन्तुमुत्कण्ठित इत्यादीन्युदाहरणान्यवसेयानि ॥ 'द्विषः शतुर्वा षष्ठी' मुरस्य मुरं वा द्विषन् ॥ 'स्मृतौ च कार्ये' स्मृतावर्थे 'स्मृञ् स्मरणे' इति धातुयोगे कार्ये कर्मणि विषये षष्ठी विभक्तिर्भवति । उदाहरणम्—मातुः स्मरति मातुः स्मर्तव्ये षष्ठी । चकारात् द्वितीयापि कर्मापि भवति—मातरं स्मरति ॥ 'तृप्त्यर्थानां करणे वा षष्ठी' फलैः फलानां वा तृप्तः । अद्भिः अपां वा तृप्तः ॥

**हेतौ तृतीया पञ्चमी च वक्तव्या ॥ अनित्यः शब्दः कृतकत्वेन कृतकत्वात् ॥**

'हेतौ' हेतौ साधने तृतीयापञ्चम्यौ भवतः । इह किल प्रतिज्ञा–हेतु-दृष्टान्त-उपनय-निगमन-भेदादनुमानस्य पञ्चावयवाः । तत्र पक्षवचनं प्रतिज्ञा । प्रतिज्ञास्थापको हेतुः । यथा पर्वतोऽयं वह्निमान् । कस्मात्? धूमवत्त्वात् । अयं पर्वतो वह्निमानिति प्रतिज्ञा । सा च धूमवत्त्वेन हेतुना स्थाप्यत इति । तत्र हेताविति द्वितीयानुमानावयवे तृतीया पञ्चमी च भवति । तत्रोदाहरणम्—अनित्यः शब्दः इति प्रतिज्ञा । कृतकत्वेन कृतकत्वादिति हेतुः । तत्र तृतीया विकल्पेन पञ्चमी । हेतुत्वादिति प्रस्तावाच्छेषा अपि त्रयोऽवयवा व्यज्यन्ते । ते चामी— यो यः कृतकः स सोऽनित्यः यथा घट इति दृष्टान्तः । कृतकोऽयमित्युपनयः । तस्मादनित्यश्चायमिति निगमनम् ॥

**भयहेतौ पञ्चमी च वक्तव्या ॥ चौराद्बिभेति ॥ व्याघ्रात्त्रस्यति ॥ विद्युत्पाताच्चकितः ॥**

भयहेतौ भयस्य कारणे पञ्चमी । भयस्य हेतुर्यः पशुपुरुषादिजनितः कारणवर्गस्तस्मिन्नर्थे पञ्चमी विभक्तिर्भवति । चौराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाताच्चकितः । अत्र भयहेतौ भयार्थे पञ्चमी ॥

**षष्ठी च हेतुप्रयोगे ॥ हेतुप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् ॥ कस्य हेतोरियं कन्या ॥**

'षष्ठी हेतुप्रयोगे च' ॥ हेतुशब्दस्य प्रयोगे हेतुशब्दे प्रयुज्यमाने षष्ठी भवति । कस्य हेतोरियं कन्या । कस्य निमित्तमित्यर्थः । चकारात्सर्वादेर्हेतुप्रयोगे तृतीयाषष्ठ्यौ स्तः । केन हेतुना । कस्य हेतोः । निमित्तकारणहेत्वर्थप्रयोगे सर्वादेः सर्वा विभक्तयो भवन्ति । को

हेतुः । कं हेतुं वसति । केन हेतुना । कस्मै हेतवे । कस्माद्धेतोः । कस्य हेतोः । कस्मिन् हेतौ इत्यादि ॥

**इत्थंभावे तृतीया ॥ शिष्यं पुत्रेण पश्यति ॥ संसारमसारेण पश्यति ॥**

'इत्थंभावे तृतीया' इति । असावयमिवेति इत्थंभावस्तस्मिन्नर्थे तृतीयाविभक्तिर्भवति । उदाहरणम्—शिष्यं पुत्रेण पश्यति पुत्रसदृशं पश्यति । पुत्रमिवेति भावः । यद्वा अयं प्रकारः इत्थम् तस्य भावः इत्थंभावः । सामान्यस्य भेदको विशेषः प्रकारः किंचित्प्रकारं प्राप्तः इत्थंभावः । यथा मनुष्यत्वसामान्यभेदको विशेषः शिष्यत्वं, लक्षणं पुत्र इति न भवति किंतु तद्गतस्नेहः पुत्रशब्देनोच्यते इति । आचार्यः शिष्यं पुत्रेण पश्यति पुत्रमिव पश्यतीत्यर्थः । एवं संसारमसारेणेत्यपि ज्ञेयम् । साधुः संसारमसारमिव पश्यति असारतया पश्यतीत्यर्थः ॥

**येनाङ्गविकारः ॥ येन विकृतेनाङ्गेनाङ्गिनोऽङ्गविकारो लक्ष्यते तस्मादङ्गात्तृतीया विभक्तिर्भवति ॥ अक्ष्णा काणः ॥ पादेन खञ्जः । शिरसा खल्वाटः ॥**

सूत्रम्—'येनाङ्गविकारः' ॥ येनेति यच्छब्दस्य तृतीयैकवचनान्तम् । 'त्यदादेष्टे०' 'टेन' 'अ इ ए' । अङ्गविकारः अङ्गं विक्रियतेऽनेनेत्यङ्गविकारः । प्रथमैकवचनान्तम् । 'स्रोर्विं०' 'सवर्णे०' ॥ सिद्धं सूत्रम् । येन विकृतेनाङ्गेन अक्ष्यादिना अङ्गिनः शरीरिणोऽङ्गविकारः शरीरविकृतिर्लक्ष्यते ज्ञायते तस्माद्विकृतादङ्गात्तृतीया विभक्तिर्भवति । तत्र विकृतत्वं द्विविधं न्यूनत्वेन आधिक्येन चेति ॥ न्यूनत्वं व्याचष्टे । अक्ष्णा नेत्रेण काणः । पादेन खञ्जः । शिरसा मस्तकेन खल्वाटः केशरहितः । करेण कुणिः । न्यूनत्वविकृतादिदमुदाहरणचतुष्टयम् । एवं मुखेन त्रिलोचनः । वपुषा चतुर्भुजः । इत्येतदुदाहरणद्वयमाधिक्यविकृतौ ज्ञेयम् ॥

**जनिकर्तुः प्रकृतिः ॥ जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति ॥ [ तत्रापादाने पञ्चमी । ] यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेति ॥**

अथ पञ्चम्या अर्थान्तरमाह—सूत्रम्—'जनिकर्तुः प्रकृतिः' ॥ जनिकर्तुः जनेर्जन्मनः यद्वा जनेर्धातोः क्रियापदस्य कर्ता उत्पद्यमानं वस्तु जनिकर्ता तस्य षष्ठ्येकवचनान्तम् । 'ऋतो ङ उः' अस्य उः ङित्त्वाट्टिलोपः । 'स्वरहीनं०' 'स्रोर्विं०' । प्रकृतिः प्रथमैकवचनान्तम् । 'स्रोर्विं०'॥ सिद्धं सूत्रम् । 'जनिकर्तुः प्रकृतिरपादानम्' इत्थं वा सूत्रम् । अथ वृत्तिः—जनिकर्तुरिति । कोऽर्थः ? जायमानस्य जायमानमुत्पद्यमानं यत्कार्यं तस्य प्रकृतिरुपादानं मूलकारणं तदपादानसंज्ञं भवति । तत्र अपादाने पञ्चमी विभक्तिर्भवतीति शेषः । अर्थाज्जनेर्धातोर्यः कर्ता स जायमानः सन् कार्यं भवति तस्य प्रकृतिः कारणं पञ्चमी । उदाहरणम्—'यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेत्यभिधीयते ।' प्रजायन्ते इति जनिधातुपदं प्रजा इति जनिकर्तृपदम् जायमाने कार्यत्वात्, तस्य प्रकृतिर्यच्छब्दनिर्दिष्टं ब्रह्म । ततो यस्मादिति मूलकारणत्वात् प्रकृतिपदस्य पञ्चमी ।

**आङादियोगे च ॥ आङादियोगे पञ्चमीविभक्तिर्भवति ॥ आपाटलिपुत्राद्वृष्टो देवः ॥**

'आङादियोगे च' ॥ आङुपसर्गादियोगे पञ्चमी। आदिशब्दात् आङ् अपपरियोगे। आङ् उपसर्गो मर्यादायाम् अभिविधौ च वर्तते। तेन विनेति मर्यादा। तेन सहेत्यभिविधिरिति भेदः। तत्रोदाहरणम्—आपाटलिपुत्रादिति पाटलिपुत्रं नगरं मर्यादीकृत्य तस्मादर्वागर्वाग्, अभिव्याप्य वा देवो मेघो वृष्ट इत्यर्थः॥ पर्यपयोर्वर्जने पञ्चमी। पर्यपौ वर्जनार्थे। परि त्रिगर्तेभ्यो देवो वृष्टः। अप त्रिगर्तेभ्यो वृष्टो देवः। त्रिगर्तदेशान् वर्जयित्वा वृष्ट इत्यर्थः। 'राज्ञि मेघे सुरे देवः' इत्यनेकार्थः॥ विद्यास्वीकारे आख्यातुः पञ्चमी स्यात्। उपाध्यायादधीते॥

**तादर्थ्ये चतुर्थी वक्तव्या॥**

**संयमाय श्रुतं धत्ते नरो धर्माय संयमम्।**
**धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये॥**

अथ पुनश्चतुर्थीमाह—'तादर्थ्ये इति'॥ सोऽर्थो यस्य तत्तदर्थं तस्य भावस्तादर्थ्यम्। यद्वा स एवार्थस्तदर्थस्तस्य भावस्तादर्थ्यम्। यद्वा तस्मै कार्याय इदं कारणं तदर्थं तस्य भावस्तादर्थ्यं तस्मिंस्तादर्थ्ये अर्थे वाच्यमाने चतुर्थी विभक्तिर्भवति। तत्रोदाहरणं श्लोकेन—संयमायेति। नरो मनुष्यः श्रुतं शास्त्रं धत्ते। कस्मै? । संयमाय संयमार्थमित्यर्थः। धर्माय धर्मार्थं संयमं धत्ते। मेधावी बुद्धिमान् मोक्षाय मोक्षार्थं धर्मं धत्ते। धनं दानाय तथा भुक्तये भोगाय धत्ते। अत्र संयमादीनां तादर्थ्ये चतुर्थी॥

**क्रुधादियोगे च॥ क्रूराय क्रुध्यति॥**

क्रुधादिधातुयोगेऽपि चतुर्थी। क्रुधिद्रुहिईर्ष्याअसूयाश्लाघह्नुङ्स्थाशपूधारिस्पृह एते क्रुधादयः। क्रूराय क्रुध्यति क्रूरं प्रति क्रोध इत्यस्मिन्नर्थे क्रुध्धातुयोगे क्रूरायेत्यत्र चतुर्थी। आदिशब्दान्मित्राय द्रुह्यति। गुणवते असूयतीत्यादि। रोषवाचकधातुयोगे चतुर्थी। पुत्राय कुप्यति। दुष्टायेर्ष्यतीत्यादयः। गुणेषु दोषारोपोऽसूया। परसंपत्त्यसहनमीर्ष्या। इति भेदः। 'सोपसर्गयोश्च क्रुधद्रुहोर्योगे चतुर्थीप्रतिषेधो वक्तव्यः'। क्रूरमभिक्रुध्यति। मित्रमभिद्रुह्यति। चकारात् श्लाघ्शप्स्थाधृञ्स्पृहादीनां रुच्यर्थानां तृप्यमाणात् चतुर्थीति सूचितम्। भगवते श्लाघते। मदनाय शपते। मित्राय तिष्ठति। पत्न्यै धारयति भूषणानि पतिः। कृष्णाय स्पृहयति गोपी। क्षुधिताय रोचतेऽन्नमित्यादि ज्ञेयम्॥

लोकानां शुभाशुभसूचको भूतादिविकार उत्पातस्तत्रापि चतुर्थी। वाताय कपिला विद्युत् वातोत्पातज्ञापिकेत्यर्थः॥

**तुमन्तलोपे चतुर्थी। फलेभ्यो याति फलान्याहर्तुं यातीत्यर्थः॥**

तुमर्थाच्च भाववचनात्। यागाय याति। यष्टुं यातीत्यर्थः॥ मन्यतेः कर्मण्यनादरे वा चतुर्थी। न त्वां तृणाय मन्ये इत्यर्थः॥ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ। व्रजाय व्रजति व्रजं वा॥

**क्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या॥ हर्म्यात्प्रेक्षते। हर्म्यमारुह्य प्रेक्षत इत्यर्थः॥ [ आसनात्प्रेक्षते। आसने उपविश्य प्रेक्षत इत्यर्थः ]॥**

'क्यब्लोपे इति'॥ क्यबर्थो वाच्यमानः क्यपश्चाप्रयोगः क्यब्लोपस्तस्मिन्नर्थे पञ्चमी

वक्तव्या । यतः—'क्यबर्थो दृश्यते यत्र क्यबन्तं न प्रयुज्यते । स एव क्यब्लोपः स्यादिति प्रोक्तं मनीषिभिः ।' क्यब्लोपे कर्मण्यधिकरणे पञ्चमी वक्तव्या । उदाहरणम्—हर्म्यात्प्रेक्षत इति ॥ कोऽर्थः ? । हर्म्यं गृहमारुह्य प्रेक्षते पश्यतीत्यर्थः । एवमासनाद्वदति आसने उपविश्य वदतीत्यर्थः ॥

**निमित्तात्कर्मयोगे च सप्तमी वक्तव्या ॥**

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥**

**विषये च ॥ तर्के चतुरः ॥ षष्ठीसप्तम्यौ चानादरे ॥ बहूनां क्रोशतां गतश्चौरः ॥ बहुष्वसाधुषु वदत्स्वपि स्वयमार्यो याति साधुमार्गेण ॥ बहुषु साधुषु वदत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण ॥ मातापित्रो रुदतोः प्रव्रजति पुत्रः ॥**

सप्तमीमाह—निमित्तादिति । निमित्तं नाम पञ्चमोऽधिकरणभेदस्तस्मान्निमित्तात् प्रयोजनवाचिनः शब्दात् कर्मयोगे सप्तमी वक्तव्या । तत्रोदाहरणम्—चर्म० । चर्मणीति चर्मनिमित्तं द्वीपिनं चित्रकं हन्ति विनाशयति । दन्तयोर्दन्तनिमित्तं कुञ्जरं हस्तिनं हन्ति । केशेषु केशनिमित्तं चमरीं गां हन्ति । सीम्नि सीमायां सीमानिमित्तं पुष्कलको नाम ग्रामाधिपतिः हतो मारितः ॥ विषये चेति । विषये विषयार्थे वाच्यमाने सप्तमी विभक्तिर्भवति ॥ उदाहरणम्—तर्के तर्कविषये चतुरो निपुणः । अत्र तर्कः क्रियाश्रयत्वाभावान्नाधिकरणं ततो विषये सप्तमी ॥ षष्ठी० । अनादरे क्रियमाणे सति षष्ठी सप्तमी च भवति । तत्रोदाहरणम्—बहूनां जनानां क्रोशतां सतां च चौरो गतः । बहून् जनान् आक्रोशतोऽवज्ञाय अनादृत्येत्यर्थः । बहुषु साधुषु निवारयत्स्वपि निषेधयत्स्वपि आर्यः साधुः स्वयमात्मना साधुमार्गेण यातीत्यत्रानादरे सप्तमी । बहुषु साधुजनेषु वदत्स्वपि कथयत्स्वप्यनार्योऽसाधुः स्वयमात्मना असाधुमार्गेण असमीचीनमार्गेण याति । बहुषु साधुजनेषु अनादरं कृत्वा व्रजतीत्यर्थः । एवं मातापित्रो रुदतो व्रजति पुत्र इत्यपि ज्ञेयम् ॥ इन्नन्ते कर्मण्यपि सप्तमी अधीती व्याकरणे ॥

**अन्योक्ते प्रथमा ॥ यदेदं कार्याद्यन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या ॥ घटः क्रियते । घटः कार्यः ॥**

सूत्रम्—'अन्योक्ते प्रथमा' ॥ अन्योक्तमन्येनोक्तमन्योक्तं तस्मिन् । सप्तम्येकवचनान्तम् । 'अ इ ए' । प्रथमैकवचनान्तम् । 'आपः' इति सेर्लोपः । सिद्धं सूत्रम् । अन्योक्त इति पदं व्याचष्टे—यदिति । यदा इदं कार्यादि कर्मादिकारकम् ॥ अन्येनेति कोऽर्थः । आख्यातेन द्वितीयवृत्त्युक्तसूत्रनिष्पन्नेन यक्प्रत्ययान्तधातुरूपेण, कृता च तृतीयवृत्तिसाधितशब्देन, चशब्दात् समासेन तद्धितेन च सह यदुक्तं भवति तद् उच्यते तदा तस्मिन् कर्मणि प्रथमा विभक्तिर्भवति । अर्थात् यत्र तृतीयान्तः कर्ता तत्र कर्मणि प्रथमा विभ-

१ गुदमेढ्रान्तरालाङ्गं सीमेति प्रोच्यते बुधैः । पुष्कलो मृगभेदः स्याद्वन्यः सौगन्ध्यहेतुकः ॥ २ विषयो नामानन्यभावः ॥

क्तिर्भवति । उदाहरणम्—कुम्भकारेण घटः क्रियते इत्यत्र घटस्य कार्यत्वात् क्रियते इत्याख्यातोक्तत्वेन कर्मणि प्रथमा । एवं कारूकेण कटः कार्यः इत्यत्र कृतोक्तत्वात्कर्मणि प्रथमा । एवं राजा राजते । अत्र आख्यातेनोक्ते राजा इत्यत्र कर्तरि प्रथमा ॥

**छन्दसि स्यादिः सर्वत्र ॥ दधि जुहोतीत्यस्मिन्नर्थे दध्ना जुहोति ॥ पुंनन्तु ब्रह्मणस्पतिः ॥ व्रजतीर्विरेजुः ॥**

छन्दसि कारकानियममाह—छन्द० । छन्दसि वेदविषये स्यादिर्विभक्तिः सर्वत्र सर्वस्मिन्नर्थे व्यत्ययेन च भवति । तत्रार्षत्वान्न विभक्तिनियम इत्यर्थः । उदाहरणम्—दध्ना जुहोतीति । द्वितीयासंभवे छान्दसत्वात् द्वितीयास्थाने तृतीया । भो लोकाः ब्रह्मणस्पतिं पुनन्तु ब्रह्माणं प्रक्षालयन्तु इति द्वितीयार्थे 'ब्रह्मणस्पतिः' इति प्रथमा । यद्वा ब्रह्मणस्पतिर्ब्रह्मा 'पुनन्तु' । अत्रैकवचनसंभवे बहुवचनम् ॥ अत्र 'व्रजन्त्यो गोप्यो विरेजुः' इति प्रथमाबहुवचनसंभवे द्वितीयाबहुवचनम् ॥ उक्तं च व्रजतीर्विरेजुरिति । भागवते दशमस्कन्धे पञ्चमाध्याये कृष्णजन्माधिकारे 'नन्दालयं सवलया व्रजतीर्विरेजुः' । एवमन्यान्यपि छान्दसोदाहरणानि अवसेयानि ग्रन्थगौरवभयान्न लिख्यन्ते ॥ अथ विभक्तीनां कांश्चिदर्थान् समाहृत्याह—सामान्यलिङ्गवचनपरिमाणकर्तृसंबोधनान्योक्तेषु प्रथमा । कर्मण्यभितः सर्वतः उभयतः परितः प्रतिसमयानिकषाहा अनुधिगूडपर्युपरिअधोऽधः अध्यधिविना अन्तरेणान्तरा स्मरति कालाध्वनोर्नैरन्तर्ये शतृशानकसुकानइष्णुस्तुक्त्वातुमृक्यप्रयोगे क्रियाविशेषणे च द्वितीया । कर्तृसाधनयोः सहसदृशसाकंसमंसार्धविनेत्थंतद्भावयेनाङ्गविकारवारणार्थालंयोगे निषेधार्थे कृतादियोगहेतुतुल्यार्थादिषु तृतीया । दानपात्रे नमःस्वस्तिस्वाहास्वधावषट्तादर्थ्यक्रुधादिरुच्यर्थादिधातुयोगे समर्थार्थालंयोगवलिरक्षितहितशब्दयोगेषु च चतुर्थी । विश्लेषावधौऋतेअन्यादिविनापृथक्भिन्नेतरप्रभृत्यारभ्य बहिःशब्दयोगहेत्वर्थजनिकर्तृमर्यादाङादियोगकयब्लोपभयहेतुविद्याख्यातृप्रभृत्यर्थेषु पञ्चमी । संबन्धनिर्धारणस्वामित्वकर्तृकार्यस्मरणार्थहेतुशब्दप्रयोगतुल्यार्थानादरादिषु षष्ठी । आधारभावस्वामित्वनिमित्तविषयानादराधीशादिषु सप्तमी । छन्दसि सर्वा विभक्तयः सर्वेष्वर्थेषु व्यत्ययेन भवन्ति । जातावेकवचने बहुवचनवद्भवति । एको द्वौ वा अस्मदो विशेषणे बहुवद्भवतः । गुरौ च एको द्वौ बहुवद्भवतः । इत्यादि ज्ञेयम् ॥ यथा देशे प्रचुरो यवो निष्पद्यते । तथा अहं आवां एतयोरर्थयोः 'वयम्' इति भवति । तथा एकस्मिन्नपि गुरौ 'एते गुरवः' इति बहुवचनं भवति ॥ इति कारकाधिकारप्रक्रियाविवरणं संक्षेपतः समाप्तमिति ॥

---

**([१]कर्ता कर्म च करणं संप्रदानं तथैव च ।**
**अपादानाधिकरणमित्याहुः कारकाणि षट् ॥**
**द्वितीया कर्मणि ज्ञेया कर्तरि प्रथमा यदा ।**
**उक्तकर्तृप्रयोगोऽयं न तदा यत्प्रयुज्यते ॥**

---

१ चंद्रकीर्तिमतेनात्रैव प्रकरणसमाप्तावग्रिमो ( ) धनुश्चिह्नान्तर्गतो भागः केवलपुस्तकक्रमादत्र स्थापित इति सूरिभिर्ज्ञेयम् ।

तृतीया कर्तरि यदा कर्मणि प्रथमा तदा ।
उक्तकर्मप्रयोगोऽयं न तदा परस्मैपदम् ॥

स्वतन्त्रः कर्ता ॥ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् प्रधानीभूतधात्वर्थाश्रयः कर्ता ॥ साधकतमं करणम् ॥ क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ कर्तृकरणयोस्तृतीया ॥ अनभिहिते कर्तरि करणे च तृतीया स्यात् ॥ अकथितं च ॥ अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः ॥ गां दोग्धि पयः ॥ बलिं याचते वसुधाम् ॥ अविनीतं विनयं याचते ॥ तण्डुलानोदनं पचति ॥ गर्गान् शतं दण्डयति ॥ व्रजमवरुणद्धि गाम् ॥ माणवकं पन्थानं पृच्छति ॥ वृक्षमवचिनोति फलानि ॥ माणवकं धर्मं ब्रूते शास्ति वा ॥ शतं जयति देवदत्तम् ॥ सुधां क्षीरनिधिं मथ्नाति ॥ देवदत्तं शतं मुष्णाति ॥ ग्राममजां नयति हरति कर्षति वहति वा ॥ अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् ॥ माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञः स्यादिति वाच्यम् ॥ कुरून्स्वपिति ॥ मासमास्ते ॥ गोदोहमास्ते ॥ क्रोशमास्ते ॥ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ॥

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानबोधयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।
गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ।
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥

गौर्दुह्यते पयः ॥ अजा ग्रामं नीयते ॥ बोध्यते माणवकं धर्मः माणवको धर्ममिति वा ॥ देवदत्तो ग्रामे गम्यते ॥ अकर्मकाणां कालादिकर्मणां च कर्मणि भावे च लकार इष्यते ॥ मासो मासं वा आस्यते देवदत्तेन ॥ णिज-

न्तात्तु प्रयोज्ये प्रत्ययः ॥ मासमास्ते माणवकः ॥ तत्प्रयोजको हेतुश्च ॥ कर्तुः प्रयोजकः कर्तृसंज्ञो हेतुसंज्ञश्च स्यात् ॥ स्वार्थं परित्यज्य अन्यार्थाभिधायित्वमुपसर्जनत्वम् ॥ क्रियाजन्यफलशालित्वं कर्मत्वम् ॥ साक्षात्संबन्धेन क्रियान्वयित्वं मुख्यत्वम् ॥ परम्परासम्बन्धेन क्रियान्वयित्वं गौणत्वम् ॥ )

इति कारकप्रक्रिया संपूर्णा ॥

---

## समासप्रकरणम् १६

**अथार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते ॥ समासश्चान्वये नाम्नाम् ॥ नाम्नामन्वययोग्यत्वे सत्येव समासो भवति ॥ चकारात्तद्धितोऽपि । ततो भार्या पुरुषस्येत्यादौ समासो न भवति ॥**

### अथ समासारम्भः ।

तत्र प्रथमं परिभाषामाह—अथार्थेत्यादि ॥ अथ व्याख्या —अथेति कारककथनानन्तरं समासो निरूप्यते इति संबन्धः । तत्र समसनं अनेकेषां पदानामेकं पदमित्यादि यत्संक्षेपणं स समासो निरूप्यते कथ्यते । केषां? पदानां स्यादिविभक्त्यन्तानामेवंविधानां समासो निरूप्यते कथ्यत इति योगः । कथंभूतानां पदानाम्? अर्थवदित्यादि । अर्थः प्रथमादीनां लिङ्गादिः सोऽस्त्यास्विति अर्थवत्यस्ताश्च ता विभक्तयश्च अर्थवद्विभक्तयस्ताभिर्विशिष्टानि युक्तानि अर्थवद्विभक्तिविशिष्टानि तथा तेषाम् । यद्वा अर्थवन्ति च तानि विभक्तिविशिष्टानि च अर्थवद्विभक्तिविशिष्टानि तेषाम् ॥ अथ समासस्य याथातथ्यमाह—सूत्रम्—'समासश्चान्वये नाम्नाम्' ॥ समासः प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ च प्रथमैकवचनान्तम् । 'अव्यया०' पश्चात् । 'विसर्जनीयस्य सः' 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं०' ॥ अन्वये अन्वेति पदानामथमित्यन्वयस्तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' पश्चात् । 'सवर्णे०' । नाम्नामिति नामन्शब्दस्य षष्ठीबहुवचनान्तम् । 'अल्लोपः स्वरे०' 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ सिद्धं सूत्रम् ॥ नाम्नामन्वयेत्यादिवृत्तिः कण्ठ्या । परमत्र नामशब्देन पदमेव विवक्षितम् । अन्यथा 'अविभक्ति नाम' इत्युक्ते 'समासप्रत्यययोः' इति सूत्रं व्यर्थं स्यादिति द्विवचनस्य बह्वर्थान्तःपातित्वात् द्वयोरपि नाम्नोः समासः स्यात् । यद्वा नाम्नी च नामानि च नामानि तेषां नाम्नामेकशेषः समासः । तेन द्वयोरपि नाम्नोर्बहूनां च नाम्नां समासो भवति । न वरम् । सत्येवेति । परस्परमर्थागमनमन्वयः बाधकप्रमाणाभावो योग्यता । यत्र नाम्नां पदानां शब्दानामन्वययोग्यत्वं संभवति तत्रैव समासो भवति नान्यत्रेति भावः ॥ चशब्दात्तद्धितोऽप्यन्वययोग्यत्वे सत्येव भवति । तत इति तस्मात्कारणात् भार्या पुरुषस्येत्यादौ विपरीतान्वये समासो न भवति । यद्वा देवदत्तस्य भार्या पुरुषस्य वस्त्रमित्यत्र चतुर्णां शब्दानां मध्यात् आदिममन्तिमं च शब्दं विहाय मध्यस्थशब्दद्वयग्रहणात् अन्वययोग्यत्वं नास्ति । ततः समासो न भवति अन्वयायोग्यत्वादिति पुरुषस्य भार्येत्यादौ तु भवति ॥

---

१ व्यस्तपदयोर्व्यस्तपदानां वैकत्र समसनं समासः । तद्भेदा अग्रे व्याख्याताः ।

**स च षड्विधः । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः कर्मधारयो द्विगुश्चेति ।।[1] तत्र पूर्वपदप्रधानोऽव्ययीभावः ।। द्विगुतत्पुरुषौ परपदप्रधानौ ।। द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ बहुव्रीहिरन्यपदप्रधानः तस्य क्रियाभिसंबन्धात् ।। यत्रानेकसमासप्राप्तिस्तत्र उभयपदप्रधानो बलवान्[2] ।।**

अथ समासः कतिविध इति नामभिस्तद्भेदानाह—स चेति ।। स समासः षडिधः षट्प्रकारः षट्संख्य इत्यर्थः । तत्राद्योऽव्ययीभावो द्वितीयस्तत्पुरुषः तृतीयो द्वन्द्वश्चतुर्थो बहुव्रीहिः पञ्चमः कर्मधारयः षष्ठो द्विगुरिति । एवं समासः षड्विधो ज्ञेयः ।। सांप्रतं समासेषु पदानां प्राधान्यमाह—पूर्वपदप्रधानोऽव्ययीभावः । पूर्वपदमव्ययं परपदमनव्ययं तद्वशेन अनव्ययस्य अव्ययभवनमव्ययीभावः । द्विगुतत्पुरुषौ समासौ परपदप्रधानौ पूर्वोत्तरयोः पदयोर्मध्ये यत्परमग्रेतनं पदं तस्यार्थः प्रधानो ययोस्तौ ।। द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ च पुनः द्वन्द्वश्च कर्मधारयश्च द्वन्द्वकर्मधारयौ उभे पूर्वापरे पदे प्रधाने ययोस्तौ ।। बहुव्रीहिरन्यपदप्रधानः पूर्वोत्तराभ्यां पदाभ्यामन्यत्किंचिद्बहिःस्थितं पदं प्रधानं यस्मिन् सः । स कस्मात् ? तस्य क्रियाभिसंबन्धात् । अस्य व्याख्या यथा—तस्य क्रियाभिसंबन्धादिति पदं सर्वत्रापि योज्यम् । तत्र तत्र तस्य तस्य पदस्य क्रियाभिः सह अभिसंबन्धात् क्रियायां मुख्याधिकारित्वात् क्रियायोगित्वेन प्राधान्यादित्यर्थः ।। अव्ययीभावः पूर्वपदप्रधानो यथा—अधिस्त्रि स्त्रियमधिकृत्य भवतीत्यत्र पूर्वपदस्य अधिशब्दस्य क्रियायां मुख्यत्वादव्ययीभावः पूर्वपदार्थप्रधानः । उत्तरस्य पदस्य अग्रेतनपदस्य क्रियाभिसंबन्धाभावात् ।। द्विगुस्तत्पुरुषश्च एतौ परपदप्रधानौ । यथा पञ्चानां गवां समाहारः पञ्चगु इत्यत्र संख्याभूतस्य विशेषणत्वं गोशब्दस्य विशेष्यत्वं विशेष्यविशेषणयोर्विशेष्यस्य मुख्यत्वमिति गोशब्दस्य परपदस्य प्रधानत्वम् । तथा तत्पुरुषसमासे ग्रामं प्राप्त इत्यादीनां परपदार्थे प्रधानत्वं यथा ग्रामं प्राप्तस्तथा पुरं गृहं धनं सुखं प्राप्त इत्यादिषु पूर्वपदस्य परावृत्तिसहत्वात्परपदस्य च परावृत्त्यसहत्वात्तत्पुरुषे परपदस्य प्राधान्यम् । एवं द्विगुतत्पुरुषयोः परपदस्य क्रियाभिसंबन्धात् द्विगुतत्पुरुषौ परपदप्रधानौ ।। तथा द्वन्द्वे कर्मधारये च उभयपदयोः क्रियाभिसंबन्धात् द्वन्द्वकर्मधारयावुभयपदप्रधानौ । यथा अग्निश्च सोमश्च अग्नीषोमौ वर्तेते इत्यादिषु पदद्वयस्यापि क्रियायामधिकारित्वात् द्वन्द्वे उभयपदयोः प्राधान्यम् । तथा कर्मधारये नीलं च तदुत्पलं चेत्यत्र विशेषणविशेष्ययोरेकार्थनिष्ठत्वादन्योन्याश्रयभूतत्वाच्च पदद्वयस्य प्राधान्यम् ।। बहुव्रीहौ चान्यपदस्य प्राधान्यम् । यथा बहु धनं यस्येत्यत्र बहुधनस्य वस्तुभूतत्वं यच्छब्दस्य तु स्वामित्वमिति अन्यपदस्य प्राधान्यम् । तस्या-

---

१ अव्ययस्य अव्ययेन वा भवनं सोऽव्ययीभावः । १ । स एवाग्रिमः पुरुषः प्रधानं यस्यासौ तत्पुरुषः । २ । द्वन्द्वायते उभयपदार्थौ येनासौ द्वन्द्वः । ३ । बहु समातिरिक्तं व्रीहिः प्रधानं यस्मिन्नसौ बहुव्रीहिः । ४ । कर्म भेदकं धारयतीति कर्मधारयः । ५ । द्वाभ्यां गच्छतीति द्विगुः । ६ । इत्यधिकम् ।। २ इदमेकस्मिन्समसिते पदेऽनेकसमासप्राप्तिस्तद्विषयम् ।। निषादस्थपतिं याजयेदित्यत्र तत्पुरुषबहुव्रीहिकर्मधारयप्राप्तौ सत्यां निर्णयमाह ।। समानाधिकरणव्यधिकरणयोर्मध्ये समानाधिकरणो बलवान् ।। एकविभक्त्यन्तत्वमेकार्थनिष्ठत्वं सामानाधिकरण्यम् ।। नीलं च तदुत्पलं च नीलोत्पलम् ।। भिन्नविभक्त्यन्तत्वं भिन्नार्थनिष्ठत्वं वैयधिकरण्यम् इत्यधिकः पाठः क्वाचित्कः ।।

न्यपदस्य क्रियाभिसंबन्धादिति ॥ अथ बलाबलत्वमाह—उभयपदप्रधानो बलवानिति ॥ समासद्वयसंभवे य उभयपदप्रधानः सः बलवान् भवति । यथा निषादस्थपतिरित्यत्र निषादानां स्थपतिरिति तत्पुरुषे क्रियमाणे परपदप्रधानत्वम् । तथा निषादश्चासौ स्थपतिश्चेति कर्मधारये क्रियमाणे उभयपदप्रधानत्वम् । ततोऽत्र कर्मधारय एवोभयपदप्रधानत्वेन बलवान् । अतोऽत्र बलवत्त्वात् कर्मधारय एव स्यात् न तु तत्पुरुषः ॥

**ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनम् ॥ अधि स्त्री इति स्थिते । स्त्रीशब्दाद्वितीयैकवचनम् । स्त्रियमधिकृत्य भवतीति विग्रहेऽन्वययोग्यार्थसमर्पकः पदसमुदायो विग्रहो वाक्यमिति यावत् ॥ कृते समासे अव्ययानां पूर्वनिपातो वक्तव्यः ॥**

ननु विभक्तान्येव पदानि प्रयोक्तव्यानि किं समासेनेति समासस्य प्रयोजनमाह—ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनमिति ॥ अनेकेषां पदानामेकपदमिति तस्य भाव ऐकपद्यं बहूनि पदानि द्वे वा पदे उच्चार्य विभक्तिलोपं कृत्वा समासत्वात् या विभक्तिः क्रियते तस्यां कृतायामेकपदभावो भवति तदैकपद्यम् ॥ यद्वा—एकशेषे द्वे त्रीणि वा पदान्युच्चार्य एकं पदमवशिष्यते तदैकपद्यम् । यथा देवश्च देवश्च देवश्च देवाः ॥ तथा अनेकेषां स्वराणामेकस्वरस्य भावः ऐकस्वर्यम् । यथा स्त्रियमधिकृत्य भवतीति विभागोच्चारणे प्रयत्नगौरवं स्यात् । समासे उच्चारणप्रयत्नलाघवं स्यात् इदमेकं प्रयोजनम् ॥ ऐकपद्याच्छरवणादौ णत्वमपि प्रयोजनम् ॥ तथा वैदिकप्रक्रियासिद्धोदात्तादिस्वराणामैकस्वर्यं च प्रयोजनम् ॥ अनेकासां विभक्तीनामेका विभक्तिस्तस्या भावः एकविभक्तिकत्वं समासप्रयोजनमिति ॥ यथा शशाश्च कुशाश्च पलाशाश्च इत्यत्रासमासकरणे पदत्रयम् । [ ततः समासे कृते ] विभक्तिलोपानन्तरं त्रयाणामपि पदानामेकं पदम् । तथाऽसमासे किंचित्पदमुदात्तस्वरेण किंचित्पदं स्वरितस्वरेणोच्चार्यते, ततः समासे कृते एकस्वरेणैवोच्चारणम् ॥ तथा विभक्तित्रयस्याप्येकपदत्वे एकैव विभक्तिरित्येकविभक्तिकत्वमिति समासेनैतत्त्रयं साध्यत इत्यर्थः । यतः ।

> 'विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते ।
> ऐकपद्यं पदानां च स समासोऽभिधीयते' ॥

अथ पूर्वमुद्दिष्टत्वादव्ययीभावोदाहरणमाह—अधि स्त्री इति ॥ तावल्लिख्यते। अत्राधिरुपसर्गोऽधिकृत्येत्यस्य वाचकः । स्वपदैरन्यपदैर्वा विविच्य कथनं विग्रहः । तेनाव्ययीभावस्यास्वपदविग्रहत्वात् । अधिशब्दो नोच्चार्यते, किंतु तदर्थवाचकोऽधिकृत्येति शब्दोऽलिखित एवाग्रे उच्चार्यते । अतः केवलं स्त्रीशब्दस्याग्रे द्वितीयाया एकवचनम् अम् दीयते। 'स्त्रीभ्रुवोः' इति । 'वाम्शसि' इति वा इय् 'स्वरहीनं०' स्त्रियमिति सिद्धम् । ततः स्त्रियमधिकृत्येति विग्रहो भवति । अथ विग्रहपदस्यार्थमाह—अन्वयेति । परस्परसापेक्षपदैकार्थीभावोऽन्वयस्तस्यान्वयस्य योग्यो योऽसावर्थस्तस्य समर्पकः प्रापकः । समर्थको वा दृढंकरो यः पदसमुदायः पदसमूहः स विग्रहः तस्यापरं नाम वाक्यमित्यर्थः । समासार्थबोधकं वाक्यं विग्रहः इति वा । ततोऽधि स्त्रियमिति पदं स्त्रियमधिकृत्य भवतीति विग्रहे कृते, यद्वा स्त्रियमधीत्युच्चार्य कृते विग्रहे 'अव्ययस्य पूर्वनिपातः कार्यः' । अन्यच्च (त्र) यत्प्रति यद्यत्पदमप्रधानं तस्य सर्वत्र समासे पूर्वनिपातो वक्तव्य इति ॥

**पूर्वेऽव्ययेऽव्ययीभावः ॥ अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ इति समाससंज्ञायाम् ॥**

अथाव्ययीभावस्य लक्षणमाह—सूत्रम्–'पूर्वेऽव्ययेऽव्ययीभावः' ॥ पूर्वे इति पूर्वशब्दस्य सप्तम्येकवचनान्तम् । 'अ इ ए' । अव्यये इति सप्तम्येकवचनान्तम् । 'अ इ ए' । अव्ययीभावः प्रथमैकवचनान्तम् । 'स्रोर्विं०' । अकारद्वयस्यापि 'एदोतोऽतः' इत्यनेन लोपः । त्रिपदमिदं सूत्रम् । अव्यये पूर्वपदे सति प्राधान्येन पूर्ववर्तिनि सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । अत्र अध्युपसर्गस्य 'तदव्ययम्' इति सूत्रेणाव्ययसंज्ञा । ततो अव्यये पूर्वपदेऽस्यान्वयस्य अव्ययीभाव इति समाससंज्ञा ॥

**समासप्रत्यययोः ॥ समासे वर्तमानाया विभक्तेः प्रत्यये परे च विभक्तेर्लुग्भवति ॥ नामसंज्ञायां स्यादिविभक्तिर्भवति ॥**

ततः समाससंज्ञायां सिद्धायां किं कृत्यमिति सूत्रेणाह—'समासप्रत्यययोः' ॥ समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः सप्तमीद्विवचनान्तम् । ओस् । 'ओसि' इत्यकारस्य एकारः । 'ए अय्' 'स्वरहीनं०' ॥ समासेऽव्ययीभावादौ वर्तमानाया विभक्तेस्तथा प्रत्यये कृत्तद्धितलक्षणे परे च विभक्तेर्लुक् भवति । समासे वर्तमानत्वं प्रस्तुतमेव । तद्धितप्रत्यये परे यथा उपगोरपत्यमित्यत्र षष्ठीलोपः । कृत्प्रत्यये यथा—कुम्भं करोतीत्यत्र द्वितीयावर्तमानार्थयोर्लोपः ॥ इति सूत्रेण अमो लुक् । ततो 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति वचनात् इयोऽपि निषेधः । स्त्रीशब्दः प्रकृत एव तिष्ठति । अधि स्त्री इति जातम् । ततः 'कृत्तद्धितसमासाश्च' इति समासस्य नामसंज्ञा । अतो नामत्वात्स्यादय इति सामान्येन प्रथमैकवचने स् । अधि स्त्री स् इति स्थिते ॥

**स नपुंसकम् ॥ सोऽव्ययीभावः समासो नपुंसकलिङ्गो भवति । नपुंसकत्वाद्ध्रस्वत्वम् ॥**

लिङ्गव्यवस्थां सूत्रेणाह—'स नपुंसकम्' ॥ स इति तच्छब्दस्य प्रथमैकवचनान्तम् । 'त्यदादेष्टे०' 'स्तः' इति तस्य सः । 'स्रोर्विं०' ॥ नपुंसकं प्रथमैकवचनान्तम् । स् 'अतोऽम्' 'अम्शसोरस्य' 'मोऽनुस्वारः' 'सैषाद्धसे' इति विसर्गलोपः । द्विपदमिदं सूत्रम् । सोऽव्ययीभावो नपुंसकलिङ्गो भवति । इति नपुंसकलिङ्गता । ततो नपुंसकत्वात् 'नपुंसकस्य' इति सूत्रेण ह्रस्वत्वमेवेति नान्यत् सेरमादिकार्यम् ॥

**अव्ययीभावात् ॥ अव्ययीभावात्परस्या विभक्तेर्लुग्भवति ॥ अधिस्त्रि गृहकार्यम् ॥ रायमतिक्रान्तमतिरि कुलम् । नावमतिक्रान्तमतिनु जलम् ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ क्रान्ताद्यर्थे वर्तमाना अत्यादयो द्वितीयया सह समस्यन्ते स तत्पुरुषसंज्ञकः समासो भवति ॥ ह्स्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥**

'नपुंसकात्०' इति सूत्रेण स्यमोर्लुकि प्राप्ते सर्वविभक्तिलुगर्थसूत्रान्तरमाह—'अव्य-

---

१ अनेन । २ निवृत्तिः ।

यीभावात्' ॥ अव्ययीभावशब्दस्य पञ्चम्येकवचनम्। 'ङसिरत्' 'सवर्णे०' ॥ 'अव्ययीभावसमासात्परस्याः सर्वस्या अपि विभक्तेर्लुक् भवति, न शब्दनिर्देशे' इति सर्वविभक्तेर्लुगेव भवति। न तु 'अतोऽम्' 'औरी' 'जश्शसोः शिः' इत्यादिसूत्रप्राप्तिः। इति सेर्लुक् अधिस्त्रि इति सिद्धम्। स्त्रियमधिकृत्याश्रित्येत्यर्थः। इदं गृहकार्यं स्त्रीस्वामिकं स्त्र्याधारमित्यर्थः। सप्तस्वपि विभक्तिषु सर्ववचनेषु अधिस्त्रि अधिस्त्री ईदृशमेव रूपम्। एवम् हरौ अधिकृत्य प्रवृत्ता कथा अधिहरि ॥ एवम् अतिरै अतिनौ इत्यत्र द्वितीयैकवचनेऽम्। ततो रायमतिक्रान्तं नावमतिक्रान्तमिति विग्रहे कृते अव्ययीभावसमासः। ततः 'समासप्रत्यययोः' इति विभक्तिलोपः। 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति अमोऽभावे 'ऐ आय्' इत्यस्याप्यभावः। ततो नपुंसकत्वात् ह्रस्वत्वं क्रियते इति ह्रस्वकरणविधिमाह—ह्रस्वादेश इति। संध्यक्षराणामेकारादीनां ए ओ ऐ औ एषां ह्रस्वादेशे क्रियमाणे सति एकारैकारयोरिकारः। ओकारौकारयोस्तु उकारादेशः इति अतिरै इत्यत्र ऐकारस्य इकारः। अतिनौ इत्यत्र औकारस्य उकारः। ततः प्रथमैकवचने। 'अव्ययीभावात्' इति सिलोपः। अतिरि इति सिद्धम्। एतत्कुलमतिरि द्रव्यपूर्णमित्यर्थः। एवमेतज्जलमतिनु नौभिरपि तरीतुमशक्यमित्यर्थः ॥ केचिदत्राव्ययीभावं नेच्छन्ति। किंतु 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया तत्पुरुषे' इति तत्पुरुषसमासमिच्छन्ति ॥ अत्रत्वव्ययीभावः ॥ तच्चिन्त्यम्। एवमुपनदि उपवन्धु उपकर्तृ अभ्यग्नि प्रत्यग्नि साग्नि ॥ अनुगिरि अनुवनम् अनुज्येष्ठं प्रत्यक्षं परोक्षं, 'नायं निद्राकाल' इत्यतिनिद्रं, मध्येसमुद्रं पारेगङ्गमित्यादि लोकाज्ज्ञेयम्। यत उक्तं प्रक्रियाकौमुद्याम् 'अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेष्वव्ययीभावः' इति ॥

**यथाऽसादृश्ये ॥ यथाशब्दोऽसादृश्ये वर्तमानः समस्यते सोऽव्ययीभावः समासो भवति ॥ शक्तिमनतिक्रम्य करोतीति यथाशक्ति करोति ॥**

पुनरव्ययीभावस्य संभवमाह—यथाऽसादृश्ये ॥ यथाशब्दः सादृश्यार्थेऽसादृश्यार्थे च। तत्र सादृश्यार्थे उपमार्थे यथाशब्देन सह समासो न भवतीत्यर्थः। यद्वा योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि इति यथाशब्दस्य चत्वारोऽर्थाः। तत्र सादृश्यार्थं विहायान्येष्वर्थेषु वर्तमानस्य यथाशब्दस्यान्वितेन पदेन सह समासो भवतीत्यर्थः। बाधाभावो योग्यता। पदार्थानां व्याप्तुमीप्सा वीप्सा। उदाहरणम्। यथारूपं चेष्टते रूपस्य योग्यं 'यथारूपम्' इति योग्यता ॥ १ ॥ यथावृद्धं प्रणमति ये ये वृद्धास्तांस्तान् यथाक्रमं प्रणमति इति यथावृद्धं इति वीप्सा ॥ २ ॥ शक्तिमनतिक्रम्य करोतीति यथाशक्ति। एवं सूत्रमनतिक्रम्येति पदार्थानतिवृत्तिः ॥ ३ ॥ सादृश्येतु न समासः यथा विष्णुः तथा शिवः ॥ ४ ॥ [ यथा ] शक्ति द्वितीयैकवचनम्। 'अम्शसोः०' अनतिक्रम्येत्युच्चारणमात्रं तमनुसृत्येत्यर्थः। अनतिक्रम्यअनुल्लङ्घ्येत्यर्थः ॥ पूर्वं यथाशब्दः असादृश्यार्थत्वात्समासः स चाव्ययीभावः। इति समाससंज्ञायां स्यादिर्विभक्तिः। 'अव्ययीभावात्' इति सेर्लोपः। यथाशक्ति शक्त्यनुसारेण करोतीत्यर्थः। [ सादृश्ये तु यथा विष्णुस्तथा शिवः। अत्र न समासः ]॥

**कुम्भस्य समीपमिति विग्रहे समासादि पूर्ववत् अव्ययीभावात् इति प्राप्ते ॥**

**अतोऽमनतः ॥ आकारान्तादव्ययीभावात्परस्या विभक्तेरम् भवति अतं वर्जयित्वा ॥ उपकुम्भं वर्तते ॥ उपकुम्भं पश्य ॥**

एतच्च 'अव्ययीभावात्' इति सूत्रं सामान्यसूचकम् । अथाकारान्तात्परतो विभक्तीनां विशेषमाह—सूत्रम्—'अतोऽमनतः'। अत इति पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' । अम् प्रथमैकवचनान्तम् । 'हसेपः०' अनत् न अत् अनत् तस्मात् अनतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रो०' पश्चात् । 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' मकारस्य अकारेण सह । 'स्वरहीनं०' ॥ त्रिपदमिदं सूत्रम् । अकारान्तो योऽव्ययीभावस्तस्मात्परस्याः सर्वस्या अपि विभक्तेरमादेशो भवति । परम् अतमिति पञ्चम्या अदादेशं त्यक्त्वा अत आदेशग्रहणात् आदेशिनं ङसिं वर्जयित्वेत्यर्थः । पञ्चम्या अम् न भवतीति तात्पर्यार्थः ॥ अत्रोदाहरणम्—कुम्भस्य समीपमिति विग्रहे कुम्भशब्दात् षष्ठ्येकवचने 'ङस्' कुम्भस्येति सिद्धम् । समीपार्थे उप इति पूर्वमुपसर्गरूपमव्ययम् । उपशब्देन समीपार्थस्योक्तत्वादुक्तार्थानामप्रयोग इति समीपशब्दस्याप्रयोजनम् । ततोऽव्ययीभावसमाससंज्ञा । 'समासप्रत्यययोः' इति षष्ठीलोपः । उपकुम्भ इति समासस्य नामसंज्ञा । तत्र 'लिङ्गार्थे प्रथमा' इति प्रथमैकवचनम् । 'अतो०' इति सेरम् । 'अम्शसोरस्य' 'मोऽनुस्वारः' प्रथमायाम् उपकुम्भं वर्तत इति । अग्रे उपकुम्भशब्दात् द्वितीयाद्याः सप्तमीपर्यन्ता विभक्तयो यथार्थं योज्याः । तत्र द्वितीयायामुपकुम्भं पश्य ॥

**वा टाङ्योः ॥ टा ङि इत्येतयोर्वा अम् भवति ॥[1] उपकुम्भेन कृतं उपकुम्भकृतम् । उपकुम्भं देहि । अनत इति विशेषणादुपकुम्भादानय । उपकुम्भं देशः । उपकुम्भं निधेहि । उपकुम्भे निधेहि ।**

सूत्रम्—'वा टाङ्योः' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया०' । टा च ङिश्च टाङी तयोः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'स्वरहीनं०' ॥ द्विपदं सूत्रम् । टा ङि इत्येतयोर्वचनयोर्वा अम् भवति । उपकुम्भ द्विस्थाने उभयत्रापि तृतीयैकवचने टा एकत्र अम् अन्यत्र वाशब्दस्य च बहुलार्थत्वात् लुक् न किं तु 'टेन' 'अ इ ए' उपकुम्भेन वा कर्त्रा कृतं कुम्भस्य समीपेन कृतमित्यर्थः । चतुर्थ्यां तु उपकुम्भं कुम्भस्य समीपाय देहीत्यर्थः । पञ्चम्याम् अनत इति विशेषणात् पञ्चम्या अम् न भवति । अत उपकुम्भात् कुम्भस्य समीपादानाय । षष्ठ्यां तु उपकुम्भं देशः । कुम्भसंबन्धिनः समीपस्य देशः प्रदेशः इत्यर्थः । सप्तम्यां तु 'वा टाङ्योः' इति विकल्पेन अम् । पक्षे 'अ इ ए' उपकुम्भमुपकुम्भे इति रूपद्वयम् । कुम्भस्य समीपे निधेहि स्थापयेत्यर्थः ॥

**अवधारणार्थे यावति च ॥ अवधारणार्थे यावच्छब्दे प्रयुज्यमाने अव्ययपूर्वपदाभावेऽपि योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ याव-**

१ अतोऽमनतः । वा टाङ्योः । अत्र अत् टा ङि एतत्पञ्चम्यास्तृतीयासप्तम्योर्द्विवचनबहुवचनयोरप्युपलक्षणम् । तेन द्विवचनबहुवचनयोरपि वा अम् भवति न लुक् । पञ्चम्यास्तु अमुल्लुकोर्निषेधः इत्यधिकम् ।

**न्त्यमत्राणि तावतो ब्राह्मणानामत्रयस्वेति यावदमत्रम् ॥ मक्षिकाणामभावो निर्मक्षिकं वर्तते ॥**[1]

पुनरव्ययीभावं वक्तव्यरूपया फक्किकया निरूपयति—न केवलम् अव्यये पूर्वपद एवाव्ययीभावः किंत्ववधारणे यावच्छब्देऽपि पूर्वपदे सति अव्ययीभावः । अवधारणार्थे परिमाणे यावच्छब्दे । ततोऽवधारणेऽर्थे यावच्छब्दे प्रयुज्यमाने योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । चशब्दादभावार्थेऽपि अव्ययपूर्वकत्वे अव्ययीभावः समासः । इति समाससंज्ञायां यावत् प्रथमाबहुवचने 'जश्शसोः शिः' 'नुमयमः' 'नश्चापदान्ते०' 'स्वरहीनं०' अग्रे अमत्र प्रथमाबहुवचने 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'ष्टुर्नोणो०' 'स्वरहीनं०' यावन्त्यमत्राणि पात्राणि भाजनानि संभवन्तीति विग्रहं कृत्वा पदद्वयेऽपि 'समासप्रत्यययोः' इति विभक्तिलोपः । यावत्+अमत्र इति स्थिते ब्राह्मणानित्यत्र विशेष्यस्य द्वितीयाबहुवचनान्तत्वात् द्वितीयाबहुवचनं शस् । 'अतोऽमनतः' इति शसोऽम् । 'अम्शसो०' 'चपा अबे०' तस्य दः । यावदमत्रमिति पात्रसंख्यया ब्राह्मणानामत्रयस्वेत्यर्थः ॥ तथा मक्षिकाशब्दात् षष्ठीबहुवचने । 'नुडामः' 'ष्टुर्नोणो०' 'स्वरहीनं०' मक्षिकाणामभाव इति विग्रहे अभावेऽर्थे पूर्वं निर्प्रयोगः । अत्राभावेऽव्ययीभावसमासः । 'समासप्रत्यययोः' इति षष्ठीलोपः । नामसंज्ञायां स्यादिः । प्रथमैकवचने नपुंसकत्वादव्ययीभावस्य 'नपुंसकस्य०' इति ह्रस्वत्वम् । 'अतोऽमनतः' इति सेरम् । 'अम्शसो०' 'मोनुस्वारः' निर्मक्षिकं वर्तते । अग्रे निर्मक्षिकं पश्य निर्मक्षिकं कृतमित्यादीनि द्वितीयादिषूदाहरणानि ज्ञेयानि । इत्यव्ययीभावः समासः ॥

**अमादौ तत्पुरुषः ॥ द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥ ग्रामं प्राप्तो ग्रामप्राप्तः ॥ दात्रेण छिन्नं दात्रच्छिन्नम् ॥ यूपाय दारु यूपदारु ॥ वृकेभ्यो भयं वृकभयम् ॥ राज्ञः पुरुषो राजपुरुषः ॥ अक्षेषु शौण्डः अक्षशौण्डः ॥**

अथ तत्पुरुषसमासमाह—सूत्रम्—'अमादौ०' ॥ अम् आदिर्यस्याः सा अमादिस्तस्याममादौ सप्तम्येकवचनान्तम् । ङेरौ डित् । डित्त्वाट्टिलोपः । अग्रे तत्पुरुषः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ अमादावित्यत्र जातावेकवचनम् । तेन अमाद्या द्वितीयाद्याः सप्तमीपर्यन्ताः षड्विभक्तयो ग्राह्या इति यस्य पदस्यान्ते द्वितीयाद्या विभक्तयो भवन्ति तस्मिन् पदे सति योऽन्वयो विग्रहः स तत्पुरुषसंज्ञकः समासो भवति अत्रान्वयशब्देन अन्वयप्रतिपादको विग्रहो ज्ञेयः । तत्र प्रथमं द्वितीयान्तस्य पूर्वपदस्योदाहरणम् । ग्रामशब्दात् द्वितीयैकवचने अम् । 'अम्शसो' 'मोऽनुस्वारः' । प्राप्तशब्दात् प्रथमैकवचने 'स्रोर्वि०' ।

---

१ आङ्मर्यादाऽभिविध्योः ॥ मर्यादायामभिविधौ च आङ् वा समस्यते । पाटलिपुत्रं मर्यादीकृत्येत्यापाटलिपुत्रम् ॥ बालानभिव्याप्येत्याबालम् ॥ तेन विनेति मर्यादा ॥ तेन सहेत्यभिविधिः ॥ पारे मध्ये षष्ठ्या वा ॥ पारमध्यशब्दौ षष्ठ्या वा समस्येते ॥ एदन्तौ निपातौ सूत्रात् ॥ प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ उपसर्जनं पूर्वम् ॥ समासे उपसर्जनं प्राक् प्रयोज्यम् ॥ गङ्गायाः पारे इति पारेगङ्गं-गङ्गापारे ॥ गङ्गाया मध्ये इति मध्येगङ्गम्-गङ्गामध्ये इत्यधिकम् ।

ग्रामं प्राप्तः इति द्वितीयान्ते पूर्वपदे तत्पुरुषः । 'समासप्रत्यययोः' इति अम्स्योर्लोपः । नामसंज्ञायां प्रथमैकवचने । 'स्रोर्विं०' ग्रामप्राप्त इति सिद्धम् ॥ दात्रशब्दात् साधने तृतीया । तृतीयैकवचने । 'टेन' 'अ इ ए' 'ष्ऋर्नोणो०' । छिन्नशब्दात् प्रथमैकवचने । 'अतोऽम्' 'अम्शसो०' 'मोऽनुस्वारः' । दात्रेण छिन्नमिति तृतीयान्ते पूर्वपदे तत्पुरुषः । पूर्ववद्विभक्तिलोपः । पुनरपि नामसंज्ञायां स्यादिः प्रथमैकवचने । 'अतोऽम्' 'अम्शसोरस्य' दात्रछिन्नमिति ॥ एवं यूपशब्दात् चतुर्थ्येकवचने ङे । 'ङेरक्' 'ए अय्' 'सवर्णे दीर्घः०' 'स्वरहीनं०' तादर्थ्ये चतुर्थी यूपाय दारु प्रथमैकवचने 'नपुंसकात्स्यमोर्लुक्' यूपाय यज्ञस्तम्भाय दारु काष्ठम् । 'समासप्रत्यययोः' इति विभक्तिलोपादि पूर्ववत् । पुनः प्रथमैकवचनं 'सि' 'नपुंसकात्स्यमोर्लुक्' अत्र चतुर्थीपूर्वपदतत्पुरुषः ॥ वृकशब्दात् पञ्चमीबहुवचने भ्यस् । 'ए स्भि बहुत्वे' । भयशब्दात् प्रथमैकवचने सि 'अतोऽम्' । 'भयहेतौ पञ्चमी' इति पञ्चमीबहुवचनम् । वृकेभ्यो भयमिति विग्रहे विभक्तिलोपादि पूर्ववत् । ततस्तत्पुरुषस्य परपदप्रधानत्वात् भयशब्दः क्लीबलिङ्गे प्रथमैकवचने । 'अतोऽम्' 'अम्शसोरस्य' 'मोऽनुस्वारः' अत्र पञ्चमीतत्पुरुषः ॥ तथा राज्ञः पुरुषः इत्यत्र राजन्शब्दात्संबन्धे षष्ठी । राजन्शब्दात् षष्ठ्येकवचने । 'अल्लोपः०' 'स्तोः श्चुभिः श्चुः' 'जञोर्ज्ञः' 'स्वरहीनं०' अग्रे पुरुषशब्दात् प्रथमैकवचने 'स्रोर्विं०' राज्ञः पुरुष इति विग्रहे 'समासप्रत्यययोः' इति विभक्तेर्लोपः । 'नाम्नो नो०' इति राजन्नित्यत्र नकारलोपः । ततो नामसंज्ञायां स्यादिः । प्रथमैकवचने 'स्रोर्विं०' अत्र षष्ठीतत्पुरुषः ॥ अक्षशब्दात् सप्तमीबहुवचने सुप् 'एस्भि बहुत्वे' 'किलात्षः०' अग्रे शौण्डशब्दात् प्रथमैकवचने 'स्रोर्विं०' अक्षेषु पाशकेषु शौण्डश्चतुरः । अत्र विषयार्थे सप्तमी सप्तमीबहुवचने सुप् 'समासप्रत्यययोः' प्रथमैकवचने सि 'स्रोर्विं०' अक्षशौण्ड इति सिद्धम् ॥

**क्वचिदमाद्यन्तस्य परत्वम् ॥ अग्नौ आहित इत्याहिताग्निः ॥ पूर्वं भूत इति भूतपूर्वः ॥**[1]

सांप्रतं विशेषमाह—'क्वचिदमाद्यन्तस्य०' ॥ तत्पुरुषसमासे वर्तमानस्य द्वितीयाविभक्त्यन्तस्य प्रथमान्तस्य च पूर्वपदस्य परत्वमित्युत्तरपदत्वमग्रे वर्तमानत्वं भवति । क्वचित्प्रयोगान्तरे, न सर्वत्रेत्यर्थः । उदाहरणमाह—अग्निशब्दात् सप्तम्येकवचने 'ङेरौ ङित्' ङित्त्वाट्टिलोपः । 'स्वरहीनं०' । आहितशब्दात् प्रथमैकवचने 'स्रोर्विं०' । अग्नौ आहित इति विग्रहे तत्पुरुषसमासः । विभक्तिलोपे कृते अग्निपदमाहितपदस्याग्रे प्रयुज्यते । 'सवर्णे दीर्घः०' 'स्रोर्विं०' अग्निविषये तत्पर इत्यर्थः ॥ एवं पूर्वस्मिन् काले भूत इति विग्रहे सप्तमीप्रथमयोर्लोपे 'क्वचिदमाद्यन्तस्य परत्वम्' इति भूत इति पदस्याग्रे पूर्व इति पदं लिख्यते । प्रथमैकवचने 'स्रोर्विं०' भूतपूर्व इति सिध्यति । एवं दन्तानां राजा राजदन्तः ॥ क्वचिदित्युक्तत्वात् अभ्याहित इत्यपि भवति ॥

**समासे क्वचिदैकपद्यं णत्वहेतुः ॥ शराणां वनं शरवणम् ॥ आम्राणां वनमाम्रवणम् ॥**

---

१ पिशाचादेः सभादीनां नपुंसकत्वं वा ॥ पिशाचानां सभा इति पिशाचसभम्-पिशाचसभा ॥ गृहस्थूणम्-गृहस्थूणा ॥ शशोर्णम्-शशोर्णा इत्यधिकम् ।

अथ समासे पुनरैकपद्यस्य प्रयोजनमाह—समासे क्वचिदैकपद्यं णत्वहेतुः ॥ समासविषये क्वचित्प्रयोगे पूर्वपदस्थात् षकाररेफऋवर्णरूपान्निमित्तादुत्तरपदस्य नकारस्य णत्वकरणे ऐकपद्यं हेतुः कारणं भवति । यथा आम्राणां वनं आम्रवणम् । शराणां वनं शरवणम् । इत्युभयत्रापि तत्पुरुषसमासः । विभक्तेर्लोपः । ऐकपद्यत्वे 'ऋर्नोणो०' इति पूर्वपदस्थाव्यवहितरेफात् उत्तरपदवनसंबन्धिनो नस्य णत्वम् । प्रथमैकवचने । 'अतोऽम्' 'अमृशसो०' अत्र णत्वसंभवः । एवं शरवणम् । प्लक्षवणम् । खदिरवणम् ॥ तथा त्रीणि नयनानि यस्य स त्रिनयन इत्यत्र क्वचिदिति कथनादैकपदेपि न णत्वम् ॥ केचित्तु त्रिणयनः त्रिनयनः ॥ अत्रापि विकल्पेन णत्वमिच्छन्ति ॥

**पानस्य वा ॥ सुरायाः पानं सुरापानम् सुरापाणम् ॥**

'पानस्य वा' ॥ पानसंबन्धिनो नस्य वा णत्वं भवति । सुरायाः पानं सुरापाणं सुरापानं वेति विकल्पेन णत्वम् । एवं क्षीरपाणं क्षीरपानं ॥ क्वचिदिति विशिष्टप्रयोगानुसारेण णत्वे नित्यत्वं विकल्पोऽपवादश्च ज्ञेयः । प्रवणम् अन्तर्वणम् पूर्वाह्णः पराह्णः खुरणाः खुरणसः शूर्पणखा इत्यादि नित्यं णत्वम् । दूर्वावनं दूर्वावणं गिरिनदी गिरिणदी चक्रनितम्बा चक्रणितम्बा इत्यादौ विकल्पेन णत्वम् । इन्द्रवाहना हरिभामिनी प्रिययूना परिपकानि इत्यादावैकपद्यात् प्राप्तस्यापि णत्वस्यावादः । एवं लौकिकप्रयोगवशाज्ज्ञेयम् ॥

**नञि ॥ नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥[1] न ब्राह्मणः ॥ ना ॥ समासे सति नञोकारादेशो भवति । नाकादिवर्जम् ॥ अब्राह्मणः ॥**

अथ पुनस्तत्पुरुषं सूत्रेणाह—'नञि' ॥ नञ्शब्दस्य सप्तम्येकवचनम् । 'स्वरहीनं' एकपदमिदं सूत्रम् । यत्र नञ् इति निषेधवाचकमव्ययं पूर्वपदं भवति स नाम्नामन्वयो विग्रहस्तत्पुरुषः समासो भवति । न प्रथमैकवचनान्तम्—'अव्यया०' । ब्राह्मणशब्दात् प्रथमैकवचने 'स्रोर्विं०' । न ब्राह्मण इति स्थिते । सूत्रम्—'ना' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । अग्रे अ प्रथमैकवचनान्तं सांकेतिकम् । पश्चात् संधिः 'सवर्णे दीर्घः०' ना इति द्विपदं सूत्रम् । समासे सति नञोऽकारादेशो भवति तत्रापि नाकादीन् वर्जयित्वा । नास्त्यकं दुःखं यस्मिन् स नाकः, नागः, नमुचिः, नक्षत्रं, नखं, नपुंसकं, नकुलः, नगः, नातिविस्तरा इत्यादयः शब्दाः नाकादौ द्रष्टव्याः । इत्यत्र नञोऽकारादेशो न भवति । अनेन नकारस्य अकारः । अब्राह्मणशब्दात् प्रथमैकवचने 'स्रोर्विं०' अब्राह्मणः ब्राह्मणादन्य इत्यर्थः ॥

**अन् स्वरे ॥ समासे सति नञोऽनादेशो भवति स्वरे परे ॥ अनादेशोऽपदान्तवद्वाच्यः ॥ तेन ङ्णः इति न द्वित्वम् । अश्वादन्योऽनश्वः ॥ धर्मविरुद्धोऽधर्मः ॥ ग्रहणाभावोऽग्रहणम् ॥ तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते ॥**

पुनः सूत्रम्—'अन् स्वरे' ॥ अन् प्रथमैकवचनान्तम् । 'हसेपः०' 'स्वरहीनं०' 'अ इ ए'

---

[1] नञ उभयार्थत्वं प्रसिद्धम् । तथा चोक्तं वार्तिककारेण ॥ उभौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् इत्यधिकम्.

समासे कृते सति नञ् इत्यस्याव्ययस्य अन्यविरुद्धाभाववाचिनः स्वरे परे अन् आदेशो भवति । अत्रापि नाकादिवर्जमिति योज्यम् । तदुदाहरणमाह—अश्वशब्दात् पञ्चम्येकवचने 'ङसिरत्' 'सवर्णे दी०' । अन्यशब्दात् प्रथमैकवचने 'स्रोर्वि०' । धर्मशब्दात् पञ्चम्येकवचने । 'ङसिरत्' 'सवर्णे०' । विरुद्धशब्दात् प्रथमैकवचने 'स्रोर्वि०' । ग्रहणशब्दात् षष्ठ्येकवचने 'ङस्य' अभावशब्दात् प्रथमैकवचने 'स्रो०' । अश्वादन्यः धर्माद्विरुद्धः ग्रहणस्याभावः इति विग्रहत्रयम् । त्रिष्वपि पूर्वं नञ्प्रयोगः । उक्तार्थानामप्रयोग इत्यन्यविरुद्धाभावानां लोपः । 'समासप्रत्यययोः' इति पञ्चमीलोपः । अश्वशब्दे परे स्वरपरत्वात् 'अन् स्वरे' इति नञोऽनादेशः । शेषोदाहरणद्वये प्राक् स्वरत्वाभावात् 'ना' इति सूत्रेण नञः केवलोऽकारादेशः । प्रथमैकवचने सर्वत्र । उदाहरणद्वयं पुंलिङ्गे, तृतीयं नपुंसके । अथ केष्वर्थेषु नञ् प्रयुज्यते ? इत्याह—तदन्येति । तस्मादन्यस्तदन्यः तेन विरुद्धस्तद्विरुद्धः तस्याभावस्तदभावश्च एष्वर्थेषु नञ् प्रवर्तते । नञ्शब्दः पूर्वं प्रयुज्यते इति भावः । तदन्य इति । अश्वादन्यः । तद्विरुद्ध इति धर्मात् विरुद्धः । तदभाव इति ग्रहणस्याभावः । एष्वर्थेषु पूर्वमुपसर्गरूपो नञ् भवति तस्मिन् नञि पूर्वपदे तत्पुरुषसमासो भवतीत्यर्थः । इति तत्पुरुषः ।

**चार्थे द्वन्द्वः ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थास्तेषु चार्थेषु द्वन्द्वसमासो भवति ॥ तत्रेश्वरं गुरुं च भजस्वेति प्रत्येकमेकक्रियासंबन्धे समुच्चये समासो नास्ति । बटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसंबन्धेऽन्वाचये समासो नास्ति नाम्नां परस्परमसंबन्धात् ॥ इतरेतरयोगे समाहारे चार्थे द्वन्द्वसमासो भवति ॥**

सांप्रतं द्वन्द्वसमासो निरूप्यते ॥ सूत्रम्—'चार्थे द्वन्द्वः'—चस्य अर्थश्चार्थः तस्मिन् चार्थे सप्तम्येकवचनम्, 'अ इ ए' । द्वन्द्वः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । द्विपदमिदं सूत्रम् । अथैतत्सूत्रं व्याचिख्यासुश्चार्थान् व्याकरोति—चार्थेषु समाससंभवासंभवं चाह—समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारश्च, इति चत्वारश्चार्थाः । तत्र कर्मद्वयस्यैकक्रियानिष्ठत्वं समुच्चयः । कर्मद्वयेऽपि प्रत्येकं क्रियाद्वयेन संबन्धोऽन्वाचयः । पदद्वयेन द्वन्द्व इतरेतरयोगः । बहूनां पदानां समवायः समाहारः एते चस्यार्थाः ॥ तत्र चतुष्टयमध्ये समुच्चयान्वाचययोः समासो नास्तीति दर्शयति । तत्र ईश्वरं गुरुं च भजस्वेत्यत्र कर्मद्वयस्यैकक्रियानिष्ठत्वे समुच्चये समासो नास्ति । अत्र चकारो भजनक्रियाया ईश्वरेण गुरुणा च संबन्धं द्योतयति इति एकक्रियाभिसंबन्धश्चार्थः ॥ तथा हे बटो भिक्षामट गां चानयेति अटनक्रियाया भिक्षाकर्म आनयनक्रियाया गौः कर्म । अत्र चकारः एकस्य बटोः अटने आनयने च क्रियाद्वये संबन्धं द्योतयति । एवमेकस्य कर्तुः कर्मद्वये क्रियाद्वयसंबन्धेऽन्वाचये चार्थे समासो नास्ति । परस्परमसंबन्धात् नाम्नामन्वययोग्यत्वे सत्येव समासविधानम् । अत्र क्रियानिरोधात् नाम्नां परस्परं संबन्धाभावात्समासो नास्तीत्यर्थः ॥ यतः ईश्वरस्य गुरोश्च युगपद् भजनेऽसंबन्धः । तथाऽन्वाचये भिक्षाटनस्य गवामानयनस्य च परस्परमसंबन्धात् अन्वाचये समासो नास्ति ॥ इतरेतरयोगे समाहारे चार्थे संबन्धसंभवात् द्वन्द्वः समासो

भवति । अन्योन्यं सापेक्षो द्वयोर्योगः एकक्रियाभिसंबन्धः इतरेतरयोगः । बहूनां समुदायः समाहारः ॥

**द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातो वक्तव्यः ॥ 'उक्तार्थानामप्रयोगः' इति चशब्दनिवृत्तिः । पटुश्च गुप्तश्च पटुगुप्तौ ॥ अग्निश्च मारुतश्च अग्निमारुतौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ ॥ धवश्च खदिरश्च धवखदिरौ ॥**

अथ द्वन्द्वसमासे पदानां समानत्वात् कः शब्दः पूर्वं प्रयोज्यः कः पश्चात् प्रयोज्य इत्याशङ्क्याह—'द्वन्द्वेऽल्पस्वर०' ॥ द्वन्द्वे द्वन्द्वसमासे प्रस्तावादितरेतरयोगे यदल्पस्वरं पदं समस्वरे वा पदद्वये यत्प्रधानं पदं तथा इकारान्तमुकारान्तं यत्पदं भवति तस्य पूर्वनिपातः प्राक्प्रयोगः कर्तव्यः । परं बहुष्वनियमः ॥ अत्रोकारान्तोदाहरणमाह—पटुशब्दात् प्रथमैकवचनम् । 'स्रोर्वि०' । च प्रथमैकवचनान्तम् । 'अव्यया०' 'विसर्जनीय०' 'स्तोः श्चुभिः श्चुः' । गुप्तशब्दात्प्रथमैकवचनम् । 'स्रोर्वि०' । च प्रथमैकवचनम् । 'अव्यया०' 'विसर्ज०' 'स्तोः श्चुभिः श्चुः' ॥ पटुश्च गुप्तश्चेत्यत्र समस्वरत्वेऽपि उकारान्तस्य पूर्वनिपातः । 'समासप्रत्यययोः' । तत 'उक्तार्थानामप्रयोगः' उक्ता अर्था यैस्ते उक्तार्थाश्चकारादयः तेषामप्रयोगोऽभावो भवति इत्यर्थः । इति चकारलोपः । पटुगुप्त इति स्थिते नामसंज्ञायां स्यादिः । इतरेतरयोगात्प्रथमाद्विवचनम् औ । 'ओ औ औ' पटुगुप्तौ कुरुतः इति उक्ते पटुसहायो गुप्तः गुप्तसहायः पटुरिति गम्यते । इत्यन्योन्यापेक्षाऽस्ति । एकस्याभावे तन्न क्रियते । एवमन्यत्रापि ज्ञेयम् । पटुगुप्तौ इत्यत्र पटुशब्दस्य उकारान्तत्वात्पूर्वं निपातः । परं गुप्तपटू इति न भवति ॥ एवमेव अग्निश्च मारुतश्चेत्यग्निशब्दस्याल्पस्वरत्वादिकारान्तत्वाच्च पूर्वनिपातः प्रयोगः । पूर्ववद्विभक्तेश्चकारस्य च लोपः । ततः प्रथमाद्विवचने 'ओ औ औ' ॥ तथा भोक्तृशब्दात् प्रथमैकवचने । 'स्तुरार्' भोक्तार् यदादेशस्तद्वद्भवतीति न्यायात् 'सेरा' डित्त्वाट्टिलोपः इत्यार्लोपः, 'स्वर०' । च प्रथमैकवचनम् 'अव्यया०' ॥ भोग्यशब्दात् प्रथमैकवचने । 'स्रोर्वि०' च प्रथमैकवचनान्तम् । 'अव्यया०' पश्चात् विसर्जनी०' 'स्तोः श्चुभिः श्चुः' । भोक्ता च भोग्यश्चेति विग्रहे प्रधानभूतत्वाद्भोक्तृशब्दस्य प्रथमं प्रयोगः । भोक्ता पुरुषः भोग्यं विषयादि वस्तु ततो भोक्तुः भोग्यस्य स्वामित्वात्प्रधानत्वं ततः प्राग्विभक्त्यादिलोपः । भोक्तृभोग्यशब्दात् प्रथमाद्विवचने 'ओ औ औ' ॥ एवं धवश्च खदिरश्च धवखदिरौ इत्यत्र धवशब्दात् स्वल्पस्वरत्वात्प्रथमं प्रयोगः ॥ स्त्री च पुरुषश्च स्त्रीपुरुषौ । अत्र पुरुषस्य प्रधानत्वेऽपि अल्पस्वरत्वात्स्त्रीशब्दस्य पूर्वनिपातः ॥

**देवताद्वन्द्वे पूर्वपदस्य वा दीर्घो वक्तव्यः ॥ अग्निश्च सोमश्च अग्नीषोमौ इन्द्रश्च बृहस्पतीश्च इन्द्राबृहस्पती । अग्न्यादेः सोमादीनां षत्वं वक्तव्यम् ॥ इतरेतरयोगे द्विवचनम् ॥**

---

१ 'द्वयोः' इत्यस्य निवेशे 'हरिहरगुरवः' इत्यत्र नैव स्यात् ॥ २ 'बहूनाम्' इत्यस्य निवेशे द्वयोः समाहारो न स्यात् ॥ ३ वाग्रहणात्क्वचिन्न भवत्यग्निमारुतावित्यादौ ॥

अथ द्वन्द्वे एव विशेषमाह—'देवताद्वन्द्वे०' ॥ देवतावाचकशब्दभावे द्वन्द्वसमासे पूर्वपदसंबन्धिनोऽन्त्यस्वरस्य वा दीर्घो वक्तव्यः इति । वाग्रहणात्प्रयोगान्तरे न भवत्यपि । अत्रोदाहरणमाह—अग्निश्च सोमश्चेति विग्रहे विभक्तिलोपः । उक्तार्थानामप्रयोगे च अग्निसोम इति स्थिते 'देवताद्वन्द्वे' इति अग्निशब्दस्य स्वरस्य दीर्घ ईकारः, द्वयोरपि देवतात्वात् ॥ अग्नीसोम इति स्थिते ॥ 'अग्न्यादेः सोमादीनां षत्वं वक्तव्यम्' अग्न्यादेर्दीर्घनाम्यन्तात्परेषां सोमादीनामाद्यसकारस्य षकारो भवति । 'किलात्षः सः कृतस्य' इत्यस्य न प्राप्तिः । सकारस्याकृतत्वात् । तेनेदं वक्तव्यं कृतम् । अग्नीषोमशब्दात् प्रथमाद्विवचने 'ओ औ औ' जग्नीषोमौ । इति सिद्धम् । अत्र इकारान्तस्य पूर्वत्वम् । अग्न्यादेरित्यादिशब्दात् अग्निष्टोमः । अग्निष्टुत् । ज्योतिष्टोमः । आयुष्टोमः । अङ्गुलिषङ्गः । भीरुष्ठानम् । मातृष्वसा । पितृष्वसा । इत्यादौ षत्वम् ॥ एवमिन्द्रश्च बृहस्पतिश्चेत्यत्र इन्द्रशब्दस्याल्पस्वरत्वात् पूर्वनिपातः । विभक्तिलोपे उक्तार्थानामप्रयोगे च 'देवताद्वन्द्वे०' इति इन्द्रस्य दीर्घः । प्रथमाद्विवचने 'औ यू' ईकारः । 'सवर्णे०' इन्द्राबृहस्पती । एवं सूर्याचन्द्रमसौ ॥ उदाहरणान्युक्त्वा अग्न्यादेरिति वक्तव्यं दृश्यते तच्च प्रागेव व्याख्यातम् ॥ सांप्रतमितरेतरयोगद्वन्द्वस्य वचननियममाह—इतरेतरयोगे द्विवचनमिति । इतरेतरयोगे द्वन्द्वे द्विवचनं भवति । पदद्वयात्मकत्वात् । लिङ्गनियमस्तु उभयपदप्रधानत्वेऽपि उत्तरपदलिङ्गप्रयोगो भवति ॥

**एकवद्भावो वा समाहारे वक्तव्यः ॥[2] शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः–शशकुशपलाशम् ॥**

सांप्रतं समाहारद्वन्द्ववचनविशेषमाह—'एकवद्भावो वा समाहारे वक्तव्यः' ॥ समाहारे द्वन्द्वे पदानां समासे कृते एकवद्भाव एकवचनं वा भवति । एकमिव एकवत् । एकवचनम् । तस्य भावः ॥ पक्षे पदानां समाहारत्वाद् बहुत्वाद् बहुवचनं भवत्येव । 'एकवद्भावो वा समाहरे वक्तव्यः' इति । अत्र समुदायार्थप्रधान्यविवक्षायामेकवचनम् । अवयवार्थप्राधान्यविवक्षायां बहुवचनमिति निपातानामनेकार्थत्वात् । वाग्रहणात् कचिदितरेतरयोगेऽप्येकवद्भावो भवतीति शेषः । द्वित्वमतन्त्रमिति वचनाद्वा ॥ समाहारोदाहरणमाह—यथा—शशशब्दात्प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्विं०' । च प्रथमैकवचनान्तम् 'अव्यया०' । एवं कुशशब्दात् प्रथमाबहुवचने 'सवर्णे०' 'स्रो०' । च प्रथमैकवचनम् । 'अव्यया०' । पलाशशब्दात् प्रथमाबहुवचने 'सवर्णे०' 'स्रो०' । च प्रथमैकवचनान्तम् । 'अव्यया०' । शशाश्च कुशाश्च पलाशाश्च इति विग्रहे । अत्र पदद्वयाधिकपदात्मकत्वात्समाहारद्वन्द्वः । 'समासप्रत्यययोः' इति विभक्तिलोपे उक्तार्थानां चाप्रयोगे शशकुशपलाशम् । द्विस्थाने एकत्र समाहारबहुत्वम् । प्रथमाबहुवचने पलाशशब्दस्य वृक्षवाचित्वात्पुंलिङ्गत्वम् । प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्विं०' ॥ द्वितीयरूपे 'एकवद्भावो वा समाहारे' इति एकवचनम् । प्रथमैकवचनम् । सत्यपि पुंस्त्वे एकत्वे 'द्विगुद्वन्द्वौ' इति वक्ष्यमाणसूत्रेण क्लीबलिङ्गः । 'अतोऽम्' 'अमृशसो०' 'मोऽनुस्वारः' ॥

---

१ 'दीर्घनाम्यन्तात्' इति निवेशे अग्निष्टोमादौ षत्वं कथं भवति ॥ २ समाहारस्यैकत्वात्समाहारे एकवद्भावः सिद्ध एव । तर्हि वाग्रहणं किमर्थम् ॥ वाग्रहणात्कचिद्द्वयोरपीतरेतरयोगे एकवचनं कचिद्बहूनामितरेतरयोगे एकवचनम् । इत्यधिकः पाठः ॥

**अन्यादीनां विभक्तिलोपे कृते पूर्वपदस्य सगागमो वक्तव्यः ॥ अन्योन्यम् । परस्परम् ॥**

सांप्रतमितरेतरयोगेऽपि एकवद्भावोदाहरणमाह—'अन्यश्च अन्यश्च इति विग्रहे तथा परश्च परश्चेति विग्रहे 'समासप्रत्यययोः' इति उभयत्रापि विभक्तेर्लोपे उक्तार्थानां चाप्रयोगे। अन्य अन्य इति पर पर इति स्थिते। अन्यादीनां शब्दानां समासे वर्तमानानां पूर्वपदवर्तिनां सगागम इति सकारस्यागमो वा वक्तव्यः। इत्यादिभूतयोरन्यपरशब्दयोः सगागमः। किस्वादन्ते। अन्यस् अन्य इति स्थिते। 'स्रोर्वि०' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' अन्योन्यशब्दात् प्रथमैकवचने 'अतोऽम्' अत्र पदान्तताश्रयणात् 'स्रोर्वि०' 'एदोऽतोऽतः' एतयोः सूत्रयोः प्राप्तिः॥ अप्रधानभूतत्वात् 'इत्वन्यादेः' इत्यपि न भवति। अन्योन्यमिति सिद्धम्॥ पर अग्रे पर मध्ये सकारागमः। 'स्वरहीनं०'। अत्र वाचस्पत्यादित्वान्न विसर्गोपध्मानीयादि कार्यम्। 'स्वरहीनं' परस्पर उभयत्रापि पूर्वोक्तवाशब्देन एकवद्भाव इति। प्रथमैकवचने 'एकत्वे द्विगुद्वन्द्वौ' क्लीबत्वात् 'अतोऽम्' 'अमृशसो०' 'मोऽनुस्वारः' अन्योन्यं परस्परमिति सिद्धम्। एवमादिशब्देन हरिश्चन्द्रादीन्युदाहरणानि॥ अन्योन्यादयः सहादिमध्ये पठिता इत्यन्ये॥ केचित्तु अन्योन्यमित्यत्र अन्यश्च अन्यश्चेत्येकशेषात्समासं नेच्छन्ति। किंतु 'कर्मव्यतिहारे अन्यादीनां द्वित्वं वक्तव्यं समासवच्च बहुलम्' तत्र पूर्वपदे प्रथमैकवचम्। उत्तरपदे द्वितीयैकवचनम् इत्यन्योन्यं परस्परं नमन्ति साधवः॥ क्षेमेन्द्राचार्यस्तु 'अन्यादीनां विभक्तिलोपे सक् कर्मव्यतिहारे वक्तव्यः' कर्मव्यतिहाराभावे तु अन्यश्च अन्यश्च अन्यौ इत्येकशेषः समास इति व्याख्याति॥ प्रक्रियाकौमुद्यां तु 'कर्मव्यतिहारे सर्वनाम्नो द्वे स्तः समासवच्च बहुलम्' यदा समासवत्तदा प्रथमैकवचनं पूर्वपदस्य, द्वितीयाद्येकवचनान्तत्वं परपदस्य। अन्योन्यं विप्रा नमन्ति अन्योन्येन अन्योन्यस्मै ददाति अन्योन्यस्माद्गृह्णन्ति अन्योन्यस्य अन्योन्यस्मित् साधवः। एवं परस्परम्॥

**एकत्वे द्विगुद्वन्द्वौ॥ एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः॥**

सांप्रतं लिङ्गविशेषमाह—'एकत्वे द्विगुद्वन्द्वौ'॥ एकस्य भावः एकत्वं तस्मिन् सप्तम्येकवचनम्। 'अ इ ए'। द्विगुश्च द्वन्द्वश्च द्विगुद्वन्द्वौ प्रथमाद्विवचनम्। 'ओ औ औ' द्विपदं सूत्रम्। एकत्वे इति। एकवचने वर्तमानौ द्विगुद्वन्द्वसमासौ नपुंसकलिङ्गौ भवतः। तत्र द्विगुसमासे नित्यमेकत्वमेव। तत्र अकारान्तान्नित्यमीप्प्रत्ययस्तत्र स्त्रीलिङ्गत्वमेव। अकारान्तवर्जितानां तु नपुंसकलिङ्गत्वमेव। द्वन्द्वे तु इतरेतरयोगे द्विवचनमेव। पक्षे कुत्रचिदेकवचनमपि। तत्र यत्रैकवचनं तत्र नपुंसकमेव। द्विवचनं बहुवचनं तु यथासंभवं त्रिष्वपि लिङ्गेषु भवतीति भावः॥ द्वन्द्वस्यैकत्वे नपुंसकत्वं पूर्वं दर्शितम्॥

**संख्यापूर्वो द्विगुः॥ संख्यापूर्वः समासो द्विगुर्निगद्यते॥ समाहारेऽत ईप् द्विगुः॥ समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययो भवति पात्रादिवर्जम्॥ दशानां ग्रामाणां समाहारो दशग्रामी॥ पञ्चाग्नयः समाहृता इति पञ्चाग्नि॥ पञ्चानां गवां समाहारः पञ्चगु॥ त्रिफला रूढितः॥**

१ 'पञ्चगवम्' इति साधु पाठः १७९५ वैक्रमसंवत्सरलिखितपुस्तके प्राचीन आसीत्। ततश्च केनचिद्धरितालधातुना 'पञ्चगु' इति असाधु शोधितः॥

अथ क्रमाभावेऽपि प्रस्तुतत्वात् द्विगुलक्षणमाह सूत्रम्—'संख्यापूर्वो द्विगुः' ॥ संख्या द्वित्रिचतुरादिका पूर्वा पूर्वपदवर्तिनी यस्य सः संख्यापूर्वः प्रथमैकवचनम् । 'स्रोर्वि०' । द्विगुः प्रथमैकवचनान्तम् । 'स्रोर्वि०' संख्यावाची शब्दः यत्र पूर्वपदे भवति स द्विगुरिति समासो भवति । तदेव सूत्रेणाह सूत्रम्—'समाहारेऽत ईप् द्विगुः' ॥ समाहारे सप्तम्येकवचनान्तम् । 'अ इ ए' । अतः पञ्चम्येकवचनान्तम् 'स्वरहीनं०' 'स्रोर्वि०' 'एदोऽतोऽतः' । अतः अग्रे ईप् प्रथमैकवचनान्तम् । 'हसेपः०' पश्चात् 'आदबे लोपश्' । अग्रे द्विगुः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ चतुःपदमिदं सूत्रम् । समाहारार्थे द्विगुः समासो भवति । यत्र पूर्वपदे संख्यावाचि पदं भवति तच्च समाहारार्थवाचकमेकीकरणार्थसूचकम् । स द्विगुः समास इत्यर्थः । तत इति तस्मात् द्विगुसमासात् अकारान्तादीप्प्रत्ययो भवति । पात्रादिवर्जम् । यद्यपि द्विगुसमासस्य प्राक् क्लीबलिङ्गत्वं प्रतिपादितं तथापि अकारान्तात्परत ईप्प्रत्यये कृते स्त्रीत्वमेव तत्र ह्यदन्तवर्जितानां क्लीबलिङ्गता ॥ उदाहरणम् । दशन्शब्दात् षष्ठीबहुवचने । 'ष्णः' इति नुडागमः । दशन् नाम् । 'नोपधायाः' इति शकारस्याकारस्य दीर्घः । 'नाम्नोनो०' 'स्वरहीनं०' 'मोऽनुस्वारः' । ग्रामशब्दात् षष्ठीबहुवचने । 'नुडामः' 'नामि' इति दीर्घः । 'ष्टुर्णो०' 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ दशानां ग्रामाणां समाहार इति विग्रहे अत्र दश इति संख्या पूर्वपदं समाहारमयं च अतो द्विगुसमासः । समाससंज्ञायामुभयत्रापि 'समासप्रत्यययोः' इति आमो लोपः । दशन् ग्राम इति स्थिते । ततोऽकारान्तत्वादीप् । 'यस्य लोपः 'स्वरहीनं०' दशग्रामीशब्दात् प्रथमैकवचने 'हसेपः०' ॥ एवं त्रिलोकी पञ्चमूली । पञ्चन्शब्दात् प्रथमाबहुवचने 'जश्शसोर्लुक्' 'नाम्नो नो०' । अग्निशब्दात् प्रथमाबहुवचने 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' । पञ्चाग्नयः समाहृता एकत्रीकृता इति विग्रहे विभक्तिलोपे 'नाम्नो नो०' 'सवर्णे०' पञ्चाग्नि अत्रादन्तत्वाभावान्न ईप् । ततः समाहारस्यैकत्वात् 'एकत्वे द्विगुद्वन्द्वौ' इति क्लीबे प्रथमैकवचनम् 'नपुंसकात्स्यमोर्लुक्' पञ्चाग्नि इति सिद्धम् ॥ तथा पञ्चानां गवां समाहार इति विग्रहे 'समासप्रत्यययोः' इत्यामो लोपे पञ्चन् गोशब्दात् प्रथमैकवचने 'नाम्नो नो०' 'नपुंसकस्य' इति ह्रस्वः ओकारस्य उकारः 'ह्रस्वादेशे संध्यक्षराणामिकारोकारौ' 'नपुंसकात्स्यमोर्लुक्' अत्राप्यकारान्तवर्जितत्वान्नेप् [ 'टाडकाः' इति अप्रत्ययः 'वोऽव्यस्वरे' उकारस्य अव् 'खर०' पञ्चगव अग्रे प्रथमैकवचनम् सि 'अतोम्' 'अमूशसो०' 'मोऽनुस्वारः' अत्र अकारान्तवर्जितत्वान्नेप् । 'पञ्चगवम्' ] इति सिद्धम् ॥ त्रिशब्दात् षष्ठीबहुवचने 'नुडामः' 'त्रेरयङ्' 'स्वरहीनं' 'मोऽनुस्वारः' । फलशब्दात् षष्ठीबहुवचने 'नुडामः' 'नामि' 'स्वरहीनं०' 'मोऽनुस्वारः' । अग्रे समाहार इति पदम् । त्रयाणां फलानां समाहार इति विग्रहे 'समासप्रत्यययोः' उक्तार्थानामप्रयोगः । 'आबतः स्त्रियाम्' प्रथमैकवचने 'आपः' त्रिफला इति सिद्धम् । ननु त्रिफला इत्यत्र संख्यापूर्वकत्वेऽपि द्विगुसमासे फलशब्दस्य अकारान्तत्वादीप्प्रत्ययः किं न क्रियते इत्याशङ्कायामाह—त्रिफलेति पदं रूढितो लोकप्रसिद्धितः सिद्धम् ॥ 'लक्षणानुपपन्नस्य प्रयोगस्य कथंचन । बहुशिष्टादृतत्वं हि रूढिरित्यभिधीयते ॥' ननु नियतलक्षणोपपन्नमिति द्विगुसमासः । पात्रादिवर्जितत्वात् पञ्चानां पात्राणां समाहारः पञ्चपात्रम् । त्रयाणां भुवनानां समाहार-

१ अयं पाठोपि क्वचिदेव त्रुटिचिह्नं कृत्वा पुस्तकलेखनसमय एव वर्धितः ॥

त्रिभुवनम् एवं चतुर्युगं चतुःपथमित्यादावकारान्तत्वेऽपि ईप् न भवति [ त्रिलोकं त्रिलोकी इत्यादौ विकल्पेन ईप् ] ॥ इति द्विगुसमासः ॥

**बहुव्रीहिरन्यार्थे ॥ अन्यपदार्थप्रधानो यः समासः स बहुव्रीहिसंज्ञको भवति ॥ बहु धनं यस्य स बहुधनः ॥ तस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । लम्बौ कर्णौ यस्य स लम्बकर्णः ॥**[1]

सांप्रतं बहुव्रीहिसमासं निरूपयति । सूत्रम्—'बहुव्रीहिरन्यार्थे' ॥ बहुव्रीहिः प्रथमैकवचनान्तम् । 'स्नोर्विं०' । अन्यार्थे अन्यस्यार्थोऽन्यार्थस्तस्मिन् सप्तम्येकवचनान्तम् 'अ इ ए' पश्चात् 'नामिनोरः' ॥ द्विपदमिदं सूत्रम् । समासमध्यवर्तिपदापेक्षया अन्यपदस्यैवं बाह्यपदस्यैवार्थः प्रधानो यस्य सः अर्थात् अन्यदेव पदं प्रधानं यत्र स बहुव्रीहिसंज्ञकः समासो भवति ॥ बहुशब्दात् प्रथमैकवचने 'नपुंसकात्स्यमोर्लुक्' । धनशब्दात् प्रथमैकवचने 'अतोऽम्' 'अमूशसो०' 'मोनुस्वारः' । बहु धनं प्रचुरं धनं यस्येति विग्रहे अत्र समासस्थौ बहुधनशब्दौ ताभ्यां यस्येत्यन्यपदं प्रधानं ततो बहुव्रीहिसमासः । इति समाससंज्ञायामुभयत्रापि विभक्तिलोपः । यस्येत्यस्योक्तार्थानामप्रयोगः । बहुधन इति स्थिते बहुव्रीहेर्वाच्यलिङ्गता' इति बहुव्रीहेरन्यपदप्रधानत्वात्परलिङ्गम् । यस्य नरस्येति नरशब्दस्य पुंलिङ्गत्वात्पुंस्त्वे प्रथमैकवचने बहुधन इति सिद्धम् । एवमस्थीन्येव धनं यस्याऽसावस्थिधनः । यदिवाऽस्तीत्यव्ययं सत्तार्थवाचकं ततोऽस्ति विद्यमानं धनं यस्येत्यस्तिधनशब्दात् प्रथमैकवचने 'स्नोर्विं०' ॥ एवं तपोधनः । यशोधनः । द्वितीयाद्यन्तान्यपदेषु प्रधानेषु बहुव्रीहिर्भवति । यथा प्राप्तो राजा यं स प्राप्तराजा । ऊढा कन्या येन स ऊढकन्यः । दत्तं वसु यस्मै स दत्तवसुः । उद्धृतः शल्यो यस्मात्तदुद्धृतशल्यं क्षतम् । वीतो रागो यस्मात् स वीतरागः ॥ बहु धनं यस्य सः बहुधनः । धर्मिणो लोका यस्मिन् स धर्मिलोको ग्रामः इत्यादि । इह बहुव्रीहिर्द्विधा—तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहिसमासः । तस्य लक्षणं ग्रन्थकार एवाह—तस्येति । तस्य प्रधानभूतस्य पुरुषादेः एकदेश एकोऽवयवो हस्तपादमुखकर्णादिरूपो यत्र विशेषणत्वेन ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । तस्योदाहरणम्—लम्बौ कर्णौ यस्य सः लम्बकर्णः इत्यत्र नरस्यैकदेशः कर्णः स एव समस्यमानविशेष्यभूतस्य नरादेर्विशेषणत्वेन ज्ञातोऽतस्तद्गुणसंविज्ञानो बहुव्रीहिः[2] । दीर्घकायः । अत्र कायस्य नरादेश्चैक्यात् । एवं दीर्घग्रीवः । महाभुजः इत्यादयस्तद्गुणसंविज्ञाने शब्दाः ॥ अतद्गुणसंविज्ञानो यथा—चित्रगुः । दृष्टसागरमानयेत्यादिषु द्रष्टव्यः ॥

---

१ तेन सहेति तुल्ययोगे ॥ सहेत्येतत्तृतीयान्तेन समस्यते स तुल्ययोगबहुव्रीहिः ॥ सहादेः सादिः ॥ सहादीनां सादिर्भवति ॥ पुत्रेण सह वर्तमानः सपुत्रः ॥ सो वेति केचित् ॥ सहपुत्रो वागतः । तुल्ययोगवचनं प्रायिकम् । कर्मणा सह वर्तते स सकर्मकः । सलोमकः इत्यधिकः पाठः ॥ २ यद्यपि सर्वेष्वेव पुस्तकेषु इतःपरम् 'अतद्गुणसंविज्ञानो यथा-दीर्घकायः । अत्र कायस्य नरादेश्चैक्यात् । एवं दीर्घग्रीवः महाभुजः चित्रगुरित्यादयस्तद्गुणसंविज्ञाने शब्दाः ।' इत्येव पाठ उपलभ्यते तथापि दीर्घकायशब्देऽतद्गुणसंविज्ञानत्वस्य चित्रगुशब्दे तद्गुणसंविज्ञानत्वस्य कैरप्यनङ्गीकृतत्वान्मयाऽत्र पाठव्यत्यासः कृतः इति क्षन्तव्यं क्षमाधनैः ॥

**बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः ॥**[1]

ननु लम्बकर्ण इत्यत्रान्यपदार्थप्रधानत्वात् पदसाम्ये कर्णलम्ब इति कथं न प्रयुज्यत इत्याह—'बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः' ॥ बहुव्रीहिसमासे यद्विशेषणभूतं पदं भवति यच्च सप्तम्यन्तं पदं भवति एतयोः पदयोः पूर्वनिपातः प्रथमं प्रयोगो भवति । बहुव्रीहेरुपलक्षणत्वात् कर्मधारयेऽपि विशेषणस्यैव पूर्वनिपातो भवति रक्तलतेत्यादौ ॥ संबन्धं (द्वं) सव्यावर्तकं विशेषणं विशेषणपदम् । 'परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात्' ॥ यथा लम्बकर्णः दीर्घग्रीव इत्यादि । सप्तम्यन्तं यथा—ब्रह्मणि योनिर्यस्य स ब्रह्मयोनिः । अप्सु पानीये योनिर्यस्येत्यप्सुयोनिः । भाले लोचनं यस्य सः भाललोचनः इत्यादि ॥ वक्तव्यस्य प्रयोगानुसारित्वात् क्वचित्सप्तम्यन्तस्यापि पूर्वनिपातो न, यथा—चन्द्रशेखरः पद्मनाभः चन्द्रमौलिः शूलपाणिः चक्रपाणिः कपिध्वजः इत्यादौ सप्तम्यन्तं परपदम् ॥[2]

**प्रजामेधयोरसुक् ॥ सुप्रजाः दुर्मेधाः ॥**[3][4]

प्रजा सुपूर्वः । तथा दुर् अग्रे मेधा । सुष्ठु शोभना प्रजा यस्येति विग्रहे । तथा दुर्दुष्टा मेधा यस्येति विभक्तिलोपः । सुप्रजा दुर्मेधा इति स्थिते । 'प्रजामेधयोरसुक्' बहुव्रीहौ नञ् सु दुर् पूर्वयोः प्रजामेधाशब्दयोरन्यार्थे वर्तमानयोरसुगागमो भवति । कित्त्वादन्ते । उकार उच्चारणार्थः । सुप्रजा अस् इति दुर्मेधा अस् स्थिते 'यस्य लोपः' इत्यलोपः । 'स्वरहीनं०' सुप्रजस् दुर्मेधस् । उभयत्रापि प्रथमैकवचने । 'अत्वसोः सौ' 'हसेपः' 'स्रोर्विं०' सुप्रजाः सुप्रजसौ सुप्रजसः । दुर्मेधाः दुर्मेधसौ । दुर्मेधसः एवमप्रजाः अमेधाः ॥ क्वचिदन्यत्रापि मन्दमेधाः अल्पमेधाः ॥

**धर्मादन् ॥ सुधर्मा ॥**[5]

---

१ धनं करे यस्य स करधनः । मतिः कृष्णे यस्य स कृष्णमतिः । बुद्धिर्धर्मे यस्य स धर्मबुद्धिः । कण्ठे हारो यस्य स कण्ठहारः । करे कङ्कणं यस्यासौ करकङ्कणः । भुवने कीर्तिर्यस्यासौ भुवनकीर्तिः ॥ प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ वक्तव्यौ ॥ क्तक्तवतू निष्ठा ॥ क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ स्तः । चक्रं पाणौ यस्य स चक्रपाणिः हरिः । दण्डः पाणौ यस्य स दण्डपाणिः पुरुषः । उद्यतोऽसिर्येनासावस्युद्यतः । उद्यतासिरित्यपि भवति ॥ प्रियादीनां वा ॥ प्रियगुडः गुडप्रियः इत्यधिकः पाठः ॥ २ नेन्द्वादिभ्यश्च ॥ इन्द्वादिभ्यः शब्देभ्यः सप्तम्यन्तस्य पूर्वनिपातो न ॥ इन्दुः शेखरे यस्यासाविन्दुशेखरः । पद्मं नाभौ यस्य स पद्मनाभः । कपिध्वजः ॥ इत्यधिकः पाठः प्राचीनपुस्तकेषूपलभ्यमानोपि न टीकासंमतः टीकाकर्त्राऽस्यार्थस्य साधनाय लेखान्तरस्य धृतत्वात् ॥ ३ जायाया निङादेशो बहुव्रीहौ वक्तव्यो यलोपश्च ॥ भूजानिः । लक्ष्मीजानिः ॥ उत्पूतिसुसुरभिभ्यो गन्धशब्दस्येकारान्तादेशो बहुव्रीहौ वक्तव्यः ॥ उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ आगन्तुकस्यैकवचनान्तस्य वा सुगन्धिः आपणः सुगन्धो वा ॥ अल्पाख्यायां च ॥ अल्पपर्यायो गन्धशब्दः ॥ सूपोऽल्पो यस्मिन् तत्सूपगन्धि भोजनम् । घृतगन्धि वेति केचित् । सूपगन्धम् । घृतगन्धम् ॥ उपमानाच्च ॥ पद्मस्येव गन्धो यस्येति पद्मगन्धिः ॥ मतान्तरे विकल्पः ॥ ऊधसोऽनङ् ॥ ऊधोन्ताद्बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् ॥ कुण्डोध्नी गौः ॥ पुंसि तु कुण्डोधाः गोगणः इत्यधिकः पाठः ॥ ४ नञ्दुःसुभ्यः प्रजामेधयोर्नित्यमसुक् स्याद्बहुव्रीहौ ॥ अप्रजाः । सुप्रजाः । दुष्प्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः इति पाठान्तरम् ॥ ५ धर्मादनिच् केवलात् ॥ केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् प्रत्ययः स्यात् ॥ कल्याणधर्मा सुधर्मा ॥ केवलात्किम् । परमः स्वो धर्मो यस्य सः परमस्वधर्मः इति पाठान्तरम् ॥

तथा धर्मादन् ॥ अन्यार्थे वर्तमानाद्धर्मशब्दात् अन् आगमो भवति बहुव्रीहौ । उदाहरणम्—सुष्ठु शोभनो धर्मो यस्येति विग्रहे सुधर्म इति स्थिते अनेन अन् 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'नोपधायाः' 'हसेपः' 'नाम्नो नो' सुधर्मा इति सिद्धम् । राजन्शब्दवत् ॥ नवरम् । शसादौ मकारान्तसंयुक्तत्वात् 'अल्लोपः स्वरे' इति न भवति ॥

**धनुषश्च ॥ शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा ॥ [ संज्ञायां वा ॥ शतधन्वा-शतधनुः ॥]**

'धनुषश्च' ॥ धनुष्शब्दस्य अन् आदेशो भवति बहुव्रीहौ । शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा । एवं पुष्पधन्वा इत्यादि ॥

**रूपवती भार्या यस्य स रूपवद्भार्यः ॥**

रूपवतीशब्दात् प्रथमैकवचने ''हसेपः०' भार्याशब्दात् प्रथमैकवचने 'अपः' । रूपवती भार्या यस्य इति विग्रहे विभक्तिलोपेऽवशिष्टं रूपवती भार्या इति ॥

**अन्यार्थे ॥ स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥**[1]

**पुंवद्वा ॥ समासे सति समानाधिकरणे पूर्वस्य स्त्रीलिङ्गस्य पुंवद्वा भवति ॥**

**पुंवद्भावादीपो निवृत्तिः । वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति ॥**

सूत्रम्—'अन्यार्थे' ॥ अन्यार्थशब्दस्य सप्तम्येकवचनान्तम् । 'अ इ ए' एकपदं । स्त्रीलिङ्गस्य स्त्रीप्रत्ययान्तस्य शब्दस्य अन्यार्थे वर्तमानस्य ह्रस्वो भवति । उत्तरपदस्येति शेषः । अन्यथा पूर्वपदे रूपवति इत्यादौ प्रसङ्गः । अतो भार्याशब्दस्य ह्रस्वः । रूपवतीभार्य इति स्थिते सूत्रम्—'पुंवद्वा' ॥ पुंवत् प्रथमैकवचनान्तम् । 'अव्यया०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' पश्चात् 'चपा अबे जबाः' तस्य दः । 'स्वरहीनं०' द्विपदम् । समासे सति समानाधिकरणे एकविभक्त्यन्तानां पदानामेकार्थनिष्ठत्वं समानाधिकरणं तस्मिन् वर्तमानस्य पूर्वपदस्य पूर्वपदभूतस्य उक्तपुंस्कस्य स्त्रीलिङ्गस्य पुंवत्पुंलिङ्गवद्रूपं भवति । अनेन पुंवद्भावाद्रूपवतीत्यत्र वर्तमानस्य ईपो निवृत्तिः । अतो रूपवत्भार्य इति स्थिते 'चपा अबे जबाः' तस्य दः । 'स्वरहीनं' 'स्रोर्विं०' रूपवद्भार्य इति सिद्धम् ॥ नहि पुंवद्भावे केवलमीपो निवृत्तिः । किंतु कचिदापोऽपि निवृत्तिः शोभनभार्यः दीर्घजङ्घः रक्तलतेत्यादौ । अयं वाशब्दो

---

[1] यङ्मानिनूत्वशसंततरादौ चारूप्ये ॥ एनीव आचरतीति एनायते । पत्यादित्वात्तो न । पण्डितमानिनी । पट्व्या भावः पटुत्वम् । अल्पं देहीति अल्पशः । पटुतरा । पटुतमा । पटुकल्पा । पटुदेश्या । पटुदेशीया । अरूप्ये इति किम् । शुभ्रारूप्या ॥ प्रियादौ न ॥ ( प्रिया भक्तिः मनोज्ञा सुभगा दुर्भगा क्षान्ता कल्याणी चपला वामना सचिवा समा वामा कान्ता बाला तनया दुहिता स्वसा । ) इति प्रियादयः ॥ एषु परेषु भाषितपुंस्कस्य स्त्रीप्रत्ययान्तस्य न पुंवत् ॥ ऊप्रत्ययान्तस्य च न पुंवत् ॥ वामोरूभार्यः ॥ अभाषितपुंस्कस्य च न पुंवत् ॥ गङ्गाभार्यः ॥ कोपधपूरणीसंज्ञानां च न पुंवत् ॥ पाचकी(चिका)भार्यः पञ्चमीभार्यः । दत्ताभार्यः ॥ जातिवाचकात्स्वाङ्गवाचकाच ईप्, तदन्तस्य न पुंवदमानिनि ॥ ब्राह्मणीभार्यः । सुकेशीभार्यः ॥ अमानिनीति किम् । ब्राह्मणमानिनी युड्वर्जितरक्तविकारार्थवर्जिततद्धितान्तस्य न पुंवत् ॥ मैथिलीजायः । युड्वर्जितरक्तविकारार्थवर्जितेति किम् । वैयाकरणभार्यः । काषायकन्थः । हैममुद्रिकः । वाग्रहणादियं विवक्षा ॥ इत्यधिकम् ॥

व्यवस्थितविकल्पं द्योतयतीत्याह—वाग्रहणात् कल्याणीप्रिय इत्यादौ पुंवद्भावो न भवति। कल्याणी प्रिया यस्येति विग्रहे समानाधिकरणे उक्तपुंस्कस्य कल्याणीशब्दस्य न पुंवद्भावः। आदिशब्दात् वामोरूभार्यः गौरीभार्यः पञ्चमीप्रिय इत्यादौ न पुंवद्भावः। मनोज्ञा सुभगा दुर्भगा क्षान्ता चपला वामा वामना सचिवा श्यामा बाला तनया ब्राह्मणी दत्ता रसिका मैथिली इत्यादयः शब्दाः कल्याण्यादिषु ज्ञेयाः ॥ तथा श्येनी इवाचरतीति श्येनायते ( श्येनी इत्यत्र ईप्निवृत्तिः ) इत्यादौ यङि। पण्डितां मन्यते इति पण्डितमानिनी। पट्व्या भावः पटुता पटुत्वम्। अल्पां देहि अल्पशः अल्पतरा अल्पतमा अनुकूलदेश्या अनुकूलदेशीया पण्डिता पट्वी अल्पा अनुकूला सर्वत्र पुंवद्भावः इत्यादौ प्रयोगानुसारे पुंवद्भावो दर्शनीयः। अन्यार्थे वर्तमानस्येत्युक्तत्वात् न केवलं बहुव्रीहावेवेति भावः। तेन ताश स्तरतमदेश्यदेशीयेषु प्रत्ययेषु परेष्वपि भवति। शुभ्रा रूप्या इत्यादौ न वाग्रहणादेवेति ज्ञातव्यम् ॥

**गोः ॥ गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥ पञ्च गावो यस्यासौ पञ्चगुः ॥**

सूत्रम्—'गोः' ॥ गोशब्दस्य षष्ठ्येकवचनम्। 'ङस्य' इत्यकारलोपः। 'स्रोर्विं०'। एकपदम्। अन्यार्थे परार्थे वर्तमानस्य सतः गोशब्दस्य ह्रस्वो भवति। गोशब्दस्य पुंस्त्रीलिङ्गत्वे विशेषसूचकमिदं सूत्रम्। पञ्चन्शब्दात् प्रथमाबहुवचने 'जश्शसोर्लुक्'। गोशब्दात् प्रथमाबहुवचने 'ओरौ' 'औ आव्' 'स्वरहीनं०' 'स्रोर्विं०' 'नाम्नो नो०' पञ्च गावो यस्येति विग्रहे बहुव्रीहिसमासः। 'समासप्रत्यययोः' उभयत्रापि जसो लोपः। पञ्चत् गो इति स्थिते पूर्वं 'नाम्नो नो०'। 'गोः' इत्यनेन सूत्रेण ह्रस्वता ओकारस्य उकारः। प्रथमैकवचने 'स्रोर्विं०' पञ्चगुरिति सिद्धम् ॥

**संख्यासु व्याघ्रादिपूर्वस्य पादशब्दस्याकारस्य लोपो वक्तव्यः ॥ सहस्रं पादा यस्यासौ सहस्रपात्। व्याघ्रस्य पादाविव पादौ यस्यासौ व्याघ्रपात्। शोभनौ पादौ यस्य स सुपात् ॥ शसादौ स्वरे पादशब्दस्य पदादेशश्च वक्तव्यः ॥ द्विपदः द्विपदा। द्विपदी। त्रिपदी। नदादित्वादीप् ॥**

पुनर्विशेषमाह—'संख्यासु व्याघ्रादिपूर्व०'। संख्या एकद्व्यादिका तद्वाचकः शब्दस्तथा सु इत्यव्ययं शोभनार्थवाचकं व्याघ्रादयः शब्दा उपमात्वं प्राप्ता एते पूर्वमादौ वर्तमाना यस्य पादशब्दस्य तत्संबन्धिनोऽकारस्य लोपो वक्तव्यः बहुव्रीहौ, सर्वविभक्तिषु परतः। सहस्रशब्दात् प्रथमैकवचने 'अतोऽम्' 'अम्शसोरस्य' 'मोऽनुस्वारः'। पादशब्दात् प्रथमाबहुवचने 'सवर्णे०'। सहस्रं पादा यस्येति विग्रहे। शोभनौ पादौ यस्य तथा व्याघ्रशब्दात् षष्ठ्येकवचने 'ङस्य'। पादशब्दात् प्रथमाद्विवचने। 'ओ औ औ'। इवशब्दात् प्रथमैकवचने 'अव्यया०'। पादशब्दात् प्रथमाद्विवचने। 'ओ औ औ' व्याघ्रस्य पादाविव पादौ यस्येति विग्रहत्रयम्। सर्वत्रापि बहुव्रीहिसमासे 'समासप्रत्यययोः' इति विभक्तिलोपः। सहस्रपाद शोभनपाद व्याघ्रपाद इति स्थिते। द्वितीये 'सहादेः सादिः' इति शोभनस्य सु

आदेशः। व्याघ्रेत्यादौ 'वैयधिकरण्ये बहुव्रीहौ०' इत्यादिना मध्यमपादशब्दस्य लोपः। सर्वत्र 'संख्यासुव्याघ्रादि०' इत्यादिना दकारमध्यस्थाकारस्य लोपः। प्रथमैकवचने 'हसेपः०' 'वावसाने' दस्य तः। सहस्रपात् सहस्रपादौ सहस्रपादः सहस्रपादं। सुपात् व्याघ्रपात् एवं द्वौ पादौ यस्य स द्विपात् द्विपादौ द्विपादः द्विपादं द्विपादौ। शसादौ विशेषमाह—'शसादौ स्वरे परे पादशब्दस्य पदादेशो वक्तव्यः'। अनेन शसादौ स्वरादौ विभक्तौ परे पद् इति आदेशः। चकारादन्यत्रापि नपुंसके स्त्रीलिङ्गे ईपि परे तद्धिते च पदादेशः। कुम्भपदी सहस्रपदी एकपदी द्विपदी स्त्री। नदादित्वादीप्। द्विपदोऽपत्यं द्वैपदः इत्यादौ पदादेशः। प्रकृते द्विपदः द्विपदा द्विपाद्भ्यामित्यादि। सहस्रपदः सहस्रपदा सहस्रपाद्भ्यां सहस्रपाद्भिः। भ्यां भिस् इत्यादौ स्वरादित्वाभावान्न पदादेशः॥ 'संख्यासुव्याघ्रादि०' इत्यादिशब्दात्कचिदन्यत्रापि पादशब्दस्याकारलोपः—गूढपात् अपात्॥

**टाडकाः॥ समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति[1]॥**

**नो वा॥ नान्तस्य पदस्य टेर्लोपो वा भवति स्वरे यकारे च परे॥ अचिन्त्यो महिमा यस्य सोऽचिन्त्यमहिमः॥ वाग्रहणात्कचिन्न भवति किंतूपधालोपश्च॥ अह्नो मध्यं मध्याह्नः[2]॥**

अथ सर्वसमाससाधारणान्प्रत्ययानाह—सूत्रम्—'टाडकाः'॥ टश्च अश्च डश्च कश्च टाडकाः। प्रथमाबहुवचनान्तम्। 'सवर्णे०' सिद्धम्। समासे इति बहुव्रीहौ तत्पुरुषे द्वन्द्वे कर्मधारये च नाम्नः ट, अ, ड, क, एते चत्वारः प्रत्यया भवन्ति। यथासंभवं टकार ईबर्थः। डकारष्टिलोपार्थः। अकारः ककारश्च यथास्थित एव। तत्र प्रथमं टप्रत्ययोदाहरणमाह—अचिन्त्यशब्दात् प्रथमैकवचने 'स्रोर्वि०' महिमन्शब्दात् प्रथमैकवचने 'नोपधायाः' 'नाम्नो नो०'। पश्चात्—'हबे' 'उओ'। अचिन्त्यो महिमा यस्येति विग्रहे बहुव्रीहिसमासे विभक्तिलोपे अचिन्त्यमहिमन् इति स्थिते। 'टाडकाः' इति टप्रत्ययः। अत्र सूत्रम्—'नो वा'॥ नः-षष्ठ्येकवचनान्तम्। 'स्वरहीनं०'। वा—प्रथमैकवचनान्तम्। 'अव्यया०'॥ नकारान्तस्य पदस्य टेर्लोपो भवति यकारे स्वरे च परे। यकारे यथा राज्यम्। तथा स्वरे इति प्रस्तुतमेव। ततो महिमन्नित्यत्र अकारनकारयोर्लोपः। 'स्वरहीनं०' 'स्रोर्वि०' अचिन्त्यमहिम इति सिद्धम्॥ वाग्रहणात् कचिट्टेर्लोपो न भवति। च पुनः यत्र टेर्लोपो न तत्रोपधाया लोपो भवति। तस्योदाहरणम्—यथा अहन्शब्दात् षष्ठ्येकवचने। 'अल्लोपः स्वरे' 'स्वरहीनं०' 'स्रोर्वि०'। मध्यशब्दात् प्रथमैकवचने 'अतोऽम्' 'हबे' 'उओ' अह्नो मध्यमिति विग्रहे तत्पुरुषसमासः। 'समासप्रत्यययोः' इति विभक्तिलोपे अहन्मध्य इति स्थिते। 'कचिदमाद्यन्तस्य परत्वम्' इति मध्य अहन् इति स्थिते 'सवर्णे०' वाग्रहणादुपधाया लोपः। 'स्वरहीनं०' 'स्रोर्वि०'। मध्याह्नः। एवं सायाह्नः॥

**कवीनां राजा इति कविराजः। टकार ईबर्थः। 'ष्ट्रितः' कविराजी॥ अप्रत्ययः राज्ञां पूः इति राजपुरम्। वाक् च मनश्च वाङ्मनसम्। दक्षिणस्यां दिशि**

[1] टश्च तत्पुरुषे ज्ञेयो ह्यकारो द्वन्द्व एव च। डकारस्तु बहुव्रीहौ ककारो नियमो मतः॥ इत्यधिकम्॥

[2] द्वयोरह्नोः समाहारो द्व्यहः॥ रात्राह्नाहाः पुंसि॥ एते पुंस्येव स्युः॥ सर्वरात्रः सर्वाह्नः। त्र्यहः इत्यधिकम्॥

**पन्थाः इति दक्षिणापथः ॥ डप्रत्ययः ॥ अहश्च रात्रिश्च अहोरात्रम्[1] । द्वौ च त्रयश्च द्वित्राः । पञ्चषाः ॥**

टप्रत्यये तु तत्पुरुषे—कवीनां (षष्ठीबहुवचनम्) राजा (प्रथमैकवचनान्तम्) इति विग्रहे तत्पुरुषे विभक्तिलोपे कविराजन् टप्रत्ययः । 'नो वा' इति टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' कविराजः । तथा टकारानुबन्धः ईबर्थस्ततः 'ष्ट्रितः' इति ईप् 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'हसेपः०' कविराजी । एवं महाराजः ॥—राज्ञां (षष्ठीबहुवचनान्तम्) पूः (प्रथमैकवचनान्तम्) तत्पुरुषे 'समासप्रत्ययोः' इति विभक्तिलोपः । राजन् पुर इति स्थिते । अत्र अप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' 'अम्शसो०' राजपुरम् । पूःशब्दस्य अदन्तत्वे नपुंसकत्वम् ॥—वाचशब्दात् प्रथमैकवचने 'चोः कुः' 'हसेपः०' । चशब्दात् प्रथमैकवचने । 'अव्यया०' । मनस् शब्दात् प्रथमैकवचने । 'नपुंसकात्स्यमोर्लुक्' 'स्रोर्वि०' । च प्रथमैकवचनान्तम् । 'अव्यया०' वाक् च मनश्च इति विग्रहे द्वन्द्वसमासे विभक्तिलोपः । 'चोः कुः' चस्य कः । वाक् मनस् । 'ञमे ञमा वा' कस्य ङः । 'टाडकाः' इति अप्रत्ययः । 'स्वरहीनं०' 'अतोऽम्' 'अम्शसो०' वाङ्मनसमिति सिद्धम् ॥—दक्षिणाशब्दात् सप्तम्येकवचने 'आम्ङे०' इति ङेराम् 'ङितां यट्' 'यटोऽच्च' इति सगागमः पूर्वाकारस्य च अकारः 'स्वरहीनं०' 'सवर्णे०' । पथिन्शब्दात् प्रथमैकवचने—'इतोऽत्यञ्चसु' 'थो न्थ्' पन्थन् 'आ सौ' 'नश्चापदान्ते झसे' 'स्रोर्वि०' । दक्षिणस्यां पन्था इति विग्रहे तत्पुरुषे विभक्तिलोपे दक्षिणा पथिन् अप्रत्ययः 'नो वा' इति टिलोपः इन्लोपः 'स्वरहीनं०' 'स्रोर्वि०' दक्षिणापथ इति सिद्धम् ॥—अहन्शब्दात् प्रथमैकवचने । 'हसेपः से०' 'अह्नः सः' 'स्रोर्वि०' । च प्रथमैकवचनान्तम् 'अव्यया०' विसर्जनीयस्य०' 'स्तोः श्चुभिः श्चुः' । रात्रिशब्दात् प्रथमैकवचने 'स्रोर्वि०' च प्रथमैकवचनान्तम् 'अव्यया०' अहश्च रात्रिश्चेति विग्रहे 'समासप्रत्ययोः' अहन् रात्रि इति स्थिते 'अह्नः सः' 'स्रोर्वि०' रात्र्यादिवर्जितत्वान्न रेफः, किंतु 'हबे' 'उओ' । 'टाडकाः' इति डप्रत्ययः । डित्वाट्टिलोपः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' 'अम्शसो०' अहोरात्रमिति सिद्धम् ॥—द्विशब्दात् प्रथमाद्विवचने 'त्यदादेष्टे०' द्वे 'ओ औ औ' । त्रिशब्दात् प्रथमाबहुवचने 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' द्वौ च त्रयश्चेति विग्रहे द्वन्द्वे विभक्तिलोपः । 'टाडकाः' इति डप्रत्ययः । टिलोपः 'स्वरहीनं०' प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्वि०' द्वित्राः—पञ्चन्शब्दात् प्रथमाबहुवचने जस् 'जश्शसोर्लुक्' 'नाम्नो नो०' षष्शब्दात् प्रथमाबहुवचने 'जश्शसोर्लुक्' 'षो डः' 'वावसाने'डस्य टः । पञ्चन् षट् इति विग्रहे द्वन्द्वे विभक्तिलोपे पञ्चन्षष् । 'टाडकाः' डप्रत्ययः टिलोपः 'स्वरहीनं०' प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्वि०' पञ्चषाः ॥ एवम् एकश्च द्वौ च एकद्वाः ॥

**बहवो राजानो यस्यां सा बहुराजा नगरी । अत्र टिलोपे कृते । 'आबतः स्त्रियाम्' इत्याप् । कप्रत्ययः—बहवः कर्तारो यस्यासौ बहुकर्तृकः ॥**

बहुशब्दात् प्रथमाबहुचने 'ए ओ जसि' 'ओ अव्' 'स्रोर्वि०' राजन्शब्दात् प्रथमा-

---

१ अहोरात्रमित्यत्र नपुंसकत्वं वा वक्तव्यम् ॥ अहोरात्रः । इत्यधिकम् ॥

बहुवचने 'नोपधायाः' 'स्वरहीनं०' 'स्रोर्वि०' बहवो राजान इति विग्रहे 'टाडकाः' डप्रत्ययः। अत्र टिलोपे कृते 'आवतः स्त्रियाम्' इत्याप्। प्रथमैकवचने 'आपः' इति सेर्लोपः। बहुराजा एषा नगरी ॥—बहवः कर्तारो यस्य सः बहुकर्तृकः। बहुशब्दात् प्रथमाबहुवचने पूर्ववत्। कर्तृशब्दात् प्रथमाबहुवचने 'स्तुरार्' 'सेरा' टिलोपः 'स्वरहीनं०' 'स्रोर्वि०' बहवः कर्तारो यस्येति विग्रहे बहुव्रीहिसमासे कृते विभक्तिलोपे बहुकर्तृ 'टाडकाः' इति कप्रत्ययः प्रथमैकवचने 'स्रोर्वि०' बहुकर्तृकः प्रासादो ग्रन्थो वा ॥ अधातुस्त्रीलिङ्गेकारान्तोकारान्तेभ्यः ऋकारान्तेभ्यः उरस्शब्दाच्च नित्य एव कप्रत्ययः इति ज्ञातव्यम्। सपत्नीकः। प्रियसीमन्तिनीकः। सवधूकः। फलितजम्बूक आरामः। नदीमातृकः जीवत्पितृकः। व्यूढोरस्कः। ननु सपत्नी सवधूः जीवत्पिता व्यूढोरा इत्यादिप्रयोगा अर्हाः ॥ एवमन्येऽपि प्रयोगाः। मैत्रस्य सखा मैत्रसखः। कङ्कणस्रजं मांसत्वचं वाक्त्विषं छत्रोपानहं द्विनावं द्विखारं ग्रामतक्षः पूर्वरात्रोऽपररात्रः पुण्यरात्रः कृष्णभूमः द्विभूमः उपदशाः आसन्नत्रिंशाः बहुदातृकः इत्यादयो यथासंभवं ज्ञेयाः। इति बहुव्रीहिसमासः ॥

**कर्मधारयस्तुल्यार्थे ॥ पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयसंज्ञकः समासो भवति ॥ नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ लता च रक्तलता ॥ पुमांश्चासौ कोकिलश्च पुंस्कोकिलः ॥ पुंसः खपे संयोगान्तस्यालोपो वक्तव्यः ॥**

सांप्रतं कर्मधारयं निरूपयति—सूत्रम्—'कर्मधारयस्तुल्यार्थे' ॥ कर्मधारयः प्रथमैकवचनान्तम् 'स्रोर्वि०'। तुल्यः सदृशोऽर्थादिक एव अर्थोऽभिधेयो वाच्यं प्रयोजनं यस्य स तुल्यार्थस्तस्मिन् सप्तम्येकवचनान्तम्। 'अ इ ए' ॥ पदद्वयेति। पूर्वपदे उत्तरपदे चैकार्थनिष्ठे एकार्थसंबन्धे पदद्वये एकवस्तुवाचके सति योऽन्वयः स कर्मधारयनामा समासो भवति। एकस्मिन्नर्थे निष्ठा स्थैर्यं प्रवृत्तिर्वा यस्य तत् एकार्थनिष्ठं तस्मिन्। उदाहरणम्—नीलशब्दात् प्रथमैकवचने 'अतोऽम्' 'अमृशसोरस्य' 'मोऽनु०'। च प्रथमैकवचनान्तम्। 'अव्यया०'। तच्छब्दात् प्रथमैकवचने 'नपुंसकात्स्यमो०' 'वावसाने'। उत्पलशब्दात् प्रथमैकवचने 'अतोऽम्' 'अमृशसो०' 'मोऽनुस्वारः०'। च प्रथमैकवचनान्तम् 'अव्यया०' ॥ एकार्थताद्योतनाय चकारस्तच्छब्दश्च अथवा असौशब्द आनीयते। नीलं च तदुत्पलं चेति विग्रहे। अत्र नीलशब्दो विशेषणभूतः। उत्पलशब्दश्च विशेष्यभूतः। नीलं चेति विशेषणत्वात्पूर्वनिपातः। गुणद्रव्ययोराधाराधेयसंबन्धित्वात् एकार्थनिष्ठत्वम् ॥ ततः कर्मधारयसमासः। 'समासप्रत्यययोः' विभक्तिलोपे उक्तार्थानामप्रयोगः नीलउत्पल इति स्थिते। 'उओ' प्रथमैकवचने। 'अतोऽम्' 'अमृशसो०' 'मोऽनुस्वारः' नीलोत्पलम्। रक्ता चासौ लतेति विग्रहे। रक्ताशब्दात् प्रथमैकवचने 'आपः'। च प्रथमैकवचनान्तम्। 'अव्यया०'। अदस्शब्दात् प्रथमैकवचने 'त्यदादेष्टे०' 'सौ सः' 'सेरौ' 'ओ औ औ'। लताशब्दात् प्रथमैकवचने 'आपः'। च प्रथमैकवचनान्तम्। 'अव्यया०'। ततः समाससंज्ञा प्राग्वत्

१ ख्यावर्जिते च अम्परे तेन पुंख्यानं पुंक्षीरं भवति ॥ इत्यधिकम् ॥ २ 'गुणिलिङ्गास्तु तद्वति' इत्युक्तेर्गुणिलिङ्गानां गुणवत्परत्वनियमाद् इति सारम् ॥

विभक्तिलोपश्च । रक्तालता । 'पुंवद्वा' इति पुंवद्भावादीपो निवृत्तिः । पूर्वपदस्य रक्ता इत्यस्य रक्त । ततो रक्तलताशब्दात् प्रथमैकवचने 'आपः' ॥ पुंस्शब्दात् प्रथमैकवचने 'पुंसोऽसुङ्' सकारस्य अस् । 'त्रितो नुम्' पुमनस् । 'न्संमहतोऽधौ०' इति दीर्घः । 'हसेपः०' 'संयोगान्तस्य०' इति सलोपः । पुमान् । च प्रथमैकवचनान्तम् 'अव्यया०' पश्चात् 'नः सक्छते' इति सकारागमः 'स्तोः श्चुभिः श्चुः' 'नश्चापदान्ते०' अदस्शब्दात् प्रथमैकवचने 'त्यदादे०' 'सौ सः' 'सेरा' 'ओ औ औ' पश्चात् 'सवर्णे०' । कोकिलशब्दात् प्रथमैकवचने 'स्रोर्विं०' । च प्रथमैकवचनान्तम् । 'अव्यया०' पुमांश्चासौ कोकिलश्चेति विग्रहे पूर्ववत्कर्मधारयः समासः विभक्तिलोपः ततः उक्तार्थानामप्रयोगः । पुंस्कोकिल इति स्थिते । ननु 'संयोगान्तस्य०' इति सकारस्यात्र लोपः क्रियताम् तत्राह—'पुंसः खपे०' पुंसशब्दस्य खप्प्रत्याहारे परे संयोगान्तस्य सकारस्य अलोपो भवति । न लोपः अलोपः । तेन न सकारस्य लोपो भवतीत्यर्थः । ततो 'नश्चापदान्ते०' 'स्वरहीनं०' पुंस्कोकिल इति सिद्धम् । एवं परमश्चासावीश्वरश्च परमेश्वरः । एवं महेश्वरः महावीरः महादेवः ॥

**नाम्नश्च कृता समासः[1] ॥ प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासः स तत्पुरुषसंज्ञको भवति ॥ प्रकृष्टो वादः प्रवादः । कुम्भकारः ॥**

पुनः समासविशेषमाह—सूत्रम्—'नाम्नश्च कृता समासः' ॥ नाम्न इति नामन्शब्दस्य षष्ठ्येकवचनम् 'अल्लोपः स्वरे' 'स्वरहीनं०' । च प्रथमैकवचनान्तम् 'अव्यया०' पश्चात् 'विसर्जनी०' 'स्तोः श्चुभिः श्चुः' । कृतेति कृच्छब्दस्य तृतीयैकवचनान्तम् 'स्वरहीनं०' । समास इति प्रथमैकवचनान्तम् 'स्रोर्विं०' ॥ चतुःपदं सूत्रम् । प्रादेरुपसर्गस्य तथा नाम्नश्च धातोः प्राक् प्रयुक्तस्य कृदन्तेन कृत्प्रत्ययेन सह तत्पुरुषः समासो भवति । तत्रोदाहरणम्—वद व्यक्तायां वाचि । वद्प्रपूर्वः । प्रवदनं प्रवादः प्रकृष्टो वादः प्रवादः । 'घञ्भावे' इति घञ्प्रत्ययः । ञित्त्वात् 'अत उपधायाः' वृद्धिः । 'स्वरहीनं०' 'स्रोर्विं०' प्रवादः प्रथमैकवचनम् । अत्र प्रोपसर्गस्य कृदन्तेन तत्पुरुषः ॥ तथा डुकृञ्करणे कुम्भपूर्वः । कुम्भाग्रे द्वितीयैकवचने अम् । 'अम्शसोरस्य' 'मोऽनु०' 'वर्तमाने' 'तनादेरुप्' गुणः । कर् उ इति स्थिते उकारस्य गुणः ओ । 'स्वरहीनं०' कुम्भं करोतीति विग्रहे पश्चात् 'कार्येऽण्' 'समासप्रत्यययोः' उभयत्रापि विभक्तिलोपः कुम्भकृअइति स्थिते । णित्त्वाद्वृद्धिः । कार 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' अत्र कुम्भशब्दस्य कृदन्तेन तत्पुरुषः । कुम्भकारः ॥

**'सहादेः सादिः' सपुत्रः ॥[2] ( सहसंतिरसां सध्रिसमितिरयः ) सह अञ्चतीति सध्र्यङ् । तिरः अञ्चतीति तिर्यङ् ॥**

सूत्रम्—'सहादेः सादिः' ॥ सह आदिर्यस्य गणस्य स सहादिस्तस्य । षष्ठ्येकवचनान्तम् । 'ङिति' 'दे ङस्य' इत्यकारलोपः । 'स्रोर्विं०' सादिः स आदौ यस्य स सादिः प्रथमैकवचनान्तम् 'स्रोर्विं०' द्विपदम् । समासे कृते सति सहादीनां सह सम् तिरस् इत्यादीनां

---

१ चकारात्कुशब्दस्याव्ययस्य उरीउररीशब्दयोश्चिवप्रत्ययान्तादेश्च कृदन्तेन समासस्तत्पुरुषो भवति ॥ इत्यधिकम् ॥ २ क्वचिन्न भवति—सह चरतीति सहचरः ॥ इत्यधिकम् ॥

पूर्वपदानां क्रमेण स सध्रि समि तिरि इत्यादय आदेशा भवन्ति इति भावः । तत्रोदाहरणम्—सहशब्दात् प्रथमैकवचने 'अव्यया०' पुत्रशब्दात् तृतीयैकवचने 'टेन' 'अ इ ए' 'ऋर्णोणो०' । सह पुत्रेण अत्र 'नाम्नश्च०' इति चशब्दात्तत्पुरुषः । विभक्तिलोपे सहस्य स आदेशः । प्रथमैकवचने 'स्नोर्वि०' ॥ प्रक्रियामते तु बहुव्रीहिः । 'तेन सहेति तुल्ययोगे' ॥ तुल्ययोगे सहेत्येतत् तृतीयान्तेन समस्यते स बहुव्रीहिः । आदिशब्दात् समानस्यापि सो भवतीति सूचितम् । तेन ज्योतिर्जनपदपिण्डबन्धुलोहितनाभिवेणीरात्रिगन्धकुक्षिब्रह्मचारितीर्थ्यपत्नीपक्षेषु समानशब्दस्य स आदेशः । समानं ज्योतिर्यस्य स सज्योतिः सजनपदः सपिण्डः सबन्धुः सलोहितः सनाभिः सवेणी सरात्रिः सगन्धः सकुक्षिः सब्रह्मचारी सतीर्थ्यः समाना पत्नी सपत्नी सपक्षः समानपक्षः । रूपादिषु विकल्पेन समानशब्दस्य स आदेशः । समानं रूपं यस्य स सरूपः समानरूपी इति वा । सवर्णः समानवर्णः सजातीयः समानजातीयः सगोत्रः समानगोत्रः सस्थानं समानस्थानं सधर्मा समानधर्मा सवयाः समानवयाः सनामा समाननामा इति यथाप्रयोगमवसेयम् ॥ अञ्चु गतिपूजनयोः । अञ्च् सहपूर्वः सहशब्दात् प्रथमैकवचने । 'अव्यया०' । अञ्च् तिप् । 'अपूकर्तरि' 'स्वरहीनं०' सह अञ्चतीति विग्रहे कृदन्तेन क्विप्प्रत्ययेन तत्पुरुषसमासः । 'क्विप्' इति क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । अञ्च् इत्यत्र 'नो लोपः' इति नकारादेशरूपस्य अनुस्वारस्य लोपः 'सहादेः सादिः' सहस्य सध्रिआदेशः । 'इ यं स्वरे' सध्र्यच् । प्रथमैकवचने । 'अञ्चेः पञ्चसु नुम्' इति नुमागमः । 'स्तोः श्चुभिः श्चुः' नस्य ञः। 'हसेपः०' 'संयोगान्तस्य०' इति चलोपः । 'चोः कुः' ञस्य ङ् सध्र्यङ् ॥ अग्रे प्रत्यच्शब्दवत् ॥ एवं संपूर्वोऽञ्च् समः समि आदेशः । अग्रे पूर्ववत् । सम्यच् । एवं तिरस्पूर्वोञ्च् तिरसस्तिरि आदेशः । 'इ यं स्वरे' तिर्यच् द्वितीयाद्वित्वं यावत् प्रत्यच्वत् । शसादौ स्वरे तु तिरश्चादय आदेशाः निपात्यन्ते । उदच्शब्दस्य उदीच् इति निपातः शसादौ स्वरे इति । तिरश्चः तिरश्चा । पूर्ववत् । एवं विष्वक् सर्वतः अञ्चतीति विष्वद्र्यङ् । 'सहादेः सादिः' इति विष्वक्स्थाने विष्वद्रि आदेशः । देवमञ्चतीति देवद्र्यङ् । 'सहादेः सादिः' इति देवस्य देवद्रि आदेशः । अमुमञ्चतीति अदद्र्यङ् अमुमित्यस्य अदद्रि आदेशः । इत्यादयो यथासंभवं ज्ञेयाः ॥

**कुत्सितेषदर्थयोः कोः कद्रादयः ॥ कुत्सितेषदर्थयोर्वर्तमानस्य कुशब्दस्य कत् का कव इत्येते आदेशा भवन्ति तत्पुरुषे ॥ कदन्नम् । काकव-कदुष्णे ॥ उष्णशब्दे परे कुशब्दस्य का कव कत् इत्येते आदेशा भवन्ति ॥ कु ईषदुष्णं कोष्णम्-कवोष्णम् कदुष्णम् ॥ कु ईषत् लवणं कालवणम् ॥ पुरुषे वा ॥ पुरुषशब्दे परे कुशब्दस्य वा कादेशो भवति तत्पुरुषे ॥ कुपुरुषः । कापुरुषः ॥**

कुत्सितेषदर्थयोः कोः कुशब्दस्य कदादयो वा वक्तव्याः । कुअन्न । कुशब्दात् प्रथमैक-

---

१ विभाषा पुरुषे का स्यान्नियमेन हसे परे । अचि त्रिरथवदे कोः कत्काक्षे वा पुरुषे पथि ॥ ईषदर्थे च वाच्ये स्युरम्लावुष्णे काकत्कवाः ॥ कुत्सितास्त्रयः कत्रयः । कद्रथः कद्वदः । काक्षः । कापथः । कुपथः । इत्यधिकम् ॥

वचने 'अव्यया०'। अन्नशब्दात्प्रथमैकवचने 'अतोऽम्' कुत्सितमन्नमिति विग्रहे अत्र व्याकरणान्तरमते तु तत्पुरुषः। स्वमते तु कर्मधारयः। कुशब्दस्य कत्। 'चपा अबे जबाः' तस्य दः। 'स्वरहीनं' कदन्नशब्दात् प्रथमैकवचने 'अतोऽम्' 'मोऽनुस्वारः'। एवं कदशनम् कदध्वा सर्वत्र कुपूर्वः॥ कुशब्दात् प्रथमैकवचने 'अव्यया०'। उष्णशब्दात् प्रथमैकवचने 'अतोऽम्'॥ [ काकवकदुष्णे ] ईषदर्थे उष्णशब्दे परे कोः कु इत्यस्य एते त्रय आदेशा भवन्ति। कु ईषदुष्णमिति विग्रहे एकत्र कत्, द्वितीये का, तृतीये कव। कदुष्ण कोष्ण कवोष्ण, प्रथमैकवचने सर्वत्र कुलशब्दवत्॥ लवणः कुपूर्वः। ईषल्लवणमिति विग्रहे ईषदर्थे कोः का कालवणम्॥ 'पुरुषे वा' पुरुषशब्दे परे कुइत्यस्य वा का आदेशो भवति। कुत्सितः पुरुषः कुपुरुषः कापुरुषः। एवं कत्तृणं कद्रथः कद्वदः कद्ध्वा कापथः काक्षः काग्निः कदग्निः। इत्यादयः प्रयोगानुसारेण ज्ञेयाः॥

**षोडश॥ षोडन्। षोढा॥**

षष् दशन् उभयत्रापि प्रथमाबहुवचने 'जश्शसो०' 'षो डः' 'वावसाने' 'समासप्रत्यययोः' 'ष्टुभिः ष्टुः' दस्य डः। 'सहादेः०' इत्यनेन षष् इत्यस्य षो (षउ) षोडशन् शब्दात् प्रथमाबहुवचने। 'जश्शसो०' 'नाम्नो०' षड्भिरधिका दश षोडश। यद्वा षट् च दश चेति विगृह्य विभक्तिलोपे षकारस्योकारो दस्य डः इति वर्णविकारो जातः। यदि षोडशानां संख्यापूरणः षोडशः षोडशन् शब्दात् 'एकादशादेर्डः' डित्त्वाट्टिलोपः। 'स्वरहीनं०' देवशब्दवत्॥ षष् दन्त षट् दन्ता अस्येति स षोडन्। विभक्तिलोपे 'वयसि दन्तस्य दतृ' इति पूर्वे दन्तस्य दतृ आदेशः। ऋकारो नुमागमार्थः। 'ष्टुभिः ष्टुः' दस्य डः षषः षो। षोडत्शब्दात् प्रथमैकवचने स्। 'ऋितो नुम्' 'हसेपः' 'संयोगान्तस्य०'। षोडन् द्विदन्॥ तथा षट् ददातीति षोडः। 'नाम्नि च' इति डप्रत्ययः। टिलोपः। 'सहादेः' इति षस्य उत्वम् दस्य डः। 'उ ओ' षोडः॥ तथा षष् 'संख्यायाः प्रकारे धा' प्रत्ययः। षड्भिः प्रकारैः षोढा॥ यद्वा षट्धा प्रकारा यस्य स षोढा। 'ष्टुभिः ष्टुः' धस्य ढः 'सहादेः सादिः०' इति षोढा इत्यव्ययम्। तथोक्तम् 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासुवेति वक्तव्यम्' इति॥

**बृहस्पतिः महेश्वरः महामाया महात्मा॥ द्यावाभूमी दंपती जंपती॥ आकृतिगणोऽयम्॥**

बृहतां पतिः बृहत्पतिः बृहस्पतिः। अत्र 'सहादेः' इति तस्य सकारः॥ केचिदत्र बृहस्पतिरिति न पठन्ति, वाचस्पत्यादिषु साधितत्वात्॥ महांश्चासावीश्वरश्च अत्र महच्छब्दस्य 'सहादेः सादिः' इत्यनेन महा इत्यादेशः। 'अ इ ए' महेश्वरः महादेवः महामाया महात्मा॥ द्यो भूमि 'ओरौ' द्यौश्च भूमिश्च द्यावाभूमी। अत्र 'सहादेः०' इति द्यौ इत्यस्य द्यावा इत्यादेशः। ततः प्रथमाद्विवचने। 'औ यू' ई 'सवर्णे०'। एवं दयितापतिः। जायापतिः। दयिता च पतिश्च दंपती। जाया च पतिश्च जंपती। दयिताजाययोः क्रमेण दं जं इत्यादेशौ भवतः। उभयत्रापि प्रथमाद्विवचने 'औ यू' 'सवर्णे०' जम्पती दम्पती जम्पतीभ्यां दम्पतीभ्यां जम्पत्योः दम्पत्योः। प्रक्रियामते तु जायाया जंभावदंभावौ वा निपात्यौ॥ ननु स्वच्छन्दमादेशाः कथं क्रियन्ते इत्याशङ्कायामाह—आकृतिगणोऽयम्।

१ षष उत्वं दस्य च डत्वम्। इत्यधिकम्॥

यादृशी आकृतिराकारः प्रयोगस्य दृश्यते तादृश एव प्रयोगो निपात्यते इत्याकृतिगणः कथ्यते । लक्ष्यानुसारेण सूत्रस्य प्रवृत्तिः । सिद्धं शब्दाकारमुपलभ्य तदनुसारेणादेशविधानमित्यर्थः ॥

**अलुक् क्वचित् ॥ समासे तद्धिते कृदन्तेपि विभक्तेरलुग्भवति ॥ कृच्छ्रान्मुक्तः । अप्सु योनिर्यस्येत्यप्सुयोनिः । उरसि लोमानि यस्याऽसौ उरसिलोमः । हृदि स्पृशतीति हृदिस्पृक् । कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । इत्यादि ॥**

पुनर्विशेषमाह—सूत्रम्—'अलुक् क्वचित्' ॥ अलुक् प्रथमैकवचनान्तम् । 'हसेपः०' । क्वचित् प्रथमैकवचनान्तम् । 'अव्यया०' ॥ क्वचिदिति समासे कृते तद्धितप्रत्ययेऽपि परे पूर्वपदविभक्तेरलुक् लोपो न भवतीत्यर्थः । तद्धितप्रत्यये यथा—आमुष्यायणः इत्यादौ विभक्तेरलुक् । समासे दर्शयति—कृच्छ्रशब्दात् पञ्चम्येकवचने 'ङसिरत्' 'सवर्णे०' मुक्तशब्दात् प्रथमैकवचने 'स्नोर्वि०' 'नमे नमा वा' तस्य नः । कृच्छ्रान्मुक्तः इति विग्रहे अत्र तत्पुरुषः । अत्र पूर्वपदविभक्तेरलुक् उत्तरपदविभक्तेस्तु 'समासप्रत्यययोः' इति लुक्। पुनः प्रथमैकवचने कृच्छ्रात् मुक्तः कृच्छ्रान्मुक्त इति वा । एवं स्तोकान्मुक्तः ॥ तथा अप्सुयोनिः । अप्शब्दात् सप्तमीबहुवचने । 'स्वरहीनं०' योनिशब्दात् प्रथमैकवचने । 'स्नोर्वि०' अप्सु पानीयेषु योनिर्यस्येति बहुव्रीहिः । अत्र सप्तमीबहुवचनस्य अलुक् । केवलमुत्तरपदस्य सेर्लुक् ॥ उरस्शब्दात् सप्तमीबहुवचने 'स्वरहीनं' लोमन्शब्दात् प्रथमाबहुवचने । 'जश्शसोः०' 'नोपधायाः' मा 'स्वरहीनं०' उरसि लोमानि यस्येति विग्रहे पूर्वपदस्थसप्तम्या अलुक् उत्तरपदस्य जसो लुक् । पुनः प्रथमैकवचने 'नोपधायाः' 'हसेपः०' उरसिलोमा ॥ एवं हृद्शब्दात् सप्तम्येकवचने 'स्वरहीनं०' स्पृश् स्पर्शने । हृदिपूर्वः हृदि स्पृशतीति विग्रहे तत्पुरुषः समासः । क्विप् प्रत्ययः । क्विपः सर्वापहारी लोपः । प्रथमैकवचने 'दिशाम्' इति शस्य कः । 'हसेपः०' । अत्र क्वचिदिति वचनात् कृदन्तेऽपि विभक्तेरलुक् ॥ एवं कण्ठे सप्तम्येवकचान्तम् । कालः प्रथमैकवचनान्तम् । वाचः षष्ठ्येकवचनान्तम् । युक्तिः प्रथमैकवचनान्तम् । दिशः षष्ठ्येकवचनान्तम् । दण्डः प्रथमैकवचनान्तम् । पश्यतः षष्ठ्येकवचनान्तम् । हरः प्रथमैकवचनान्तम् । दस्योः षष्ठ्येकवचनान्तम् । पुत्रः प्रथमैकवचनान्तम् । एतेषु यथासंभवं विभक्तेरलुक् । कण्ठे इत्यत्र सप्तमी अन्यत्र षष्ठी । एवं स्तम्बेरमः कर्णेजपः युधिष्ठिरः । 'अम्यादे०' इति षत्वम् ॥ आत्मनेपदं परस्मैपदम् । देवानांप्रियः । दिवस्पतिः वास्तोष्पतिः इत्यादावलुक् ॥

**समासे समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः ॥ शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिवः । देवपूजकश्चासौ ब्राह्मणश्च देवब्राह्मणः ॥**

एकविभक्त्यन्तानां पदानामेकार्थनिष्ठत्वं सामानाधिकरण्यम् । तत्र वर्तमानानां शाकपार्थिवादीनां मध्यमपदस्य द्वयोर्मध्यवर्तिनः पदस्य लोपो वक्तव्यः ॥ केचित्तु उत्तरपदलोप इति पठन्ति, ते पूर्वपदादुत्तरपदस्य लोपमिति व्याचक्षते । अथवा प्रथमसमासापेक्षया उत्तरप-

दस्येति व्याख्यान्ति ॥ परं शाकपार्थिवादीनामित्यशेषस्यापि पदस्य निरूपितत्वात्तन्न संगतं पुनश्चिन्त्यम् । शाकप्रियपार्थिव इति स्थिते । शाकः प्रियो यस्य स शाकप्रियः शाकप्रियश्चासौ पार्थिवश्चेति विग्रहे अत्र एकविभक्तिकत्वेन समानाधिकरणं ततो मध्यमपदस्य प्रियशब्दस्य लोपः । शाकपार्थिव इति स्थिते प्रथमैकवचने 'स्रोर्विः' ॥ तथा देवपूजको ब्राह्मणः देवान् पूजयतीति देवपूजकः देवपूजकश्चासौ ब्राह्मणश्चेति विग्रहे पूर्ववद्विभक्तिलोपे मध्यमपदस्य पूजकस्य लोपः । देवब्राह्मणः । प्रथमैकवचने 'स्रोर्विः' प्राग्वत् ॥

**आदेश्च द्वन्द्वे ॥ द्वन्द्वसमासे सति आदिपदस्य लोपो भवति ॥ माता च पिता च पितरौ । दुहिता च पुत्रश्च पुत्रौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ ॥**

पुनराह—'आदेश्च द्वन्द्वे' ॥ आदिशब्दस्याजहल्लिङ्गत्वात्पदविशेषणत्वेऽपि पुंस्त्वम् । द्वन्द्वे द्वन्द्वसमासे इतरेतरयोगे आदिपदस्य लोपो भवति । चकारात्कुत्रचित्, नतु सर्वत्र । मातृशब्दात् प्रथमैकवचने । 'सेरा' ङित्वाट्टिलोपः ऋलोपः 'स्वरहीनं' । च प्रथमैकवचनान्तम् 'अव्यया०' । पितृशब्दात् प्रथमैकवचने पूर्ववत् । च प्रथमैकवचनान्तम् । 'अव्यया०' । माता च पिता चेति विग्रहे द्वन्द्वसमासे 'समासप्रत्यययोः' इति विभक्तिलोपः । 'उक्तार्थानामप्रयोगः' इति च लोपे मातृ पितृ 'आदेश्च द्वन्द्वे' मातृशब्दस्य लोपः । इतरेतरयोगे द्विवचनम् । प्रथमाद्विवचने 'अर् पञ्चसु' 'स्वरहीनं०' पितरौ ॥ एवं श्वश्रूश्च श्वशुरश्च इति विग्रहे विभक्तिलोपे 'आदेश्च द्वन्द्वे' श्वश्रूपदलोपः । श्वशुरशब्दात् प्रथमाद्विवचने 'ओ औ औ' ॥ एवं दुहितृपुत्रौ दुहिता च पुत्रश्चेति विग्रहे विभक्तिलोपे आदिभूतदुहितृशब्दस्य लोपः पुत्रशब्दात् प्रथमाद्विवचने । 'ओ औ औ' ॥ चकारो बहुलार्थस्तेन कुत्रचिन्न सर्वत्र । यथा धवखदिरौ इत्यादौ लोपो न । चकारात्पक्षे मातापितरौ श्वश्रूश्वशुरौ इत्यपि भवति ॥

**ऋतां द्वन्द्वे ॥ ऋकारान्तानां द्वन्द्वसमासे सति पूर्वपदस्य वा आकारो वक्तव्यः ॥ मातापितरौ ॥**

पुनर्विशेषमाह 'ऋतां द्वन्द्वे' ॥ ऋतामिति ऋकारान्तशब्दानां द्वन्द्वे पूर्वं यत्पदं तत्संबन्धिनः ऋकारस्य आकारो वा भवति । माता च पिता च अत्र विभक्तिलोपे मातृशब्दस्य ऋकारस्य आ । मातापितृशब्दात् प्रथमाद्विवचने 'अर्पञ्चसु' 'स्वरहीनं०' मातापितरौ ॥ एवं पितापुत्रौ होतापोतारौ इत्यादि । पक्षे पूर्वपदलोपे पितरौ । वाग्रहणादेव मातरपितरावित्यपि ॥

**द्वन्द्वे सर्वादित्वं वा ॥ वर्णाश्च आश्रमाश्चेतरे च वर्णाश्रमेतरे वर्णाश्रमेतराः ॥**

'द्वन्द्वे सर्वादित्वं वा' ॥ द्वन्द्वसमासे सर्वादीनां शब्दानां सर्वादित्वं सर्वादिकार्यं वा भवति। भवति न भवति चेत्यर्थः । उदाहरणम्—वर्णाश्रमेतरे वर्णाश्रमेतराः द्विस्थाने वर्णा ब्राह्मणादयः । आश्रमा ब्रह्मचर्यादयः । इतरे शूद्रवृषलादयः । ततो वर्णाश्च आश्रमाश्च इतरे च समाहारद्वन्द्वः । ततो विभक्तिलोपे उभयत्रापि प्रथमाबहुवचनम् । एकत्र सर्वादित्वात् । 'जसी' 'अ इ ए' आदौ 'सवर्णे०' आश्रम अग्रे इतर 'अ इ ए' यत्र सर्वादित्वं न, तत्र प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्विः' ॥

**वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपश्च ॥ कुमुदस्य गन्ध इव गन्धो यस्यासौ कुमुदगन्धिः ॥ हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥**

वैयधिकरण्ये इति ॥ भिन्नविभक्त्यन्तानां पदानां विभिन्नार्थनिष्ठत्वं वैयधिकरण्यम् । यद्वा भिन्नविभक्त्यन्तत्वे सति भिन्नार्थप्रतिपादकद्वारा एकस्मिन्नर्थे वृत्तिर्व्यधिकरणं तस्य भावो वैयधिकरण्यं तस्मिन् वर्तमाने बहुव्रीहिसमासे मध्यमपदलोपो वक्तव्यः । कुमुदशब्दात् षष्ठ्येकवचने 'ङस्य०' । गन्धशब्दात् प्रथमैकवचने 'स्नोर्वि०' । इवशब्दात् प्रथमैकवचने 'अव्यया०' । गन्धशब्दात् प्रथमैकवचने 'स्नोर्वि०' । कुमुदस्य गन्ध इव गन्धो यस्येति विग्रहे अत्र कुमुदस्येति षष्ठ्यन्तं, शेषाणि प्रथमान्तानि । 'समासप्रत्यययोः' इति विभक्तिलोपे—'उक्तार्थानामप्रयोगः' इति इवलोपे कुमुद गन्ध गन्ध इति स्थिते । अत्र मध्यपदस्य गन्धस्य लोपः पश्चात् 'मध्यमपदलोपश्च' इति चकाराद् 'गन्धादेरिः' इप्रत्ययः, 'यस्य लोपः' 'स्वरहीनं' 'स्नोर्वि०' कुमुदगन्धिः ॥ हंसशब्दात् षष्ठ्येकवचने 'ङस्य' । गमनशब्दात् प्रथमैकवचने 'अतोऽम्' 'अम्शसो०' 'मोऽनु०' । इव प्रथमैकवचनान्तम् 'अव्यया०'। गमनशब्दात् प्रथमैकवचने पूर्ववत् । हंसस्य गमनमिव गमनं यस्या इति विग्रहे बहुव्रीहिः । 'समासप्रत्यययोः' 'उक्तार्थानामप्रयोगः' । हंस गमन गमन इति स्थिते । मध्यपदस्य गमनस्य लोपः । पश्चात् 'आबतः स्त्रियाम्' 'आपः' हंसगमना ॥ समासश्चतुर्धा । नित्य—अनित्य—लुक्—अलुक्—भेदात् ॥

**दिक्संख्ये संज्ञायाम् ॥ दिग्वाचकसंख्यावाचकशब्दौ संज्ञायां तुल्यार्थेनोत्तरपदेन अविग्रहं समस्येते स तत्पुरुषः ॥ अविग्रहो नित्यसमासः ॥ अन्यस्त्वस्वपदविग्रहोऽपि भवति ॥ दक्षिणाग्निः । सप्तग्रामाः । इत्यादयो ज्ञेयाः ॥ इति समासप्रकरणम् ॥**[1]

अथ नित्यसमासमाह—'दिक्संख्ये०' दिक्संख्ये प्रथमाद्विवचनान्तम् । संज्ञायां सप्तम्येकवचनान्तम् । दिग्वाचकं संख्यावाचकं च संज्ञायां वाच्यमानायां तुल्यार्थेन एकार्थेन उत्तरपदेन सह अविग्रहं विग्रहरहितं समस्यते । तत्र समासश्च नित्यो भवति ॥ अथ नित्यानित्यसमासस्वरूपमाह—अविग्रहो नित्यसमासः । यो नित्यः समासः स विग्रहरहितः असमस्यमानपदविग्रहो भवति । अन्योऽनित्यसमासोऽस्वपदविग्रहोऽपि स्वैः पदैर्विग्रहो यस्य स स्वपदविग्रहः [ न स्वपदविग्रहः अस्वपदविग्रहः ] परपदविग्रहः ॥ अपिशब्दात्स्वपदविग्रहोऽपि भवति ॥ अस्वपदविग्रहो यथा—स्त्रियमधिकृत्य । अत्र अधिकृत्येति परपदेन विग्रहः । बाह्यपदत्वादस्वपदम् । अथवा बहु धनं यस्य सः । अत्र यस्येति परपदेन विग्रहः इति अस्वपदविग्रहः । अश्वादन्यः इत्यप्यस्वपदविग्रहः ॥ तथा ग्रामं प्राप्त इत्यादौ स्वाभ्यां पदाभ्यां विग्रहमध्यवर्तिभ्यां पदाभ्यां विग्रहः । अथ नित्यसमासोदाहरणम् । यथा दक्षिणाग्निरित्यग्निभेदः । 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः' इति ॥ दिग्वाची दक्षि-

---

१ विग्रहो द्विविधः एकः स्वपदविग्रह एकोऽस्वपदविग्रहोऽपि भवति ॥ अस्वपदेन समासव्यतिरिक्तेनापि पदेन विग्रहो वाक्यं यत्र स नित्यः ॥ तेन लम्बौ कर्णौ यस्य स लम्बकर्णः ॥ दात्रेण छिन्नमिति स्वपदविग्रहः ॥ अस्वपदविग्रहो नित्यः । यस्मिन्समासावबोधकं वाक्यं न तिष्ठति स नित्यः । इत्यधिकम् ॥

णाशब्दः । एकार्थेन अग्निना परपदेन समसितः । समासश्च तत्पुरुषः । नित्यत्वाद्विग्रहो न क्रियते । तथा सप्तग्रामा इत्यत्र सप्तन्शब्दः संख्यावाचक एकार्थेन ग्रामपदेन समसितः । अत्र विग्रहं विनापि तत्पुरुषः समासः नित्यः । नित्यं पदद्वयात्मकत्वात्समासरूपमेव पदमित्यर्थः । दक्षिणाग्निरिति अग्निभेदनामवाची शब्दः । सप्तग्रामा इति ग्रामभेदनामवाची शब्दः ॥

'पूर्वेऽव्ययेऽव्ययीभावोऽमादौ तत्पुरुषः स्मृतः ।
चकारबहुलो द्वन्द्वः संख्यापूर्वो द्विगुः स्मृतः ॥
यस्य येन बहुव्रीहिः स चासौ कर्मधारयः ।
इति किंचित्समासानां षण्णां लक्षणमीरितम् ॥
इति सुबोधिकायां समासदीपिका ।

---

## तद्धितप्रकरणम् १७

**अथ तद्धितो निरूप्यते ॥ अपत्येऽण् ॥ नाम्नोऽपत्येर्थेऽण्प्रत्ययो भवति ॥ उपगोरपत्यं पुमानिति विग्रहे उपगोः अण् इति स्थिते । समासप्रत्यययोः इति षष्ठीलोपः । णकारो वृद्ध्यर्थ ईबर्थश्च ॥**

अथ तद्धितो निरूप्यते—अथेति ॥ समासकथनानन्तरं तद्धितस्तद्धितसंज्ञकः प्रत्ययो निरूप्यते । तस्य समासस्य हितः, यद्वा तेषां पूर्वोक्तानां नामादीनामर्थान्तरप्रकाशनेन हितस्तद्धितः स निरूप्यते कथ्यत इत्यर्थः ॥ यद्यपि तद्धितसंज्ञकाः प्रत्यया बहवः सन्ति तथापि जात्यभिप्रायेणैकवचनम् ॥ सूत्रम्—'अपत्येऽण्' ॥ न पतति पिता यस्मात् तदपत्यं तस्मिन् । अपत्यशब्दस्य सप्तम्येकवचनान्तम् 'अ इ ए' । अण् प्रथमैकवचनान्तम् 'हसेपः०' इति नाम्नो० अपत्ये पुत्रपौत्रादिसंताने शिष्यप्रशिष्यादिसंताने वाच्ये सति नाम्नः अण् प्रत्ययो भवति । अत्रापि नामशब्देन पदमेव विवक्षितम् । अन्यथा 'अविभक्ति नाम' इत्युच्यमाने उपगोरिति षष्ठयन्तात् अण्प्रत्ययो न स्यात् । यद्वा उपगुशब्दात् प्रथममण् प्रत्ययः । ततः षष्ठीं दत्त्वा विग्रहः कार्यः ॥ उदाहरणम्—उपगुशब्दात् अपत्येऽर्थेऽण्प्रत्ययः । तत उपगुशब्दात् षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' इत्यकारलोपः । 'स्रोर्वि०' उपगोरपत्यमिति विग्रहे सति । तद्धितेऽपि विग्रहोऽन्वययोग्यत्वे सत्येव भवति । तेन 'वस्त्रमुपगोरपत्यं चैत्रस्य' इत्यादौ न । उपगुनाम्नस्तापसस्यापत्यं संतानादिः पुत्रादिरिति विग्रहे कृते 'समासप्रत्यययोः' इति विभक्तिलोपे 'उक्तार्थानाम्' इति अपत्यशब्दे लुप्ते उपगु अण् इति स्थिते । णकारो वृद्ध्यर्थः ईबर्थश्च ॥

**आदिस्वरस्य ञ्णिति च वृद्धिः ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः । उकारस्यौकारो वृद्धिः ॥**

वृद्धिकरणसूत्रम्—'आदिस्वर०' ॥ आदिश्चासौ स्वरश्च आदिस्वरस्तस्य षष्ठ्येकवचनान्तम् । 'ङस्य' ञ्णिति ञ् च ण् च ञणौ तौ इतौ यस्य ञ्णित् तस्मिन् ञ्णिति सप्तम्येकवचनान्तम् 'स्वरहीनं०' । वृद्धिः प्रथमैकवचनान्तम् 'स्रोर्वि०' त्रिपदमिदं सूत्रम् । स्वराणां

तद्धितप्रत्ययान्तपदसंबन्धिनां सर्वस्वराणां मध्ये य आदिस्वरस्तस्य ञिति णिति च तद्धिते प्रत्यये परे वृद्धिर्भवति । अनेन उकारस्य औकारो वृद्धिः । 'आरै औ वृद्धिः' इत्युक्तत्वात् । औपगु अ इति स्थिते ॥

**वोऽव्यस्वरे ॥ उकारस्य ओकारस्य च अव् भवति स्वरे यकारे च परे ॥ औपगवः । [ वसिष्ठस्यापत्यं ] वासिष्ठः । [ गोतमस्यापत्यं ] गौतमः ॥**[1]

सूत्रम्—'वोऽव्यस्वरे' ॥ उश्च ओश्च वो तस्य वो षष्ठ्येकवचनान्तं सांकेतिकम् । अव् प्रथमैकवचनान्तम्—'हसेपः०' । यश्च स्वरश्च यस्वरं तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ त्रिपदमिदं सूत्रम् । अन्त्यस्योकारस्य ओकारस्य च अव् भवति तद्धितसंबन्धियकारे स्वरे च परे । अत्र स्वरे परे उकारस्य अव् भवति गव् 'स्वरहीनं०' औपगवः । 'कृत्तद्धितसमासाश्च' इति नामसंज्ञायां प्रथमैकवचने 'स्रोर्विं०' उपगुर्नाम कश्चिन्मुनिस्तस्यापत्यमौपगवः ॥ एवं वसिष्ठस्यापत्यं वासिष्ठः । अण्प्रत्ययः । अत्र वकारस्थिताकारस्यादिस्वरस्य वृद्धिराकारः । 'यस्य लोपः' 'स्वरहीनं०' ॥ एवं गोतमस्यापत्यं गौतमः । इत्यत्राणूनिमित्ता वृद्धिः—उकारस्य औकारः । 'स्रोर्विं०' ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिर्ज्ञेया इति स्वयंभुवः इत्यादौ अवादेशो न ॥

**ऋ उरणि ॥ ऋकारस्य उर् भवति अणि परे ॥ षण्णां मातॄणामपत्यं षाण्मातुरः । तिसृणां मातॄणामपत्यं त्रैमातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥**[2]

सूत्रम्—'ऋ उरणि' ॥ ऋ षष्ठ्येकवचनान्तं सांकेतिकम् । उर् प्रथमैकवचनान्तम् 'हसेपः०' । अणि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' अण्प्रत्यये परे मातृशब्दसंबन्धिन ऋकारस्य उर् भवति । षष् मातृ । षष्शब्दात् षष्ठीबहुवचने 'ष्णः' इति नुट् 'षो डः' 'ष्टुभिः ष्टुः' 'स्वरहीनं०' 'मोऽनु०' । मातृशब्दात् षष्ठीबहुवचने 'नुडामः' 'नामि' । षण्णां मातॄणामपत्यमिति विग्रहे । 'समासप्रत्यययोः' इति विभक्तिलोपः षष् मातृ अ इति । 'आदिस्वरस्य०' इति वृद्धिः । 'षो डः' 'वावसाने' डस्य टः । 'ञमे ञमा वा' टस्य णः ॥ यद्वा 'षषो णो वाच्यो मातरि' इति केचित् । कचिज्जबानामपि ञमा एष्टव्याः इति केचित् । 'ऋ उरणि' इति उर् । 'स्वरहीनं०' 'स्रोर्विं०' षाण्मातुरः । कार्तिकेय इत्यर्थः ॥ एवं द्वयोर्मात्रोरपत्यमिति विग्रहे उभयत्रापि षष्ठीद्विवचनम् 'त्यदादेष्टे०' 'आबतः स्त्रियाम्' 'टौसोरे' 'ए अय्' 'स्वरहीनं०' । मातृशब्दात् षष्ठीद्विवचने 'ऋरम्' ॥ अण् । णित्वाद्वृद्धिः । द्वि इत्यस्य द्वै । 'ऋ उरणि' इति उर् । 'स्वरहीनं०' द्वैमातुरः गणेशः । एवं भाद्रमातुरः । द्वावपि सतीसुतवाचकौ । सत्यास्तु तनयः षाण्मातुरवद्भाद्रमातुरः । इत्यादि अणन्ताः । अन्यत्राप्यणूप्रत्ययो भवति । यतः ॥

'रागान्नक्षत्रयोगाच्च समूहात्सास्यदेवता ।
तद्वेत्त्यधीते तस्येदमेवमादिरणिष्यते ॥'

रागाद्यथा कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । नक्षत्रयोगात् । पुष्येण युक्तः कालः पौषः ।

---

१ 'शिवादिभ्यश्च' इत्यण् वक्तव्यः । अन्यथा इञः प्राप्तिः । शिवस्यापत्यं शैवः । विदेहस्यापत्यं वैदेहः ॥

२ षो डः त्वन्मदेकत्वे इति सूत्रनिर्देशात्क्वचिदपदान्तेऽपि झसानां ञमा एष्टव्याः । इत्यधिकौ ॥

समूहात् नराणां समूहो नारम् । स्त्रीणां समूहः स्त्रैणम् । सास्य देवतार्थे इन्द्रो देवताऽस्येति ऐन्द्रम् । तद्वेत्तीत्यस्यार्थे व्याकरणमधीते वेद वा वैयाकरणः । तस्येदमित्यस्यार्थे देवदत्तस्यार्थमिदं दैवदत्तम् । इत्याद्यर्थेष्वण्प्रत्ययः स्यात् । तदग्रे यथास्थाने कथयिष्यति ॥

**अत इञनृषेः ॥ अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ्प्रत्ययो भवति ॥ यस्य लोपः । देवदत्तस्यापत्यं दैवदत्तिः । [ श्रीधरस्यापत्यं ] श्रैधरिः । [ दशरथस्यापत्यं ] दाशरथिः । पौरन्दरिः ॥**

अथ अपत्येऽर्थे प्रत्ययान्तरमाह—'अत इञनृषेः' ॥ अत इति पञ्चम्येकवचनान्तं 'स्वरहीनं०' 'स्त्रोर्वि०' इञ् प्रथमैकवचनान्तम् 'हसेपः०' पश्चात् 'आदबे लोपश्' ॥ अनृषिः न ऋषिः अनृषिस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङिति' इकारस्य एकारः । 'ङस्य' इत्यकारलोपः । पूर्वं 'स्त्रोर्वि०' 'स्वरहीनं०' त्रिपदम् । ऋषिवाचकशब्दवर्जितादकारान्तान्नाम्नोऽपत्येऽर्थे इञ् प्रत्ययो भवति । अणोऽपवादः । अत्र ञकारो वृद्ध्यर्थः । उदाहरणम् । देवदत्तस्यापत्यं इञ् प्रत्ययः । ञकारो वृद्ध्यर्थः 'आदिस्वरस्य' इति वृद्धिः । दै । 'यस्य लोपः' 'स्वरहीनं०' 'स्त्रोर्वि०' दैवदत्तिः ॥ एवं श्रीधरस्यापत्यं श्रैधरिः । अत्र इञ् प्रत्यये श्रीइत्यस्य श्रै इति वृद्धिः ॥ तथा दशरथस्यापत्यं दाशरथिः । अत्र वृद्धिकार्यं दस्य दा ॥ पुरंदरस्यापत्यं पौरंदरिः । अत्र उकारस्य औकारो वृद्धिः । एवं रावणिः ॥

**बाह्वादेश्च ॥ बाह्वादेः पर इञ्प्रत्ययो भवत्यपत्येऽर्थे ॥ बाहोरपत्यं बाहविः । उपबिन्दोरपत्यमौपबिन्दविः । कृष्णस्यापत्यं कार्ष्णिः । उडुलोम्नोऽपत्यमौडुलोमिः । नो वा । अग्निशर्मणोऽपत्यमाग्निशर्मिः ॥**

'बाह्वादेश्च' ॥ बाह्वादेस्तु अकारान्तत्वाभावेऽपि इञ् वक्तव्यः । बाहविः औपबाहविः वार्ष्णिः आग्निशार्मिः ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिरस्त्येव । तेन वासुदेवः शैवः वैदेह इत्यादौ इञ् न स्यात् ॥ 'व्यासवरुडसुधातृनिषादबिम्बचण्डालादन्तस्य वाऽकः ।' एभ्योऽपत्य इञ् तद्योगे चैषामन्तस्य अक आदेशः । वैयासकिः । वारुडकिः । सौधातकिः । नैषादकिः । बैम्बकिः । चाण्डालकिः ॥

**ण्यायनणेयणीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः ॥ गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे यथासंख्येन ॥ चकारात्पितृष्वस्रादेरेयण् प्रत्ययो भवति ॥ गार्ग्यः । वात्स्यः । जामदग्न्यः । सौम्यः । नाडायनः । चारायणः । चान्द्रायणः । आमुष्यायणः । आत्रेयः । मार्कण्डेयः । कापेयः । गाङ्गेयः । माहेयः ॥**

सूत्रम्—'ण्यायनणेय०' ॥ ण्यश्च आयनण् च एयण् च णीयश्च ण्यायनणेयणीयाः प्रथमाबहुवचनान्तम् 'सवर्णे०' । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च गर्गनडात्रिस्त्रीपितृष्वसारः ते आदौ यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिः तस्मात् पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यकारलोपः । 'स्त्रोर्वि०' ॥ द्विपदमिदं सूत्रम् । 'द्वन्द्वान्ते श्रूयमाणं पदं

१ पैतृष्वस्रीयः । मातृष्वस्रीयः । इत्यधिकम् ॥

प्रत्येकं संबध्यते' इत्यादिशब्दस्य प्रत्येकंयोगः । तेनापत्येऽर्थे गर्गादेर्ण्यः । नडादेरायनण् । अत्र्यादेः स्त्रीलिङ्गाच्च एयण् । पितृष्वस्रादेः णीयः । सर्वत्र णकारो वृद्ध्यर्थः । ण्यणीययोर्वृद्ध्यर्थमादौ प्रयुक्तो णकारोऽणन्तत्वनिराससूचकः । अणन्तत्वाभावादीप्निषेधः । गर्ग वत्स । गर्गस्यापत्यमिति विग्रहे वत्सस्यापत्यमिति विग्रहे च ण्यण् णित्त्वाद्वृद्धिः गार्ग वात्स 'यस्य लोपः' उभयत्रापि 'स्वरहीनं०' गार्ग्यः वात्स्यः । स्त्र्यपत्यं चेत् गार्ग्या वात्स्या ॥ नडस्यापत्यं नाडायनः । आयनण् प्रत्ययः । णित्त्वाद्वृद्धिः 'यस्य लोपः' 'स्वरहीनं०' 'स्रोर्विं०' एवं चरस्यापत्यं चारायणः । स्त्रियां नाडायना । चरस्यापत्यं चारायणा । अदस्शब्दात् षष्ठ्येकवचने । 'त्यदादेष्टे०' 'दस्य मः' 'ङस्य' 'मादू' असु । 'किलात्षः सः०' अमुष्यापत्यमिति विग्रहे आयनण्प्रत्ययः । णित्त्वाद्वृद्धिः । आ । 'अलुक् क्वचित्' इति षष्ठ्या विभक्तेर्न लोपः । 'यस्य लोपः' 'स्वरहीनं०' 'स्रोर्विं०' आमुष्यायणः । अस्यार्थः—'स्यादामुष्यायणो मुख्यपुत्रो प्रख्यातपुत्रकः' इति ॥ अत्रेरपत्यमात्रेयः । एयण्प्रत्ययः । आदिवृद्धिः 'यस्य०' 'स्वर०' प्रथमैकवचने 'स्रो०' ॥ एवं कपेरपत्यं कापेयः । अणन्तत्वादीप् । आत्रेयी कापेयी । गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः । एवं वैनतेयः । सैंहिकेयः । काद्रवेयः ॥ पितुः स्वसा पितृष्वसा । मातुः स्वसा मातृष्वसा । 'मातृपितृभ्यां स्वसुः सकारस्य षत्वं वक्तव्यम्' पितृष्वसृशब्दात् षष्ठ्येकवचने । 'ऋतो ङ उः' ङित्त्वाट्टिलोपः । अग्रे अपत्यशब्दात् प्रथमैकवचने । 'अतोऽम्' पितृष्वसुरपत्यं पैतृष्वस्रीयः । एवं मातृष्वसुरपत्यं मातृष्वस्रीयः उभयत्रापि णीयः । पितृशब्दे इकारस्य ऐकारो वृद्धिः । मातृशब्दे न वृद्धिः वृद्धेरेव सद्भावात् । एवं स्वसुरपत्यं स्वस्रीयः । अत्र 'णितो वा' इति विकल्पान्न वृद्धिः ॥

**लुग्बहुत्वे क्वचित् ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदनृषिविषये ऋषिविषये च लुग्भवति ॥ गर्गाः । अत्रयः । विदेहाः ॥**[2]

अथ स्यादौ विषये तद्धितप्रत्ययान्तानां साधनविधिमाह—'लुग्बहुत्वे क्वचित्' ॥ लुक् प्रथमैकवचनम् 'हसेपः' । बहुत्वे सप्तम्येकवचनान्तम् । क्वचित् प्रथमैकवचनान्तम् 'अव्यया०' ॥ त्रिपदम् । अपत्येऽर्थे उत्पन्नस्य अणादेः प्रत्ययस्य बहुवचने सति क्वचिदिति ऋषिवाचकशब्दविषये अनृषिवाचके विषये वा लुग्भवति न स्त्रियाम् । तत्र ण्यप्रत्ययस्य यथा गार्ग्यः गार्ग्यौ । बहुवचने गार्ग्य अस् इति स्थिते । 'लुग्बहुत्वे०' इति ण्यप्रत्ययस्य लुक् 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति वृद्धेरभावः । गर्ग अस् इति स्थिते । 'सवर्णे०' 'स्रोर्विं०' गर्गाः । अग्रेऽपि गार्ग्यं गार्ग्यौ गर्गान् । गार्ग्येण गार्ग्याभ्यां गर्गैः । एवं सर्वत्र बहुवचने ण्यप्रत्ययस्य लुक् ॥ एवं वासिष्ठः । वासिष्ठौ । बहुवचने वासिष्ठशब्दात् प्रथमाबहुवचनम् । अत्र अणो लोपः 'निमित्ताभावे' इति वृद्धेरप्यभावः । वसिष्ठ अस् । 'सवर्णे०' 'स्रोर्विं०' वसिष्ठाः ॥ आत्रेयशब्दात् प्रथमाबहुवचनम् । एयण् लोपः अत्रि अस् 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्विं०' आत्रेयः आत्रेयौ अत्रयः । आत्रेयं आत्रेयौ अत्रीन् । इत्यादिरूपाणि ॥ वैदेहशब्दात् प्रथमाबहुवचने अणो लोपः वृद्धेरप्यभावः विदेह अस् । 'सवर्णे०' 'स्रोर्विं०' विदेहाः ॥ एवं रघवः ॥

---

१ पाणिनीयानां तु 'गार्गी वात्सी' इत्येवमेव भवति ॥ २ भृग्वत्रिकुत्साङ्गिरोवसिष्ठगोतमदेशतुल्याख्यक्षत्रियेभ्यः परस्य प्रत्ययस्य लुग्भवति । भृगवः । कुत्साः । वसिष्ठाः । इत्यधिकम् ॥

**देवतेदमर्थे ॥ देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति ॥ इन्द्रो देवता यस्येत्यैन्द्रं हविः । सौम्यम् ॥ देवदत्तार्थमिदं दैवदत्तं वस्त्रम् ॥**

सूत्रम्—'देवतेदमर्थे' ॥ देवता च इदं च देवतेदमौ तयोरर्थे देवतेदमर्थे सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ एकपदमिदं सूत्रम् । देवता स्वामित्वेनाधिष्ठायकः तस्यार्थे इदमर्थेति अस्येदं वस्तु अस्मिन्नर्थेऽप्युक्ता अणादयः प्रत्यया भवन्ति । इन्द्र । इन्द्रो देवता अस्येति वाक्ये अत्र देवतार्थे अण् णित्त्वाद्वृद्धिः । ऐन्द्र 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'अतोऽम्' 'अमृशसो०' ऐन्द्रं हविः । इन्द्रार्थे कल्पितं घृतमित्यर्थः ॥ सोम । सोमो देवता अस्येति वाक्ये अत्र देवतार्थे ण्यप्रत्ययः । 'आदिस्वरस्य०' इति वृद्धिः । सौ 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् सौम्यम् ॥ देवदत्तार्थमिदम् अत्रेदमर्थे अण् वृद्धिः दै 'यस्य लोपः' स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् । दैवदत्तम् ॥ एवमाग्नेयं वायव्यं पित्र्यम् उषस्यमिति देवतार्थे । अथेदमर्थे नद्या अयं नादेयः । इत्यादि ॥ 'देवतेदमः' इत्युक्तेऽपि सिद्धावर्थग्रहणात् अन्यत्राप्यर्थे । उदुम्बराणि सन्त्यस्मिन्देशे औदुम्बरो देशः । एवं बादर इत्यादि ज्ञेयम् ॥

**क्वचिद्द्वयोः ॥ क्वचित्पूर्वोत्तरपदादेरचो वृद्धिर्भवति ञिति णिति च तद्धिते परे ॥ अग्निमरुतौ देवते यस्य तदाग्निमारुतं कर्म । सौहार्दम् । अत्र भावेऽण् वक्तव्यः ॥**

अथ वृद्धिविशेषमाह—'क्वचिद्द्वयोः' ॥ क्वचित् प्रथमैकवचनान्तम् 'अव्यया०' द्वयोरिति द्विशब्दस्य षष्ठीद्विवचनान्तम् 'त्यदादेष्टे०' 'ओसि' 'ए अय्' 'स्वरही०' 'स्नोर्वि०' पूर्वं 'चपा अबे०' ॥ क्वचिदिति प्रयोगान्तरे पूर्वपदादेः स्वरस्य उत्तरपदादेः स्वरस्य च द्वयोरपि वृद्धिर्भवति । अग्निमरुत् । अग्निश्च मरुच्च अग्निमरुतौ तयोरिदम् । इदमर्थे अण् । यद्वा 'कर्मण्यप्यण् वक्तव्यः' 'क्वचिद्द्वयोः' इति अग्निमरुतोरुभयोरप्याद्यस्वरस्य वृद्धिः । 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् । आग्निमारुतमेतत्कर्म । सुहृद् शोभनं हृत् हृदयं यस्य स सुहृत् । सुहृदो भावः । अत्र भावेऽण् वक्तव्यः । पश्चात् 'क्वचिद्द्वयोः' इति सुहृत् इत्यत्र उकारऋकारयोर्द्वयोरपि वृद्धिः । सौहार्द् । 'रायपो०' जलतुम्बि० । 'स्वरहीनं०' कुलशब्दवत् सौहार्दम् । अत्र भावेऽण् वक्तव्यः इति वक्तव्यबलादनुक्तेऽपि अण् ॥ एवं सुभगस्य भावः सौभाग्यम् ॥ एवं परस्त्रिया अपत्यं पारस्त्रैणेयः ॥

**णितो वा ॥ उक्ता वक्ष्यमाणाश्च प्रत्यया विषयान्तरे णितो वा भवन्ति ॥ अजो गौर्यस्यासावजगुः शिवः । तस्येदं धनुराजगवं अजगवं वा । कुमुदस्येव गन्धो यस्याः सा कुमुदगन्धिः । तस्यापत्यं स्त्री कौमुदगन्ध्या । श्वशुरस्यायं श्वाशुर्यो ग्रामः । विष्णोरिदं वैष्णवम् । गोरिदं गव्यम् । कुले भवं कुल्यम् । तवेदं त्वदीयम् । ममेदं मदीयम् ॥**

अथ प्रयोगानुसारेण वृद्धेरभावमाह—सूत्रम्—'णितो वा' ॥ णितः प्रथमाबहुवचनान्तम् 'स्वरहीनं०' 'स्नोर्वि०' । वा प्रथमैकवचनान्तम् 'अव्यया०' 'हबे' 'उओ' ॥ उक्ता अणादयः

प्रत्ययाः विषयान्तरे कार्यान्तरे अर्थान्तरे णितो णकारानुबन्धा णिसंज्ञका वा भवन्ति। अत्र वाशब्दो व्यवस्थावाचकः बहुलार्थकः। तेनैतेषु परेष्वादिस्वरस्य कचिद्वृद्धिः। कचिद्वृद्धेरभावोऽपीत्यर्थः। कचिद्विकल्पः॥ उदाहरणम्—अजगु अजो गौर्वृषभो यस्य सः अजगुः शिवः। 'गोः' इति गोशब्दस्य ह्रस्वः। अजगु द्विस्थाने अजगोरिदं धनुः। अत्र इदमर्थेऽण् उभयत्र। एकत्र वृद्धिः आ। अन्यत्र न वृद्धिः। 'वोऽव्यस्वरे' अव्। 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत्। आजगवमजगवं वा धनुः। अत्र वा वृद्धिः॥ कुमुदगन्ध। कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः। 'वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपः' 'गन्धादेरिः' 'यस्य लोपः' 'स्वरहीनं०' कुमुदगन्धिस्तस्यापत्यमिति वाक्ये 'ण्यायनणेयणीयाः०' इत्यपत्येऽर्थे ण्यः। अत्राद्यस्य उकारस्य वृद्धिः। कौ। 'यस्य लोपः' 'स्वरहीनं०' स्त्रीत्वात्। 'आवतः स्त्रियाम्' इत्याप्। अत्र नित्यं वृद्धिः। कौमुदगन्ध्या॥ एवं श्वशुरस्यायमिति वाक्ये इदमर्थे ण्यप्रत्ययः। वृद्धिः। 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने श्वाशुर्यो ग्रामः॥ विष्णु। विष्णोरिदमिति वाक्ये अण्प्रत्ययः। वृद्धिः वै। 'वोऽव्यस्वरे' 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत्। केचित् विष्णोः स्वरूपं वैष्णवमिति पठन्ति। इदमर्थस्य पूर्वं प्रणीतत्वात्। विष्णोरिदमिति न पठन्ति॥ एवं गोरिदं घृतादि गव्यम्। इदमर्थे ण्यप्रत्ययः। 'वोऽव्यस्वरे' 'स्वरहीनं०' गव्यम्॥ कुले भवं कुल्यम्। 'कारकात्०' इति ण्यप्रत्ययः। अत्र प्रयोगद्वये वृद्धेरभावः 'यस्य लोपः' युष्मद् अस्मद्। ममेदमिति विग्रहे इदमर्थे णीयः। 'त्वन्मदेकत्वे' त्वत् मत्। कचिदपदान्तेऽपि पदान्तताश्रयणात् 'चपा अबे जबाः' 'स्वरहीनं' तवेदं त्वदीयम्। ममेदं मदीयम्। अत्रापि न वृद्धिः। एवं तस्येदं तदीयम्। अस्येदं यदीयम्। एतस्येदमेतदीयम्। अत्र णीयप्रत्ययो न णित्॥

**चतुरश्चलोपो ण्यणीययोः॥ चतुर्शब्दस्य चकारस्य लोपो भवति ण्यणीययोः प्रत्यययोः परतः। तुर्यः तुरीयः॥ अन्यस्य दक्॥ अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे॥ अन्यदीयम्। अर्धजरतीयम्॥[1]**

'चतुरश्चलोपो'॥ चतुर्शब्दसंबन्धिनश्चकारस्य लोपो भवति ण्यणीयप्रत्यययोः परयोः इत्यनेनोभयत्रापि चलोपः। चतुर्णां संख्यापूरणः अयं तुर्यः तुरीयः। अत्र पूरणार्थस्येदमर्थान्तःपातित्वात् इदमर्थे ण्यणीयप्रत्ययौ। अत्रापि न णित्वम्॥ 'अन्यस्य दक्' अन्यशब्दस्य णीयप्रत्यये परे दगागमो भवति। ककारः स्थाननियमार्थः। अकार उच्चारणार्थः। अन्य। अन्यस्येदमिति विग्रहे इदमर्थे णीयप्रत्ययः। ईय दगागमः। 'स्वरहीनं०' अन्यदीयम्॥ अन्यत्रापि दगागममिच्छन्ति। अन्यदर्थः। अन्यद्रागः। अन्यदाशीः। अन्यदुत्सुकम्। अन्यद्वृतिः। अन्यदास्था। इत्यादि॥ अर्धजरती। अर्धजरत्या अर्धवृद्धायाः स्त्रिया इदं वस्त्रादि अर्धजरतीयम्। इदमर्थे णीयप्रत्ययः। 'यस्य लोपः' 'स्वरहीनं०' कुलवत्। गव्यमित्यारभ्योक्तप्रयोगेषु न वृद्धिः॥

**कारकात्क्रियायुक्ते॥ कारकादप्येते अणादयः प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये॥ कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम्। मथुराया**

---

१ स्वपरयोः कक्। स्वकीयम् परकीयम्। इत्यधिकम्॥

**आगतो जातो वा माथुरः । ग्रामे भवो ग्राम्यः ग्रामीणः । धुरं वहतीति धुर्यः धौरेयः ॥**

सूत्रम्—'कारकात्क्रियायुक्ते' ॥ कारकादिति कारकशब्दस्य पञ्चम्येकवचनान्तम् 'ङसिरत्' 'सवर्णे०' । क्रियायुक्ते क्रियया युक्तं क्रियायुक्तं तस्मिन् सप्तम्येकवचनान्तम् । द्विपदम् । कारकात् कर्तृकर्मकरणसंप्रदानाधारलक्षणान्तादपि एते अणादयः प्रत्यया भवन्ति । क्रियासहिते कर्तरि कर्मणि च वाच्ये सति । षट् कारकाणि सन्ति । ततः 'कारकेभ्यः' इति वक्तव्ये कारकादित्येकवचनं जात्यभिप्रायेण । कुङ्कुमशब्दात् तृतीयैकवचने 'टेन' 'अ इ ए' । कुङ्कुमेन रक्तं वस्त्रमिति विग्रहे । अत्र कुङ्कुमेनेत्यत्र करणं कारकम् । तथा रञ्जनरूपक्रियासहितं वस्त्रं कर्म । तच्चात्राभिधेयम् । अतोऽण् । 'समासप्रत्यययोः' इति तृतीयालोपः । 'उक्तार्थानामप्रयोगः' णित्त्वाद्वृद्धिः । 'यस्य लोपः' ॥ एवं कुसुम्भेन रक्तं वस्त्रं कौसुम्भम् । माञ्जिष्ठम् ॥ मथुराशब्दात् पञ्चम्येकवचने । 'ङितां यट्' 'सवर्णे' 'मथुराया आगत' इति वाक्ये । अत्र अपादानं कारकम् । 'विश्लेषावधौ' इति पञ्चमी । आगमनक्रियायुक्तो नरः कर्ताभिधेयस्ततोऽण् प्रत्ययः । 'आदिस्वरस्य०' 'यस्य लोपः' 'स्वरहीनं०' माथुरः ॥ एवं ग्रामे भवो ग्राम्यः । अत्र भवनक्रियायुक्ते कर्तरि अभिधेये ग्रामे इत्यधिकरणकारकात् ण्यप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' 'स्रोर्विं०' ॥ धुर्शब्दात् द्वितीयास्थाने धुरं वहतीति धुर्यः धौरेयो वा । एकत्र ण्यप्रत्ययः । तत्र वाग्रहणान्न वृद्धिः । अन्यत्र एयण् तत्र वृद्धिः धौ 'स्वर०' । 'य्वोर्विहसे' इति सूत्रे 'तद्धितयकारे न' इति वक्तव्यम् । तेन धुर्यः इत्यत्र दीर्घत्वाभावः । प्रक्रियामते तु 'न भकुर्छुराम्' इति दीर्घत्वनिषेधः । धौरेयः । अत्र वहनक्रियाश्रये कर्तरि अभिधेये धुरमिति कर्मकारकात् ण्यण्प्रत्यय एयण्प्रत्ययौ ॥ एवमात्मने हितः आत्मनीनः विश्वजनाय हितः विश्वजनीनः । अत्र संप्रदानकारकात् वक्ष्यमाण ईनः प्रत्ययः ॥

**केनेयेकाः ॥ क ईन इय इक एते प्रत्यया भवन्ति भवाद्यर्थेषु ॥ णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः–कर्णाटकः ॥ ग्रामादागतस्तत्र जातो वा ग्राम्यः–ग्रामीणः ॥ सध्रीचि भवो वा सध्रीचा युक्तः सध्रीचीनः । समीचि भवो वा समीचा युक्तः समीचीनः । तिरश्चि भवो वा तिरश्चा युक्तस्तिरश्चीनः । उदीचि भवो वा उदीचा युक्त उदीचीनः ॥**

सूत्रम्—'केनेयेकाः' ॥ कश्च ईनश्च इयश्च इकश्च केनेयेकाः प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रोर्विं०' एकपदम् । नाम्नो भवाद्यर्थेषु इदमर्थे च वाच्ये सति क ईन इय इक एते चत्वारः प्रत्यया भवन्ति । णित्त्वं चैषामिति । एषां कादीनां प्रत्ययानामणित्त्वेऽपि वैकल्पिकं णित्त्वं व्यवस्थितं विकल्पेन णित्त्वं भवति 'णितो वा' इत्युक्तत्वात् । तेन कचित्प्रयोगे विकल्पेन वृद्धिः । कचिन्नित्यं वृद्धिः । कचित्सर्वथापि वृद्धिर्न भवतीति भावार्थः ॥ कर्णाट—कर्णाटदेशे भवः कार्णाटकः कर्णाटको वा । उभयत्रापि कप्रत्ययः । एकत्र वृद्धिः । अन्यत्र न । प्रथमैकवचने 'स्रोर्विं०' अत्र भवार्थे कप्रत्ययः । ग्राम—ग्रामादागतस्तत्र जातो वा ग्रामीणः । आदिशब्दादत्र आगतार्थे ईनप्रत्ययः । 'यस्य लोपः' 'रूर्नो०' प्रथमैकव-

चने ॥ सध्र्यच् सध्र्यङ् एव सध्रीचीनः । अथवा सध्रीचि भवः सध्रीचीनः । अत्र स्वार्थे ईनप्रत्ययः । वर्णविश्लेषे सध्रि अच् 'अच्वेर्दीर्घश्च' इत्यलोपः इकारस्य च ई दीर्घः । 'स्वरहीनं०' प्रथमैकवचनम् ॥ एवं सम्यङ् एव । यद्वा समीचि भवः समीचीनः । सम्यच् शब्दात् ईनप्रत्ययः । 'अच्वेर्दीर्घश्च' समीच् । 'स्वरहीनं' प्रयोगद्वयेऽपि वैकल्पिकत्वान्न वृद्धिः । एवं तिरश्चि भवः तिरश्चीनः तिर्यच् ईनप्रत्ययः । 'तिरश्चादयः' इति तिरश्च् आदेशः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' ॥

**यलोपश्च ॥ नाम्नामुपधाभूतस्य यकारस्य लोपो भवति तद्धिते परे । यस्य लोपः । कानीनः । पौषी । क्षत्रे भवः क्षत्रियः । शुक्रियम् इन्द्रियम् ॥ अक्षैर्दीव्यतीत्याक्षिकः । तर्के चतुरः तार्किकः । शब्दे कुशलः शाब्दिकः । वैदिकी ॥**

'यलोपश्च' ॥ तद्धितप्रत्यये परे नाम्नामुपधाभूतस्य यकारस्य लोपो भवति । कन्याशब्दात् सप्तम्येकवचने । कन्यायां भवः कानीनः ईनप्रत्ययः । कल्पितणित्त्वाद्वृद्धिः 'यस्य लोपः' 'यलोपश्च' अनेन यकारलोपः । कानीनः प्रथमैकवचनम् ॥ ननु कन्यायाः कथमपत्यं संभवति । नैवं देवतामुनिमाहात्म्यात् कन्याया अपत्यं घटते । कानीनो द्वैपायनमुनिः ॥ एवं पुष्यः । पुष्येण युक्ता रात्रिः पौर्णमासी वा पौषी । अत्र 'कारकात्०' इति अण् वृद्धिः । पौ 'यलोपश्च' इति यकारलोपः । 'यस्य लोपः' 'स्वरहीनं०' 'त्रण ईप्' पुनः 'यस्य लोपः' 'स्वरहीनं०' 'हसेपः०' पौषी । यकारलोपप्रसङ्गादिहेदमुदाहरणम् ॥ अन्यत्रापि यलोपमाह

'मत्स्यस्य यस्य स्त्रीकारे ईये वाऽगस्त्यसूर्ययोः ।
तिष्यपुष्ययोर्नक्षत्रे अणि यस्य विभञ्जनः ॥'

विभञ्जनो लोपो नाम ॥ मत्सी ॥ अगस्त्यस्यापत्यमागस्त्यः । तस्यायमागस्तीयः । आगस्त्यस्येयं दिक् आगस्ती ॥ सूर्यस्यापत्यं सौर्यः । तत्र सौरीयः । सौर्यस्येयं दिक् सौरी ॥ तिष्येण युक्तः कालः तैषः । पुष्येण युक्तः कालः पौषः इत्यादि ॥ क्षतात्प्रहारात्त्रायते इति क्षत्रम् । क्षत्राद्भवं क्षत्रियं क्षत्रस्यापत्यं वा क्षत्रियः । अत्र इय् 'यस्य लोपः' 'स्वरही०' 'अतोऽम्' ॥ पक्षे अण् । क्षात्रः ॥ एवं शुक्राद्भवं शुक्रियं । शुक्रो देवताऽस्येति शुक्रियम् । तथा इन्द्राद्भवमिन्द्रियं । यद्वा इन्द्रस्यात्मनः प्रत्यक्षज्ञानकरणमिन्द्रियम् । क्षत्रियं शुक्रियमिति प्रयोगत्रयेऽपि विकल्पत्वात्सर्वथाऽपि न वृद्धिः ॥ तथैव अक्षैः पाशकैर्दीव्यति आक्षिकः । अत्र 'कारकात्०' इति क्रीडनार्थे इकप्रत्ययः । भवादित्वाद्वा णित्त्वम् । वृद्धिश्च यलोपः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' । शब्दमधीते शाब्दिकः । वेदे भवा वैदिकी स्तुतिः । इकप्रत्यये णित्त्वाश्रयणादणन्तत्वे 'त्रण ईप्' 'यस्य लोपः' । प्रथमैकवचने 'स्रोर्वि०' ॥ एवं शास्त्रेण जयतीति शास्त्रिकः । धनुषा जयतीति धानुष्कः । भवता प्रोक्तं भवत इदं वा भावत्कम् ॥

**त्यतनौ ॥ त्यश्च तनश्च त्यतनौ । किमादेरद्यादेर्भवाद्यर्थे त्यतनौ प्रत्ययौ भवतः । कुत्रत्यः । कुतस्त्यः । तत्रत्यः । ततस्त्यः । अत्रत्यः । अतस्त्यः । अद्यतनः । ह्यस्तनः । श्वस्तनः । सदातनः ॥**[1]

---

[1] पुराभवः पुरातनः । चिरं भवश्चिरंतनः । सायं भवः सायंतनः । प्राह्णे भवः प्राह्णेतनः । चिरादिभ्यस्त्नः चिरपरुत्परारिभ्यस्त्नो भवाद्यर्थे । चिरं भवश्चिरत्नः । परु भवः परुत्नः । परारि भवः परारित्नः ॥ इत्यधिकम् ॥

सूत्रम्—'त्यतनौ' ॥ त्यश्च तनश्च त्यतनौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' एकपदम् । किमादेरव्यादेश्चेति । किमादेर्भवाद्यर्थे त्यप्रत्ययो भवति । तथैव अद्यादेस्तनः । अद्याद्यव्यय-साहचर्यात् किमोऽव्ययं गृह्यते । भवाद्यर्थे इत्यत्रादिशब्दात् आगतसदृशा गृह्यन्ते । कुत्र भवः कुत्रत्यः । अत्र किमोऽव्ययाद्भवाद्यर्थे त्यप्रत्ययः । एवं तत्र भव इति तदोऽव्ययात् । अत्र भवोऽत्रत्यः इत्यत्र इदमोऽव्ययम् । तथा कुतो भवः कुत आगतो वा कुतस्त्यः । अमा सह भवः अमात्यः । इहभव इहत्यः इत्यादिशब्दाज्ज्ञेयम् ॥ अद्यभवोऽद्यतनः । अत्र अद्या-देर्भवार्थे तनप्रत्ययः । ह्यो गतदिने गतकल्पे भवो ह्यस्तनः । श्व आगामिदिने भवतीति श्वस्तनः । सदाभवः सदातनः । सना निरन्तरं भवतीति सनातनः । एवं दोषातनं सायंतनं चिरंतनं पुरातनं प्रगेतनं प्राक्तनम् इत्यादि ॥ 'दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः' । दाक्षि-णात्यः । पाश्चात्यः । पौरस्त्यः ॥

**स्वार्थेऽपि ॥ उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति ॥ देवदत्त एव दैवदत्तकः । चत्वारो वर्णा एव चातुर्वर्ण्यम् । चोर एव चौरः ॥**[1]

सूत्रम्—'स्वार्थेपि' ॥ स्वस्यार्थः स्वार्थः तस्मिन् सप्तम्येकवचनम् । 'अ इ ए' अपि प्रथमैक-वचनम् । 'अव्यया०' ॥ पूर्वोक्ता अणादयः केनेयेकाश्चत्वारः प्रत्ययाः स्वार्थेऽपत्यार्थवर्जि-तेऽपि मूलार्थे भवन्ति । देवदत्त एव देवदत्तकः अत्र स्वार्थे कः ॥ चतुर्वर्ण चत्वार एव वर्णा इति वर्णाण्ण्यप्रत्ययः जलतुम्बि० 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचनम् कुलशब्दवत् । चातुर्वर्ण्यम् ॥ चोर एव चौरः स्वार्थेऽण् । 'यस्य लोपः' वृद्धिः ॥ एवं द्वितीय एव द्वैतीयकः । तृतीय एव तार्तीयकः । त्रयोः लोका एव त्रैलोक्यम् ॥

**अणीनयोर्युष्मदस्मदोस्तवकादिः ॥ तावकम् । मामकम् । तावकीनः । मामकीनः । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः ॥**

'अणीनयोर्युष्मद०' ॥ इत्यादि वक्तव्यरूपम् ॥ युष्मद् अस्मद् इत्येतयोः अण् प्रत्यये ईन-प्रत्यये च परे तवकादिरादेशो भवति ॥ आदिशब्दात् द्विवचनबहुवचनयोर्विषये युष्मद-दोर्युष्माकास्माकौ आदेशौ भवतः ॥ अत्र युष्मद् एकत्वे अणीनयोः परयोस्तवकादेशः । द्वित्वे बहुत्वे च युष्माकः ॥ अस्मदश्च एकत्वे ममकः । द्वित्वे बहुत्वे च अस्माकः ॥ युष्मद् अस्मद् । तवायं तावकः । ममायं मामकः । उभयत्रापि अण् । एकस्य तवकः द्वितीयस्य ममकः । णित्त्वात् 'आदिस्वरस्य०' वृद्धिः । 'यस्य लोपः' प्रथमैकवचने 'स्रोर्वि०' ॥ पुनः युष्मद् अस्मद् । तवायं तावकीनः । ममायं मामकीनः । उभयत्रापि ईनप्रत्ययः । वृद्धिश्च 'यस्य लोपः' 'स्वरहीनं०' सिद्धम् । युष्मद् अस्मद् । युवयोः युष्माकं वा अयं यौष्माकः । आवयोः अस्माकं वा अयं आस्माकः । एवं युवयोः युष्माकं वा अयं यौष्माकीणः । आवयोरस्माकं वा अयमास्माकीनः । द्वाभ्यामण् द्वाभ्यामीनः । युष्मदो युष्माकः, अस्मदश्च अस्माकः । वृद्धिः । यौष्माकः आस्माकः सर्वत्र 'यस्य लोपः' यौष्माकीण इत्यत्र अवप्रत्याहारकवर्ग-पवर्गान्तरत्वात् 'रूनोणो०' ॥ एवं आस्माकीनः ॥

---

[1] अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ अव्ययस्य सर्वादेश्चान्त्यस्वरात्पूर्वोऽकच्प्रत्ययो भवति ॥ उच्चैरेवोच्चकैः । नीचैरेव नीचकैः । सर्व एव सर्वकः । विश्व एव विश्वकः । मया एव मयका । त्वया एव त्वयका । तदेव तकत् । यदेव यकत् । एतदेव एतकत् ॥ इत्यधिकम् ॥

**वत्तुल्ये ॥ तुल्ये सादृश्येऽर्थे वत् प्रत्ययो भवति ॥ चन्द्रवन्मुखम् । घटवदुदरम् । पटवत्कम्बलम् ॥**

सूत्रम्—'वत्तुल्ये' । वत् प्रथमैकवचनान्तम् । 'हसेपः०' । तुल्ये सप्तम्येकवचनान्तम् । तुल्ये सदृशत्वस्यार्थे उपमार्थे वाच्ये वत्प्रत्ययो भवति । चन्द्रेण तुल्यं सदृशं चन्द्रवत् । वत्प्रत्ययः 'क्त्वाद्यन्तं वा' इतिवत्प्रत्ययान्तस्याव्ययसंज्ञा ततः प्रथमैकवचने 'अव्यया०' । एवं घटेन तुल्यं घटवत् ॥ सार्वविभक्तिको वत् इति एके । यथा 'घटवत् रेणुकरण्डे तिष्ठति' किं ? निर्मलं नीरम् । अत्र घटेवत् घटवत् इति सप्तम्यन्तात् वत् ॥ गिरिवत्तुङ्गो गजः । इत्यादौ गुणतुल्यत्वेऽपि वत् । देवमिव भवन्तं पश्यामि देववत् । राज्ञेव व्यवहृतमनेन राजवत् । ब्राह्मणायेव देवदत्ताय ददाति ब्राह्मणवत् । पर्वतादिव आसनादवरोहति पर्वतवत् । ब्राह्मणस्येव वृत्तमस्येति ब्राह्मणवत् । मथुरायामिव पाटलिपुत्रे प्रासादाः मथुरावत् । एवं यथाप्रयोगं ज्ञेयम् ॥

**भावे तत्वयणः ॥ शब्दस्य प्रवृत्तिनिमित्तं भावः । तस्मिन्भावे त त्व यण् इत्येते प्रत्यया भवन्ति ॥ ब्राह्मणस्य भावो ब्राह्मणता । तान्तस्य नित्यं स्त्रीलिङ्गत्वादाप् ॥**

सूत्रम्—'भावे तत्वयणः' ॥ भावे सप्तम्येकवचनान्तम् । 'अ इ ए' । तत्वयण् तश्च त्वश्च यण् च तत्वयणः प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ अथ सूत्रं व्याचिख्यासुः प्रथमं भावशब्दं व्याचष्टे—शब्दस्य प्रवृत्तिनिमित्तं भावः । येन शब्दस्य प्रवृत्तिः प्रवर्तनं संपद्यते भवति तत्प्रवृत्तिनिमित्तम् । ततो यच्छशब्दस्य ब्राह्मणादेः प्रवृत्तेः कारणं स एव भावः । जातिद्रव्यगुणक्रियाभिः शब्दस्य प्रवृत्तिनिमित्तं भाव इत्युच्यते । तस्मिन् भावेऽर्थे तत्वयण् इत्येते त्रयः प्रत्यया भवन्ति । उदाहरणम्—ब्राह्मण । ब्राह्मणस्य भाव इति विग्रहे । अत्र ब्राह्मण इति जातिरूपः शब्दस्य यो भावः यजनादिक्रियानिष्ठत्वलक्षणः स ब्राह्मणशब्दस्य प्रवृत्तिनिमित्तमतस्तप्रत्ययः । अत्र तप्रत्ययान्तं नाम स्त्रीलिङ्गम् । त्वयण् इत्येतदन्तं नपुंसकलिङ्गम् । तत्र तान्तस्य नित्यं स्त्रीलिङ्गत्वात् । 'आवतः स्त्रियाम्' इत्याप् ॥

**समाहारे ता च त्रैर्गुणश्च ॥ त्रयाणां समाहारस्त्रेता ॥[1] (जनानां समूहो) जनता ॥ (ब्राह्मणस्य भावो) ब्राह्मणत्वम् । त्वयणन्तं नपुंसकम् । (ब्राह्मणस्य भावो) ब्राह्मण्यम् । (सुमनसो भावः) सौमनस्यम् । (सुभगस्य**

---

१ चकारात्समूहे प्रत्ययान्तरमपि । तेन हस्तिनां समूहो हास्तिकम् । धेनूनां समूहो धैनुकम् । अत्र कप्रत्ययः । तस्य णित्वादादिवृद्धिः ॥ **अचित्तवाचकादिकः** कवचानां समूहः कावचिकम् । अपूपानां समूहः आपूपिकम् । शष्कुलीनां समूहः शाष्कुलिकम् । कवचिन्शब्दादिकः कवचिनां समूहः कावचिकम् ॥ **गणिकाया ण्यः** गणिकानां समूहो गाणिक्यम् ॥ **केदाराद्यञ् च** चकारादिकः । केदाराणां समूहः कैदार्यम् । कैदारिकम् ॥ **युवत्यादेरण्** युवतीनां समूहो यौवतम् । भिक्षाणां समूहो भैक्षम् ॥ पाशादिभ्यो यः स च स्त्रियाम् ॥ पाशानां समूहः पाश्या । वातानां समूहो वात्या । रथानां समूहो रथ्या । खलानां समूहः खल्या ॥ **खलगोरथेभ्य इनित्रकट्याः** इनिः खलिनी । रथानां समूहो रथकट्या । रथ्येत्यपि । गवां समूहो गोत्रा । गव्येत्यादिप्रयोगा ऊह्याः ॥ इत्यधिकम् ॥

**भावः ) सौभाग्यम् । ( विदुषो भावो ) वैदुष्यम् । कर्मण्यपि यण् वक्तव्यः ॥[1] ब्राह्मणस्येदं कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राजन्यम्-राज्यम् । नो वा इति टेर्लोपः ॥[2]**

स्त्रीलिङ्गाधिकारात् पुनर्विशेषं वक्तव्येनाह—'समाहारे ता च त्रेर्गुणश्च' ॥ समाहारेऽर्थेपि ताप्रत्ययो भवति चशब्दात् तस्मिन् परे त्रेर्गुणः । ताप्रत्ययान्तश्च आबन्तवदित्यर्थः ॥ क्वचित्तु—'समाहारे तश्च' इति पश्चाद् 'आबतः स्त्रियाम्' । त्रि त्रयाणां समाहारस्त्रेता । अत्र ताप्रत्यये कृते त्रेर्गुणः प्रथमैकवचनम् । 'आपः' सेर्लोपः । जनानां समूहो जनता ॥ एवं त्वप्रत्यये ब्राह्मणस्य भावो ब्राह्मणत्वम् । यण्प्रत्यये ब्राह्मण्यम् । प्रथमैकवचनम् । 'अतोऽम्' ॥ सुमनस् । सुमनसो भावः सौमनस्यम् । अत्र द्रव्यम् । यण् वृद्धिः सौ । 'स्वरहीनं०' 'अतोऽम्' ॥ विद्वस् । विदुषो भावः वैदुष्यम् । अत्र क्रिया । अत्र यण् वृद्धिः । वै । 'वसोर्व उः' दु । 'किलातषः सः०' 'स्वरहीनं०' कुलवत् ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिः । तेन यूनो भावो यौवनम् ॥ रमणीयस्य भावो रामणीयकम् । वृद्धस्य भावो वार्धकम् । चपलस्य भावश्चापलयम् इत्यादावण्प्रत्ययोऽपि भवति ॥ कर्मण्यपि यण् वक्तव्यः । कर्मण्यपि कर्मार्थेऽपि यण् वक्तव्यः । ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ सुगमम् । राजन् राज्ञ इदं कर्म राज्यम् । राजन्यं च । उभयत्रापि कर्मणि यण् प्रत्ययः । एकत्र 'नो वा' इति टिलोपः राज् 'स्वरहीनं०' । अन्यत्र न टिलोपः । 'स्वरहीनं' उभयत्रापि प्रथमैकवचनम् । कुलशब्दवत् । जातावपि यण् । राज्ञो जातीयः राजन्यः । अपिशब्दात् मुनेः कर्म मौनम् । कर्मणि साधुः कर्मण्यः । सभायां साधुः सभ्यः । यशसे हितं यशस्यम् ॥

**लोहितादेर्डिमन् ॥ लोहितादेर्गणाद्भावेऽर्थे इमन् प्रत्ययो भवति स इमन् डित्संज्ञो भवति ॥ डित्वाट्टिलोपः ॥ लोहितस्य भावो लोहितिमा । ( कालस्य भावः ) कालिमा । ( लघोर्भावो ) लघिमा । ( अणोर्भावः ) अणिमा ॥[3]**

सूत्रम्—'लोहितादेर्डिमन्' ॥ लोहित आदिर्यस्य स लोहितादिस्तस्मात् । पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यलोपः 'स्रोर्विं०' । डिमन् प्रथमैकवचनान्तम् । 'हसेपः०' ॥ लोहितादेर्नाम्नो भावेऽर्थे इमन्प्रत्ययो भवति स च डित्संज्ञकः । परम् अनेकस्वराड्डिदिति वक्तव्यम् । तेन भूमा इत्यत्र एकस्वरे टिलोपो न । उदाहरणम्—लोहित । लोहितस्य रक्तस्य भावः इति विग्रहे । इमन्प्रत्ययः । डित्वाट्टिलोपः । 'डिति टेः' 'स्वरहीनं०' प्रथमैकवचने 'नोपधायाः' 'हसेपः०' 'नाम्नो नो०' लोहितिमा । अणोर्भावः अणिमा । तथा लघोर्भावः लघिमा । एवं महतो भावो महिमा । राजन्शब्दवत् ॥

**ऋ र इमनि ॥ पृथोर्भावः प्रथिमा । ( दृढस्य भावो ) द्रढिमा । बहोर्भाव इति विग्रहे ॥**

---

१ कर्मण्यपीत्यपिशब्दात्साध्वर्थे यण् तस्य णित्वं न । सामनि साधुः सामन्यः । कर्मणि साधुः कर्मण्यः । सभायां साधुः सभ्यः ॥ इत्यधिकम् ॥ २ अन्यत्रापि यण् प्रत्ययः समानस्य वा स इत्यादेशः समाने उदरे शयितः समानोदर्यः । सोदर्यः । शतेन क्रीतः शत्यः ॥ इत्यधिकम् ॥ ३ गुर्वादेः इति गुरोर्गरादेशः । गुरोर्भावो गरिमा । वरस्य भावो वरिमा ॥ इमनि लोपः इमनि प्रत्यये परे वकारस्य लोपो भवति । स्थूलस्य भावः स्थेमा । स्थूलस्य स्थवादेशः ॥ इत्यधिकम् ॥

'ऋ र इमनि' ॥ ऋ षष्ठ्येकवचनान्तम् । रः प्रथमैकवचनान्तम् । इमनि सप्तम्येकवचनान्तम् । पृथुमृदुदृढकृश इत्यादीनां नाम्नामादेः ऋकारस्य इमनि प्रत्यये परे र आदेशो भवति ॥ पृथु । पृथोर्भावः इति विग्रहे अनेन ऋस्थाने रः । टिलोपः पूर्ववत् प्रथिमा । एवं मृदोर्भावो म्रदिमा । दृढस्य भावो द्रढिमा । कृशस्य भावः क्रशिमा । हसादेर्लघोश्च ऋकारस्येति व्याख्येयं । तेन कृष्णिमा ऋजिमा इत्यादौ रकारो न भवति । सर्वत्र तद्धिते विकल्पानुवृत्तिरिति लोहितता लोहितत्वम् । लौहित्यम् । अणुता अणुत्वम् । लघुता लघुत्वं । पृथुता पृथुत्वं । मृदुता मृदुत्वं । कृशता कृशत्वं । दृढता दृढत्वम् । इत्याद्यपि भवति ॥

**बहोर्लोपो भू च बहोः ॥ बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति बहोः स्थाने भू चादेशः ॥ भूमा ॥**

सूत्रम्—'बहोर्लोपो भू च बहोः' । बहोरिति बहुशब्दस्य पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः । 'स्रोर्वि०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' पश्चात् 'नामिनो०' । भू प्रथमैकवचनान्तं सांकेतिकम् । पश्चात् 'हबे' 'उओ' । च प्रथमैकवचनान्तम् । 'अव्यया०' । बहोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः । पञ्चपदं सूत्रम् । बहुशब्दात्परेषामिमन्प्रत्ययादीनां संबन्धिन इकारस्य लोपो भवति,—बहुशब्दस्य च भूइत्ययमादेशो भवति । अत्र इमनादीनामित्यादिशब्दात् इमन् इष्ठ ईयस् इत्येते गृह्यन्ते । यद्यपि ईयस् ईकारोऽस्ति 'कारग्रहणे केवलग्रहणम्' इति न्यायस्तथापि भू चादेश इत्यत्र चकारान्नोक्तदोषः ॥ केचित्तु इमनादीनामादेर्लोपो भवत्येवं व्याख्यान्ति । अन्येतु इमन्नादीनामिवर्णस्य लोपमिति व्याख्यान्ति । बहु बहोर्भाव इति विग्रहे लोहितादित्वादिमन् । ऐकस्वरत्वाट्टेरलोपः[1]' । 'बहोर्लो०' इति इकारलोपः बहोर्भूआदेशः पूर्ववत् । प्रथमैकवचने सि 'नोपधायाः' 'ह्सेपः' 'नाम्नो नो०' भूमा ॥

**अस्त्यर्थे मतुः ॥ नाम्नो मतुः प्रत्ययो भवति अस्यास्मिन्वास्तीत्येतस्मिन्नर्थे ॥ उकारो नुम्विधानार्थः । गौरस्यास्तीति गोमान् गोमती ॥[2]**

सूत्रम्—'अस्त्यर्थे मतुः' ॥ अस्तेर्धातोरर्थोऽस्त्यर्थस्तस्मिन् सप्तम्येकवचनान्तम् 'अ इ ए' । मतुः प्रथमैकवचनान्तम् 'स्रोर्वि०' अस्यास्ति स्वेन अस्ति अस्मिन् विषये वा इदमस्ति इत्ये-

---

१ 'भाव्येकस्वरत्वादित्यर्थः । अन्यथा भूआदेशात्प्राक् कथमेकस्वरत्वं भवतीति बोध्यम् ॥ २ **फलबर्हरथेभ्य इनेनौ वा वक्तव्यौ** फलमस्यास्तीति फलिनः फली । बर्हमस्यास्तीति बर्हिणः बर्हीं । रथोऽस्यास्तीति रथिनः–रथी ॥ **बलवाताभ्यामूलः** ॥ बलूलः । वातूलः ॥ **वातातिसाराभ्यां किन्** ॥ वातकी अतिसारकी ॥ **ऊर्णाहंशुभंभ्यो युः अस्त्यर्थे** ॥ ऊर्णायुः । अहंयुः । शुभंयुः ॥ **अर्णःकेशयोर्वः अर्णसः सलोपश्च** । अर्णवः केशवः ॥ **शंकंभ्यां बभयुस्तितुतयसः** । आभ्यामेते प्रत्ययाः स्युरस्त्यर्थे ॥ शं विद्यते यस्यासौ शंबः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । कं विद्यते यस्यासौ कंबः । कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । इत्यादि ॥ **लोमादिभ्यः शः** लोमशः । **पामादेर्नः** पामनः । अङ्गना । **पिच्छादेरिलच्** पिच्छिलः ॥ **फेनादिभ्य इलच्** फेनिलः ॥ **तुन्दिवलिवटिभ्या भः** तुन्दिभः । वलिभः । वटिभः ॥ **कृष्यादिभ्या वलच् दीर्घश्च** कृषीवलः ॥ **प्रज्ञार्चाश्रद्धावृत्तिभ्योऽण्** प्रज्ञाऽस्यास्तीति प्राज्ञः । आर्चः । श्राद्धः । वार्तः । **शृङ्गवृन्दाभ्यामारकच्** प्रशस्तं शृङ्गमस्यास्तीति शृङ्गारकः । प्रशस्तं वृन्दमस्यास्तीति वृन्दारकः । **मध्वादे रः** मधुरः । मुखरः । शुषिरः रन्ध्रवानित्यर्थः । कुञ्जरः । कुञ्जो हस्तिहनुः ॥ **सिध्मादेर्लः** सिध्मास्यास्तीति सिध्मलः । चूडास्यास्तीति चूडालः ॥ इत्यधिकम् ॥

तस्मिन्नर्थे तद्धितान्नाम्नो मतुप्रत्ययो भवति। अत्र मतुप्रत्यये उकारो 'ञितो नुम्' इति नुम्-विधानार्थस्तथा 'ष्ञितः' इति ईप्विधानार्थश्च। गो द्विस्थाने। गौरस्यास्तीति, द्वितीये स्त्रीविशेषणे गौरस्या अस्तीति। उभयत्रापि मतुः। मत्। आद्ये प्रथमैकवचने 'ञितो नुम्' मनत् 'अत्वसोः सौ' दीर्घः मा 'हसेपः०' 'संयोगान्तस्य०' गोमान्॥ द्वितीये 'ष्ञितः' इति ईप्। 'स्वरहीनं०' 'हसेप०ः' गोमती। नपुंसकलिङ्गे तु गोमत्। एवं श्रीमान् श्रीमती॥ नित्ययोगातिशयप्रशस्तादिविशिष्टे अस्त्यर्थे मतुरिति केचित्। तन्मते नित्यं श्रीरस्यस्येति श्रीमान्। अतिशयिता प्रीतिरस्यास्तीति प्रीतिमान्। प्रशस्ता धीरस्येति धीमान्॥

**अइकौ च मत्वर्थे॥ मत्वर्थे अइकौ प्रत्ययौ भवतः॥ वैजयन्ती पताका यस्यासौ वैजयन्तः। माया विद्यते यस्यासौ मायिकः॥**

सूत्रम्। 'अइकौ च मत्वर्थे'॥ अश्च इकश्च अइकौ प्रथमाद्विवचनान्तम्। मतोः अर्थः मत्वर्थस्तस्मिन् सप्तम्येकवचनम्। यद्यपि समासे संधिर्निश्चयेन स्यात्तथाप्यत्र स्पष्टार्थत्वात् 'अइकौ०' इत्यत्र संधिर्न कृतः। क्वचित्तु 'एकौ च मत्वर्थे' इत्येव दृश्यते। मत्वर्थे इति मतुप्रत्ययार्थे अर्थादस्त्यर्थे एव नाम्नः अइकौ इत्येतौ प्रत्ययौ भवतः। वैजयन्ती वैजयन्ती नाम पताका ध्वजो विद्यतेऽस्मिन्निति विग्रहे अप्रत्ययः। 'यस्येति' ईलोपः। 'स्वरहीनं०' 'स्रो०' वैजयन्तः प्रासादः॥ तथा मायास्त्यस्येति मायिकः। पूर्ववत् इकप्रत्ययः। 'यस्य लोपः' 'स्वरहीनं०' मायिकः॥ क्वचिदप्रत्ययो णिदपि। प्रज्ञास्यास्तीति प्राज्ञः। श्रद्धा अस्यास्तीति श्राद्धः॥

**मान्तोपधाद्वत्विनौ॥ मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे॥[1] किं विद्यते यस्यासौ किंवान्। लक्ष्मीवान् शमी॥ भवान्। धनवान् धनी दण्डी छत्री दृषद्वती। कामो विद्यते यस्यासौ कामी। कृमयो विद्यन्ते यस्यासौ कृमिवान्। शमोऽस्यास्तीति शमी। दमोऽस्यास्तीति दमी॥**

सूत्रम्—'मान्तोपधाद्वत्विनौ'॥ मश्च अश्च मौ अत्र 'सवर्णे०' 'ओ औ औ' अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य स मान्तोपधस्तस्मात् पञ्चम्येकवचनान्तम्। पुनः पूर्वं 'सवर्णे०' अग्रे वत्विनौ वतुश्च इन् च वत्विनौ प्रथमाद्विवचनान्तम्। 'स्वरहीनं०' पूर्वं 'चपा अबे जबाः'॥ द्विपदमिदम्। मकारान्तान्मकारोपधाच्च तथा अकारान्तादकारोपधाच्च यद्वा अवर्णान्तादवर्णोपधाच्च नाम्नोऽस्त्यर्थे वतु इन् एतौ प्रत्ययौ भवतः। इन्प्रत्ययस्तु अकारान्तादेव भवत्यस्त्यर्थे॥ प्रथमं मान्तोदाहरणम्। किम्। किमस्यास्तीति वाक्ये अत्र वतु। वत्। क्वचित्पदान्तताश्रयणात् 'मोऽनु०' प्रथमैकवचने। 'ञितो नुम्' 'अत्वसोः सौ'

---

1 मघोऽस्यास्तीति मघवान्॥ श्रियां यशसि सौभाग्ये योनौ कान्तौ महिम्नि च। सूर्ये संज्ञाविशेषे च मृगाङ्केऽपि भगः स्मृतः॥ भगं भाग्यं विद्यते यस्यासौ भगवान्। लक्ष्मीरस्यास्तीति लक्ष्मीवान्। पुत्रोऽस्यास्तीति पुत्रवान्। धनमस्यास्तीति धनवान्-धनी। छत्रमस्यास्तीति छत्रवान्-छत्री। इनां शौ सौ। दण्डो विद्यते यस्यासौ दण्डवान् दण्डी। क्षेत्रं विद्यते यस्यासौ क्षेत्रवान् क्षेत्री। विद्यास्यास्तीति विद्यावान्। दृषदो विद्यन्ते यस्यासौ दृषद्वान् दृषद्वती भूमिः। ष्ञितः॥ यशोऽस्यास्तीति यशस्वान्॥ इत्यधिकम्॥

'हसेपः०' 'संयोगान्तस्य०' किंवान् ॥ लक्ष्मी। लक्ष्मीः अस्यास्तीति लक्ष्मीवान्। अत्र मकारोपधत्वात् वतुः ॥ नोर्म्यादिभ्यः इति ऊर्मिमान् भूमिमान् इत्यादौ मान्तोपधत्वेऽपि न वतुप्रत्ययः, किंतु मतुप्रत्ययः ॥ शम। शमोऽस्यास्तीति शमी। अत्र मकारोपधत्वादकारान्तत्वाच्च इन्। एवं भानि नक्षत्राणि सन्त्यस्येति भवान् चन्द्रः। यद्वा भानि नक्षत्राणि सन्त्यस्मिन् इति भवान् आकाशः ॥ अत्र अकारान्ताद् वतुः ॥ एवं मालावान् दयावान्। अत्र आकारान्ताद् वतुः ॥ धन छत्र दण्ड। धनमस्यास्तीति धनी। छत्रमस्यास्तीति छत्री। दण्डोऽस्यास्तीति दण्डी। एषु सर्वत्र इन् अकारान्तेभ्यः। 'यस्य लोपः' 'स्वरहीनं०'। त्रिष्वपि प्रथमैकवचने 'इनां शौ सौ दीर्घः' 'हसेपः०' 'नाम्नो नो०' ॥ दृषदः सन्त्यस्यामिति दृषद्वती। अकारोपधत्वाद्वतुः। उकारानुबन्धत्वात् 'ष्वितः' इति ईप् ॥ कचिद्वतुप्रत्यये परे दीर्घत्वमपि भवति यथा—अमरावती पद्मावती मृगावती पुष्करावती कुशावती भोगावती अहीवती पुष्पावती शरावती ॥ कचिन्मतुप्रत्ययेपि दीर्घत्वम्। यथा—हनूमान् ॥

**तडिदादिभ्यश्च ॥ तडिदादिभ्यः शब्देभ्यो वतुप्रत्ययो भवति ॥ तडिद्विद्यते यस्यासौ तडित्वान्।[1] [भानि नक्षत्राणि विद्यते यस्यासौ भवान्।] यशस्वान्। मरुद्विद्यते यस्यासौ मरुत्वान् ॥**

सांप्रतं मान्तोपधत्वं विनाऽपि वतुप्रत्ययं वक्तव्येनाह—'तडिदादिभ्यश्च' ॥ तडिदादिभ्यो मान्तोपधत्वरहितेभ्योऽपि वतुप्रत्ययो भवति ॥ चकारात्तडिदित्यत्र चपस्य जबत्वं न भवति। तडित्। तडिदस्यास्तीति तडित्वान्। एवं विद्युदस्यास्तीति विद्युत्वान् उभयत्रापि वतुप्रत्ययो भवति। पूर्ववत्। एवं सरस्वान् मरुत्वान्। समिध्वान् ॥ चकारात् राजन्वान् राजन्वती सौराज्ये। उदधौ उदन्वान् एतौ निपात्यौ ॥ तथा चूडासिध्मादेश्च लप्रत्ययः। चूडाऽस्यस्येति चूडालः। सिध्मलः। मांसलः। इत्यादि ॥ ऐश्वर्ये स्वशब्दादामिन्। स्वमैश्वर्यमस्यस्येति स्वामी ॥

**एतत्किंयत्तद्भ्यः परिमाणे वतुः ॥ एतत्किंयत्तद्भ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति ॥**

'एतत्किंयत्तद्भ्यः०' इत्यादि। एतद् किम् यद् तद् एतेभ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति। उकार उच्चारणार्थः। यद् तद्। यत्परिमाणमस्य यावान्। तत्परिमाणमस्य तावान्। परिमाणे वतुः ॥

**यत्तदोरा ॥ यत्तदोष्टेरात्वं भवति वतौ परे। यत्परिमाणमस्येति यावान्। तावान् ॥**

'यत्तदोरा' ॥ यत्तद् एतयोष्टेराकारो भवति परिमाणेऽर्थे वतौ परे इत्यर्थः। यावत् तावत्। उभयत्रापि प्रथमैकवचने। 'त्रितो नुम्' 'अत्वसोः सौ' 'हसेपः०' 'संयोगान्तस्य०' इति तलोपः। सिद्धम्। स्त्रीलिङ्गे यावती। नपुंसके यावत् ॥ किम्। किं परिमाणमस्येति कियान्। 'एतत्किं०' वतुप्रत्ययः ॥

---

१ तकारान्तस्य सकारान्तस्य हसादावस्त्यर्थे प्रत्यये परे अपदान्तता वक्तव्या यञ्जरादौ प्रत्ययमात्रे परे सर्वेषामपदान्तता भवति। ईये परे पदान्तता। तेन भवदीयम् ॥ इत्यधिकम् ॥

**किमः किर्यश्च ॥** किमूशब्दस्य किरादेशो भवति वतोर्वकारस्य यकारादेशो भवति ॥ किं परिमाणमस्येति कियान् ॥ **आ इश्चैतदो वा ॥** एतदष्टेर्वा आ इश् च वा भवति वतौ परे ॥[१] एतत्परिमाणमस्येति एतावान् इयान् ॥[२]

'किमः किर्यश्च' वतुप्रत्यये परे किमूशब्दस्य कि इत्यादेशः कृत्स्नस्य भवति । वतोर्वकारस्य च यकारो भवति । अनेन किमः किः वस्य यः । चकाराच्छित्वं विनापि सर्वस्य किरादेशः । प्रथमैकवचने पूर्ववत् । एतद् उभयत्रापि वतुप्रत्ययः । 'आ इश्च एतदो वा' ॥ वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ भवतः । 'गुरुः शिच्च सर्वस्य' इति न्यायात्कृत्स्नस्य आ इति गुरुस्तथापि चकारग्रहणादन्त्यस्यैव टेराकारादेशो न कृत्स्नस्य । इश् इति शित् । 'गुरुः शिच्च' इति शित्त्वात्सर्वस्य एतद् इत्यस्य इ आदेशः । वाग्रहणाद्यत्र इशादेशस्तत्र वकारस्य यकारः । अन्यत्र न । एतावत् इयत् प्रथमैकवचने पूर्ववत् । 'त्रितो नुम्' 'हसेपः०' 'संयोगान्तस्य०' ॥

**तुन्दादेरिलः ॥** तुन्दादेर्गणात् इलप्रत्ययो भवति ( प्रशस्तं तुन्दं यस्यासौ ) तुन्दिलः ॥ **औन्नत्ये दन्तादुरः ॥** औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरः प्रत्ययो भवति ( उन्नता दन्ता यस्यासौ ) दन्तुरः ॥

'तुन्दादेरिलः' ॥ तुन्दादेः शब्दात् अस्त्यर्थे इलप्रत्ययो भवति । तुन्द । तुन्दमस्यास्तीति तुन्दिलः । इलप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचनम् ॥ एवम्—उदरिलः फेनिलः ॥ 'औन्नत्ये दन्तादुरः' दन्तशब्दादौन्नत्ये उच्चत्वेऽर्थे उरप्रत्ययो भवति । उन्नता उच्चा दन्ता अस्येति दन्तुरः ॥

**श्रद्धादेर्लुः ॥** श्रद्धा विद्यते यस्यासौ श्रद्धालुः । कृपा विद्यते यस्यासौ कृपालुः । मायालुः । दयालुः ॥

'श्रद्धादेर्लुः' ॥ श्रद्धादेर्नाम्नोऽस्त्यर्थे लुप्रत्ययो भवति । श्रद्धा दया कृपा । श्रद्धा अस्यास्तीति श्रद्धालुः । दयाऽस्यास्तीति दयालुः । कृपाऽस्यास्तीति कृपालुः । सर्वत्र लुप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' ॥

**अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्यः ॥** तपो विद्यते यस्यासौ तपस्वी । यशस्वी । मायावी । मेधावी । स्रक् विद्यते यस्यासौ स्रग्वी ॥

अस्मायामेधा० ॥ अस् इति । 'वचादेरस्' इत्युणादिसूत्रोक्तोऽसूप्रत्ययः तदन्तान्नाम्नः पुनः मेधामायास्रज्शब्देभ्यश्च अस्त्यर्थे विनिः प्रत्ययो वक्तव्यः । इकार उच्चारणार्थः । तपस् । 'तप संतापे' इत्यस्यासन्तस्य रूपम् । विन् । तपोऽस्यास्तीति तपस्वी । दण्डिन्शब्दवत् । प्रथमैकवचने । 'इनां शौ सौ' 'हसेपः०' 'नाम्नो नो०'॥ एवं यशस्वी । एवं मायाऽस्यास्तीति मायावी । मेधा बुद्धिरस्यास्तीति मेधावी । स्रक् माला अस्यास्तीति स्रग्वी । 'दिशाम्' इति कुत्वम् ।

---

१ यस्मिन्पक्षे आत्वं न तस्मिन्पक्षे इशादेशः स्यात् शकारः सर्वादेशार्थः चकाराद्वतोर्वकारस्य यकारः ॥ इत्यधिकम् ॥ २ वाशब्दोऽनुक्तसमुच्चयार्थः । तेन इदमो वतुप्रत्ययः । इदम इश् चकाराद्वतोर्वकारस्य यश्चेति वाच्यम् । इदं परिमाणं यस्य स इयान् । शकारः सर्वादेशार्थः ॥ इत्यधिकम् ॥

स्रज् इत्यत्र अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तताश्रयणात् [ 'चोः कुः' ] जस्य गः। प्रथमैकवचने सिः पूर्ववत्॥

**वाचो ग्मिनिः॥ वाच्शब्दात् ग्मिनिः प्रत्ययो भवति अस्त्यर्थे॥ प्रशस्ता वाक् विद्यते यस्यासौ वाग्मी॥**[1]

'वाचो ग्मिनिः'॥ वाच्शब्दात् ग्मिन्प्रत्ययो भवति। गकारोऽनुबन्धः मकारादित्वनिषेधार्थः। तेन 'ञमे ञमा वा' इति न भवति। वाच् वाग्। प्रशस्ता वागस्यास्तीति वाग्मी ग्मिन्प्रत्ययः। 'चोः कुः' पदान्तताश्रयणात् 'चपा अबे जबाः' कस्य गः। 'स्वरहीनं०' दण्डिन्शब्दवत्॥ गोरपि अस्त्यर्थे मिनिः। गावो विद्यन्तेऽस्येति गोमी॥

**आलाटौ कुत्सितभाषिणि॥ कुत्सितभाषिण्यर्थे वाच्ये सति आलाटौ प्रत्ययौ भवतः। कुत्सिता वाक् विद्यते यस्यासौ वाचालः। वाचाटः॥**[2]

'आलाटौ कुत्सितभाषिणि'॥ आलश्च आटश्च आलाटौ प्रथमाद्विवचनम्। बहुभाषिणीत्येके। कुत्सितं भाषते इत्येवंशीलः कुत्सितभाषी तस्मिन् अभिधेये वाच्शब्दात् आल आट इत्येतौ प्रत्ययौ भवतः॥ वाच् २। कुत्सिता वागस्येति वाचालः। वाचाटः। एकत्र आलः अन्यत्र आटः। 'स्वर०' 'स्रोर्वि०'॥

**ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः॥ ईषदपरिसमाप्तः सर्वज्ञ इति सर्वज्ञकल्पः। ( ईषदपरिसमाप्तः पटुरिति ) पटुदेश्यः। पटुदेशीयः। ( ईषदूनः कविरिति ) कविदेश्यः। कविदेशीयः॥**

'ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः'॥ अपरिसमाप्तौ अपरिपूर्णत्वे किंचिन्न्यूनत्वे वाच्ये नाम्नः कल्प देश्य देशीय इत्येते त्रयः प्रत्यया भवन्ति। सर्वज्ञ पटु कवि। ईषदपरिपूर्णसर्वज्ञः सर्वज्ञकल्पः। ईषदसमाप्तः पटुः पटुदेश्यः। ईषदसमाप्तःपटुः पटुदेशीयः। पटुश्चतुरः। ईषदसमाप्तः कविः कविदेशीयः। त्रिषु क्रमेण कल्पदेश्यदेशीयप्रत्ययाः॥

**प्रशंसायां रूपः॥ प्रशंसायां रूपः प्रत्ययो भवति॥ प्रशस्तो वैयाकरणो वैयाकरणरूपः॥**

**पाशः कुत्सायाम्॥ कुत्सायां वाच्यायां सत्यां पाशः प्रत्ययो भवति॥ कुत्सितो वैयाकरणो वैयाकरणपाशः॥**

**भूतपूर्वे चरट्॥ भूतपूर्वेऽर्थे वाच्ये सति चरट् प्रत्ययो भवति॥ पूर्वं दृष्ट इति दृष्टचरः। स्त्री चेद्दृष्टचरी॥**

'प्रशंसायां रूपः'॥ प्रशंसायां श्लाघायां वाच्यमानायां रूपप्रत्ययो भवति। वैयाकरणः। प्रशस्तो वैयाकरणो व्याकरणस्य पाठी वैयाकरणरूपः॥ केचिदत्र कुत्सायां पाश इत्यपि

---

[1] एकादाकिनिच्चासहाये। न विद्यते एकः सहायो यस्य सः एकाकी। स्त्री चेत् एकाकिनी॥ इत्यधिकम्॥

[2] लः समाहारप्रकृष्टयोः नाम्नः समाहारप्रकृष्टयोर्विषये लः प्रत्ययो भवति। क्लेशस्य समूहः प्रकृष्टः क्लेशो वा क्लेशलः॥ इत्यधिकम्॥

पठन्ति । तन्मते कुत्सितः पाषण्डः पाषण्डपाशः । एवं भिषक्पाशः । इत्युदाहरणम् ॥ 'भूतपूर्वे चरट्' पूर्वं भूत इति निदर्शनादिक्रियया तत्समयात्प्राक् विषयीभूतो भूतपूर्वः । तस्मिन्नर्थे चरट् प्रत्ययो भवति । दृष्ट । द्विस्थाने पूर्वं दृष्ट इति विग्रहे अत्र दर्शनक्रियायां वर्तमानकालात्प्रागपि दृष्टत्वात्स्मृतिज्ञानेन विषयीभूतत्वाद्भूतपूर्वोऽतश्चरट् । उभयत्रापि टकार ईबर्थः । एकत्र पुंस्त्वे देववत् । अन्यत्र टित्त्वादीप् । 'ष्णितः' 'यस्य लोपः 'स्वरहीनं' नदीवत् ॥

**प्राचुर्यविकारप्राधान्यादिषु मयट् प्रत्ययो भवति ॥ अन्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः । गोमयम् ॥**

**तदधीते वेद वेत्यत्राणवक्तव्यः ॥ व्याकरणमधीते वेद वा वैयाकरणः ॥ शोभनोऽश्वः स्वश्वः । तं वेदेति सौवश्वः । न्याये कुशलो नैयायिकः ॥**

'प्राचुर्यविकारप्राधान्यादिषु मयट्' ॥ प्रचुरस्य भावः प्राचुर्यं, विकारोऽवस्थान्तरापादनं, प्राधान्यं मुख्यत्वं तथा आदिशब्दान्निर्वर्तनस्वरूपपुरीषावयवेषु च । एष्वर्थेषु नाम्नो मयट्-प्रत्ययो भवति । उदाहरणानि—अन्न । अन्नं प्रचुरं यत्र सोऽन्नमयो यज्ञः । अत्र प्राचुर्यार्थे मयट् । टित्त्वादीप् । अन्नमयी स्थाली ॥ मृद् । मृदो विकारो मृन्मयः । अत्र विकारे मयट् । 'वावसाने' दस्य तः ॥ 'ञमे ञमा वा' तस्य नः । 'स्वरहीनं०' । यद्वा 'क्वचिज्जबानां ञमा एष्टव्याः' इति दस्य नः 'स्वरहीनं०' मृन्मयो घटः ॥ स्त्री प्रधानाऽस्येति स्त्रीमयो जाल्मः । जाल्मो मूर्खः । अविचार्यकारीत्यर्थः । अमृतेन निर्वृत्तो अमृतमेव रूपं वा यस्य सोऽमृतम-यश्चन्द्रः । अत्र निर्वर्तनार्थे मयट् ॥ गोः पुरीषं गोमयम् ॥ शरस्यावयवाः शरमयाः ॥

'तदधीते०' ॥ तच्छास्त्रादि अधीते पठति वेद जानाति वा इत्येतस्मिन्नर्थे अण् प्रत्ययो भवति । उदाहरणम् । व्याकरणमधीते अथवा वेद जानातीति वैयाकरणः । सुष्ठु शोभनो-ऽश्वः स्वश्वः तं वेदेति सौवश्वः पुरुषः । व्याकरण, स्वश्व, एकत्राध्ययनज्ञानार्थेऽण् । अन्यत्र वेदेत्यर्थेऽण् । णकारो वृद्ध्यर्थः ॥

**न संधिय्वोर्युट् च ॥ सन्धिजौ य्वौ सन्धिय्वौ तयोः । सन्धिजयोर्यकारवका-रयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति किंतु तयोर्युडागमो भवति । तेन इट् उट् इत्येतावागमौ भवतः वर्णविश्लेषं कृत्वा यकारात्पूर्वं इकारः । वकारात्पूर्वं उकारः । पश्चात् 'आदिस्वरस्य ञ्णिति च वृद्धिः' ॥**[1]

नन्वत्र स्वपदे वृद्धिराकारः क्रियतां तत्राशङ्कायामाह—सूत्रम्—'न संधिय्वोर्युट् च' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । संधिय्वोः इत्यस्य समासो वृत्तावेव विहितः । यथा संधिजौ य्वौ संधिय्वौ तयोः संधिय्वोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' इ च उट् च युट् प्रथमैकवचनान्तम् । 'हसेपः०' । च प्रथमैकवचनान्तम् । 'अव्यया०' पूर्वं 'नामिनोरः' चतुःपदम् ॥ संधिजातयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति । अत्र व्या इत्यत्र वि आङ् उपसर्गयोर्योगे संधिजो यकारस्तत्संबन्धी स्वर आकारः स च

१ चटकादैरण् चटकस्यापत्यं चाटकैरः ॥ कल्याण्यादीनामिनेयः ॥ कल्याण्या अपत्यं काल्याणिनेयः । इत्य. ॥

वृद्धिरूप एव । अतो न तस्य वृद्धिकार्यं किंतु य्वोर्यकारवकारयोर्युडागमः । तत्संबन्धी स्वर आकारः स च वृद्धिरूपः । एतस्य णित्त्वाद्वृद्धिसंभवे प्रस्तुतसूत्रेण वृद्धिनिषेधः ततः किंतु तयोर्यकारवकारयोर्युडागमो भवति । युडागमः इति कोऽर्थः । तथैतदेव विवृणोति । इट् उट् इत्येतावागमौ ॥ ननु कथं संश्लिष्टस्य यकारस्य वकारस्य च इट् उट् आगमौ भवत इत्याह—वर्णविश्लेषमिति । व्य् आ, स्व् अ इति वर्णविश्लेषं वियोजनमसंयोगेनोच्चारणं कृत्वा यकारात्पूर्वमिकारः कर्तव्यः,—वकारात्पूर्वमुकारः कर्तव्यः । 'स्वरहीनं०' विया सुव इति जातम् । पश्चात् 'आदिस्वरस्य०' इति वृद्धिः । वैया सौव । 'यस्य लोपः' 'स्वरहीनं०' । प्रथमैकवचने 'स्नोर्वि०' वैयाकरणः । सौवश्वः । इति सिद्ध्यति ॥ अन्यत्राप्यर्थे स्वस्ति आह इति सौवस्तिकः । द्वारे नियुक्त इति दौवारिकः । एवमैतिहासिकः पौराणिकः । स्वस्येदं सौवम् । त्रिपक्षस्येदं त्रैपक्षम् । व्यर्थस्य भावो वैयर्थ्यम् । इत्यादि ॥

**इतो जातार्थे ॥ जातार्थे इतः प्रत्ययो भवति ॥ (लज्जा संजाता यस्यासौ) लज्जितः[१] ॥**

'इतो जातार्थे' ॥ इतः प्रथमैकवचनान्तम् । जातार्थे सप्तम्येकवचनान्तम् । जातार्थे उत्पन्नार्थे इतप्रत्ययो भवति । उदाहरणम् । लज्जा । लज्जा । जाता अस्येति लज्जितः । जातार्थे इतप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' 'स्नोर्वि०' । एवं पुष्पितः फलितो वृक्षः । तारकितं नभः । पुलकितः । कन्दलितः । कण्टकितः । क्षुधितः ॥

**तरतमेयस्विष्ठाः प्रकर्षे ॥ अतिशयेऽर्थे तरः तमः इयसुः इष्ठः इत्येते प्रत्यया भवन्ति ॥ अतिशयेन कृष्णः कृष्णतरः । (अतिशयेन कृष्णः) कृष्णतमः । (अतिशयेन शुक्लः) शुक्लतरः शुक्लतमः ॥ ईयस्विष्ठौ ङिताविति वक्तव्यौ ॥ अतिशयेन लघुर्लघीयान् । लघीयसी । लघिष्ठः । अतिश० पापः इति पापीयान् । अतिश० पापिनी इति पापीयसी । पापिष्ठः ॥**

'तरतमेयस्विष्ठाः प्रकर्षे' ॥ तरश्च तमश्च ईयसुश्च इष्ठश्च तरतमेयस्विष्ठाः प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्नोर्वि०' । प्रकर्षे सप्तम्येकवचनान्तम् । 'अ इ ए' प्रकर्षेऽतिशयार्थे नाम्नस्तर तम ईयसु इष्ठ एते चत्वारः प्रत्यया भवन्ति । इष्ठ प्रत्ययः ठान्तः । कृष्ण । अतिशयेन कृष्णः श्यामः इति कृष्णतरः कृष्णतमः । एकत्र तरप्रत्ययः । अन्यत्र तमप्रत्ययः । प्रथमैकवचने 'स्नोर्वि०' एवं शुक्लतरः शुक्लतमः ॥ ईयस्विष्ठाविति । ईयसु इष्ठः इत्येतौ ङित्संज्ञौ वक्तव्यौ । अतिशयेन लघुर्लघीयान् । अतिशयेन लघुः स्त्री लघीयसी । अतियेन लघुर्लघिष्ठः । रूपद्वये ईयसु, तृतीये इष्ठः । 'ईयस्विष्ठौ ङितौ०' ङित्त्वादुकारलोपः । 'स्वरहीनं०' । आद्ये प्रथमैकवचने उकारानुबन्धत्वात् 'ञितो नुम्' इति नुमागमः । 'न्सस्महतो०' 'हसेपः०' 'संयोगान्तस्य०' द्वितीये । 'ङ्रितः' 'स्वरहीनं०' प्रथमैकवचने । 'हसेपः से०' । तृतीये इष्ठप्रत्ययः । ङित्त्वाट्टिलोपः । 'स्वरहीनं०' 'स्नोर्वि०' लघिष्ठः ॥ पाप । अत्र

---

१ विन्मतुवतुतृप्रत्ययानां लोपश्च इष्ठादौ ॥ मतिर्विद्यते यस्यासौ मतिमान् । अतिश० मतिमान् इति मतिष्ठः । अतिश० मायावी इति मायिष्ठः । अतिश० धनवान् इति धनिष्ठः । अतिश० कर्ता इति करिष्ठः इत्यधिकम् ॥

पापशब्दः पापयुक्तस्य नरस्य वाचको न पापस्य। यतः पापशब्दस्य व्याकरणान्तरेषु इन्-प्रतिषेधोऽस्तीति। ( नो पापदरिद्राभ्यामिन् छन्दसि तु भवति )। अतः अतिशयेन पापः पापवान् पुरुषः इति पापीयान्। स्त्री चेत् पापीयसी। उभयत्रापि ईयस्। डित्वाट्टिलोपः। 'स्वरहीनं०' आद्ये प्रथमैकवचने लघीयस्वत्। द्वितीये 'स्त्रितः' इति ईप्। पुनः अतिशयेन पापः इति पापिष्ठः। पापवान् पुरुषः। इष्ठप्रत्ययः। डित्वाट्टिलोपः। 'स्वरही०' प्रथमैकवचने 'स्त्रोर्वि०' पापिष्ठः॥

**गुर्वादेरिष्ठेमेयस्सु गरादिष्टयलोपश्च ॥ इष्ठेमेयस्सु परतो गुर्वादेर्गरादिरादेशो भवति टेरलोपः॥ गुरोर्गरादेशः–अतिशयेन गुरुः गरीयान् गरीयसी गरिष्ठः॥ गुरोर्भावो गरिमा॥ प्रियस्य प्रादेशः। प्रेयान् प्रेयसी प्रेष्ठः। लोहितादेर्डिमन्। प्रेमा॥ स्थिरस्य स्थादेशः। स्थेयान् स्थेयसी स्थेष्ठः॥ स्थूलस्य स्थवूआदेशः। स्थवीयान् स्थवीयसी स्थविष्ठः॥ प्रशस्यस्य श्रादेशः। श्रेयान् श्रेयसी श्रेष्ठः॥ वृद्धस्य ज्यादेशः॥**

'गुर्वादेरिष्ठेमेयस्सु गरादिष्टयलोपश्च' गुर्वादेः शब्दस्य इष्ठ इमन् ईयस् इत्येतेषु परेषु गर् इत्यादय आदेशा भवन्ति। गुरु प्रिय स्थिर स्थूल प्रशस्य वृद्ध दीर्घ बहुल दूर निकट लघूनां क्रमेण गर् प्र स्थ स्थव श्र ज्या द्राघ् बंह दव् नेद कना एते आदेशा भवन्ति। टेश्च अलोप इति लोपो न भवतीत्यर्थः॥ गुरु। एकत्र ईयस्। अन्यत्र इष्ठ तृतीये भावेऽर्थे 'लोहितादे०' सर्वत्र गुरु इत्यस्य गर्। अत्र 'ईयस्विष्ठौ०' इति डित्वेऽपि निषेधकथनादेर्नलोपः। प्रक्रिया पूर्ववत्। अतिशयेन गुरुर्गरीयान्। गिरिष्ठः। तृतीये गुरोर्भावो गरिमा। इमन् 'स्वरहीनं०' प्रथमैकवचने राजन्शब्दवत्। स्त्री चेद्गरीयसी॥ प्रिय अतिशयेन प्रियः प्रेयान् प्रेष्ठः। ईयस् इष्ठ उभयत्रापि 'गुर्वादेः०' इत्यादिना प्रियस्य प्र इत्यादेशः। 'अ इ ए'। स्त्री चेत् प्रेयसी॥ एवं स्थिर इत्यस्य स्थ। अतिशयेन स्थिरः स्थेयान् स्थेयसी स्थेष्ठः। स्थिरस्य भावः स्थेमा॥ स्थूलस्य स्थव्। अतिशयेन स्थूलः स्थवीयान्। स्थवीयसी स्थविष्ठः॥ प्रशस्यस्य श्र आदेशः। अतिशयेन प्रशस्यः श्रेयान् श्रेयसी श्रेष्ठः॥ वृद्ध। अतिशयेन वृद्धो ज्यायान् ज्येष्ठः। वृद्धस्य ज्या आदेशः॥

**ईलोपो ज्याशब्दादीयसः॥ ज्याशब्दादीयस ईकारस्य लोपो भवति॥ अतिशयेन वृद्धो ज्यायान् ज्यायसी ज्येष्ठः॥ दीर्घस्य द्राघादेशः। द्राघीयान् द्राघीयसी द्राघिष्ठः द्राघिमा॥ बहुलस्य बंहादेशः। बंहीयान् बंहीयसी बंहिष्ठः बंहिमा॥ दूरस्य दवादेशः। दवीयान् दवीयसी दविष्ठः॥ निकटस्य नेदादेशः। नेदीयान् नेदीयसी नेदिष्ठः॥ लघोः कन् आदेशः। कनीयान् कनीयसी कनिष्ठः॥ क्षिप्रस्य क्षेपादेशः। क्षेपीयान् क्षेपीयसी क्षेपिष्ठः। क्षेपिमा॥ क्षुद्रस्य क्षोदादेशः। क्षोदीयान् क्षोदीयसी क्षोदिष्ठः क्षोदिमा॥ बहोरिष्ठे यिः॥ बहुशब्दात्परस्य इष्ठे वर्तमानस्येकारस्य यिर्भवति। ईयस ईकारस्य लोपश्च॥ बहोर्भूरादेशः॥ भूयान् भूयसी भूयिष्ठः॥ भूमा॥**

एकत्र 'ईलोपो ज्याशब्दादीयसः' ॥ बहोश्च ॥ ज्याशब्दात् परस्य ईयसः प्रत्ययस्य ईलोपो वक्तव्यः । प्रथमैकवचने 'त्रितो नुम्' 'न्सम्महतो धौ०' 'हसेपः०' 'संयोगान्तस्य०' ॥ अन्यत्र इष्ठप्रत्ययः । 'अ इ ए' दीर्घः ॥ अतिशयेन दीर्घो द्राघीयान् । द्राघिष्ठः । दीर्घस्य द्राघआदेशः ॥ अतिशयेन बहुलः बंहीयान् बंहिष्ठः ॥ अतिशयेन दूरः दवीयान् दविष्ठः । स्त्री चेत् दवीयसी ॥ अतिशयेन निकटः नेदीयान् नेदिष्ठः ॥ अतिशयेन लघुः कनीयान् कनिष्ठः । स्त्री चेत् कनीयसी ॥ पाणिनीये तु "युवाल्पयोः कन् वा" । अतिशयेन युवा अल्पो वा कनीयान् कनिष्ठः । पक्षे यवीयान् यविष्ठः । स्त्री यवीयसी । पक्षे अल्पीयान् अल्पिष्ठः । स्त्री चेत् अल्पीयसी ॥ 'अन्तिकबाढयोर्नेदसाधौ' ॥ अतिशयेन अन्तिकः नेदीयान् नेदिष्ठः । अतिशयेन बाढः साधीयान् साधिष्ठः ॥ गुरु, स्फिर, वृद्ध, तृप्रानां (तृप्राणां), क्रमेण गर, स्फ, वर्ष, त्रपः स्युः ॥ 'विन्मतोर्लुक्' विनो मतुपश्च लुक् स्यात् इष्ठेयसोः परयोः । अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः त्वचीयान् । एवमन्येऽपि यथासंभवं ज्ञेयाः ॥ कचित्तु स्थूल, दूर, युवन्, ह्रस्व, क्षिप्र, क्षुद्राणामन्त्या यरलवाः सस्वरा एव लोप्याः । पूर्वस्य च गुणः इष्ठेयसोः परयोः । स्थविष्ठः स्थवीयान् । दविष्ठः । यविष्ठः । ह्रस्वस्य गुणासंभवः ह्रसिष्ठः । क्षेपिष्ठः । बहु । अतिशयेन बहु भूयान् । अत्र ईयस्प्रत्यये 'बहोर्लोपो०' इत्यादिना भूआदेशः । चकारादिमनादीनामिति बहुत्वादिकारलोपः । अथवा बहोश्चेति कथनादीकारलोपः । पुनः बहु । इष्ठप्रत्ययः । 'बहोर्लोप०' इत्युकारलोपः बहोश्च भूआदेशः । ततो "बहोरिष्ठेयिः । बहुशब्दात् इष्ठप्रत्यये परे यिर्भवति इति इकारस्वरस्य यकारागमो भवति । अत्र बहोर्भूआदेशो 'यदादेशस्तद्वद्भवति' इति बहुवत् । तथा इष्ठस्य इकारे लुप्तेपि 'एकदेशविकृतमनन्यवद्भवति' इति न्यायात् न विरुद्धम् । भूयिष्ठः ॥ अत्र केचित् बहुशब्दादिष्ठसंबन्धिन इकारस्य यि इत्यादेश इत्येवं व्याचक्षते ॥ तदसंगतम् । ईकारलोपस्य प्रधानत्वात् । भूइत्यादेशस्तु इकारलोपाद्दते दुःसाधः । पुनश्चिन्त्यम् ॥

**किमोऽव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः ॥ कुत इति कुतस्तरां परमाणवः । अतिश० कुत इति कुतस्तमां तेषामारम्भकत्वम् । उच्चैस्तरां गायति । अतिश० उच्चैरिति उच्चैस्तमाम् । नीचैस्तराम् । नीचैस्तमाम् । किंतराम् । किंतमाम् । अतिश० पठति इति पठतितराम् । पठतितमाम् । अतिश० पचति इति पचतितराम् । पचतितमाम् ॥**

'किमोऽव्यया०' ॥ किम् इति अव्ययरूपात्किमः किम्शब्दसंबन्धिनोऽव्ययात् अन्यस्मादप्यव्ययादाख्याताच्च सिद्धत्वादिधातुप्रयोगात् परयोस्तरतमप्रत्यययोराम्प्रत्ययो भवति । अयं भावः । किम्शब्दसंबन्धिनोऽव्ययात् अन्यस्मादपि उच्चैस् इत्यादिकादव्ययात् आख्याताद्भवति पचतीत्यादिरूपात्स्वार्थे अतिशयार्थे वा तरतमप्रत्ययौ भवतः । तस्मात्पुरत आम्प्रत्ययो भवति । उदाहरणम् । कुत इति 'तत्रादिगणः' । किमः पञ्चम्यन्तस्य निपातरूपमव्ययम् । तस्मात्तरप्रत्ययस्तमप्रत्ययश्च । उभयत्रापि आम् । कुतस्तरां परमाणवः । प्रादुर्भवन्तीत्यध्याहारः । तथा तेषां परमाणूनां कुतस्तमामारम्भकत्वं परमाणुद्वययोगेन द्व्यणुकाद्युत्पा-

दकत्वं कुतः कुतो मूलोत्पत्तिरित्यर्थः । उच्चैस्तरां गायति इत्यव्ययम् । केचित्तु केवलात्किम एवाव्ययात्तरतमयोराम् इति व्याचक्षते । चशब्दात् उच्चैर्नीचैरव्यययोरपीति । तथा 'डुपचष् पाके' । पच् तिप् । 'अप् कर्तरि' 'स्वरहीनं०' पचति । अग्रे स्वार्थे तरस्तमश्च । तस्माच्च आम् । एवं 'पठ व्यक्तायां वाचि' । पठ पूर्ववत् । पठतितमाम् ॥ एतदाख्यातिकम् ॥

**परिमाणे दघ्नादयः ॥ परिमाणेऽर्थे वाच्ये सति दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति ॥ जानु परिमाणं यस्य तज्जानुदघ्नं जलम् । शिरोद्वयसम् । पुरुषमात्रं जलम् ॥ द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ ॥ कतरो भवतोर्मध्ये काण्वः । कतमो भवतां तान्त्रिकः । भवतोर्यतरस्तार्किकस्ततर उद्गृणातु । यतमः । ततमः ॥ संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः त्रेः संप्रसारणं सस्वरस्य ॥ द्वयोः संख्यापूरको द्वितीयः ॥ त्रयाणां संख्यापूरकस्तृतीयः ॥**

'परिमाणे दघ्नादयः' ॥ परिमाणार्थे दघ्नट् द्वयसट् मात्रट् इत्येते त्रयः प्रत्यया भवन्ति । वक्तव्यमात्रमेतत् ॥ उदाहरणम् । जानु । जानुपरिमाणमस्य जानुदघ्नम् । अत्र परिमाणे दघ्नट्प्रत्ययः । जानुपरिमितं जलमित्यर्थः । तथा पुरुषः प्रमाणमस्येति पुरुषमात्रम् । तथा शिरस् । शिरः परिमाणमस्य शिरोद्वयसम् । टकारानुबन्धत्वात् 'ष्टितः' इतीप् । ऊरुद्वयसी ऊरुदघ्नी शिरोद्वयसी गजपतिद्वयसी । इत्यादि ॥ 'द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ । व्याख्या—द्वयोर्मध्ये बहूनां चावराणां मध्ये एकस्य निर्धारणे पृथक्करणे जात्यादिपरिप्रश्ने वा किमादिभ्य इति किंयत्तद्भ्यो डितौ अतरअतमौ प्रत्ययौ भवत इत्यर्थः । बहूनां द्वयोर्मध्ये कः कतरः कतमः । अत्र निर्धारणं पृथक्करणं तस्यार्थे डतरः । डित्वाट्टिलोपः । 'स्वरहीनं०' कतरो भवतोः काण्वः । क इति कतरः । भवतोर्द्वयोर्मध्ये काण्वः कण्वगोत्रीयः कण्ववंशीयः कः । तथा किम् । डतमः पूर्ववत् । कतमो भवतां मध्ये तान्त्रिकः शास्त्रविदित्यर्थः । सैद्धान्तिकस्तु तान्त्रिकः । यद् तद् उभयत्रापि डतरः । टिलोपः 'स्वरहीनं०' 'सोर्विसर्गः' भवतोर्द्वयोर्मध्ये यतरस्तार्किकस्ततर उद्गृणातु ब्रवीतु इति भावः ॥ चकारादेकशब्दादन्यशब्दादपि डतरडतमौ वक्तव्यौ । एकतरः एकतमः । अन्यतरः अन्यतमः ॥ 'संख्येयविशेषा०' संख्यातुं योग्यः संख्येयः । द्वयोस्त्रयाणां वा मध्ये योऽन्यः संख्येयो गणनायां प्रस्तुतः संख्यापूरणस्तस्य विशेषणावधारणे 'अयं कतिथ' इत्यस्मिन्नर्थे अपरिच्छेदे द्वित्रिशब्दाभ्यां तीयप्रत्ययो भवति ॥ 'त्रेः संप्रसारणं च वक्तव्यम्' ॥ द्वि त्रि । द्वयोः संख्यापूरणो द्वितीयः । एकस्यापेक्षयाऽपरः संख्येयः तस्य विशेषणपरिच्छेदः क्रियते इति द्विशब्दात्तीयः प्रत्ययः । अन्यत्र तु द्वौ । त्रयाणां संख्यापूरणत्वेन विशेषावधारणे तत्रापि तीयः । तस्मिंश्च परे त्रेः संप्रसारणम् । यकारस्य सस्वरस्य संप्रसारणमिकारः, वकारस्य च उकारः । रेफस्य ऋकारः सस्वरस्यैव । दीर्घस्वरयुक्तस्य दीर्घे ईकारादिः, ह्रस्वस्वरयुक्तस्य ह्रस्व इकारादिरिति संप्रसारणं वक्तव्यम् । अत्र त्रिशब्दे रेफस्य ऋकारः । तृ तृतीयः ॥

**षट्चतुरोस्थट् ॥ षण्णां संख्यापूरकः षष्ठः ॥ पञ्चादेर्मः ॥ पञ्चमः । सप्तमः । अष्टमः । नवमः । दशमः । इत्यादि ॥ एकादशादेर्डः ॥ विंशत्यष्टैकानां**

**द्वात्रयोष्टैकाः । प्राक्शतादनशीतिबहुव्रीह्योरिति वक्तव्यम् ॥ एकेनाधिका दश एकादश । एकादशानां संख्यापूरक एकादशः-एकादशी । द्वादशः-द्वादशी । त्रयोदशः-त्रयोदशी । चतुर्दशः-चतुर्दशी । सप्तदशः-सप्तदशी । अष्टादशः-अष्टादशी ॥**

'षट्चतुरोस्थट्' ॥ षट् चतुर् इत्येतयोः संख्येयविशेषावधारणे संख्यापूरणेऽर्थे थट् प्रत्ययो भवति । षष् । षण्णां संख्यापूरणः षष्ठः । थट् प्रत्ययः । 'ष्टुभिः ष्टुः' थस्य ठः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' ॥ चतुर् । चतुर्णां संख्यापूरणश्चतुर्थः । थप्रत्ययः जलतुम्बिका० ॥ टित्त्वादीप् । षष्ठी चतुर्थी । चतुर्णां संख्यापूरणस्तुर्यस्तुरीयः इति तु पूर्वमेवोक्तम् ॥

'पञ्चादेर्मः' ॥ पञ्चादेर्नाम्नो दशपर्यन्तात्संख्येयविशेषावधारणेऽर्थे मट् प्रत्ययो भवति । पञ्चानां संख्यापूरणः पञ्चमः । मप्रत्ययः । 'नाम्नोनो०' पञ्चमः ॥ एवं सप्तमः । अष्टमः नवमः दशम इति ॥

'एकादशादेर्डः' ॥ टकारानुबन्धत्वमत्राप्यनुवर्तनीयम् । एकादशन् इत्यादेः अष्टादशयावत् संख्येयविशेषावधारणे डप्रत्ययो भवति । मट्प्रत्ययनिषेधः । एकादशन् । एकादशानां संख्यापूरणः एकादशः । डप्रत्ययः । अत्र डित्त्वाट्टिलोपः । 'स्वरहीनं०' 'स्रोर्विं०' ॥ 'सहादेः सादिः' इति एकस्य एका इत्यादेशः । प्रक्रियामते तु 'आन्म०' इति योगविभागादात्वम् । देववत् । एकत्वात्प्रायः एकवचनमेव ॥ एवं द्वादशः त्रयोदशः । 'द्वित्र्यष्टानां द्वात्रयोष्टाः' इति द्विशब्दस्य द्वाइत्यादेशः । त्रिशब्दस्य त्रय इत्यादेशः । चतुर्दशः । पञ्चदशः ॥ षोडशः । 'सहादेः सादिः' इति षस्य उः । दस्य डः । 'उ ओ' । सप्तदशः । अष्टादशः । एकोनविंशतिः । अत्र डप्रत्यये कृते निपातनात्तिसहितस्य टेस्कारस्य लोपः 'स्वरहीनं०' एकोनविंशः ॥

**विंशत्यादेर्वा तमट् ॥ विंशतेः संख्यापूरकः विंशतितमः । पक्षे ॥ विंशतेस्तिलोपः ॥ विंशः ॥**

'विंशत्यादेर्वा तमट्' विंशत्यादेर्नाम्नः संख्येयविशेषावधारणे तमट्प्रत्ययो वा भवति । वाग्रहणात् एकत्र तमट्, द्वितीये डः [ तृतीये[1] प्रत्ययो न, यथास्थित एव तिष्ठति ][2] विंशति २ । आद्ये तमट् प्रत्ययः । टकार ईबर्थः । विंशतेः संख्यापूरणः विंशतितमः । तथा स्त्रीत्वे विंशतितमी इत्यपि भवति । द्वितीये डप्रत्ययः । डानुबन्धेऽन्त्यस्वरादेर्लोपः तेन विंशतेरपि तिइत्यनेन सह टिलोपः । 'स्वरहीनं०' विंशः ॥ तथा प्रक्रियायां 'ति विंशतेर्डिति' विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति परे ॥ यद्वा केचित्तु टिलोपे कृते पुनः 'हलादेरीषा०' इति टिलोपमिच्छन्ति ॥ केचित्तु टिलोपे कृते 'सहादेः सादिः' इति विंशति इत्यस्य विंश इत्यादेशमिच्छन्ति ॥ [ तृतीये विंशतिरित्येव रूपं भवति । विंशतिसंख्य इत्यर्थः । ] केचित्तु वाग्रहणादेव 'पञ्चादेर्मः' इति मप्रत्ययमपीच्छन्ति । तन्मते विंशम इत्यपि स्यात् ॥ एवमेकविंशतितमः एकविंशः । द्वाविंशतितमः द्वाविंशः । त्रयोविंशतितमः त्रयोविंशः । चत्वारिंशत्तमः चत्वारिंशः । एवं पञ्चाशत्तमः पञ्चाशः । एवं षष्टितमः एकषष्टितमः एकषष्टः । इत्यादि

१–२ अयं कोष्ठकान्तर्गतः पाठः क्वाचित्कोऽसंगत एव ॥

ज्ञेयम् । अत्र ग्रन्थान्तरेष्वेतानि वक्तव्यानि सन्ति । 'द्वित्र्यष्टानां द्वात्रयोऽष्टा' भवन्ति । 'प्राक्शतादनशीतेः' शतात्प्राक् शतं यावत् अनशीतेः अशीतिशब्दं वर्जयित्वा अन्यत्र यत्र द्वित्रिअष्टशब्दाः सन्ति तत्र क्रमेण द्वा त्रयः अष्टा एते आदेशा भवन्ति । यद्वा द्वादशः त्रयोदशः अष्टादशः ॥

**चत्वारिंशदादौ वा ॥ द्विचत्वारिंशत्-द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । अनशीतीति विशेषणाद्व्यशीतिः । त्र्यशीतिः । अष्टाशीतिः ॥ शतादेर्नित्यम् ॥ शततमः ॥**

'चत्वारिंशदादौ वा' ॥ चत्वारिंशदादिशब्देषु परेषु द्वित्र्यष्टानां द्वात्रयोष्टा वा भवन्ति । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । द्विपञ्चाशत् । द्वापञ्चाशत् । त्रिपञ्चाशत् । त्रयःपञ्चाशत् । अष्टपञ्चाशत् । अष्टापञ्चाशत् । एवं द्विषष्टिः । द्वाषष्टिः । त्रिषष्टिः त्रयःषष्टिः । अष्टषष्टिः अष्टाषष्टिः । द्विसप्ततिः द्वासप्ततिः। त्रिसप्ततिः त्रयःसप्ततिः । अष्टसप्ततिः अष्टासप्ततिः ॥ द्विनवतिः द्वानवतिः । त्रिनवतिः त्रयोणवतिः । अष्टनवतिः अष्टानवतिः । अनशीतेरिति विशेषणात् द्व्यशीतिः द्व्यशीतितमः । त्र्यशीतिः अष्टाशीतिः । अत्र द्वात्रयोष्टा न भवन्ति ॥ 'शतादेर्नित्यम्' तमट्प्रत्ययः स्यात् । शततमः ॥ * 'एकादशादेरधिकार्थात् सप्तम्यर्थे शते सहस्रे च डप्रत्ययः' । एकादश अधिका यस्मिन् तत् एकादशं शतं सहस्रम् । एवं द्वादशं शतं त्रयोदशं शतं एकविंशं त्रिंशं चत्वारिंशं पञ्चाशं शतमित्यादि ज्ञेयम् ॥ शतादेरित्यादिशब्दात् शततमः । एकशततमः । मासतमः । अर्धमासतमः । संवत्सरतमः । इत्यादि ज्ञेयम् । शतादीनि संख्योपयोगानि लोकादवगन्तव्यानि ॥

**संख्यायाः प्रकारे धा ॥ संख्यावाचकाच्छब्दात्प्रकारेऽर्थे वाच्ये सति धाप्रत्ययो भवति ॥ द्विप्रकारं द्विधा । त्रिप्रकारं त्रिधा । चतुष्प्रकारं चतुर्धा ॥ गुणोऽण् च ॥ धाप्रत्ययान्तस्य शब्दस्य गुणो वा भवति अण् च वा भवति ॥ द्विप्रकारं द्वेधा । त्रिप्रकारं त्रेधा । धाप्रत्ययान्तात्स्वार्थेऽण् । द्विधा एव द्वैधम् । त्रैधम् ॥[1] क्रियाया आवृत्तौ कृत्वस् ॥ पञ्चवारान् भुङ्क्ते इति पञ्चकृत्वो भुङ्क्ते । सप्तकृत्वः ॥**

'संख्यायाः प्रकारे धा' ॥ संख्यावाचिनो नाम्नः प्रकारेऽर्थे धाप्रत्ययो भवति । द्विप्रकारं इति । द्वौ प्रकारावस्येति वा द्विधा त्रिधा चतुर्धा पञ्चधा षोढा इत्यादि ॥ 'गुणोऽण् च' धाप्रत्यये परे द्वित्रिशब्दयोर्गुणो भवति अण् च वा भवति। इकारस्य ए गुणः। द्वेधा त्रेधा। प्रथमैकवचने । 'क्त्वाद्यन्तं च' इति 'अव्ययाद्विभक्तेर्लुक्' । तथा धाप्रत्ययात्स्वार्थेऽण् प्रत्ययो भवति । णकारो वृद्ध्यर्थः । द्विधा त्रिधा । उभयत्रापि अण् वृद्धिः । 'यस्य लोपः' 'गायत्र्याद्यण्' इति नपुंसके प्रथमैकवचने । 'अतोऽम्' द्वैधं त्रैधम् ॥ 'क्रियाया आवृत्तौ कृत्वस्' क्रियायाश्चलनगमनकरणादिकाया आवृत्तौ तत्संख्यापरिवृत्तेन पौनःपुन्येन वार-

[1] एकाद्ध्यमुञ्वा ॥ ऐकध्यम् । एकधा ॥ इत्यधिकम् ।

वारार्थे पञ्चसप्तादिसंख्यायाः कृत्वस् इति प्रत्ययो भवति ॥ पञ्चन्। पञ्च वारान् इति। पञ्चन् कृत्वसूप्रत्ययः। 'नाम्नो नो०' प्रथमैकवचनं सि। 'अव्यया०' 'स्रोर्वि०' पञ्चकृत्वः। सप्तकृत्वः। त्रिसप्तकृत्वः। कतिकृत्वः। इत्यादीन्युदाहरणानि ॥

**द्वित्रिचतुर्भ्यः सुः ॥ द्वित्रिचतुःशब्देभ्यः सुप्रत्ययो भवति ॥ द्विवारमिति द्विः। त्रिवारमिति त्रिः। चतुः। द्विरुक्तम्। त्रिरुक्तम् ॥ बह्वादेः कारकाच्छस् ॥ बह्वादेः शब्दाच्छस्प्रत्ययो भवति ॥ बहुवारानिति बहुशः। अल्पशः। शतशः। सहस्रशः। लक्षशः। कोटिशः। इत्यादि। बहुशो धनं ददाति ॥ कारकात्किम्। बहूनां स्वामी ॥**

'द्वित्रिभ्यां सुः' ॥ द्वित्रिशब्दाभ्यां क्रियाया आवृत्तौ सुप्रत्ययो भवति। उकार उच्चारणार्थः। द्वौ वारौ इति द्विः। त्रीन् वारानिति त्रिः। सुप्रत्यये कृते प्रथमैकवचने। 'अव्यया०' 'स्रोर्वि०' ॥ अग्रे उक्तमिति 'नामिनोरः' 'स्वरहीनं०'। एवं द्विर्भुङ्क्ते। द्वौ वारौ इत्यर्थः। त्रिरधीते त्रिः। त्रीन् वारान् अधीते पठतीत्यर्थः। चतुः स्वपिति इत्यपि क्वचित् दृश्यते ॥ एकस्य सुप्रत्ययसहितस्य सकृदादेशो वक्तव्यः। सकृदेकवारम् ॥ 'बह्वादेः शस्' बह्वादेर्नाम्नो वारंवारार्थे संख्यायां वा शस्प्रत्ययो भवति। बहु। बहून् वारानिति बहुशः। अथवा बहवः एव बहुशः। कोटि संख्या येषां ते कोटिशः। शस्प्रत्ययः। 'अव्यया०' ॥ एवं शतशः सहस्रशः लक्षशः कोटिशः अनेकशः भूरिशः गणशः कतिशः इत्यादीनि ॥

**तयायडौ संख्याया अवयवे ॥ संख्याया अवयवे वाच्ये सति तयायडौ प्रत्ययौ भवतः ॥ द्वौ अवयवौ यस्य तद्द्वितयम् ॥ त्रितयम्। द्वौ अवयवौ यस्य तद्द्वयम्। त्रयम्। चतुष्टयी ॥ अल्पे कुटीशमीशुण्डाभ्यो रः ॥ अल्पा कुटी इति कुटीरः। अल्पा शमी इति शमीरः। अल्पा शुण्डा इति शुण्डारः ॥**

'तयायडौ संख्यायामवयवार्थे' ॥ अवयवार्थे संख्यायां वाच्यमानायां तयट् अयट् इत्येतौ प्रत्ययौ भवतः। तत्र तयट् संख्यावाचिनः शब्दात्संभवति अयट् द्वित्रिशब्दाभ्यामेव। द्वित्रि। उभयत्र तयट्। क्लीबे द्वितयम् त्रितयम्। चतुष्टयम्। अयडित्यत्र डकारष्टिलोपार्थः। इति चिन्त्यम्। द्वौ अवयवौ अस्य समुदायस्य द्वितयम्। यद्वा द्वावेव द्वयम्। त्रय एव त्रयम्। त्रयोऽवयवा यस्येति त्रयम्। एवं द्वयम्। द्वित्रि। अयट्प्रत्ययः। 'यस्य लोपः' 'स्वर०' प्रथमैकवचने। 'अतोऽम्' ॥ स्त्रीलिङ्गे द्वितयी त्रितयी चतुष्टयी द्वयी त्रयी ॥ उभशब्दादप्ययट् वक्तव्यः। उभौ अवयवौ यस्येति उभयः। टित्वादुभयी। 'यस्य लोपः' ॥ 'अल्पे शमीकुटीशुण्डाभ्यो रः' ॥ अल्पार्थे लघ्वर्थे वाच्ये शमीकुटीशुण्डा इति त्रिभ्यः शब्देभ्यः रप्रत्ययो भवति। अल्पा शमी शमीरः। अल्पा कुटी कुटीरः। अल्पा शुण्डा शुण्डारः ॥

**स्त्रीपुंसोर्नणस्नणौ ॥ स्त्रैणम्। पौंस्नम् ॥ शेषा निपात्याः कत्यादयः। आदिशब्दात् या संख्या येषां ते यति। सा संख्या येषां ते तति ॥ का संख्या येषां ते कति ॥ लोकाच्छेषस्य सिद्धिः ॥ इति सारस्वतव्याकरणे तद्धितप्रकरणम् ॥ १७ ॥**

'स्त्रीपुंसोर्नण्स्नणौ' ॥ स्त्रीपुंसोः शब्दयोः क्रमेण नण्स्नणौ प्रत्ययौ भवतः अपत्याद्यर्थे ॥ णकारो वृद्ध्यर्थः । स्त्रीषु भवः स्त्रिया अपत्यं स्त्रीणां समूहो वा स्त्रैणम् । पुंसि भवः पुंसोऽपत्यं पुंसां समूहो वा पौंस्नम् । तत्र स्त्रैणमित्यत्र नण् । णित्त्वाद्वृद्धिः । 'ष्रुर्नोणो०' ॥ तथा पुंसः स्नण् प्रत्ययः । णित्त्वाद्वृद्धिः । पौंस्नम् । 'संयोगान्तस्य०' इति सलोपः । प्रथमैकवचने क्लीबे । 'अतोऽम्' 'अम्शसो०' 'मोऽनु०' ॥ अथोपसंहारमाह—'शेषा निपात्याः कत्यादयः ।' शेषा अत्र व्याकरणेऽनुक्ता ग्रन्थान्तरेषु च उदाहृताः शब्दाः कति कतिपय कतिथ कतिपयथ यति तति अन्येऽपि विंशति त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शतं इत्यादयः शब्दाः निपात्याः निपातसिद्धाः प्रयोगानुसारेण साध्याः ॥ इति सुबोधिकायां तद्धितदीपिका ॥

सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्तिभिः । स्यादीनां प्रक्रिया पूर्णा बभूवेत्थं मनोहरा ॥१॥
तेषामेव हि सच्छिष्यो हर्षकीर्त्याह्वपाठकः । लिखनोपक्रमं चास्याः प्रपेदे प्रीतमानसः ॥ २ ॥

इति श्रीनागपुरीयतपागच्छाधिविधायिसदाचारभट्टारकश्रीचन्द्रकीर्तिसूरिकृतायां सारस्वतटीकायां प्रथमावृत्तिः पूर्णा ॥

## इति प्रथमा वृत्तिः ।

॥ श्रीः ॥

# सारस्वतव्याकरणम् ।

चन्द्रकीर्तिसमाख्यया व्याख्यया समलंकृतम्

## द्वितीया वृत्तिः ।

॥ अथोत्तरार्धम् ॥

### भ्वादिषु परस्मैपदिनः १ ।

**अथाख्यातप्रत्यया निरूप्यन्ते ॥**

सरस्वतीं सदा भक्तवाञ्छितार्थविधायिनीम् ।
सद्वाग्विलाससंदोहदोहां कामदुघामिव ॥ १ ॥
नत्वा नागपुरीयाह्वतपोगणविभूषणम् ।
श्रीराजरत्नसूरिं चाख्यातव्याख्या विधीयते ॥ २ ॥ युग्मम् ।

अथ ग्रन्थकार आख्यातप्रत्ययान्विवक्षुः प्रतिज्ञां करोति—अथाख्यातेत्यादि । अथेति संज्ञासंधिविभक्तियुष्मदस्मद्स्त्रीप्रत्ययकारकसमासतद्धितलक्षणाधिकाराष्टककथनानन्तरमाख्यातं नाम व्याकरणस्य नवमोऽधिकारः । तस्य प्रत्यया निरूप्यन्ते । आख्यायन्ते कथ्यन्ते अर्थात् निष्पाद्यन्ते भ्वादीनां रूपाणि येन तदाख्यातम् । अथवा आख्यान्ति आचक्षते कर्तुर्व्यापारमित्याख्याताः ॥ प्रतीयन्ते ज्ञायन्ते अर्था येभ्यस्ते प्रत्ययाः आख्यातसंज्ञकाः प्रत्ययास्ते निरूप्यन्ते ॥

**धातोः ॥ वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ॥**

तत्र प्रथमसधिकारसूत्रम्—'धातोः' ॥ धातुशब्दस्य पञ्चम्येकवचनान्तम् । वक्ष्यमाणा इति । वक्ष्यन्ते कथयिष्यन्ते ते वक्ष्यमाणाः । अतः परं ये वक्ष्यन्ते प्रत्ययास्ते धातोरेवाग्रे ज्ञेयाः न नाम्नः । अत्र प्रत्ययशब्देन प्रायो विभक्तयो ज्ञेयाः । तदधिकारादबाद्योऽपि प्रत्यया धातोरेवाग्रे ज्ञेयाः । तांश्च यथाधिकारं ग्रन्थकृदेव वक्ष्यति ॥

**भ्वादिः ॥ भू सत्तायामित्यादिगणो धातुसंज्ञो भवति ॥ स च त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ॥**

अथ कोऽसौ धातुरित्याह—सूत्रम्—'भ्वादिः'॥ भू आदिर्यस्यासौ भ्वादिः। स् 'स्रोर्वि०'॥ भूधातुः सत्तायां विद्यमानार्थे वर्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठे-

ऽभिहितः स धातुसंज्ञो भवति विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातुपाठादवगन्तव्यः। इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः ॥ स चेति । स च धातुस्त्रिविधः। तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्त्रिप्रकारः। आत्मनेपदमष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अन्त्यं नववचनात्मकं विद्यते यस्य स आत्मनेपदी 'एध वृद्धौ' इत्यादिः । तथा परस्मैपदं वक्ष्यमाणवचनेष्वाद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी 'भू सत्तायाम्' इत्यादिः। तथा उभे परस्मैपदात्मनेपदे विद्येते यस्मिन् स उभयपदी । पचतिकरोतीत्यादि । यद्यपि 'निविशादेः' इति सूत्रेण केषांचिद्धातूनां पदविपर्ययो भवति । तथाप्यत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम् ॥

**आदनुदात्तङितः ॥ अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति ॥**

अथ प्रथममात्मनेपदं येभ्यो धातुभ्यो भवति तान् दर्शयति । सूत्रम्—'आदनुदात्त०' इति ॥ आत् प्रथमैकवचनान्तम् । 'हसेपः' अनुदात्तश्च ङ् च अनुदात्तङौ अनुदात्तङौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः पञ्चम्येकवचनान्तम् । द्विपदं सूत्रम्। अनुदात्तेदिति धातुपाठे योऽभिहितः धातुपाठे यो धातुरनुदात्तेत्संज्ञकः कल्पितः 'एध वृद्धौ' इत्यादिकः । तथा ङित् ङकारानुबन्धः 'शीङ् स्वप्ने' इत्यादिः ततोऽनुदात्तेतो ङितश्च धातोः आदितिशब्देन आत्मनेपदं भवतीत्यर्थः ॥

**ञित्स्वरितेत उभे ॥ ञितः स्वरितेतश्च धातोरात्मनेपदपरस्मैपदे भवतः ॥ आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदं प्रयोक्तव्यम्। अन्वर्थानुगतार्थसंज्ञाबलत्वात् ॥**

अथोभयपदिनां लक्षणमाह—'ञित्स्वरितेत०' इत्यादि ॥ ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः। ञिच्च स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः पञ्चम्येकवचनम्। उभे प्रथमाद्विवचनान्तम् । 'ईमौ' 'अ इ ए' द्विपदमिदं सूत्रम्। ञितो धातोः 'डुदाञ् दाने, डुकृञ् करणे, ब्रूञ्,' इत्यादितः प्रसिद्धात् तथा स्वरितेत इति यस्य धातुपाठे स्वरितेत् इति संज्ञा कल्पिताऽस्ति तस्मात् 'डुपचष् पाके' इत्यादेर्धातुपाठोक्ताद्धातुगणादुभे इति आत्मनेपदपरस्मैपदे द्वे अपि भवतः ॥ अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोजनशिक्षामाह—आत्मगामि चेदित्यादि। चेद्यदि उभयपदिनां धातूनामुपायः फलं आत्मगामि भवति तदा आत्मनेपदं प्रयोज्यम् । यथा आत्मार्थं पचते । परार्थं पचति। यद्यपि 'सारस्वतीमृजुं कुर्वे' इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते तथापि तत्पठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तम् ॥ परगामीति। चेद्यदि क्रियाफलं परगामि भवति तदोभयपदिनां धातूनां परस्मैपदं भवति ॥ यथा 'प्रक्रियाकौमुदीं कुर्मः' इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात् युक्तम् । एवमन्यदपि यथासंभवमूह्यम् । एतत्पदद्वयस्य प्रयोजनं कुत इत्याह—अन्वर्थादिति । आत्मने परस्मै इति द्वयोः शब्दयोः नामानुगतार्थत्वात् यादृशं नाम तादृश एवार्थः । यथा आत्मनिमित्तमात्मनेपदम् परनिमित्तं परस्मैपदमित्यन्वर्थः। तस्मात् इदं चात्मगामीत्यादिना पदप्रयोगकथनं नाम तादृश एवार्थः । यथा

आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः । तस्मात् इदं चात्मगामीत्यादिपदप्रयोगकथनं तूभयपदिनामेवावगन्तव्यम् । असार्वत्रिकश्चायं विधिः ॥

**परतोऽन्यत् ॥ पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति ॥**

अथ परस्मैपदप्रयोगमाह—'परतो०' ॥ परतः पञ्चम्येकवचनान्तं तसूप्रत्ययान्तम् । अन्यद् प्रथमैकवचनान्तम् । अन्यशब्दस्य नपुंसकलिङ्गे पदप्रयोगः । द्विपदमिदं सूत्रम् । पूर्वोक्तेत्यादि । पूर्वोक्तानि यानि सूत्रद्वयोक्तानि निमित्तानि तत्रानुदात्तङित्त्वे आत्मनेपदनिमित्ते ञित्स्वरितेत्त्वे उभयपदनिमित्ते एभिर्विधुराद्रहितात् अस्माद्धातोः उदात्तेत्संज्ञकाद्धातुपाठोक्तात् ङकारञकारानुबन्धरहिताच्च धातोः परस्मैपदं भवति । स च धातुपाठे ज्ञेयः ॥

**नव परस्मैपदानि ॥ तिबादीनामष्टादशसंख्याकानामाद्यानि नव वचनानि परस्मैपदसंज्ञानि भवन्ति ॥ पराण्यात्मनेपदानि ॥**

अथ विभक्तिषु परस्मैपदयोर्वचनसंख्यामाह—सूत्रम्—'नव परस्मैपदानि' ॥ नव प्रथमाबहुवचनान्तम् । 'जश्शसोर्लुक्' 'परस्मैपदानि प्रथमाबहुवचनम् । नपुसंकलिङ्गे । द्विपदमिदं सूत्रम् । तिबादीनामिति । वर्तमाना, विधिसंभावना, आशीःप्रेरणा, अनद्यतना, परोक्षार्था, अद्यतना, श्वस्तनार्था, भविष्यति, क्रियातिपत्तीभूतार्था, इति लक्षणानां दशविभक्तीनां यान्यष्टादश वचनानि तेषां मध्ये आद्यानि नव वचनानि परस्मैपदसंज्ञानि भवन्ति । तत्रापि केषुचित्पुस्तकेषु 'पराण्यात्' इति सूत्रं दृश्यते । तत्र पराणि प्रथमाबहुवचनम् । आत् प्रथमैकवचनम् । द्विपदम् । पराणि नव वचनानि आत्मनेपदसंज्ञानि भवन्तीति वृत्तिः सुगमा ॥

**वर्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् । ते आते अन्ते ते आथे ध्वे ए वहे महे ॥ प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्तमानस्तस्मिन्नभिधेये तिबादयः प्रत्यया भवन्ति ॥ अस्य तिबादेः पाणिनीयानां लडिति संज्ञा ॥**

**तत्रैकवचनादीनि व्याक्रियन्ते ॥**[1]

[1] परस्मैपदानि

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | तिप् | तस् | अन्ति |
| मध्यमः | सिप् | थस् | थ |
| उत्तमः | मिप् | वस् | मस् |

आत्मनेपदानि

| | | | |
|---|---|---|---|
| प्रथमः | ते | आते | अन्ते |
| मध्यमः | से | आथे | ध्वे |
| उत्तमः | ए | वहे | महे |

अथाख्यातविभक्तीनां मध्ये सर्ववैयाकरणसमयप्रतिपालनार्थं विभक्तिप्रयोगसूत्रमाह— 'वर्तमाने०' ॥ सप्तम्येकवचनान्तम् । तिप्, तस्, अन्ति । सिप्, थस्, थ । मिप्, वस्, मस् । ते, आते, अन्ते । से, आथे, ध्वे । ए, वहे, महे' । सर्वाण्येतानि प्रथमैकवचनान्तानि सांकेतिकानि । एवमेकोनविंशतिपदं सूत्रम् । अथ वृत्तिकारो वर्तमान इति पदं व्याचष्टे—प्रारब्धेति । कश्चित्कालः क्रियायाः प्रथमक्षणे एव लग्नः सः प्रारब्धः स यावदपरिसमाप्तः अपरिपूर्णस्तावद्वर्तमान इत्युच्यते । प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्तमानः तस्मिन्नुक्तलक्षणे वर्तमाने कालेऽभिधेये वाच्यमाने सति धातोस्तिबादयो महेपर्यन्ता अष्टादश प्रत्यया विभक्तिलक्षणा भवन्ति प्रयुज्यन्ते इत्यर्थः । तत्र तिबादयो मस्पर्यन्ताः परस्मैपदसंज्ञाः । ते आदयो महेपर्यन्ता आत्मनेपदसंज्ञाः । अथ ग्रन्थान्तरे एतेषामेवाष्टादशवचनानां संज्ञान्तरमाह—अस्येति । पाणिनीयानामाचार्याणां पाणिन्युक्तग्रन्थपाठिनां वा मते अस्य तिबादेरष्टादशसंख्यस्य प्रत्ययस्य लट् इति संज्ञा ज्ञेया । लट्, लिङ्, लोट्, लङ्, लिट्, लुट्, लेट्, लट्, लुङ्, इति दश लकाराः । तत्र वर्तमाने लट् ॥

**नाम्नि च युष्मदि चास्मदि च भागैः ॥ नामादिषूपपदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति ॥ ( ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति ) ॥ नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः । युष्मदि मध्यमः ॥ तथैवास्मद्युत्तमः ॥**

एतेषामेव प्रत्ययानां त्रित्रिवचनविभागभेदेन पुरुषसंज्ञामाह सूत्रम्—'नाम्नि च युष्मदि चास्मदि च भागैः' ॥ नाम्नि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् । युष्मदि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् ॥ अस्मदि सप्तम्येकवचनान्तम् । च प्रथमैकवचनान्तम् । भागैः तृतीयाबहुवचनान्तम् । सप्तपदमिदं सूत्रम् । नामादिष्विति । देवः देवौ देवाः । अथवा सः तौ ते इति नाम । त्वं युवां यूयं इति युष्मत् । अहम् आवाम् वयम् इत्यस्मद् । ततः नाम, युष्मद्, अस्मद्, लक्षणेषु त्रिषु पदेषु उभयपदेषु समीपे प्रयुज्यमानेषु परस्मैपदानामात्मनेपदानां च त्रिभिर्भागैः छेदैः कृत्वा एते उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । तिप् तस् अन्ति इति परस्मैपदानि । ते आते अन्ते इत्यात्मनेपदानि एकवचनद्विवचनबहुवचनभेदेषु प्रथमपुरुषसंज्ञां लभन्ते । सिप् थस् थ । से आथे ध्वे । इति परस्मैपदात्मनेपदयोर्मध्यमपुरुषसंज्ञा । मिप् वस् मस्, इति परस्मैपदे ए वहे महे, इत्यात्मनेपदे इत्युत्तमपुरुषसंज्ञा ॥ अथ नामादिषु प्रथमादिषु पुरुषप्रयोगशिक्षामाह—नाम्नीति । नाम्नि सामान्यलक्षणप्रयुज्यमाने उच्यमाने चशब्दादप्रयुज्यमानेऽप्यनुच्यमानेपि प्रथमेति प्रथमपुरुषो ज्ञेयः । प्रयुज्यमाने यथा चम्पूकथायाम् । 'जयति गिरिसुतायाः कामसंतापवाहिन्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः' इति । यदि वा—'तं सन्तः श्रोतुमर्हन्ति' । तथा अप्रयुज्यमाने यथा रत्नमालायाम्—'शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदाऽमरम्' इत्यत्र बुधा इत्यप्रयुज्यमानेऽपि नाम्नि आहुरिति प्रथमपुरुषप्रयोगः । तथा—युष्मदि प्रयुज्यमाने अप्रयुज्यमानेऽपि मध्यमः पुरुषः । यथा कुमारसंभवे—'त्वं पितृणामपि पिता देवानामपि देवता । परतोऽतिपरश्चासि विधाता वेधसामपि' । अप्रयु-

ज्यमाने यथा—'अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम्। भूतदयां विस्तारय तारय संसारसागरतः' ॥ इत्यत्र युष्मद्यप्रयुज्यमानेऽप्यपनयेत्यादिर्मध्यमपुरुषप्रयोगः। अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः पुरुषः । प्रयुज्यमाने यथा—'तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे भग्रहैः कालमीशम्'। अप्रयुज्यमाने यथा—'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्' इत्यादि ॥

**कर्तरि पं च ॥ पं परस्मैपदं कर्तरि भवति ॥ चकारादात्मनेपदमपि ॥ तत्र भू इत्येतस्मात्परस्मैपदिनोऽब्विकरणात्कर्तरि तिबादयो योज्यन्ते ॥ भू सत्तायाम् ॥ तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचनं तिप्। भू तिप् इति स्थिते। पकारः पित्कार्यार्थः ॥**

अथ परस्मैपदप्रयोगशिक्षामाह—'कर्तरि पं च'॥ कर्तरि सप्तम्येकवचनान्तम्। पं प्रथमैकवचनान्तम्। च प्रथमैकवचनान्तम्। त्रिपदमिदं सूत्रम्। पम् इति परस्मैपदं तिप् तस् अन्ति इत्यादिनववचनलक्षणं कर्तरि कर्त्रुक्तावेव भवति। न केवलं परस्मैपदं किंतु आत्मनेपदमपि भवति। उभयपदिनां तु उभे अपि परस्मैपदात्मनेपदलक्षणे भवतः । यथा 'जयन्ति सन्तः' इति परस्मैपदम्। 'तदनु च विजयन्ते' इत्यात्मनेपदम् । 'सारस्वतीमृजुं कुर्वे' इत्यत्र करोतेर्धातोरात्मनेपदम्। 'प्रक्रियाकौमुदीं कुर्मः' इति परस्मैपदम्। एवमन्यत्राप्यूह्यम्। कर्मोक्तौ तु आत्मनेपदमेव भवति ॥ अत्र प्रथमं यदुक्तं 'भ्वादिः' इति सूत्रेण भू इत्यादीनां धातुसंज्ञा प्रतिपादिता। तेन भूधातोर्दशानामपि लकाराणां प्रयोगं चिकीर्षुः प्रथमं वर्तमानार्थप्रयोगं दर्शयति—तत्रेति । तेषु परस्मैपद्यात्मनेपद्युभयपदिलक्षणेषु धातुषु । भू सत्तायाम् इत्यादिधातुरुदात्तेत्त्वात् परस्मैपदी वर्तते स चाब्विकरणे भवति। विक्रियन्ते अवस्थान्तरं भजन्ते धातवोऽनेनेति विकरणम्। यद्वा प्रत्ययार्थाभिधाने सहायो विकरणम्। यद्वा प्रकृतिप्रत्ययान्तःपाती गणविभागकारकः प्रत्ययो विकरणः। सच 'अप् कर्तरि' इत्याद्याख्यातोक्तः प्रत्ययस्तद्विकरणमुच्यते। अबेव विकरणं यस्यासौ अब्विकरणस्तस्मात्परस्मैपदिनोऽब्विकरणाच्च तिबादयः परस्मैपदार्था नव प्रत्यया योज्यन्ते । इह हि धातवो दशधा। तत्राब्विकरणा भ्वादयः। लुग्विकरणा अदादयः । लुग्विकरणा अपि द्विरुक्ता ह्वादयः। यविकरणा दिवादयः। नुविकरणाः स्वादयः। नम्विकरणा रुधादयः। उव्विकरणास्तनादयः। अविकरणास्तुदादयः। नाविकरणाः क्र्यादयः। स्वार्थे ण्यन्ताश्चुरादयः ॥ तेषु भूधातुरब्विकरणस्तस्मात् तिबादयः प्रयुज्यन्ते ॥ भू सत्तायां। भू अयं धातुः सत्तायां विद्यमानार्थे भवनार्थे वर्तते । भूधातोः प्रथमपुरुषैकवचनम् तिप्। अत्र पकारः पित्कार्यार्थः। 'अपित्तादिर्ङित्' इत्यादि तदर्थोऽयं पकारः। भू ति इति स्थिते ॥

**अप् कर्तरि ॥ धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्यन्तेषु परतः ॥ पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च ॥ प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः ॥**

सूत्रम्—'अप् कर्तरि'॥ अप् प्रथमैकवचनान्तम्। कर्तरि सप्तम्येकवचनान्तम्। द्विपदं सूत्रम्। धातोरिति। भ्वादेर्धातोः प्रत्ययान्ताच्च धातोः कर्तरि अप्प्रत्ययो भवति। तिबादिषु

दिबाद्यन्तेषु चतुर्षु विद्यमानार्थविधिसंभावनार्थाशीःप्रेरणार्थानद्यतनार्थलक्षणेषु चतुर्षु प्रत्ययगणेषु परेषु सत्सु अप्प्रत्ययो भवतीत्यर्थः । अप् इत्यत्र पकारो विकरणाद्भेदज्ञापनार्थः । यतोऽत्र अप्प्रत्ययेऽप्यकारोऽवशिष्यते । 'तुदादेरः' इत्यत्राप्यकारो विधीयते । इत्थम् अप्प्रत्ययस्य अप्रत्ययस्यान्तरं न लक्ष्यते । अतः प्रत्ययभेदज्ञापनार्थमयं पकारः पित्कार्यार्थः । 'भू अति' इति स्थिते ॥

**गुणः ॥ धातोरन्त्यभूतस्य नामिनो गुणो भवति ॥ अवादेशश्च भवति ॥ द्व्यर्थविवक्षायां तस् ॥**

'गुणः' ॥ गुणः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ धातोः धातुसंबन्धिनोऽन्त्यभूतस्य नामिनः इवर्णोवर्णऋवर्णानां च गुणः स्यात्संज्ञासंध्युक्तो भवति ॥ क्वचित् 'णिति परे' इति दृश्यते तदशुद्धम् । पितं विनापि बिभरांचक्रुरित्यादौ गुणस्य दृश्यमानत्वात् । 'भो अ ति' इति स्थिते । अवादेशश्चेति । 'ओ अव्' 'स्वरहीनं०' । भवति इति सिद्धम् ॥ द्व्यर्थविवक्षायां द्वयोर्वाच्यमानयोः सतोः प्रथमपुरुषद्विवचनं तस् । भू तस् । 'अप् कर्तरि' भू अ तस् इति स्थिते 'गुणः' इति ॥

**अपित्तादिर्ङित् ॥ पकारेतं तादिकं च विहायान्यः प्रत्ययो ङित्संज्ञो भवति ॥ अन्य इति किम् । इडामायवर्जितो दशलकारान्तःपाती ङित् । आदिशब्दात्सीसिग्रहणम् ॥**

ननु अप्प्रत्ययं विनापि गुणः क्रियतां तदर्थं सूत्रमाह—'अपित्तादि०' ॥ प इत् यस्यासौ पित् । त आदिर्यस्यासौ तादिः । पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः प्रथमैकवचनान्तम् । ङ इत् यस्यासौ ङित् प्रथमैकवचनान्तम् । द्विपदमिदं सूत्रम् । पकारानुबन्धं तिप् अप् उप् प्रत्ययादिकं तादिकं ता तारौ तारस् इत्यादिश्वस्तनार्थप्रत्ययं विहाय त्यक्त्वा योऽन्यः प्रत्ययः स ङकारानुबन्धं विनापि आख्याते ङित्संज्ञो भवति । पकारेतं तादिकं चेति आदिशब्दात्सिस्यपोर्ग्रहणं । तेन भूतार्थे सिप्रत्यये परे अवर्तिष्ट अदर्शत् अदर्शतामित्यादौ भविष्यदाद्यर्थे स्यपि प्रत्यये परे 'भविष्यति' 'अभविष्यत्' इत्यादौ च गुणः ॥

**क्ङित्यद्व्युसि ॥ किति ङिति च परे धातोर्गुणो न भवति द्व्युसं वर्जयित्वा ॥ कृतद्विर्वचनादुसि परे तु गुणो भवति ॥ ततो ङित्त्वात्तसि गुणप्रतिषेधेऽप्यप्प्रत्ययनिमित्तो गुणो भवत्येव ॥ स्रोर्विसर्गः ॥ भवतः ॥ बह्वर्थविवक्षायां भव अन्ति इति स्थिते ॥**

अथ ङित्प्रयोजनमाह—सूत्रम्—'क्ङित्यद्व्युसि' ॥ क् च ङ् च क्ङौ तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति सप्तम्येकवचनान्तम् । द्विरिति द्विरुक्तो धातुः द्वेः उस् द्व्युस् तस्मादन्योऽद्व्युस् तस्मिन् अद्व्युसि । सप्तम्येकवचनान्तम् । द्विपदं सूत्रम् । किति पिता व्यतिरिक्ते णबादौ यक्प्रत्ययादौ च, ङिति पित्तादिवर्जिते प्रत्यये यङ्प्रत्ययादौ च धातोर्नामिनो गुणो न भवति । तत्रापि विशेषमाह—द्व्युसमित्यादि । द्वेः द्विरुक्तस्य धातोः उस् द्व्युस् तं द्व्युसं वर्जयित्वा अन्यत्र गुणो न भवतीत्यर्थः । कृतद्विर्वचनात् इति अप्प्रत्यये लुकि कृते ह्वादे-

धोतोर्ङ्किरुक्तात्कृतद्वित्वात्परस्य यो झ उसादेशो विहितः तस्मिन् परे सति ङित्त्वेऽपि गुणो भवतीत्यर्थः । ततोऽत्र प्रस्तुते भूधातोः ङित्त्वात्तसि परे गुणप्रतिषेधेऽपि अप्प्रत्यये पिन्निमित्तो गुणो भवत्येव । गुणे कृते । 'ओ अव्' 'स्वरहीनं०' 'स्त्रोर्वि०' भवतः इति सिद्धम् ॥ बह्वर्थानां बहूनां वक्तुमिच्छा यत्र क्रियते तत्र बहुवचने भू अन्ति इति स्थिते । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'स्वरहीनं०' भव अन्ति इति जातम् ॥

**अदे ॥ अकारस्य लोपो भवति अकारे एकारे च परे ॥ भवन्ति । भवसि भवथः भवथ ॥[1]**

सूत्रम्—'अदे' ॥ अश्च ए च अदे तस्मिन् सप्तम्येकवचनान्तं सांकेतिकम् ॥ अकारस्येत्यादि । प्रत्ययस्थे अकारे एकारे च परे लोपो भवति । अनेन च मध्यस्थितस्य अप्प्रत्ययसंबन्धिनोऽकारस्य लोपः । 'स्वरहीनं०' । भवन्ति । इति प्रथमपुरुषस्य वचनत्रयसाधना ॥ एवं भवसि भवथः भवथ । इति मध्यमपुरुषे वचनत्रयसाधना ॥ उत्तमपुरुषे वचनत्रयेऽपि अप्प्रत्यये नामिनो गुणे च कृते । 'ओ अव्' 'स्वरहीनं०' भव मि भव वस् भव मस् इति स्थिते—

**व्मोरा ॥ अकारस्य आत्वं भवति वकारे मकारे च परे । भवामि भवावः भवामः ॥ स राजा धार्मिको भवति । त्वं साधुर्भवसि । अहमात्मविद्भवामीत्यादि प्रयोक्तव्यम् ॥**

सूत्रम्—'व्मोरा' ॥ व् च म् च व्मौ तयोर्व्मोः सप्तमीद्विवचनान्तम् । आ प्रथमैकवचनं सांकेतिकम् । प्रत्ययसंबन्धिनोऽकारस्य तिबादेर्वकारे मकारे च परे आत्वं भवति । अनेन अपोऽकारस्य आकारः । भवामि 'स्त्रो०' भवावः भवामः ॥ अथ ग्रन्थकारः उक्तिप्रयोगमाह—'स राजा धार्मिको भवति' अत्र राजेति कर्तृपदम् । भवतीति क्रियापदम् । धातोः कर्मनिरपेक्षत्वात् अकर्मकत्वम् । धार्मिक इति विशेषणपदम् । एवं तौ राजानौ धार्मिकौ भवतः । ते राजानो धार्मिका भवन्ति । त्वं साधुर्भवसि । युवां साधू भवथः । यूयं साधवो भवथ । अहमात्मविद्भवामि । आवामात्मविदौ भवावः । वयमात्मविदो भवामः । इत्याद्युक्तवाक्यं प्रयोज्यम् ॥

**अव्यवधानाच्च पुरुषविशेषः ॥ यस्य क्रियापदेन व्यवधानं नास्ति ततः पुरुषविशेषः । अत्र व्यवधानं सूत्रस्थं ग्राह्यं न तु वाक्यस्थम् । सूत्रक्रमेण पुरुषप्रयोगो भवति ॥ साधू स च त्वं च भवथः ॥ अहं त्वं स च पण्डिता भवामः ॥**

अथ पुरुषभेदमाह—नामयुष्मदस्मदां द्वयोस्त्रयाणां वा युगपत्प्रयोगे कस्य पुरुषस्य क्रियापदं भवतीत्याह । सूत्रम्—'अव्यवधानाच्च०' ॥ अव्यवधानात्पुरुषविशेषः । अव्यवधानाच्च पुरुषक्रियाभिः सहाव्यवधानादन्तरराहित्यात् प्रथममध्यमोत्तमानां क्रमेण पुरुषविशेषः । चकारात्क्रियाभिर्व्यवधानादन्तरसाहित्यात् उत्तममध्यमप्रथमानां व्युत्क्रमेण

---

१ अदे इत्यत्र अकारैकारौ तिबादिप्रत्ययस्थेत्यर्थः । इत्यधिकम् ॥

पुरुषविशेषः मध्यमप्रथमयोर्मध्यमः उत्तममध्यमयोरुत्तमः उत्तममध्यमप्रथमेषूत्तमः । एवं सर्वलकारेषु ज्ञेयम् । स च त्वं च भवथः । इति व्युत्क्रमेण पुरुषविशेषः । अहं स च भवावः । अहं च त्वं च स च भवामः ॥ इति व्युत्क्रमोऽप्येवमेव ज्ञेयः । अव्यवधानात् अन्तररहितात् क्रियायाः सामीप्यात् पुरुषविशेषः प्रयोक्तव्यः । प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाणां विशेषः स्यात् । अयमर्थः । नामयुष्मदस्मदां पुरुषत्रयाणां मध्ये द्वयोस्त्रयाणां वा युगपत्प्रयोगे सति क्रियायाः समीपस्थं पदं तस्यैव पदस्य पुरुषो भवति । तस्यैव पुरुषस्य क्रियापदं प्रयोज्यम् । यथा साधुः स च त्वं च भवथः इति । अत्र स च त्वं चेत्यत्र युष्मदः क्रियासमीपवर्तित्वात् क्रियाया मध्यमपुरुषः । नामयुष्मदोः प्रयोगात् द्वित्वं च । स च त्वं च साधू भवतः । अत्र नाम्नः क्रियायाः समीपवर्तित्वात्प्रथमपुरुषद्विवचनस्य प्रयोगः । एवं स च त्वं च अहं च साधवो भवामः इत्याद्यपि ज्ञेयम् ॥ व्याकरणान्तरे तु 'युगपद्वचने परः' पुरुषाणामन्यत्र (नामयुष्मदस्मदां मध्ये) द्वययोगे त्रययोगे च परोश्रयमेव । वचनं तु क्रियायाः सामीप्येऽप्यादिमपुरुषवचनम् । इति वर्तमाने साधना ॥

**भूङ् प्राप्तौ आत्मनेपदी । तस्मात्तेप्रभृतीनि नव वचनानि प्रयोज्यानि । अब्गुणावः । भवते ॥**

भूङ् प्राप्तौ । ङित्त्वादात्मनेपदी तस्माद्धातोः तेप्रभृतीनि नव वचनानि प्रयोज्यानि । 'अप् कर्तरि' 'गुणः' 'ओ अव्' भवते । भू आते इति स्थिते । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'स्वरहीनं०' भव आते इति स्थिते ॥

**आदाथ ई ॥ अकारात्परस्य आत् आथ्संबन्धिन आकारस्य ईकारो भवति ॥ भवेते भवन्ते । भवसे भवेथे भवध्वे । अदे—भवे भवावहे भवामहे ॥ स श्रियं भवते ॥**

सूत्रम्—'आदाथ ई' ॥ आ सांके० । आत् च आथ् च आदाथ् तस्य आदाथः । इ । 'स्रो०' । आदौ 'सव०' मध्ये 'आद्बे लोपश्' । त्रिपदं सूत्रम् । अकारात्परस्य आते आथे आताम् आथाम् इति वर्तमाना आशीःप्रेरणाऽनद्यतनप्रथमपुरुषमध्यमपुरुषद्विवचनस्याकारस्य इकारादेशो भवति । अनेन आते इत्यस्याकारस्य इकारः 'अ इ ए' भवेते । भू अन्ते इति स्थिते 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'अदे' भवन्ते । भवसे । भू आथे इति स्थिते 'अप् कर्तरि' गुणः 'ओ अव्' 'आदाथ ई' अनेन आकारस्य इकारः 'अ इ ए' भवेथे भवध्वे । भू ए इति स्थिते । 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'अदे' भवे । 'म्वोरा' भवामहे भवावहे । स पुरुषः श्रियं लक्ष्मीं भवते इत्युदाहरणम् ॥

**विधिसंभावनयोर्यात् यातां युस् यास् यातं यात याम् याव याम ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ॥**

---

१ उक्तंच—'एकदा चेत् क्रियाकालसंबन्धप्रतिपादनम् । धातोर्नामादियुक्तेषु यः परः स पुमान् भवेत् ॥ परत्वं चाभिधायकसूत्रापेक्षया, न प्रयोगापेक्षया ॥ संख्या समुदायाश्रया ग्राह्या तच्चोक्तम्—'द्वयोर्नाम्नोर्बहूनां वा यदि वाक्ये समुच्चयः । नामत्रयाश्रया संख्या क्तिबायोर्विशेषणम् ॥'

**विधिः कर्तव्यार्थोपदेशः । संभावनं कल्पनमूहः तत्र यादादयः प्रत्यया भवन्ति ॥ लिङिति चैषां संज्ञा पाणिनीयानाम् ॥**

अथ द्वितीयं लकारमाह—'विधिसंभावनयो०' ॥ विधिश्च संभावनं च विधिसंभावने तयोः विधिसंभावनयोः । शेषाण्यष्टादशापि पदानि प्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । अथ विधिसंभावनयोरिति पदं व्याचष्टे—विधिरित्यादि । कर्तव्यः कर्तुं योग्योऽर्थः स कर्तव्यार्थस्तस्योपदेशः शिक्षा स कर्तव्यार्थोपदेशः ॥ अथवा अज्ञातस्य वस्तुनो ज्ञापनं विधिः । कर्तव्यार्थो यथा—'विप्रो वेदमधीयीत' अज्ञातज्ञापनं प्रातःकृत्यादि शिक्षारूपम् । सर्वोऽप्ययं विधिः ॥ तथा संभावनं कल्पनं विचारणमुच्यते । तस्य पर्यायान्तरमूह इति । वितर्क इत्यर्थः । ततो विधौ संभावने च यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां यादादीनामष्टादशानां पाणिनीयव्याकरणपाठकानां मते लिङ् इति संज्ञा ॥ भू इति स्थिते तत्र प्रथमैकवचने भू यात् । 'अप् कर्तरि' 'गुणः' 'ओ अव्' । भव यात् इति स्थिते ॥

**या ई ॥ अकारात्परो या ई भवति ॥ अ इ ए । भवेत् भवेताम् ॥ युस इट् ॥ अकारात्परस्य युस इडागमो भवति ॥ भवेयुः । भवेः भवेतम् भवेत ॥**

सूत्रम् । 'या ई' ॥ या प्रथमैकवचनान्तं सांकेतिकम् । ई प्रथमैकवचनान्तम् । अकारात्परो विधिसंबन्धिप्रत्ययस्य यो या इति वर्णः स ई इति भवति । इकारः । 'अ इ ए' भवेत् भवेताम् । बहुवचने भव युस् इति स्थिते । 'युस इट्' युसः षष्ठ्येकवचनान्तम् । इट् प्रथमैकवचनान्तम् । द्विपदम् । अकारात्परस्य युस इत्येतस्य वचनस्य इडागमो भवति । टित्त्वादादौ । 'अ इ ए' भवेयुः । भवेः भवेतं भवेत । सर्वत्र 'या ई' इतीकारः । उत्तमपुरुषैकवचने भव याम् इति स्थिते ॥

**यामियम् ॥ अकारात्परो यामियं भवति ॥ भवेयम् भवेव भवेम । शिष्यो गुरुशुश्रूषको भवेदिति विधिः । भवेदसौ वेदपारगो ब्राह्मणत्वादिति संभावनम् ॥ भवेत भवेयाताम् भवेरन् । भवेथाः भवेयाथाम् भवेध्वम् । भवेय भवेवहि भवेमहि । 'अहं हरिभक्तिं भवेय ॥'**

सूत्रम्—'यामियम्' ॥ याम् षष्ठ्येकवचनान्तम् । इयम् प्रथमैकवचनान्तम् । अकारा-

---

१ परस्मैपदानि

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | यात् | याताम् | युस् |
| मध्यमः | यास् | यातम् | यात |
| उत्तमः | याम् | याव | याम |

आत्मनेपदानि

| | | | |
|---|---|---|---|
| प्रथमः | ईत | ईयाताम् | ईरन् |
| मध्यमः | ईथास् | ईयाथाम् | ईध्वम् |
| उत्तमः | ईय | ईवहि | ईमहि |

त्परस्य यामिति वचनस्य इयम् भवति । गुरुत्वात्सर्वस्यादेशः । भवेयम् । द्वित्वबहुत्वयोः । 'या ई' इतीकारः । भवेव भवेम । इति सिद्धम् ॥ अथोदाहरणम् । शिष्यो गुरुशुश्रूषको भवेत् । विधिः । अत्र शिष्यस्य गुरुशुश्रूषारूपः कर्तव्यार्थः, अस्योपदेशविधिः शिष्येण गुरुशुश्रूषा कर्तव्येत्युपदिश्यते । ततोऽत्र विधौ यादादयः । तथा असौ ब्राह्मणत्वाद्वेदपारगो भवेत् इति संभावने संभवे यादादयः प्रत्ययाः स्युः । ब्राह्मणत्वेन वेदपारगत्वं संभाव्यते इत्यर्थः । एवमन्यान्यप्युदाहरणानि ज्ञेयानि ॥

**आशीःप्रेरणयोस्तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप् ताम् आताम् स्व आथाम् ध्वम् ऐप् आवहैप् आमहैप् ॥ अप्राप्तप्रार्थनमाशीः परस्येष्टार्थाशंसनं वा प्रेरणं प्रवर्तनम् । तत्र तुबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लोट् ॥**

सूत्रम्—'आशीःप्रेरणयोः' ॥ आशीश्च प्रेरणं च आशीःप्रेरणे तयोराशीःप्रेरणयोः । सप्तमीद्विवचनान्तम् । शेषाणि तुबादीनि महैप्पर्यन्तानि अष्टादश पदानि प्रथमैकवचनान्तानि सांकेतिकानि । एवमेकोनविंशतिपदं सूत्रम् । आशिषं प्रेरणं व्याचष्टे—अप्राप्तस्य वस्तुनः स्वयं प्रार्थनं मे इदं वस्तु भवतु इत्याशीः । परस्यान्यजनस्य वा इष्टाशंसनं वाञ्छितार्थकथनं वा आशीरुच्यते । तथा हे शिष्य इदं कार्यं कुरु इति यत्प्रवर्तनं तदेव प्रेरणम् । तत्र आशिषि प्रेरणे च तुबादय आमहैप्पर्यन्ता अष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति। एषां च तुबादीनां पाणिनीयानां मते लोट् इति संज्ञा कथ्यते । भू । तुबादयः । सर्वत्रापि । 'अप् कर्तरि' गुणः 'ओ अव्' 'स्वरहीनं०' पकारः पित्कार्यार्थः । भव तु । भू तुप् इति स्थिते ॥

**तुह्योस्तातङ्ङाशिषि वा वक्तव्यः ॥ भवतु–भवतात् भवताम् भवन्तु ॥**

'तुह्योस्तातङ्ङाशिषि वा वक्तव्यः०' ॥ तुश्च हिश्च तुही तयोः तुह्योः आशीःप्रेरणे तुप् हि इत्येतयोर्वचनयोराशिष्यर्थे वाच्यमाने तातङित्यादेशो वा भवति । ङकारो ङित्कार्यार्थः । गुणनिषेधार्थस्तनुतादित्यादौ । अत्र तु अप्प्रत्ययनिमित्तो गुणो भवत्येव । अकार उच्चारणार्थः । गुरुत्वात्सर्वस्य तात् इति । तेन प्रथमपुरुषैकवचने रूपद्वयम् । भवतु भवतात् । भवताम् । भव अन्तु इति स्थिते 'अदे' इत्यकारलोपः । 'स्वरहीनं०' भवन्तु । मध्यमपुरुषैकवचने भव हि इति स्थिते ॥

---

१

परस्मैपदानि

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | तुप् | ताम् | अन्तु |
| मध्यमः | हि | तम् | त |
| उत्तमः | आनिप् | आवप् | आमप् |

आत्मनेपदानि

| | | | |
|---|---|---|---|
| प्रथमः | ताम् | आताम् | अन्ताम् |
| मध्यमः | स्व | आथाम् | ध्वम् |
| उत्तमः | ऐप् | आवहैप् | आमहैप् |

**अतः ॥ अकारात्परस्य हेर्लुग्भवति न तु तातङः ॥ तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं न त्वन्त्यादेशार्थम् । भव-भवतात् भवतम् भवत । भवानि भवाव भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य ॥ भवताम् भवेताम् भवन्ताम् । भवस्व भवेथाम् भवध्वम् । भवै भवावहै भवामहै । हरिं भवस्व त्वम् ॥**

'अतः' ॥ पञ्चम्येकवचनान्तम् । अकारादुत्तरस्य हि इतिवचनस्य लुग्भवति । अनेन हेर्लुग्भवति । भव इति सिद्धम् । द्वितीयरूपे । 'तुह्योस्तात०' इति तातङ् आदेशः । भवतात् भवतं भवत । उत्तमपुरुषैकवचनत्रयेऽपि 'सवर्णे दीर्घः०' भवानि भवाव भवाम । अथोदाहरणम्—भवानायुष्मान् भवतु । इत्याशीः । एवं भवन्तावायुष्मन्तौ भवताम् । भवन्तः आयुष्मन्तो भवन्तु । अत्र यद्यपि भवच्छब्दो युष्मच्छब्दवाची तथापि सामान्येन नामरूपत्वात् प्रथमपुरुषप्रयोगः । हे सौम्य त्वमध्ययनाय पठनाय उद्यतः सावधानो भव । अत्र प्रेरणे मध्यमपुरुषैकवचनप्रयोगः । एवमन्यदप्युदाहरणं ज्ञेयम् ॥

**अनद्यतनेऽतीते दिप् ताम् अन् सिप् तम् त अमिप् वं म तन् आताम् अन्त थास् आथाम् ध्वम् इ वहि महि ॥ अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लङ् ॥ दिसिमि इत्येतेषामिकार उच्चारणार्थः । ततो नकार 'इण्तन्यकर्तरि' इति विशेषणार्थः । 'वावसने' इति दकारस्य तकारः ॥**

सूत्रम्—'अनद्यतनेऽतीते' ॥ अद्य भवोऽद्यतनस्तदन्योऽनद्यतनस्तस्मिन् अनद्यतने सप्तम्येकवचनान्तम् । अतीते सप्तम्येकवचनान्तम् । अग्रे दिबादीन्यष्टादशपदानि प्रथमैकवचनान्तानि सांकेतिकानि । एवं विंशतिपदं सूत्रम् । अथ वृत्तिकारोऽनद्यतनेऽतीते इति पदं व्याचष्टे—अतीताया इति । वर्तमानदिनात्प्राक् अतीताया गताया रात्रेः अन्त्ययामद्वयादर्वाक् वर्तमानदिनं संयोज्यं यावत् आगामिन्या आसन्नवर्तिन्या रात्रेः प्रथमप्रहरद्वयं सोऽद्य-

---

**१ परस्मैपदानि**

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | दिप् | ताम् | अन् |
| मध्यमः | सिप् | तम् | त |
| उत्तमः | अमिप् | व | म |

**आत्मनेपदानि**

| | | | |
|---|---|---|---|
| प्रथमः | तन् | आताम् | अन्त |
| मध्यमः | थास् | आथाम् | ध्वम् |
| उत्तमः | इ | वहि | महि |

प्रहरप्रमाणः कालोऽद्यतन इत्युच्यते। ततोऽनद्यतनः कालोऽन्यः । स च अनद्यतनो द्विधा । अतीतानागतभेदात् । तत्रातीतेऽनद्यतने काले वाच्यमाने सति दिबादयो महिपर्यन्ताः परस्मैपदात्मनेपदभेदेनाष्टादश प्रत्यया भवन्ति । एषां चाष्टादशानां पाणिनीयमते लङ् इति संज्ञा—'अनद्यतने लङ्' इति ॥ दिसिमीत्यादि । तत्र दिप् सिप् अमिप् इत्येतेषां पकारः पित्कार्यार्थः । इकार उच्चारणार्थः । तेन द् स् अम् इत्यवशिष्यते। आत्मनेपदे तन् इति वचनस्य नकारः 'इण् तन्यकर्तरि' इति सूत्रार्थः । भू । दिबादीनि नव परस्मैपदवचनानि । सर्वत्र । 'अप्कर्तरि' 'गुणः' 'ओ अव्' प्रथमपुरुषैकवचने । 'वावसाने' दस्य तः ॥

**दिबादावट् ॥ दिबादौ परे धातोरडागमो भवति ॥ अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम । ह्योऽभवत्त्वत्पुत्रः ॥**

सूत्रम्—'दिबादावट्' ॥ दिप् आदिर्यस्यासौ दिबादिस्तस्मिन् दिबादौ सप्तम्येकवचनान्तम्। अट् प्रथमैकवचनान्तम् । मध्ये । 'ओ अव्' द्विपदमिदं सूत्रम् । दिबादौ प्रत्यये परे सति धातोः अट् इत्यागमो भवति । टित्त्वादादौ । अभवत् अभवताम् । बहुवचने—'अदे' इत्यकारलोपः । 'स्वर०' अभवन् । मध्यमपुरुषैकवचने—'स्रोर्वि०' अभवः अभवतम् अभवत । उत्तमपुरुषैकवचने—'अदे' इत्यकारलोपः 'स्वर०' अभवम् । द्वित्वबहुत्वयोः—'ङमोरा' अभवाव अभवाम । अथोदाहरणं कल्पे—अतीतदिने पूर्वेद्युः तव पुत्रोऽभवत् । एवं ह्यः तव पुत्रौ अभवताम् । तव पुत्रा अभवन् । ह्यस्त्वमभवः । ह्यो युवामभवतम् । ह्यो यूयमभवत । ह्योऽहमभवम् । ह्य आवामभवाव । ह्यो वयमभवाम इत्याद्युदाहरणानि योज्यानि । एवं भवतिवत्कर्तरि विभक्तिचतुष्टये परस्मैपदिनां धातूनामुदाहरणानि योज्यानि ॥

**अभवत अभवेताम् अभवन्त । अभवथाः अभवेथाम् अभवध्वम् । अभवे अभवावहि अभवामहि । स राज्यमभवत ॥**

अथात्मनेपदिनो भूधातोस्तनादयो नव प्रत्यया भवन्ति । भू तन् इति स्थिते 'अप् कर्तरि' 'गुणः' 'ओ अव्' 'दिबादावट्' तनो नकारः इत् । अभवत । 'आदाथ ई' 'अइए' अभवेताम् अभवन्त । अभवथाः अभवेथाम् अभवध्वम् । 'अइए' अभवे अभवावहि । अभवामहि । स पुरुषो राज्यमभवत । इत्युदाहरणम् ॥

---

**अथ णबादि कर्तरि प्रणीयते—परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ धातोः परोक्षेऽतीते काले णबादयः प्रत्यया भवन्ति ॥ एषां संज्ञा लिट् ॥**

---

१ परस्मैपदानि

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | णप् | अतुस् | उस् |
| मध्यमः | थप् | अथुस् | अ |
| उत्तमः | णप् | व | म |

अथ णवादि विभक्तिषट्कं कर्तरि कर्त्रुक्तौ प्रणीयते प्रदर्श्यते इत्यर्थः ॥ सूत्रम् 'परोक्षे' ॥ अक्षेभ्यः परोऽगोचरः परोक्षस्तस्मिन् परोक्षे । 'कचिदमाद्यन्तस्य परत्वम्' इति परशब्दस्यादौ प्रयोगः अक्षशब्दस्य परत्वम् । परःशब्दोऽत्र सान्तो निपातो गृह्यते । परार्थवाचको न परशब्दः यथा 'अलुक् कचित्' ॥ प्रक्रियासते तु पारस्करादित्वात्सुडागमः । णवादीन्यष्टादशापि पदानि सांकेतिकप्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । परोक्षे इन्द्रियागोचरे अतीते गते काले णबादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयमते लिट् इति संज्ञा ॥

**णादिः कित् ॥ अपित् णादिः किद्भवति ॥ द्विश्च ॥ णवादिसंयोगे धातोर्द्विवचनम् ॥ सस्वरादिर्द्विरद्विः ॥ सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति ॥ भू भू णप् इति स्थिते । णकारो वृद्ध्यर्थः । पकारः पित्कार्यार्थः ॥**

सूत्रम्—'णादिः कित्' ॥ अपित् णादिः किद्भवति । कित्त्वाद्गुणाभावः । अथ भूधातोः परस्मैपदप्रक्रिया प्रदर्श्यते । भू णप् इति स्थिते णो वृद्ध्यर्थः । पकारः पित्कार्यार्थः । भू अ इति स्थिते । सूत्रम् 'द्विश्च' ॥ द्वि द्विवारम् इति विग्रहे 'द्वित्रिचतुर्भ्यः सुः' इति सु द्विस् प्रथमैकवचनं सि 'अव्यया०' 'स्त्रोर्वि०' । च अव्ययं ॥ द्विपदं ॥ णवादिसंयोगे सति धातोर्द्विर्वचनं द्वित्वं भवति ॥ सूत्रम्—'सस्वरादिर्द्विरद्विः' ॥ स्वरेण सहितः सस्वरः स्वरसहित इत्यर्थः । सस्वरश्चासौ आदिश्च सस्वरादिः प्रथमैकवचनान्तम् । द्विः अव्ययम् । न द्विः अद्विः त्रिपदं सूत्रम् । सस्वर अद्विरुक्तः आद्यावयवो द्विर्भवति । भू भू अ इति स्थिते ॥

**आभ्वोर्णादौ ॥ [ आ, अश्च भूश्च अभ्वौ तयोः ] पूर्वस्याकारस्य भूशब्दस्य च आकारो भवति णादौ सति ॥ ह्रस्वः ॥ पूर्वसंबन्धिनो दीर्घस्य ह्रस्वो भवति ॥**

सूत्रम्—'आभ्वोर्णादौ' ॥ अश्च भूश्च अभ्वौ तयोः अभ्वोः । ण आदिर्यस्यासौ णादिः तस्मिन् णादौ । आदौ 'सवर्णे दीर्घः सह' द्वितीये 'नामिनो रः' द्विपदं सूत्रम् ॥ णादौ परे द्वित्वे कृते सति पूर्वस्य द्विरुक्तरूपस्य अकारस्य तथा भूधातुसंबन्धिन उकारस्य च आकारादेशो भवति । यद्यप्यासेत्यादौ आकारकरणं विनैव सिद्धिस्तथापि व्यानशे आनञ्ज आनर्च इत्यादिसिद्ध्यर्थमकारस्त्वम् । इति पूर्वस्य भूइत्येतस्य भा । भा भू अ इति जाते ॥ सूत्रम्—'ह्रस्वः' ॥ एकपदम् । पूर्वसंबन्धिदीर्घस्य ह्रस्वो भवति । अनेन पूर्वस्य ह्रस्वः ॥ भ भू अ इति स्थिते ॥

**झपानां जबचपाः ॥ पूर्वसंबन्धिनां झपानां जपाश्चपाश्च भवन्ति ॥ [ झढधघभानां जडदगबा भवन्ति । खफछठथानां चटतकपा भवन्ति [ इति पूर्वभ-**

---

आत्मनेपदानि

| | | | |
|---|---|---|---|
| प्रथमः | ए | आते | इरे |
| मध्यमः | से | आथे | ध्वे |
| उत्तमः | ए | वहे | महे |

कारस्य वकारः ॥ भुवो वुक् ॥ भुवो वुगागमो भवति णादौ स्वरे परे ॥ बभूव बभूवतुः बभूवुः ॥

सूत्रम्—'झपानां जबचपाः' ॥ झपानां जबाश्च चपाश्च जबचपाः । पूर्वसंबन्धिनां झपानां जबाः चपा भवन्ति । झढधघभानां जडदगबा भवन्ति खफछठथानां कपचटता भवन्ति ॥ इत्यनेन सूत्रेण भकारस्य बकारो जातः । पुनश्च ब भू अ इति जाते ॥ सूत्रम्—'भुवो वुक्' ॥ भूधातोर्णबादौ स्वरे परे वुगागमो भवति ॥ कित्त्वादन्ते । उकार उच्चारणार्थः । वुग्विधानसामर्थ्यादेव गुणवृद्धी न भवतः । 'स्वरहीनं०' । बभूव बभूवतुः बभूवुः । बभू थ इति स्थिते ॥

क्रादेर्णादेः ॥ [ डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् संवरणे । द्रु गतौ । श्रु श्रवणे । स्रु प्रस्रवणे । ष्टुञ् स्तुतौ ] कृसृभृवृद्रुश्रुस्रुस्तु इत्येतस्मात्परस्य वसादेर्णादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडागमः । [ 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्यायादिटोऽपि णबाद्यन्तत्वेन थपि वुक् । ] बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम । बलिर्बलवान् बभूव ॥

सूत्रम्—'क्रादेर्णादेः' ॥ कृआदिर्यस्यासौ क्रादिस्तस्मात्क्रादेः । णादेः । द्विपदं सूत्रम् । डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् वरणे । द्रु गतौ । श्रु श्रवणे । ष्टुञ् स्तुतौ । इत्येतेभ्यो धातुभ्यः परस्य वस् प्रत्याहारादेर्णादिगणस्य । वस् प्रत्याहारः आदौ यस्य स वस्प्रत्याहारादिस्तस्य वस्प्रत्याहारादेः । थप् व म से ध्वे वहे महे इति प्रत्ययस्येडागमो न भवति । यथा चकर्थ ससर्थ बभर्थ दुद्रोथ शुश्रोथ तुष्टोथ इत्यादौ इडागमो न भवति ॥ अन्यस्माद्धातोस्तु इडागमो भवति । यतो निषेधः प्राप्तिपूर्वको भवतीति । एभ्यो धातुभ्य इड्निषेधेऽन्यस्माद्धातोः इट् भवतीति नियमः । इति भूधातोः णबादिषु स्वरादिव्यतिरिक्तेषु थकारवकारमकारेषु इडागमो भवति । 'वुक्' 'स्वर०' बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम ॥ बलिर्बलिराजा बलवान् बभूव ॥ एवं रामलक्ष्मणौ बलवन्तौ बभूवतुः । पाण्डवा बलवन्तो बभूवुः । त्वं बलवान् बभूविथ इत्युदाहरणम् । इति लिड्लकारस्य परस्मैपदम् ।

बभूवे बभूवाते बभूविरे । बभूविषे बभूवाथे ॥

अथात्मनेपदं लिख्यते । बभूवे बभूवाते बभूविरे । बभूविषे बभूवाथे । एतेषु रूपेषु पूर्वोक्तसूत्रेणैव सिद्धिः । बभूविध्वे इति जाते सति ॥

नामिनोऽचतुर्णां धो ढः ॥ नाम्यन्ताद्धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिडो लुङ्लिटोश्च धस्य ढो भवति ॥ अत्र सेटो हलाद्वेति वक्तव्यम् ॥ बभूविध्वे-बभूविढ्वे । बभूवे बभूविवहे बभूविमहे । रामो राज्यं बभूवे ॥

सूत्रम्—'नामिनोऽचतुर्णां०' नाम अस्यास्तीति नामी तस्य नामिनः। अचतुर्णां धः ढः। नामी अन्ते यस्य सः नाम्यन्तः तस्मान्नाम्यन्तात् धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोः धस्य ढकारो भवति। अनेन सूत्रेण धकारस्य ढकारो जातः। अत्र अस्मिन्सूत्रे (सेटो हलाद्वेति वक्तव्यम्) अस्यार्थः—इटा सहवर्तमानः सेट् तस्मात् सेटः हलात् वा भवति इति विकल्पेन धस्य ढो भवति। अतो बभूविध्वे बभूविढ्वे इति रूपद्वयं जातम्। बभूवे बभूविवहे बभूविमहे। रामो राज्यं बभूवे। भूधातोर्लिट्लकारः समाप्तिमगमत्। एवं पञ्च लकारा उक्ताः॥

**आशिषि यात् यास्ताम् यासुस् यास् यास्तम् यास्त यासम् यास्व यास्म। सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि॥ धातोराशिषि यादादयो भवन्ति॥ एषां संज्ञा लिङ्॥**

अथ षष्ठो लकारः प्रारभ्यते। सूत्रम्—'आशिषि०'॥ आशिषि सप्तम्येकवचनान्तम्। अग्रे यादादीन्यष्टादशपदानि प्रथमैकवचनान्तानि सांकेतिकानि। एकोनविंशतिपदं सूत्रम्। धातोः केवलायामाशिषि अप्राप्तप्रार्थनालक्षणायां परस्येष्टार्थशंसनलक्षणायां वाच्यमानायां यादादयोऽष्टादशप्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति। पाणिनीयानां मते एषां संज्ञा लिङ्। भूधातोः परस्मैपदित्वात् नव यादादयः प्रत्यया भवन्ति॥

**आशीर्वादादेः पं किदिति वक्तव्यम्॥ ततो गुणाभावः। भूयात् भूयास्ताम् भूयासुः। भूयाः भूयास्तम् भूयास्त। भूयासम् भूयास्व भूयास्म। सः श्रीमान् भूयात्॥**

'आशीर्वादादेः'॥ पं परस्मैपदं कित् भवति इति वक्तव्यम्। कित्त्वाद्गुणाभावः। भूयात् भूयास्ताम् भूयासुः। भूयाः भूयास्तं भूयास्त। भूयासं भूयास्व भूयास्म। स पुरुषः श्रीमान् लक्ष्मीवान् भूयात्। इत्युदाहरणम्। एवं तौ श्रीमन्तौ भूयास्ताम्। ते श्रीमन्तो भूयासुः।

**भू सीष्ट इति स्थिते॥ सिसतासीस्यपामिट्॥ धातोः परेषां सि स तासी स्य प् इत्येतेषामिडागमो भवति॥ गुणावादेशौ। षत्वम्। भविषीष्ट**

---

१ परस्मैपदानि

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | यात् | यास्ताम् | यासुस् |
| मध्यमः | यास् | यास्तम् | यास्त |
| उत्तमः | यासम् | यास्व | यास्म |

आत्मनेपदानि

| | | | |
|---|---|---|---|
| प्रथमः | सीष्ट | सीयास्ताम् | सीरन् |
| मध्यमः | सीष्ठास् | सीयास्थाम् | सीध्वम् |
| उत्तमः | सीय | सीवहि | सीमहि |

**भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीन्य-वधानेऽपि ढत्वम् भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । हरि-भक्तिं भविषीष्ठाः ॥**

भूङ् प्राप्तौ इति धातोरात्मनेपदित्वात् सीष्टादयो नव प्रत्यया भवन्ति । भू सीष्ट इति स्थिते । गुणः । भोसीष्ट इति जाते ॥ सूत्रम्—'सिसतासी०' ॥ सिश्च सश्च ता च सीश्च स्यप् च सिसतासीस्यपः तेषां सिसतासीस्यपाम् । इट् । द्विपदं सूत्रम् । सि 'भूते सिः' । स इति इच्छार्थः सः । ता श्वस्तनार्थेऽष्टादशको गणः । सी सीष्ट सीयास्तामित्यादिः आशीरर्थात्मने-पदे नवको गणः । स्यप् भविष्यत् क्रियातिपत्त्योः । धातोः परेषां इत्येतेषां प्रत्ययानामिडा-गमो भवति । टित्त्वादादौ । अत्र प्रथमं सीष्टादिकस्याङित्त्वाद् गुणं विधाय तत इडागमः । अथवा इडागमे कृतेपि टित्त्वे सति ङित्त्वाभावात् गुणकरणे न दोषः । 'ओ अव्' 'किलात्' भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीव्यव-धानेपि ढत्वं भवेत् । [ तत्र 'सेटो हलाद्वा' इति विकल्पेन भविषीध्वम् ] भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । त्वं हरिभक्तिं भविषीष्ठा इत्युदाहरणम् । इत्यात्मनेपदिनो रूपाणि ॥ समाप्तिमगमत्षष्ठो लकारः ॥

**श्वस्तने ता तारौ तारस् तासि तास्थः तास्थ तास्मि तास्वस् ता-स्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ॥ श्वो आगतेऽह्नि भविष्यदर्थे तादयो भवन्ति ॥ एषां संज्ञा लुट् ॥**

**इड्गुणावः । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता ॥**

सूत्रम्—'श्वस्तने' ॥ श्वो भवः श्वस्तनस्तस्मिन् श्वस्तने । ता तारौ तारस् । इत्याद्यष्टादश पदानि सांकेतिकानि प्रथमैकवचनान्तानि । इत्येकोनविंशतिपदं सूत्रम् । धातोः श्व आगा-मिदिने भाविनि कालेऽर्थे तादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयानां मते लुट् संज्ञा । प्रथमं परस्मैपदिनो धातो रूपाणि । भू ता इति स्थिते । गुणः । 'सिसतासीस्यपामिट्' इत्यनेन सूत्रेण इट् । 'ओ अव्' भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वः प्रातःकाले तव हरिः प्रत्यक्षो भविता ॥

---

**१ परस्मैपदानि**

| | एकवचनानि | द्विवचनानि | बहुवचनानि |
|---|---|---|---|
| प्रथमः | ता | तारौ | तारस् |
| मध्यमः | तासि | तास्थम् | तास्थ |
| उत्तमः | तास्मि | तास्वस् | तास्मस् |

**आत्मनेपदानि**

| | | | |
|---|---|---|---|
| प्रथमः | ता | तारौ | तारस् |
| मध्यमः | तासे | तासाथे | ताध्वे |
| उत्तमः | ताहे | तास्वहे | तास्महे |

**भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे । भविताहे भवितास्वहे भवितास्महे । श्वो हरिं भवितासे ॥**

अथात्मनेपदिनो भूङ् धातो रूपाणि पूर्वोक्तेनैव सूत्रेण साधितव्यानि । भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे-[ भविताढ्वे ? ] । भविताहे भवितास्वहे भवितास्महे । इति रूपाणि । श्वो हरिं भविता इत्युदाहरणम् । एतेषामुदाहरणानि विस्तरभयान्न लिखितानि । लुट्लकारः समाप्तः । समाप्तोयं सप्तमो लकारः ॥

**त्यादौ भविष्यति स्यप् ॥ धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिबादिष्वष्टादशसु परेषु । अस्य संज्ञा लृट् ॥ भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्धर्मप्रवर्तको भविष्यति ॥**

सूत्रम्—'त्यादौ भविष्यति स्यप्' ॥ त्यादौ, भविष्यति, स्यप् । त्रिपदं सूत्रम् । भविष्यतीति भविष्यन् तस्मिन् भविष्यति काले धातोः तिबाद्यष्टादशसु परस्मैपदात्मनेपदवचनेषु परेषु स्यप् प्रत्ययो भवति । पकारः पित्कार्यार्थः । पाणिनीयानां मते अस्य लृट् इति संज्ञा । भू तिप् इति स्थिते 'त्यादौ भविष्यति स्यप्' अनेन सूत्रेण स्यप् प्रत्ययः । 'सिसतासीस्यपां' अनेन सूत्रेणेट् । 'गुण' इति गुणः । 'ओ अव्' इति अव् । 'किलात्०' इति षकारः पूर्वोक्तेन सूत्रेण भविष्यति इति रूपं सिद्धम् । अत्रान्यानि सूत्राणि पूर्वोक्तानि ज्ञेयानि । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्नामेश्वरस्यावतारो धर्मप्रवर्तको भविष्यति इत्युदाहरणम् । इति परस्मैपदिनो रूपाणि कथितानि ।

**भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे ॥ सावर्णी राज्यं भविष्यते ॥**

अथात्मनेपदिनो रूपाणि कथ्यन्ते । पूर्वोक्तेनैव सूत्रेणात्मनेपदिनोपि रूपाणि सिद्ध्यन्ति । भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे । सावर्णिर्मनू राज्यं भविष्यते इत्युदाहरणम् । इत्यात्मनेपदिनो रूपाणि । समाप्तोऽयं लृट्लकारः । अष्टमो लकारः समाप्तः ॥

**स्यप् क्रियातिक्रमे ॥ धातोः क्रियाया अतिक्रमे कुतश्चिद्वैगुण्यादनिष्पत्तौ सत्यां दिबादिपरः स्यप् प्रत्ययो भवति भविष्येऽर्थे क्वचिद्भूतेऽपि ॥ अस्य संज्ञा लृङ् ॥ अडागमः । अभविष्यत्-अभविष्यद् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम । यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत् ॥**

सूत्रम्—'स्यप् क्रियातिक्रमे'॥ स्यप् क्रियातिक्रमे । द्विपदं सूत्रम् । क्रियाया अतिक्रमोऽभवनं क्रियातिक्रमस्तस्मिन् क्रियातिक्रमे । क्रियायाः कर्तृव्यापाररूपाया धात्वर्थलक्षणायाः कार्यस्य वातिक्रमे कुतश्चित्कारणादनिष्पत्तौ असिद्धौ सत्यां धातोर्दिबादिषु विभक्तिषु परतः स्यप्-

त्ययो भवति । पाणिनीयानां मते एषां ऌङ् इति संज्ञा ॥ भू दिप् इति स्थिते अनेन सूत्रेण स्यप् प्रत्ययः । 'सिसतासी०' अनेनेडागमः। 'गुणः' अनेन सूत्रेण गुणः । 'ओ अव्' इति सूत्रेणाव् । 'किलात्' इति षकारः । 'वावसाने' अनेन तकारस्य दकारो भवति । 'दिबादावट्' इति सूत्रेणाडागमो भवति । 'स्वरहीनं' अभविष्यत् अभविष्यताम् । 'अदे' इति सूत्रेणाकारस्य लोपः कार्यः । प्रथमपुरुषस्य बहुवचने अभविष्यन् । अभविष्यः अभविष्यतं अभविष्यत । 'अद्दे' अभविष्यम् । 'व्मोरा' अभविष्याव अभविष्याम । अथोदाहरणम् । यदि सुवृष्टिः सुराज्यं च अभविष्यत् तदा सुभिक्षं अभविष्यत् । इति परस्मैपदिनो भूधातो रूपाणि ।

**अभविष्यत अभविष्येताम् अभविष्यन्त । अभविष्यथाः अभविष्येथाम् अभविष्यध्वम् । अभविष्ये अभविष्यावहि अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत् ॥**

अथात्मनेपदिनो भूधातो रूपाणि कथ्यन्ते तेषामनेनैव सूत्रेण सिद्धिः । अभविष्यत अभविष्येताम् अभविष्यन्त । अभविष्यथाः अभविष्येथाम् अभविष्यध्वम् । अभविष्ये अभविष्यावहि अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत् । समाप्तिं गतो नवमोयं ऌङ्लकारः । अस्येतराण्युदाहरणानि न दर्शितानि विस्तरभयात् ॥

**भूते सिः ॥ धातोर्भूतमात्रे काले सिः प्रत्ययो भवति दिबादिपरः ॥ अस्य संज्ञा लुङ् ॥ इकारः सेरिति विशेषणार्थः । अभूस् त् इति स्थिते ॥ दादेः पे ॥ परस्मैपदे परे अपित् दाधास्थेणभूपिबतिभ्यः परस्य सेर्लोपो भवति ॥**

सूत्रम्—'भूते सिः' ॥ धातोर्भूतमात्रे तत्कालोत्पन्नमात्रे अतीते कालेऽर्थे सिप्रत्ययो भवति दिबादौ परे । इकारः 'सः' इति विशेषणार्थः । अस्य पाणिनीयानां मते लुङ् इति संज्ञा । भू दिप् इति स्थिते 'भूते सिः' अनेन सूत्रेण सिः प्रत्ययः । इकारः 'सेः' इति विशेषणार्थे इत्संज्ञकत्वाल्लुप्यते 'दिबादावट्' अनेनाडागमः । 'वावसाने' अनेन दकारस्य तकारः । पूर्वोक्तसूत्रैः अभू स् त् इति जातम् ॥ सूत्रम् 'दादेः पे' ॥ अपित् दा धा स्था इण् भू पा पाने इत्येतेभ्यः परस्य भूतार्थस्य सेर्लोपो भवति परस्मैपदविषये ॥

**शाच्छासाघ्राधेटो वेति वक्तव्यम् ॥ भुवः सिलोपो लुग्वाच्यः ॥ लुकि न तन्निमित्तम् । तेन गुणेड्वृद्धयो न । अभूत् अभूताम् ॥ भुवः सिलोपे स्वरे वुग्वक्तव्यः ॥ अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । अभूद्वृष्टिः ॥**

'शाच्छासा०' ॥ शाच्छासाघ्राधेट् एभ्यो धातुभ्यः सिलोपो वा भवतीति वक्तव्यम् । 'भुवः' [ इदं सूत्रमस्ति ] भूधातोः सिलोपो लुग्वाच्यः । लुकि न तन्निमित्तम् । तेन गुणेड्वृद्धयो न भवन्ति । अभूत् अभूताम् । बहुवचने अभू अन् इति स्थिते 'भुवः' भूधातोः सिलोपे कृते सति स्वरे परे अमि अनि च पुगागमो भवति । ककारो गुणप्रतिषेधार्थः स्थाननियमार्थश्च । उकार उच्चारणार्थः । इति अनि वकारागमः । 'स्वरहीनं०' अभूवन् ।

अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । इति परस्मैपदिनो भूधातो रूपाणि । अभूत वृष्टिरित्युदाहरणम् ।

**आत्मनेपदे सिः इट् गुणावौ षत्वं ष्टुत्वं अट् । अभविष्ट अभविषाताम् ॥**

अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते । आत्मनेपदे सिः इट् गुणावौ षत्वम् ष्टुत्वं अट् एते भवन्ति । अभविष्ट अभविषाताम् ॥ अभविष् अन्त इति स्थिते ॥

**आतोऽन्तोऽदनतः ॥ आत आत्मनेपदस्यान्त इत्येतस्याद्भवति अकारादुत्तरस्य तु न ॥ अभविषत । अभविष्ठाः अभविषाथाम् ॥ ध्वे च सेर्लोपः ॥ ध्वे परे सेर्लोपो भवति ॥ सस्य वा द इति केचित् । अभविध्वम्-अभविद्वम् । अभविषि अभविष्वहि अभविष्महि देवदत्तो राज्यमभविष्ट ॥**

सूत्रम्—'आतोऽन्तोऽदनतः' ॥ आतः, अन्तः, अत्, अत अकारः नअत्अनत् तस्मात अनतः । आद्ये पदद्वये 'अतोत्युः' 'उओ' 'एदो' तृतीये 'चपा अबे' चतुष्पदं सूत्रम् । आत्मनेपदसंबन्धिनः प्रथमपुरुबहुवचनस्य अन्त इत्यस्याद्भवति । अन्ते इत्यस्य 'अते' इति भवति, अन्तां इत्यस्य 'अताम्' अन्त इत्यस्यातो भवतीति भावः । परं अकारादुत्तरस्य न भवति । अनेनान्त इत्यस्याते कृते 'स्वरहीनं' अभविषत । अभविष्ठाः अभविषाथाम् ॥ अभविस् ध्वम् इति स्थिते । सूत्रम्—'ध्वे च सेर्लोपः' ॥ ध्वे च अव्ययम्, सेः, लोपः ॥ ध्वे परे सति सेर्लोपो भवति । अभविध्वम् ॥ [ इति जाते 'नामिनोऽचतुर्णाम्' 'सेटोहलाद्वा' इति ढत्वविकल्पे अभविढ्वम् अभविध्वम् ] 'वा सस्य दकारो भवति' इति केचित् । केषांचिदाचार्याणां मतेन सकारस्य दकारो भवति । 'स्वरहीनं०' अभविद्ध्वम् । अभविषि अभविष्वहि अभविष्महि । इत्यात्मनेपदिनो रूपाणि । देवदत्तो राज्यमभविष्टेत्युदाहरणम् ॥

**माङि लुङेव वक्तव्यः ॥ सर्वलकारापवादः ॥ मेटः ॥ माशब्दे प्रयुज्यमाने आटो लोपो भवति ॥ मा हर्यभक्तो भवान् भूत् ॥ स्मयोगे भूतार्थता वक्तव्या ॥**

[ सूत्रम्— ] 'माङि०' । माङि प्रयुज्यमाने लुङ्लकार एव वक्तव्यः । सर्वलकारापवादो भवति ॥ सूत्रम्—'मेटः' ॥ [ इदं सूत्रमस्ति । ] मे अटः । द्विपदम् । निषेधार्थमाशब्दे प्रयुज्यमाने दिबादिनिमित्तोत्पन्नस्याटोऽडागमस्य लोपो भवति । अनेन सूत्रेणाटो लोपो भवति । मा हर्यभक्तो भवान् भूत् । इत्यादिप्रयोगसिद्धिः । सूत्रम्—'स्मयोगे०' । स्पष्टमिदं सूत्रम् ॥

**मास्मयोगे लङ् च ॥ मा स्म भवत् । मा स्म भूत् ॥**

द्वितीयं सूत्रम्—''मास्मयोगे लङ् च ॥ स्पष्टम् । च पुनः मास्म इत्येतयोः द्वयोर्योगे लङ् लकारो भवतीत्यर्थः । मा स्म भवत् इत्युदाहरणम् द्वितीयसूत्रस्य । मा स्म भूत् इत्युदाहरणं प्रथमसूत्रस्यास्ति इति । भू सत्तायाम् इत्यस्य भूङ् प्राप्तौ इत्यस्य च रूपाणि दर्शितानि । तत्र भूधातुः परस्मैपदी ज्ञातव्यः 'परतोऽन्यत्' इति सूत्रात् । भूङ्धातुरात्मनेपदी ज्ञातव्यः ङित्वात् । परस्मैपदिनः परस्मैपदानि भवन्ति आत्मनेपदिन आत्मनेपदानि भवन्तीति ज्ञातव्यम् । अत्र बहुस्थले संधिर्न कृतः बालानां सुखेन बोधकरत्वात् । समाप्तोयं दशमो लकारो लुङ् । इति द्वयोर्धात्वो रूपाणि ॥

**चिती संज्ञाने। ईकार इदित्कार्यार्थः। पूर्ववत्तिबादयः। अप् कर्तरि॥ उपधाया लघोः॥ धातोरुपधाया लघोर्नामिनो गुणो भवति॥ चेतति चेततः चेतन्ति १॥ चेतेत् चेतेताम् चेतेयुः २॥ चेततु चेततात् चेतताम् चेतन्तु ३॥ अचेतत् अचेतताम् अचेतन् ४॥ द्वित्वम्। चिचेत। किच्वाद्गुणाभावः। चिचिततुः चिचितुः। चिचेतिथ चिचितथुः चिचित। चिचेत चिचितिव चिचितिम॥ किच्वाद्गुणाभावः। चित्यात् चित्यास्तां चित्यासुः ६॥ चेतिता चेतितारौ चेतितारः ७॥ चेतिष्यति चेतिष्यतः चेतिष्यन्ति ८॥ अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन् ९॥ चित् सित् इति स्थिते। सिसता इतीट्॥**

अथ भ्वादिगणः प्रारभ्यते। तत्रादौ परस्मैपदप्रक्रिया निरूप्यते। चिती संज्ञाने ईकार ईदित्कार्यार्थः। पूर्ववत् तिबादयो भवन्ति। 'अप् कर्तरि' अनेनाप्। चित् अप् तिप् इति जाते॥ सूत्रम्—'उपधाया लघोः'॥ उपधाया लघोः। द्विपदं सूत्रम्। धातोरुपधाभूतस्य लघोर्नामिनः क्ङिद्वर्जिते प्रत्यये परे गुणो भवति। पकारः पित्कार्यार्थः 'स्व०' लट्—चेतति चेततः चेतन्ति। चेतसि चेतथः चेतथ। चेतामि चेतावः चेतामः॥ लिङ्—चेतेत चेतेताम् चेतेयुः। चेतेः चेतेतम् चेतेत। चेतेयम् चेतेव चेतेम॥ लोट्—चेततु चेततात् चेतताम् चेतन्तु। चेत चेततात् चेततम् चेतत। चेतानि चेताव चेताम॥ लङ्—अचेतत् अचेतताम् अचेतन्। अचेतः अचेततम् अचेतत। अचेतम् अचेताव अचेताम॥ लिट्—'द्विश्च' 'सस्वरादिर्द्विरद्धिः' चि चित् णप् इति स्थिते णकारपकारावितौ 'गुणः' 'स्वरहीनं०' चिचेत। किच्वाद्गुणाभावः। चिचिततुः चिचितुः। चिचेतिथ चिचितथुः चिचित। चिचेत चिचितिव चिचितिम॥ लिङ्—चित्यात् चित्यास्ताम् चित्यासुः। चित्याः चित्यास्तम् चित्यास्त। चित्यासम् चित्यास्व चित्यास्म॥ लुट्—चेतिता चेतितारौ चेतितारः। चेतितासि चेतितास्थः चेतितास्थ। चेतितास्मि चेतितास्वः चेतितास्मः॥ लट्—चेतिष्यति चेतिष्यतः चेतिष्यन्ति। चेतिष्यसि चेतिष्यथः चेतिष्यथ। चेतिष्यामि चेतिष्यावः चेतिष्यामः॥ लङ्—अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन्। अचेतिष्यः अचेतिष्यतम् अचेतिष्यत। अचेतिष्यम् अचेतिष्याव अचेतिष्याम। लुङ्—चित् सि दिप् इति स्थिते 'सिसता' अनेन इट्। चित सि दिप् इति जाते॥

**सेः॥ सिशब्दात्परयोर्दिस्योरिडागमो भवति॥ इट ईटि॥ इट उत्तरस्य सेर्लोपो भवति ईटि परे॥ अचेतीत् अचेतिष्टाम्॥**

सूत्रम्—'सेः' सिशब्दात्परयोर्दिस्योरीडागमो भवति। अनेनेट् तदा चित् इट् सिईट् दिप् इति जातम्। तत्र सूत्रं 'इट ईटि'॥ इटः ईटि। इट उत्तरस्य सेरीटि परे लोपो भवति। इति दिस्योर्विषये सिलोपः। अनेन सूत्रेण सिलोपः कार्यः। तदा चित् इट् ईट् दिप् इति जाते टकारः टित्कार्यार्थः। दि सि मि। पकारः पित्कार्यार्थः। तदा चित् इ ई द् इति स्थिते 'गुणः' 'सवर्णे' 'स्वरहीनं' 'दिबादावट्' 'वावसाने०' एभिः पूर्वोक्तैः सूत्रैः अचेतीत् इति रूपं सिद्धं भवति। अचेतीत् अचेतिष्टाम्। अचेति सि अन् इति स्थिते॥

**स्याविदः ॥ सेराकारान्ताद्विदश्चोत्तरस्यान उस् भवति ॥ अचेतिषुः । अचेतीः अचेतिष्टम् अचेतिष्ट । अचेतिषम् अचेतिष्व अचेतिष्म ॥**

सूत्रम्—'स्याविदः' ॥ एकपदं सूत्रम् । सेः भूतार्थोत्पन्नात् आकारान्तात् दा इत्यादेः विद ज्ञाने इत्यस्माद्धातोश्च परस्य अन उस् भवति । अनेनान उस् जातः । 'स्वरहीनं०' 'स्नोर्वि०' अचेतिषुः । अचेतीः अचेतिष्टम् अचेतिष्ट । अचेतिषम् अचेतिष्व अचेतिष्म । समाप्तोऽयं धातुः ॥

**च्युतिर् आसेचने । इर् अनुबन्ध इरितो वेति विशेषणार्थः । उच्चारितप्रध्वंसो ह्यनुबन्धः । च्योतति । च्योतेत् । च्योततु । अच्योतत् । च्युत णप् द्वित्वम् ॥**

च्युतिर् आसेचने ॥ इर् अनुबन्धोस्ति 'इरितो वा' इति सूत्रस्य विशेषणार्थः । उच्चरित-प्रध्वस्तो ह्यनुबन्धो भवति । पूर्ववत्तिबादयः 'उपधाया लघोः' अनेन गुणः । लट्—च्यो-तति च्योततः च्योतन्ति । लिङ्—च्योतेत् च्योतेताम् च्योतेयुः । लोट् । च्योततु च्योत-तात् च्योतताम् च्योतन्तु । लङ्—अच्योतत् अच्योतताम् अच्योतन् । सुगमत्वादेतेषां विवरणं न कृतम् । लिट्—च्युत् णप् इति स्थिते । 'द्विश्च' च्युत् च्युत् णप् इति जाते ॥

**पूर्वस्य हसादिः शेषः ॥ पूर्वस्यादिर्हस् शिष्यते अन्यो लुप्यते । चुच्योत चुच्युततुः चुच्युतुः । चुच्योतिथ चुच्युतथुः चुच्युत । चुच्योत चुच्युतिव चुच्युतिम । च्युत्यात् । च्योतिता । च्योतिष्यति । अच्योतिष्यत् । अच्यो-तीत् अच्योतिष्टाम् अच्योतिषुः । अच्योतीः अच्योतिष्टम् अच्योतिष्ट । अच्योतिषम् अच्योतिष्व अच्योतिष्म ॥**

सूत्रम्—'पूर्वस्य हसादिः शेषः' ॥ पूर्वस्य हसयोर्हसानां वा संयुक्तानामुतासंयुक्तानामादिः हसादिः शेषः । अथवा हस इति पृथक्पदं सांकेतिकं प्रथमैकवचनम् । द्विर्वचने कृते सति पूर्वरूपस्य संयोगे सति आदिमो हसः शिष्यतेऽन्यो द्वितीयो लुप्यते । अनेन यकारतकार-योर्लोपः कार्यः । तदा चुच्युत् णप् इति जाते । गुणः । 'उपधाया लघोः' 'स्वरहीनं०' णकारपकराविती । चुच्योत चुच्युततुः चुच्युतुः । चुच्योतिथ चुच्युतथुः चुच्युत । चुच्योत चुच्युतिव चुच्युतिम । लिङ्—च्युत्यात् च्युत्यास्ताम् च्युत्यासुः । लुट्—च्योतिता च्योतितारौ च्योतितारः । लृट्—च्योतिष्यति च्योतिष्यतः च्योतिष्यन्ति । लृङ्—अच्यो-तिष्यत् अच्योतिष्यताम् अच्योतिष्यन् । लुङ्—अच्योतीत् अच्योतिष्टाम् अच्योतिषुः ॥

**इरितो वा ॥ इरितो धातोर्वाङः प्रत्ययो भवति दिबादिपरः परस्मैपदे ॥ सेरपवादः । ङकारो गुणप्रतिषेधार्थः । अच्युतत् अच्युतताम् अच्युतन् । अच्युतः अच्युततम् अच्युतत । अच्युतम् अच्युताव अच्युताम ॥**

अस्य धातोर्लुङ्लकारे सेरपवादो ङप्रत्ययो विकल्पेन भवति तद्विधायकं सूत्रम्—'इरितो वा' ॥ इर् इत् यस्य स इरित् तस्मात् इरितः । द्विपदं सूत्रम् । च्युतिर् रुधिर् भिदिर् छिदिर् दृशिर् रुदिर् स्कन्दिर् इत्यादेरिरनुबन्धाद्धातोर्भूतेर्थे दिबादौ परे वा ङप्रत्ययो भवति । ङकारो गुणप्रतिषेधार्थः । ङप्रत्ययोयं परस्मैपदे भवेन्मूल उक्तत्वात् । यस्मिन्पक्षे ङप्रत्यय-

स्तस्मिन्पक्षे सेरभावः । अनेन ङप्रत्ययः । 'दिबादावट्' 'स्वरहीनं०' अच्युतत् अच्युतताम् अच्युतन् । अच्युतः अच्युततम् अच्युतत । अच्युतम् अच्युताव अच्युताम । समाप्तोयं धातुः ॥

**श्चुतिर् क्षरणे । श्च्योतति । श्च्योतेत् श्च्योततु । अश्च्योतत् । द्वित्वम् ॥**

श्चुतिर् क्षरणे ॥ पूर्ववत्तिबादयो भवन्ति । लट्—श्च्योतति श्च्योततः श्च्योतन्ति । लिङ्—श्च्योतेत् श्च्योतेताम् श्च्योतेयुः । लोट्–श्च्योततु श्च्योततात् श्च्योतताम् श्च्योतन्तु । लङ्–अश्च्योतत् अश्च्योतताम् । अश्च्योतन् । लिट् 'द्विश्च'–श्चुत् श्चुत् णप् इति स्थिते ॥

**शसात् खपाः ॥ द्विर्वचने कृते यत्पूर्वरूपं तस्य शसादुत्तराः खपाः शिष्यन्ते न शसाः ॥ इति चकारशेषः । चुश्च्योत चुश्चुततुः चुश्चुतुः । श्चुत्यात् । श्च्योतिता । श्च्योतिष्यति । अश्च्योतिष्यत् । अश्चुतत् अश्च्योतीत् ॥**

'शसात् खपाः' ॥ शसात् खपाः द्विपदं सूत्रम् । संयोगपूर्वस्य धातोर्द्वित्वे कृते सति यत्पूर्वरूपं द्वित्वसंबन्धि तस्य शसखपसंयोगे सति शसादुत्तरा अत्र वर्तमानाः खपाः शिष्यन्ते न शसाः । आदौ वर्तमानाः शसा लुप्यन्त इत्यर्थः । अनेन शकारस्य यकारस्य तकारस्य च लोपः कार्यः । [ पुनः पूर्वस्य हसादिः शेषः इति सूत्रेण तकारस्य लोपः कार्यः ] 'गुणः' 'स्वरहीनं०' चुश्च्योत चुश्चुततुः चुश्चुतुः । चुश्च्योतिथ चुश्चुतथुः चुश्चुत । चुश्च्योत चुश्चुतिव चुश्चुतिम । मधु चुश्च्योतेत्युदाहरणम् ॥ लिङ्–श्चुत्यात् श्चुत्यास्ताम् श्चुत्यासुः ॥ लुट्—श्च्योतिता श्च्योतितारौ श्च्योतितारः ॥ लृट्–यश्च्योतिष्यति श्च्योतिष्यतः श्च्योतिष्यन्ति ॥ लृङ्—अश्च्योतिष्यत् अश्च्योतिष्यताम् अश्च्योतिष्यन् ॥ लुङ्–अस्मिंल्लकारे साधनं तु पूर्ववत् । अश्चुतत् । अश्च्योतीत् अश्च्योतिष्टाम् अश्च्योतिषुः । समाप्तोयं धातुः ॥

**मन्थ विलोडने ॥ मन्थति । मन्थेत् । मन्थतु । अमन्थत् । ममन्थ ॥ नो लोपः ॥ धातोरुपधाभूतस्य नकारस्य लोपो भवति किति ङिति च परे ॥ इत्युपधानकारलोपे प्राप्ते ॥ ऋसंयोगात् णादेरकित्त्वं वाच्यम् ॥ तेन नलोपो न । ममन्थतुः ममन्थुः । ममन्थिथ ममन्थथुः ममन्थ । ममन्थ ममन्थिव ममन्थिम ॥ केचित्संयोगाद्वेति वक्तव्यम् ॥ ममथतुः ममथुः । नो लोपः मथ्यात् । मन्थिता । मन्थिष्यति । अमन्थिष्यत् । अमन्थीत् अमन्थिष्टाम् अमन्थिषुः ॥**

मन्थ विलोडने ॥ लङ्–मन्थति मन्थतः मन्थन्ति । लिङ्–मन्थेत् मन्थेताम् मन्थेयुः । लोट्–मन्थतु मन्थतात् मन्थताम् मन्थन्तु । लङ्–अमन्थत् अमन्थताम् अमन्थन् । लिट्–ममन्थ ममन्थ् अतुस् इति स्थिते ॥ सूत्रम्—'नोलोपः' ॥ नः लोपः । द्विपदं सूत्रम् । धातोरुपधाभूतस्य नकारस्य अर्थात् नकारस्थानीयानुस्वारस्य किति ङिति च परे लोपो भवति । अत्र लोपाधिकारे नकारादेशरूपस्यानुस्वारस्य लोपः । अनेन सूत्रेण नकारस्य लोपे प्राप्ते सति । 'ऋसंयोगात्' इति वार्तिकम् । ऋश्च संयोगश्च ऋसंयोगं तस्मात् ऋसंयोगात् । ण

१ व्यर्थोयं पाठः ॥

आदिर्यस्य स णादिः तस्य णादेः। कितो भावः कित्त्वं न कित्त्वं अकित्त्वं वाच्यम्। ऋकारान्तात्संयोगात् धातोश्च णादेरकित्त्वं वाच्यम्। अस्य धातोः संयोगत्वात्। अनेन सूत्रेण नकारस्य लोपाभावो भवति। 'स्वरहीनं०' 'स्नोर्वि०' ममन्थतुः ममन्थुः ॥ वार्तिकम्—केचिदाचार्याः संयोगात् धातोर्णादेः कित्त्वं वा वक्तव्यमिति वदन्ति। अनेन णादेर्विकल्पेन कित्त्वं तदा ममथतुः ममथुः। ईदृशानि रूपाणि भवन्ति॥ लिङ्। नलोपः। मथ्यात् मथ्यास्ताम् मथ्यासुः॥ लुट्। मन्थिता मन्थितारौ मन्थितारः॥ लृट्। मन्थिष्यति मन्थिष्यतः मन्थिष्यन्ति॥ लृङ्। अमन्थिष्यत् अमन्थिष्यताम् अमन्थिष्यन्॥ लुङ्। अमन्थीत् अमन्थिष्टाम् अमन्थिषुः। समाप्तोयं धातुः॥

**कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः॥ इदितो नुम्॥ इदितो धातोर्नुमागमो भवति॥ लघूपधत्वाभावान्न गुणः। कुन्थति। कुन्थेत्। कुन्थतु। अकुन्थत्। द्वित्वम्॥ कुहोश्चुः॥ पूर्वसंबन्धिनोः कवर्गहकारयोश्चुत्वं भवति। वर्गचतुर्थो हस्य सवर्णः। चुकुन्थ चुकुन्थतुः चुकुन्थुः। चुकुन्थिथ चुकुन्थथुः चुकुन्थ। चुकुन्थ चुकुन्थिव चुकुन्थिम॥ इदितो नलोपाभावो वाच्यः॥ कुन्थ्यात्। कुन्थिता। कुन्थिष्यति। अकुन्थिष्यत्। अकुन्थीत् अकुन्थिष्टाम् अकुन्थिषुः॥**

कुथि पुथि लुथि मथि एते धातवो हिंसासंक्लेशनयोः प्रवर्तन्ते॥ सूत्रम्—'इदितो नुम्'॥ इत् इत् यस्य स इदित् तस्मात् इदितः नुम्। द्विपदं सूत्रम्। इदितो धातोर्दशस्वपि लकारेषु नुमागमो भवति। पूर्ववत्तिबादयः। 'इदितो नुम्'। 'मिदन्त्यात्स्व०' 'नश्चापदान्ते' 'नमा यपेऽस्व०' लट् लघूपधत्वाभावात् गुणाभावो भवति। कुन्थति। लिट्—चुकुन्थ। लोट्—कुन्थतु। लङ्—अकुन्थत्। लिट्—कुन्थ्। णप् इति स्थिते 'द्विश्च' पूर्वस्य 'हसादिः शेषः'। कुकुन्थ णप् इति जाते। सूत्रम्—'कुहोश्चुः'॥ कुश्च ह्च कुहौ तयोः कुहोः, चुः, द्विपदं सूत्रम्। द्वित्वे कृते सति पूर्वसंबन्धिनोर्द्वित्वसंबन्धिनोः कवर्गहकारयोश्चवर्गादेशो भवति॥ ननु कवर्गस्य चवर्गो यथासंख्यं भवति परं हकारस्य चवर्गत्वं कथं क्रियते। अत्रोच्यते—मातृकापाठे शषसह इत्यत्र हकारस्य चतुर्थस्थानवर्तित्वात् हकारस्य चुत्वे झकारो भवति। अथवा 'वर्गचतुर्थो हस्य सवर्ण' इति वचनात् चवर्गमध्ये हस्य सवर्णो झो भवति॥ अनेन कवर्गस्य चवर्गो भवति। 'स्वरहीनं०' चुकुन्थ चुकुन्थतुः चुकुन्थुः। लिङ्—'नो लोपः' इति सूत्रेण नकारस्य लोपे प्राप्ते सति। वार्तिकम् 'इदितो धातोः किति ङिति च परे नलोपस्याभावो वाच्यः। कुन्थ्यात् लुट्—कुन्थिता। लृट्—कुन्थिष्यति। लृङ्—अकुन्थिष्यत्। लुङ्—अकुन्थीत्॥ पुथि लुथि मथि इति तिसृणां(?)धातूनां सुगमत्वाद्रूपाणि न लिखितानि॥

**षिधु गत्याम्। उकार उच्चारणार्थः॥ आदेः ष्णः स्नः॥ षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयोः षकारणकारयोः सकारनकारौ भवतः॥ नामधातुष्ठ्यैष्वष्कष्ठिवां षः सो नेति वाच्यम्॥ गुणः। सेधति। निपूर्वः॥**

षिधु गत्याम् । उकार उच्चारणार्थः ॥ सूत्रम्—'आदेः ष्णः स्नः' ॥ आदेः ष्णः स्नः । त्रिपदं । षः उपदेशे यस्य स षोपदेशः । ण उपदेशे यस्य स णोपदेशः । षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयोः षकारणकारयोः सकारनकारौ भवतः यथासंख्यम् । षोपदेशस्य णोपदेशस्य च धातोर्लक्षणं प्रक्रियोक्तमेव ज्ञेयम् । अस्मां विस्तरभयान्न लिखितम् ॥ तथाच षस्य सत्वनिषेधकं सूत्रं (?) 'नामधातु०' नामधातुष्ट्यैष्वष्कष्ठिवां षकारस्य सकारो न भवतीति वाच्यम् । गुणः । लट् । सेधति ॥ यदा निपूर्वोयं धातुः स्यात् तदा कीदृशं रूपं कार्यम् ॥

**प्रादेश्च तथा तौ सुनमाम् ॥** प्रादेरुपसर्गात्परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोस्तौ पूर्वभाविनावेव षकारणकारौ भवतः तथा तेष्वेव निमित्ते सत्सु ॥ निषेधति । सेधेत् । सेधतु । अड्व्यवधानेऽपि षत्वम् । न्यषेधत् । द्वित्वव्यवधानेऽपि षत्वम् । निषिषेध । सिषिधतुः । सिषिधुः । सिषेधिथ । सिध्यात् । सेधिता । सेधिष्यति । असेधिष्यत् । असेधीत् असेधिष्टाम् असेधिषुः ॥

तदर्थं सूत्रम्—'प्रादेश्च तथा तौ सुनमाम्' ॥ प्र आदिर्यस्य स प्रादिः तस्य प्रादेः, च, तथा, तौ सुनमाम् पञ्चपदं सूत्रम् । प्रादेरुपसर्गात्परेषां षुञ् अभिषवे, षोडन्तकर्मणि, ष्टुञ् स्तुतौ, ष्टुभ् स्तोभे, षिङ् बन्धने, षजि सङ्गे, ष्वञ्ज परिष्वङ्गे, इत्यादीनां नमादीनां च णम् प्रह्वीभावे, णीञ् प्रापणे, टुनदि समृद्धौ, णिदि कुत्सायाम्, इत्यादीनां धातूनां यौ सकारनकारौ तयोः क्रमेण तौ पूर्वभाविनौ एव पूर्वावस्थायां वर्तमानौ षकारणकारावेव भवतः । तथा तेष्वेवेत्यादि । तथेति सूत्रोक्तं पदं तस्यार्थः तेष्वेव निमित्तेष्विति । अत्रायंभावः—सकारस्य षकारनिमित्तानि कवर्गेलक्षणानि । नकारस्य णत्वनिमित्तानि षकाररेफऋवर्णाः । अबप्रत्याहारकवर्गपवर्गव्यवधानानि च । ततो यद्युपसर्गान्ते कवर्गस्येलप्रत्याहारस्य च योगो भवति तदा तस्मात्परस्य सकारस्य षकारो भवति । यदा चोपसर्गे षकाररेफऋवर्णानामन्यतमो भवति नकारस्य वा प्रत्याहारकवर्गपवर्गान्तरं च भवति तदा नकारस्य णकारो भवति । अत्रोपसर्गे इलप्रत्याहारोस्ति तेन सेधतेः सकारस्य षकारो भवति । निषेधति । लिङ् सेधेत् । लोट्—सेधतु । लङ् । अड्व्यवधानेपि षत्वं भवति न्यषेधत् इति प्रयोगदर्शनात् । यदा निपूर्वस्तदा न्यषेधत् । तदभावे असेधत् । लिट्—द्वित्वव्यवधानेपि षत्वम् । नास्ति व्याख्यानेन

---

१ सेक्सृप्सृस्तृसृज्स्तृस्त्यान्ये दन्त्याजन्तसादयः । एकाचः षोपदेशाः ष्वक्स्विद्स्वद्स्वञ्जस्वप्स्मिङः ॥ सेकृ गतौ । सृभृ गतौ । सृ गतौ । स्तृ आच्छादने । सृज् विसर्गे । स्तृ छादने । स्त्यै ष्ट्यै शब्दसंघातयोः । एभ्योऽन्ये दन्त्याजन्तसादयः एकाचः षोपदेशाः । दन्ते भवो दन्त्यः दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ यस्य स दन्त्याजन्तः स चासौ सश्च दन्त्याजन्तसः स आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणात् । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । स्वद् आस्वादने । स्वञ्ज् परिष्वङ्गे । ञिष्वप् शये । स्मिङ् ईषद्धसने । एते षोपदेशाः ॥ णोपदेशास्तु अनर्दनाटिनाथूनाधूनन्दूनक्कनॄनृतः ॥ नर्द गतौ । नट नर्तने । नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽन्ये णोपदेशाः ॥ नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥

प्रयोजनम्, तदभावेपि प्रयोगसिद्धेः । निषिषेधं निपूर्वे सति । तदभावे सिषेध । लिङ्–सिध्यात् । लुट्–सेधिता । लृट्–सेधिष्यति । लृङ्–असेधिष्यत् । लुङ्–असेधीत् । समाप्तोयं धातुः ॥

**षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । सेधति । सेधेत् । सेधतु । असेधत् । सिषेध । सिध्यात् ॥ ऊदितो वा ॥ ऊदितो धातोः परस्य वसादेरिड्वा भवति ॥ स्वृसूतिसूयतिधूञ्रधादीनामिड्वा वक्तव्यः ॥ स्वृ शब्दे । षूङ् प्राणिगर्भविमोचने । षूङ् प्रसवे । धूञ् कम्पने । रध् हिंसायाम् । नश् अदर्शने । तृप् प्रीणने । तृप हर्षविमोचनयोः । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह् प्रीतौ । एते रधादयः । सेधिता ।**

षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । 'आदेः ष्णः स्नः' । पूर्ववत्तिबादयः । सेधति । सेधेत् । सेधतु । असेधत् । लिट्–सिषेध । सिध्यात् । लुट्–सिध् ता इति स्थिते ॥ सूत्रम्—'ऊदितो वा' ॥ ऊत् इत् यस्य स ऊदित् तस्मात् ऊदितः वा । ऊदितो धातोः परस्य वसादेः प्रत्ययस्य वा इडागमो भवति । द्वितीयं सूत्रम्—'स्वृसूति०'॥स्वृसूतिसूयतिधूञ्इत्यादीनां धातूनां वा इडागमो वक्तव्यः । वसादेः प्रत्ययस्यैवेति शेषः । धातवस्तु मूले दर्शिताः । अनेन सूत्रेण वा इट् । सेधिता ॥

**पक्षे–'तथोर्धः' ॥ दधातिं विना झभान्ताद्धातोः परयोस्तकारथकारयोर्धकारादेशो भवति ॥ झबे जबाः । सेद्धा । सेधिष्यति-सेत्स्यति । असेधिष्यत्-असेत्स्यत् । असेधीत् असेधिष्टाम् असेधिषुः ॥**

सिध् ता इति स्थिते ॥ सूत्रम्—'तथोर्धः'॥ तश्च थ् च तथौ तयोः तथोः । द्विपदं सूत्रम् । दधातिं वर्जयित्वा झभान्ताद्धातोः परयोस्तकारथकारयोर्धकारादेशो भवति । सुगममिदं सूत्रम् । अस्याधिकं व्याख्यानं नास्ति । अनेन तकारस्य धकारः । 'झबे जबाः' प्रथमधकारस्य दकारः 'स्वरहीनं०' 'गुणः' । सेद्धा सेद्धारौ सेद्धारः । सेद्धासि सेद्धास्थः सेद्धास्थ । सेद्धास्मि सेद्धास्वः सेद्धास्मः ॥ लृट्–सेधिष्यति सेत्स्यति । 'खसे०' ॥ लृङ् । असेधिष्यत् असेत्स्यत् ॥ लुङ् । असेधीत् । असेधिष्टाम् असेधिषुः ॥

**इडभावे ॥ अनिटो नामिवतः ॥ नामिवतोऽनिटो धातोः परस्मैपदे परे सिप्रत्यये वृद्धिर्भवति ॥ चपत्नम् । सेः ॥ असैत्सीत् ॥**

इडभावे असिध् सि ईट् दिप् इति स्थिते ॥ सूत्रम्–'अनिटो नामिवतः' । अनिटः नामिवतः । नास्ति इट् यस्य सः अनिट् तस्यानिटः । नामी अस्यास्ति इति नामिवान् तस्य नामिवतः । द्विपदं सूत्रम् । नामिवतो नाम्युपधस्य 'नैकस्वरादनुदात्तात्' इति सूत्रेणोक्तात् अनिटो धातोः संबन्धिनो नामिनः परस्मैपदविषये सिप्रत्यये परे वृद्धिर्भवति । अनेन वृद्धिः । परं पूर्ववत् । 'खसे०' असैत्सीत् । असैध् सि ताम् इति स्थिते ॥

**झसात् ॥ झसादुत्तरस्य सेर्लोपो भवति झसे परे ॥ प्रत्ययलोपे प्रत्ययल-**

क्षणं कार्यं भवति ॥ असैद्धाम् असैत्सुः । असैत्सीः असैद्धम् असैद्ध । असैत्सम् असैत्स्व असैत्स्म ॥

सूत्रम्—'झसात्'॥ एकपदं सूत्रम् । झसादुत्तरस्य सेर्लोपो भवति झसे परे । अनेन सेर्लोपः कार्यः । 'प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवती'ति न्यायात् वृद्धिर्भवति । 'तथोर्धः' 'झभे जबाः' 'स्वरहीनं' असैद्धाम् असैत्सुः । असैत्सीः असैद्धम् असैद्ध । असैत्सम् असैत्स्व असैत्स्म ॥

खद् स्थैर्ये हिंसायां च । खदति खदेत् खदतु अखदत् ॥ अत उपाधायाः ॥ धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे ॥ चुत्वम् । चखाद चखदतुः चखदुः । चखदिथ चखदथुः चखद ॥ णलुत्तमो वा णिद्वक्तव्यः ॥ चखाद-चखद चखदिव चखदिम । खद्यात् । खदिता । खदिष्यति । अखदिष्यत् ॥ णित्पे ॥ परस्मैपदे परे सिर्णिद्भवति ॥ 'अत उपधायाः' इति वृद्धिः । अखादीत् अखादिष्टाम् अखादिषुः ॥ हसादेर्लघ्वकारोपधस्य वा वृद्धिः सेटि सौ वाच्या ॥ अखदीत् ॥

खद् स्थैर्ये हिंसायां च । पूर्ववत्तिबादयः । खदति खदेत् खदतु अखदत् । खद् खद् णप् इति स्थिते पूर्वस्य 'हसादिः शेषः' खखद् णबिति जाते ॥ सूत्रम्—'अत उपधायाः' ॥ अतः उपधायाः । धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे । 'कुहोश्चुः' । चखाद चखदतुः चखदुः । चखदिथ चखदतुः चखद । 'णलुत्तमो वा' उत्तमो णल् वा णिद्वक्तव्यः । तेन वृद्धेर्विकल्पो भवति । चखाद चखद चखदिव चखदिम । खद्यात् खदिता खदिष्यति अखदिष्यत् । अखदीत् इति स्थिते । सूत्रम्—'णित्पे' ॥ ण् इत् यस्य स णित् पे द्विपदं सूत्रम् । परस्मैपदे परे सिर्णिद्भवति । अनेन सेर्णित्त्वात् 'अत उपधायाः' इति वृद्धिः । अखादीत् अखादिष्टाम् अखादिषुः ॥ वृद्धिविकल्पकरं सूत्रम्—'हसादेः'॥ हस आदिर्यस्य स हसादिस्तस्य हसादेः । लघुश्चासौ अकारश्च लघ्वकारः लघ्वकार उपधायां यस्य स लघ्वकारोपधस्तस्य लघ्वकारोपधस्य हसादेर्लघ्वकारोपधस्य च धातोर्वा वृद्धिः सेटि सौ वाच्या । अनेन वृद्धिविकल्पो भवति । अखदीत् अखदिष्टाम् अखदिषुः । सुगमोयं धातुः समाप्तः ॥

गद् व्यक्तायां वाचि । गदति ॥ उपसर्गस्थनिमित्तान्नेर्गदादौ णत्वं वाच्यम् ॥ 'गद् नद् पत् पद् स्था अपित् दा धा मा सो हन् या वा द्रा प्सा वप् वह् चि शम् दिह्' एते गदादयः । गद् व्यक्तायां वाचि । नद् अव्यक्ते शब्दे । पत्लृ पतने । पद् गतौ । ष्ठा गतिनिवृत्तौ । डुदाञ् दाने । डुधाञ् धारणपोषणयोः । माङ् माने । षोऽन्तकर्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ च । प्सा भक्षणे । डुवप् बीजतन्तुसन्ताने । वह प्रापणे । चिञ् चयने । शम् उपशमे । दिह् उपचये । प्रणिगदति । गदेत् । गदतु । अगदत् । कुहोश्चुः जगाद जगदतुः जगदुः । जग-

दिथ जगदथुः जगद । गद्यात् । गदिता । गदिष्यति । अगदिष्यत् । अगादीत्-अगदीत् ॥

गद् व्यक्तायां वाचि । गति । 'उपसर्गस्थनिमित्तात्०' उपसर्गस्थनिमित्तान्नेर्गदादौ णत्वं वाच्यम् । गदादयस्तु मूले उक्ताः सन्ति, त एव ज्ञातव्याः । अतोऽनेन सूत्रेण नकारस्य णकारो भवति । प्रणिगदति । गदेत् । गदतु । अगदत् । 'कुहोश्चुः' । अनेन गकारस्य जकारः । 'अत उपधायाः' । जगाद जगदतुः जगदुः । गद्यात् गदिता गदिष्यति अगदिष्यत् अगादीत् 'हसादेः' । अगदीत् ॥

रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद ॥ लोपः पचां किल्ये चास्य ॥ पचादीनामनादेशादीनां किति णादौ सति पूर्वस्य लोपः । असंयुक्तहसयोर्मध्यस्थस्याकारस्यैकारः ॥ रेदतुः रेदुः ॥ सेटि थपि एत्वपूर्वलोपौ वक्तव्यौ ॥ रेदिथ रेदथुः रेद । रराद-ररद रेदिव रेदिम । रद्यात् । रदिता । रदिष्यति । अरदिष्यत् । अरादीत् अरादिष्टाम् अरादिषुः । अरदीत् ॥

रद् विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद । रद् अतुस् इति स्थिते ॥ सूत्रम्—'लोपः पचां०' ॥ लोपः पचां किति ए च अस्य षट्पदमिदं सूत्रम् । येषां धातूनां द्विवचनस्य 'कुहोश्चुः' 'झपानां जबचपाः' इति जबादिरादेशो न भवति तेषां पचादीनां पच्सदृशानां पत् पद् चल् चर् तन् मन् इत्यादीनां पूर्वस्य द्वित्वस्य किति णादौ सति लोपो भवति । एक एव हसो यस्य सः । यद्वा एकश्च एकश्च एकौ असंयुक्तौ केवलौ संयोगरहितौ पूर्वापरौ हसौ यस्य स एकहसस्तस्य एकहसस्य असंयुक्तहसमध्यस्थस्याकारस्य च एकारो भवति । मूले तु न संयुक्तौ असंयुक्तौ च तौ हसौ च असंयुक्तहसौ तयोरसंयुक्तहसयोः । पूर्वव्याख्यानं चन्द्रिकानुसारेण इदं तु मूलानुसारेण । चकारादुक्तनिमित्ताभावेपि तृ फल् भज् त्रप् सध् ग्रन्थ् दम्भानामेत्वपूर्वलोपौ भवतः । तथा जॄष् भ्रम् त्रस् फण् राज् भाश् भ्राज् भ्लाश् स्वन् राध् एतेषां विकल्पेन एत्वपूर्वलोपौ भवतः इति सूत्रम् । अनेन पूर्वरकारस्य लोपश्च धातोरकारस्यैकारो भवति । 'स्वरहीनं' रेदतुः रेदुः । ररद् थप् इति स्थिते 'सिसता०' अनेनेट् । ररद् थप् इति जाते ॥ 'सेटि थपि०' वार्तिकम् । सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ । अनेनैत्वपूर्वलोपौ स्तः । 'स्वर०' । रेदिथ रेदथुः रेद । रराद—ररद रेदिव रेदिम । लिङ् । रद्यात् । रदिता । रदिष्यति । अरदिष्यत् । अरादीत् । 'हसादेः' अरदीत् । समाप्तोयम् ॥

णद् अव्यक्ते शब्दे । आदेः ष्णः स्नः । नदति । नदेत् । नदतु । अनदत् । प्रपूर्वः । प्रादेश्च इति । णत्वम् । प्रणदति । गदादित्वात् प्रणिनदति । ननाद नेदतुः नेदुः । नेदिथ नेदथुः नेद । ननाद-ननद नेदिव नेदिम । नद्यात् । नदिता । नदिष्यति । अनदिष्यत् । अनादीत् अनादिष्टाम् अनादिषुः । अनदीत् अनदिष्टाम् ।

णद्द अव्यक्ते शब्दे । पूर्ववत् तिबादयः । 'आदेः ष्णः स्नः' नदति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि । लिट्‌ लकारे 'लोपः पचां०' अनेनैत्वपूर्वलोपौ कार्यौ । ननाद नेदतुः । यदा प्रपूर्वोऽयं धातुस्तदा 'प्रादेश्च' अनेन सूत्रेण नकारस्य णकारः । प्रणदति इति रूपं भवति प्रपूर्वत्वे सति । यदा निपूर्वः स्यात् तदा गदादित्वात् नेर्णत्वं भवति । प्रणिनदति इति रूपं सिद्धं भवति । नद्यात् नदिता नदिष्यति अनदिष्यत् अनादीत् । हसादेः अनदीत् । सोऽनादीत् इत्युदाहरणम् ॥

**अर्द गतौ याचने च । अर्दति । अर्देत् । अर्दतु आर्दत् । द्वित्वे कृते । आभ्वोर्णादौ । आ अर्द इति स्थिते ॥ नुगशाम् ॥ अश्नोतेरृकारादिधातूनां संयोगान्ताकारादिधातूनां च पूर्वस्य नुमागमो भवति णादौ सति ॥ आनर्द आनर्दतुः आनर्दुः । आनर्दिथ आनर्दथुः आनर्द । आनर्द आनर्दिव आनर्दिम । अर्द्यात् । अर्दिता । अर्दिष्यति । आर्दिष्यत् । आर्दीत् आर्दिष्टाम् आर्दिषुः ॥**

अर्द गतौ याचने च । अर्दति अर्देत् अर्दतु आर्दत् । लङ्लकारस्य रूपे 'स्वरादेः' अनेन वक्ष्यमाणेन सूत्रेण द्वितीयोऽडागमो भवति । अर्द णप् इति स्थिते द्वित्वम् । द्वित्वे कृते सति 'आभ्वोर्णादौ' इति सूत्रेण पूर्वस्याकारस्याकारो भवति तदा आ अर्द णप् इति जाते ॥ सूत्रम्—'नुगशाम्' ॥ नुक् अशाम् । अशूङ् व्याप्तौ अञ्चू अर्चू अर्द ऋच्छ इत्यादीनां धातूनां द्विर्भावे कृते सति णबादौ परे पूर्वस्य द्वित्वस्य नुगागमो भवति । ककारः स्थानवृद्ध्यर्थः कित्वादन्ते । उकार उच्चारणार्थः । अनेन सूत्रेण द्वयोर्मध्ये नुगागमो भवति । 'स्वरहीनं' आनर्द आनर्दतुः आनर्दुः । सर्वाणि रूपाणि मूले सन्ति । अर्द्यात् अर्दिता अर्दिष्यति 'स्वरादेः' आर्दिष्यत् आर्दीत् ॥

**इदि परमैश्वर्ये । इन्दति । इन्देत् । इन्दतु ॥ स्वरादेः ॥ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिवादौ परे ॥ अ इ ए । ए ऐ ऐ । ऐन्दत् । इन्द् णप् इति स्थिते ॥ कासादिप्रत्ययादाम्कृसभूपरः ॥ कास्आसदय्अय्नाम्यादिगुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययान्ताच्च णबादौ परे आम् प्रत्ययो भवति स च कृ-अस्-भूपरः प्रयोक्तव्यः ॥ कासृ दीप्तौ । आस् उपवेशने । दय् दानगतिहिंसादानेषु । अय् गतौ । एते कासादयः ॥**

इदि परमैश्वर्ये । पूर्ववत्तिबादयः । 'इदितो नुम्' इत्यनेन नुम् । इन्दति इन्देत् इन्दतु एन्दत इति जाते । 'स्वरादेः' स्वर आदिर्यस्य स स्वरादिस्तस्य स्वरादेः । स्वरादेर्धातोर्द्वितीयोऽडागमो भवति । अनेन द्वितीयोऽडागमः । 'ए ऐ ऐ' । ऐन्दत् ऐन्दताम् ऐन्दन् । ऐन्दः ऐन्दतं ऐन्दत । ऐन्दं ऐन्दाव ऐन्दाम । अस्य धातोर्लिट्लकारे विशेषोऽस्ति । इन्द् णप् इति स्थिते ॥ सूत्रम्—'कासादिप्रत्यया०' ॥ कास् आदिर्यस्यासौ कासादिः प्रत्ययान्तो धातुः प्रत्ययशब्देनोच्यते । कासादिश्च प्रत्ययश्च कासादिप्रत्ययं तस्मात् कासादिप्रत्ययात् आम् । कृ च अस च भूश्च कृसूभुवः कृसुवः परे यस्मात्स कृभूपरः । त्रिपदमिदं सूत्रम् ।

कास् आस् दय् अय् नाम्यादि गुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययान्ताण्णादौ परे आम् प्रत्ययो भवति स च आम् कसभूपरः प्रयोक्तव्यः । सूत्रस्य सुगमत्वाद्व्याख्यानस्यानावश्यकत्वम्, तथापि सूत्रस्यास्य चन्द्रिकायां व्याख्यानं कृतमस्ति । कासादेर्धातोः कास् आस चकास्ट जागृ दरिद्रा दय् अय् उष् एध् ईक्ष् ऊह् इत्यादेर्धातोः, प्रत्ययान्ताच्च सयङ्गायः इत्यादेः प्रत्ययाद्धातोर्णबादौ विषये आम् प्रत्ययो भवति स च आम् कसभूधातुषु परेषु सत्सु प्रयोक्तव्यः । कासादेः प्रत्ययान्ताच्च णबादिस्थाने अम् प्रत्ययः । तस्माच्च परेषां कस्भूधातूनां मध्ये अन्यतमस्य धातोः परोक्षप्रयोगो भवतीत्यर्थः । तस्य च धातोर्णबादौ पूर्ववत्प्रक्रिया । आम्प्रत्ययपित्संज्ञकश्च ज्ञेयः ॥

**विद्दरिद्राकास्काशजागृउष एभ्यो वाम् ॥ 'विद् ज्ञाने । दरिद्रा दुर्गतौ । काश् विकचने । जागृ निद्राक्षये । उष् दाहे' । एते विदादयः । इन्दां कृ-णप् इति स्थिते । कृ इत्येतस्य द्वित्वम् ॥ रः ॥ पूर्वसंबन्धिन ऋकारस्याकारो भवति ॥ चुत्वम् ॥**

सूत्रम्—'विद्दरिद्रा०'॥ विद् दरिद्रा कास् काश् जागृ उष् एभ्यो वाम् प्रत्ययो भवति। इन्द्र आम् कृ णप् इति जाते 'स्वरहीनं०' इन्दां कृ णप् इति जाते 'द्विश्च' कृ इत्यस्य द्वित्वम् । इन्दां कृ कृ णप् इति जाते ।सूत्रम्—'रः' ॥ ऋ सांकेतिकम् अः द्विपदं सूत्रम् । द्वित्वे कृते सति पूर्वसंबन्धिन ऋकारस्य आकारादेशो भवति । अनेन ऋकारस्याकारः तदा इन्दां क कृ णप् इति जाते 'कुहोश्चुः' अनेन सूत्रेण ककारस्य चकारः । इन्दां च कृ णप् इति स्थिते ॥

**धातोर्नामिनः ॥ धातोरन्त्यभूतस्य नामिनो वृद्धिर्भवति ञिति णिति च परे । इन्दांचकार इन्दांचक्रतुः इन्दांचक्रुः । कादित्वान्नेट् । इन्दांचकर्थ इन्दांचक्रथुः इन्दांचक्र । इन्दांचकार-इन्दांचकर इन्दांचकृव इन्दांचकृम । इन्दामास इन्दामासतुः इन्दामासुः । इन्दामासिथ । इन्दांबभूव । इन्द्यात् । इन्दिता । इन्दिष्यति ॥ स्वरादेः । ऐन्दिष्यत् । ऐन्दीत् ऐन्दिष्टाम् ऐन्दिषुः । ऐन्दीः ऐन्दिष्टम् ऐन्दिष्ट । ऐन्दिषम् ऐन्दिष्व ऐन्दिष्म ॥**

सूत्रम्—'धातोर्नामिनः' ॥ धातोः नामिनः द्विपदं सूत्रम् । धातोः अन्त्यभूतस्य नामिनः ञिति णिति च प्रत्यये परे वृद्धिर्भवति । अनेन वृद्धिस्तदा इन्दां च क् आर् णप् इति जाते 'नश्चापदान्ते०' 'स्वरहीनं' इन्दांचकार इति रूपं सिद्धं भवति । एवमन्यान्यपि रूपाणि सिद्ध्यन्ति । किति णादौ गुणवृद्धी न भवतः किंतु 'ऋरम्' इत्यस्य सूत्रस्य प्राप्तिः । इन्दांचकार इन्दांचक्रतुः इन्दांचक्रुः । 'कादेर्णादेः' इति सूत्रे कृधातोरिड्निषेधात् इडागमो न भवति पित्त्वाद्गुणो भवति । इन्दांचकर्थ इन्दांचक्रथुः इन्दांचक्र । इन्दांचकार 'णबुत्तमः' इति सूत्रेण वा णित् तेन वा वृद्धिर्भवति । इन्दांचकर इत्यत्र गुणो भवत्येव वा । इन्दांचकृव इन्दांचकृम । यदा अस्धातोरनुप्रयोगस्तदा इन्दां अस् णप् इति स्थिते द्वित्वसूत्रेण अकारस्य द्विर्भावः 'आभ्वोर्णादौ' 'सवर्णे दीर्घः' 'स्वरहीनं०' इन्दामास इन्दामासतुः

इन्दामासुः । इन्दामासिथ । यदा भूधातोरनुप्रयोगस्तदा इन्दां भू णप् इति जाते 'नश्चा-पदा०' पुनश्च बभूव इति रूपं यथा सिद्धं भवति तथैव रूपं कार्यम् । इन्दांबभूव इन्द्यात् इन्दिता इन्दिष्यति । स्वरादेः । ऐन्दिष्यत् ऐन्दीत् ॥

**णिदि कुत्सायाम् । निन्दति ॥ निंसुनिक्षनिन्दामुपसर्गाण्णत्वं वा वाच्यम् ॥ प्रणिन्दति प्रनिन्दति । निन्देत् । निन्दतु । अनिन्दत् । निनिन्द । निन्द्यात् । निन्दिष्यति । अनिन्दिष्यत् । अनिन्दीत् ॥**

णिदि कुत्सायां पूर्ववत् । इदितो नुम् । निन्दति । यदायं धातुः प्रपूर्वः स्यात् तदा प्रनिन्दति इति स्थिते ॥ सूत्रम्—'निसुनिक्षनिन्दा०' ॥ निसुनिक्षनिन्दां धातूनामुपसर्गात् उपसर्गस्थनिमित्तात् णत्वं वा वाच्यम् । अनेनं[1] णत्वम् । प्रणिन्दति प्रनिन्दति निन्देत निन्दतु अनिन्दत् । अत्र 'उपधाया लघोः' इति सूत्रस्य प्राप्तिरेव नास्ति उपधायामिकाराभावात् । निनिन्द निन्द्यात् निन्दिता निन्दिष्यति अनिन्दिष्यत् अनिन्दीत् । अस्य रूपाणि मूले सन्ति तथापि लिखितानि ॥

**णिक्ष चुम्बने । प्रणिक्षति । निक्षेत् । निक्षतु । अनिक्षत् । निनिक्ष । निक्ष्यात् । निक्षिता । निक्षिष्यति । अनिक्षिष्यत् । अनिक्षीत् ।**

णिक्ष् चुम्बने । निक्षति । 'निसुनिक्ष' अनेन सूत्रेण णत्वम् । प्रणिक्षति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि ।

**उख गतौ । ओखति । ओखेत् ओखतु । औखत् । द्वित्वे उपधागुणे च कृते ॥ असवर्णे स्वरे पूर्वेकारोकारयोरियुवौ वक्तव्यौ ॥ उवोख । सवर्णे दीर्घः । ऊखतुः । ऊखुः । उवोखिथ । उख्यात् । ओखिता । ओखिष्यति । औखिष्यत् । औखीत् ॥**

उख गतौ 'गुणः' ओखति ओखेत् ओखतु औखत् । अत्र 'स्वरादेः' इत्यनेन सूत्रेण द्वितीयोऽडागमो भवति । उख् णप् इति स्थिते 'द्विश्च' गुणः । उ ओख णप् इति जाते । सूत्रम्—'असवर्णे स्वरे०' ॥ असवर्णे स्वरे परे सति पूर्वयोरिकारेकारयोः इयुवौ यथासंख्येन वक्तव्यौ । अनेन सूत्रेण उकारस्य उव् जातः । 'स्वरहीनं०' उवोख । असवर्णस्वराभावाञ्चोघ् । 'सवर्णे दीर्घः सह' ऊखतुः ऊखुः । उवोखिथ । उख्यात् । ओखिता । ओखिष्यति । 'स्वरादेः' ओखिष्यत् । औखीत् ।

**अश्चु गतिपूजनयोः । अश्चति । नुगशाम् । आनश्च आनश्चतुः आनश्चुः ॥ पूजायामश्चेर्नलोपाभावो वाच्यः ॥ अश्च्यात् । गतौ तु अच्यात् । अश्चिता । अश्चिष्यति । आश्चिष्यत् । आश्चीत् ॥**

अश्चु गतिपूजनयोः । अश्चति अश्चेत् अश्चतु । 'स्वरादेः' आश्चत् । अ अश्चत् णप् इति जाते 'आभ्वोर्णादौ' 'नुगशाम्' 'स्वरहीनं०' आनश्च आनश्चतुः आनश्चुः । पूजायाम् ॥

---

1 'अनेन' इत्यसंगतं, पाणिनीयानां कृत्प्रत्ययान्तेष्वेवैतत्प्रवृत्तेराख्याते प्रवृत्त्यनङ्गीकारात् ॥

'पूजायामञ्चेर्धातोर्नकारस्य लोपाभावो वाच्यः' अञ्च्यात्। गतौ तु 'नो लोपः' इति सूत्रेण नकारस्य लोपो भवति अच्यात्। अञ्चिता। अन्यानि सुगमानि। अञ्चिष्यति। 'स्वरादेः' आञ्चिष्यत्। आञ्चीत्।

**आछि आयामे। आञ्छति। आनाञ्छ। आञ्छतेर्नुग्वेति केचित्। आञ्छ। आञ्छयात्। आञ्छिता। आञ्छिष्यति। आञ्छिष्यत्। आञ्छीत्।**

आछि आयामे। इदितो नुम्। आञ्छति आञ्छेत् आञ्छतु। 'स्वरादेः' आञ्छत्। आ आञ्छ णप् इति जाते 'नुगशां' 'आने मुक् (?)' 'स्वरहीनं' आनाञ्छ आनाञ्छतुः आनाञ्छुः। आञ्छतेर्धातोर् 'नुगशाम्' इति सूत्रेण विहितो नुग्वा भवतीति केचिदाचार्या वदन्ति तदा द्विश्च। सवर्णदीर्घः। आञ्छ आञ्छतुः आञ्छुः। आञ्छयात् आञ्छिता आञ्छिष्यति। 'स्वरादेः' आञ्छिष्यत् आञ्छीत्।

**हुर्छा कौटिल्ये। 'य्वोर्विहसे' इति दीर्घः। हूर्छति। 'कुहोश्चुः' वर्गचतुर्थो हस्य सवर्णः। 'झपानां जबचपाः'। जहूर्छ। अहूर्छीत्।**

हुर्छा कौटिल्ये। पूर्ववत् तिबादयः। हुर्छ अ तिप् इति स्थिते 'य्वोर्विहसे' अनेन दीर्घः। 'स्वरहीनं' हूर्छति हूर्छेत् हूर्छतु अहूर्छत्। हु हुर्छ णप् इति स्थिते 'कुहोश्चुः' वर्गचतुर्थो हस्य सवर्णः। अनेन हकारस्य झकारो भवति। 'झपानां जबचपाः' अनेन झकारस्य जकारः 'य्वोर्विहसे' अनेन दीर्घः। 'स्वरहीनं०' जुहूर्छ जुहूर्छतुः जुहूर्छुः। हूर्छ्यात् हूर्छिता हूर्छिष्यति अहूर्छिष्यत् अहूर्छीत्।

**वज गतौ। वजति। वजेत्। वजतु अवजत्। ववाज॥ शसृददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ वक्तव्यौ॥ शसु हिंसायाम्। दद दाने। शशास शशसतुः। ददाद दददतुः। ववाज ववजतुः ववजुः। ववजिथ। अवाजीत् अवजीत्॥**

वज गतौ। पूर्ववत्। वजति वजेत् वजतु अवजत्। ववज् णप् इति जाते [ 'अंत उपधायाः' अनेन सूत्रेण वृद्धिः। ववाज॥ 'ववज अतुस्' इति स्थिते ] 'लोपः पचां' अनेन सूत्रेण एत्वपूर्वलोपे प्राप्ते सति॥ 'शसृदद०' शस् दद् वादि गुणभूताकाराणां किति णबादौ परे णत्वपूर्वलोपौ न वक्तव्यौ। अनेनास्यैत्वपूर्वलोपनिषेधः ववजतुः। ववजुः। ववजिथ वज्यात् वजिता वजिष्यति अवजिष्यत् अवाजीत्। 'हसादेः' अवजीत्।

**व्रज गतौ। व्रजति। व्रजेत्। व्रजतु। अव्रजत्। वव्राज वव्रजतुः वव्रजुः। व्रज्यात्। व्रजिता। व्रजिष्यति। अव्रजिष्यत्॥ वदिव्रज्योः सौ नित्यं वृद्धिः॥ अव्राजीत्॥**

व्रज गतौ। व्रजति। अन्यानि सुगमानि। लङ्लकारे वृद्धिविकल्पे। सूत्रम्—'वदिव्रज्योः'॥वदिव्रज्योर्धात्वोः सौ परे नित्यं वृद्धिर्भवति। अनेनास्य वृद्धिविकल्पाभावः अव्राजीत्।

---

१ णपः कित्त्वाभावेन 'लोपः पचाम्' इत्यस्याप्राप्तेरयं कोष्ठकान्तर्गतः पाठोऽस्माभिः परिवर्तितः॥

**अज गतौ क्षेपणे च । अजति । अजेत् । अजतु । आजत् ॥ अजेरार्धधातुके वी वक्तव्यः वसादौ वा ॥ एतच्च विभक्तिचतुष्टयं सार्वधातुकं परमार्धधातुकसंज्ञं पाणिनीयानाम् । द्वित्वम् । वृद्धिः । विवाय ॥ नुधातोः ॥ विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ भवतः स्वरे परे ॥ अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ ॥ विव्यतुः विव्युः ॥**

अज गतौ क्षेपणे च । अजति अजेत् अजतु । 'स्वरादेः' आजत् ॥ 'अजेरार्धधातुके०' अजेर्धातोरार्धधातुके विषये वीवक्तव्यो वसादौ परे वा भवति । सार्वधातुकार्धधातुकयोर्लक्षणं मूले उक्तम् । अनेन वी आदेशः । वी णप् इति स्थिते । 'द्विश्च' ह्रस्वः । वि वी णप् इति जाते 'धातोर्नामिनः' अनेन सूत्रेण वृद्धिर्भवति । 'स्वरहीनं०' विवाय । विवी अतुस् इति स्थिते ॥ सूत्रम्—'नुधातोः'॥ नुश्च धातुश्च नुधातुस्तस्य नुधातोः । स्वादेर्नुरिति स्वादेरुत्पन्नस्य नु इति विकरणस्य तथा धातोरिति इवर्णान्तोवर्णान्तधातोः संबन्धिन इवर्णस्य उवर्णस्य इयुवौ भवतः । इवर्णस्य इय् उवर्णस्य उव् । अत्रापि विशेषमाह—अनेकेत्यादि । तु पुनः अनेकस्वरः । संयोगपूर्वरहितश्च यो धातुर्भवति तत्संबन्धिनोरिवर्णोवर्णयोर्यकारवकारावेव भवतः । एवंभूतस्य नुविकरणसंबन्धिनः उवर्णस्यापि वत्वम् । तुशब्दात् कचिदेकस्वरस्यापि यकारः । यथा वदन्ति(?) कचिदनेकस्वरस्यापि इय् । यथा ईयतुः ॥ 'य्वोर्धातोः' 'य्वौ वा' इति सूत्रद्वयेन केवलस्य ईकारस्य उकारस्य च इयादिकार्यम् । अत्रतु 'नुधातोः' इत्यनेन सूत्रेण सर्वत्र इवर्णस्य उवर्णस्य च इयादि कार्यं भवति इति विशेषः । अनेन सूत्रेणानेकस्वरस्यासंयोगपूर्वस्यास्येकारस्य यकारो भवति । विव्यतुः विव्युः । गुणः । विवयिथ ॥

**स्वरान्तान्नित्यानिटस्थपो वेट् ॥ विवयिथ-विवेथ आजिथ विव्यथुः विव्य । विवाय-विवय, विव्यिव-आजिव, विव्यिम-आजिम । वीयात् ॥ नैकस्वरादनुदात्तात् ॥ एकस्वराद्धातोर्धातुपाठेऽनुदात्त इत्येवं पठितादिडागमो न भवेति ॥**

'स्वरान्तात्०' ॥ स्वरान्तान्नित्यानिटो धातोः थपो वा इट् भवति । अनेनास्य वेट् भवति । 'गुणः' विवेथ विव्यथुः विव्य । विवाय विवय विव्यिव विव्यम । वीयात् । अज् ता इति स्थिते 'अजेरार्धधातुके' अनेन वीरादेशः । वी ता इति स्थिते । सूत्रम्—'नैकस्वरादनुदात्तात्' ॥ न एक एव स्वरो यस्य स नैकस्वरस्तस्मात् एकस्वरात् अनुदात्तात् त्रिपदं सूत्रम् । यो धातुरेकस्वरात्मकः धातुपाठेऽनुदात्त इति संज्ञकः कथितस्तस्मात्परेषां पूर्वोक्तानां सिसतासीस्यपां इडागमो न भवति । उदात्ताः सेट एष्टव्याः । तथाऽनुदात्ता अनिट एष्टव्याः । अनुदात्ता धातवो धातुपाठाज्ज्ञेयाः । अत्रानिट्कारिकास्ति तस्याः श्लोकाः सन्ति ॥

## ॥ अथानिट्कारिकाः ॥

**अनिट्स्वरान्तो भवतीति दृश्यता-**
**मिमांस्तु सेटः प्रवदन्ति तद्विदः ।**

अदन्तमृदन्तमृतां च वृङ्वृञौ
श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ॥ १ ॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः ।
इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत ॥ २॥
शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ।
रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥
यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥
दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥५॥
दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशिं च शान्ताननिटः पुरोगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥
रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिः क्षुधिः शुध्यतिबुध्यती व्यधिः ।
इमे तु धान्ता दश चानिटो मतास्ततः परं सिद्ध्यतिरेव नेतरे ॥ ७ ॥
शिषिं पिषिं शुष्यतिपुष्यती त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम् ।
इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षती तथा ॥ ८ ॥
तपिं तिपिं चापिमथो वपिं स्वपिं लुपिं लिपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥
अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं खिद्यतिपद्यतिस्विदीन् ।
तुदिं नुदिं विद्यति विन्द इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥१०॥

पचिं वचिं विचिरिचिरञ्जिपृच्छती-
निजिं सिचिं मुचि भजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥ ११ ॥

इत्यनिट्कारिकाः ॥ वेता-अजिता । वेष्यति-अजिष्यति । आजिष्यत्-अवेष्यत् । आजीत् । 'धातोर्नामिनः' 'सेः' अवैषीत् । ष्टुत्वम् । अवैष्टाम् अवैषुः ।

तथा चाकारान्ताः सर्वेऽप्यनिटो दरिद्रावर्जम् ॥ भू सत्तायाम् । रु शब्दे । स्नु प्रस्रवणे । क्ष्णु तेजने । शीङ् स्वप्ने । यु मिश्रणे । णु शब्दे । टुक्षु शब्दे । टु ओश्विगतिवृद्ध्योः । डीङ् विहायसा गतौ । श्रिञ् सेवायाम् । वृङ् संभक्तौ । वृञ् संवरणे । इत्येतद्वर्जं अन्ये इवर्णोवर्णान्ता धातवोऽनिटो ज्ञेयाः ॥ टु ओश्विइर् गतिवृद्ध्योः । श्रिञ् सेवायाम् । एतौ द्वौ वर्जयित्वा इकारान्ताः सर्वेऽप्यनिटः ॥ ईकारान्तेषु शीङ् स्वप्ने । डीङ् विहायसा गतौ ।

एतौ द्वौ वर्जयित्वान्ये सर्वेऽप्यनिटः ॥ उकारान्तेषु यु रु णु क्ष्णु क्षु स्नु ऊर्णुञ् एतान्सप्त-धातून्वर्जयित्वाऽन्ये सर्वेऽप्यनिटः। ऊकारान्ताः सर्वेऽपि सेटः न कोऽप्यनिट्। ऋकारा-न्तेषु वृङ् संभक्तौ। वृञ् वरणे। जागृ निद्राक्षये। एतांस्त्रीन्धातून्वर्जयित्वान्ये सर्वेऽप्य-निटः। एकारान्ताः षडेवानिटः। ऐकारान्ताः सर्वेऽप्यनिटः। ओकारान्ताः पञ्चैवानिटः। औकारान्तो धातुः कोपि नास्ति ॥ अथ व्यञ्जनान्ताः कथ्यन्ते। तथात्रानिट्त्वाधिकारा-त्कातन्त्रसूत्राणि लिख्यन्ते। शकेः कात् नेट्। पचि विचि सिचि विचि मुचेश्चात्। प्रच्छेः छात्। युजि रुजि भुजि भञ्जि त्यजि भ्रस्जि यजि मस्जि सृजि निजि विजिर् स्वञ्जेर्जात्। भदि तुदि नुदि क्षुदि स्विदि स्विद्यति विन्दति छिदि भिदि हदि सदि पदि खिदेर्दात्। राधि रुधि क्रुधि क्षुधि बन्धि साधि शुध्यति बुध्यति युधि बुधि व्यधेर्धात्। हनिमन्यतेर्नात्। आपि तपि तिपि स्वपि वपि क्षिपि लुपि छुपि लिपि सृपेः पात्। यभिरभिलभिभ्यो भेभ्यः। यमि रमि नमि गमेर्मात्। रिशि रुशि क्रुशि लिशि विशि दिशि दृशि स्पृशि मृशि दंशेः शात्। त्विषि पुष्यति कृषि श्लिष्यति द्विषि रिषि विषि मिषि सिषि सुषि शुषि तुषि दुषेः षात्। वसि घसेः सात्। दहि दिहि दुहि मिहि मुहि रुहि लिहि नहि वहेर्हात्। च ग्रहि-गुहेः सने एभ्यो धातुभ्यः 'सिसतासीस्यपामिट्' इति सूत्रेण इडागमो न भवति। अत्र सर्वस्य कात् अस्य पदस्य ककारात् क इत्यर्थे कार्यः (?)। इति धातवोऽनिटः। एतेषामर्था धातुपाठादवगन्तव्याः। अनेन सूत्रेण च व्याख्यानेन वीरादेशस्य इट्निषेधो भवति। गुणः। वेता अजिता। वेष्यति अजिष्यति। स्वरादेः। आजिष्यत् अवेष्यत्। आजीत् आजिष्टाम् आजिषुः। 'धातोर्नामिनः' अवैषीत्। ष्टुत्वम्। अवैष्टाम् अवैषुः ॥

**क्षि क्षये। क्षयति। क्षयेत्। क्षयतु। अक्षयत्। चिक्षाय। 'नुधातोः' चिक्षि-यतुः ॥ ये ॥ अनपि यकारे पूर्वस्य दीर्घो भवति ॥ क्षीयात्। क्षेता। क्षे-ष्यति। अक्षेष्यत्। 'धातोर्नामिनः' अक्षैषीत् अक्षैष्टाम् अक्षैषुः ॥**

क्षिक्षये। पूर्ववत् तिबादयः। गुणः। क्षयति। क्षयेत्। क्षयतु। अक्षयत्। क्षि णप् इति स्थिते 'द्विश्च' क्षि क्षि णप् इति जाते 'शसात् खपाः' अनेन सूत्रेण ककारः शेषः 'कुहोश्चुः' चिक्षि णपिति जाते 'धातोर्नामिनः' अनेन वृद्धिः। 'स्वरहीनं०' चिक्षाय 'नुधातोः' चिक्षियतुः चिक्षियुः। क्षि यात् इति जाते ॥ सूत्रम्—'ये' ॥ एकपदं सूत्रम्। अनपि यकारे परे सति पूर्वस्य स्वरस्य दीर्घो भवति। अनेन दीर्घः। क्षीयात् क्षेता क्षेष्यति अक्षेष्यत्। 'धातोर्नामिनः' अक्षैषीत् अक्षैष्टाम् अक्षैषुः।

**कटे वर्षावरणयोः। कटति। कटेत्। कटतु। अकटत्। चकाट ॥ ह्यन्त-क्षणश्वसिजागृहसादिवर्जं सेटि सौ न वृद्धिः ॥ हसादय एकारेतः। अकटीत् अकटिष्टाम् अकटिषुः।**

कटे वर्षावरणयोः। कटति। लिट्लकारे 'कुहोश्चुः' 'अत उपधायाः' अनेन वृद्धिः। चकाट चकटतुः चकटुः। कट्यात् कटिता कटिष्यति अकटिष्यत्। पूर्वोक्तसूत्रैः अकट् इसि ईट् दिप् इति जाते ॥ सूत्रम्—'ह्यन्त०' ॥ ह्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ परे

वृद्धिर्भवति। अत्र हसादय एकारेतो ज्ञातव्याः। अनेन वृद्धिनिषेधः 'इट ईटि' 'सवर्णे दीर्घः' अकटीत्।

**गुपू रक्षणे ॥ आयः ॥ गुपूधूपूविच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययो भवति। अनपि तु वा ॥ उपधाया गुणः ॥ स धातुः ॥ स यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति ॥ धातुत्वात्तिबादयः। गोपायति। गोपायेत् गोपायतु। अगोपायत्। 'कासादिप्रत्ययादाम्' गोपायांचकार। गोपायामास। गोपायांबभूव। जुगोप ॥ यतः ॥ यकारस्याकारस्य च लोपो भवत्यनपि ॥ गोपाय्यात्-गुप्यात्। गोपायिता-गोपिता। 'ऊदितो वा' गोप्ता। गोपायिष्यति-गोपिष्यति-गोप्स्यति। अगोपायिष्यत्-अगोपिष्यत्-अगोप्स्यत्। अगोपायीत्-अगोपीत्। 'अनिटो नामिवतः' अगौप्सीत्। झसात्। अगौप्ताम्। एवं धूप् सन्तापे। धूपायति। धूपायांचकार। धूपायामास। धूपायांबभूव। दुधूप। दीर्घोपधत्वान्न गुणः।**

गुपू रक्षणे। ऊकारः 'ऊदितो वा' इति कार्यार्थः ॥ सूत्रम्—'आयः' ॥ एकपदं सूत्रम्। गुपूधूपूविच्छिपणिपनिभ्यो धातुभ्यः स्वार्थे आयः प्रत्ययो भवति अनपि वा भवति। गुप् आय इति स्थिते 'उपधाया लघोः' 'स्वरहीनं०' गोपाय इति जाते ॥ सूत्रम्—'स धातुः'॥सः धातुः। यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति। सुगमम्। धातुत्वात्तिबादयः। गोपाय तिप् इति जाते 'अप् कर्तरि' गोपाय अप् तिप् इति जाते 'अदे' 'स्वर०' गोपायति गोपायेत् गोपायतु अगोपायत्। गोपाय णप् इति स्थिते 'कासादिप्रत्ययादाम्'। अनेन सूत्रेण आम् प्रत्ययो भवति तदा गोपाय आम् कृ णप् इति जाते 'सवर्णे दीर्घः सह' गोपायां कृ णपिति जाते 'द्विश्च' 'रः' 'कुहोश्चुः' 'धातोर्नामिनः' 'नश्चापदान्ते झसे' 'स्वरहीनं०' गोपायांचकार गोपायामास गोपायांबभूव। 'अनपि वा' इत्युक्तत्वात् वा आयप्रत्ययो भवति। आयप्रत्ययाभावे आम्प्रत्ययाभावो भवति। गुप् णबिति स्थिते 'द्विश्च' 'कुहोश्चुः' अनेन गकारस्य जकारो भवति। 'उपधाया लघोः' अनेन गुणो भवति 'स्वरहीनं०'। जुगोप जुगुपतुः जुगुपुः। गोपाय यात् इति स्थिते ॥ सूत्रम्—'यतः' ॥ य् च अत् च यत् तस्य यतः। यकारस्य अकारस्य च अनपि विषये लोपो भवति। अनेनाकारस्य लोपः। गोपाय्यात्। आयाभावे सति गुप्यात्। अस्य धातोः 'ऊदितो वा' अनेन सूत्रेणेड्विकल्पो भवति। अनपि आयप्रत्ययस्यापि विकल्पोऽस्ति। गोपायिता गोपिता 'ऊदितो वा' गोप्ता। अन्यानि रूपाणि मूले उक्तान्यतो न लिखितानि। अनिटो नामिवतः। अनेन वृद्धिर्भवति। अगौप्सीत्। समाप्तोऽयं धातुः ॥ धूप संतापे। 'आयः' अनेन सूत्रेणास्यापि आयः प्रत्ययः। दीर्घोपधत्वान्न गुणः। धूपायति धूपायांचकार धूपायामास धूपायांबभूव। आयाभावे दुधूप। अन्यानि रूपाणि सुगमानि।

**तप सन्तापे। तपति। तपेत्। तपतु। अतपत्। तताप तेपतुः तेपुः।**

**तेपिथ ॥ अनित्वतो नित्यानिटस्थपो वेट् ॥ ततप्थ । तप्यात् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत् ।**

तप् संतापे । पूर्ववत् तिबादयः । तपति तपेत् तपतु अतपत् । 'अत उपधायाः' अनेन वृद्धिः । ताताप । 'लोपः पचां किस्ये चास्य' अनेनैत्वपूर्वलोपौ भवतः । तेपतुः तेपुः । तेपिथ ॥ सूत्रम्—'अत्वतो०' ॥ अत्वतो नित्यानिटो धातोः थपो वा इड् भवति । अनेनास्य वा इट् । ततप्थ तप्यात् । तप्ता तप्तारौ तप्तारः । तप्स्यति अतप्स्यत् । 'णित्पे' अनेन सूत्रेण सेर्णित्वात् 'अत उपधायाः' अनेन सूत्रेण वृद्धिः । अताप्सीत् । झसात् । अताप्ताम् अताप्सुः ।

**क्रमु पादविक्षेपे ॥ क्रमुभ्रमुत्रसित्रुटिलषभ्राशभ्लाशो वा यः प्रत्ययो वक्तव्यः ॥ चतुर्षु । क्राम्यति ॥ क्रमः पे चतुर्षु दीर्घता वक्तव्या ॥ क्रामति । क्राम्येत् । क्रामेत् । क्राम्यतु । क्रामतु । अक्राम्यत् अक्रामत् । चक्राम । क्रम्यात् । क्रमिता । क्रमिष्यति । अक्रमिष्यत् । अक्रमीत् ।**

क्रमु पादविक्षेपे । 'क्रमु भ्रमु०' एभ्यो वा यः प्रत्ययश्चतुर्षु लकारेषु परेषु । सुगमोऽस्यार्थः॥ द्वितीयं सूत्रम्—'क्रमः पे' ॥ क्रमुधातोः परस्मैपदे चतुर्षु परेषु दीर्घता वक्तव्या अनेन दीर्घः प्रथमसूत्रेण यप्रत्ययः द्वितीयेन दीर्घता भवति । क्राम्यति । यप्रत्ययाभावे क्रामति । एवमन्यान्यपि रूपाणि ज्ञेयानि । लिट्लकारे क्रम णप् इति स्थिते 'दिश्च' पूर्वस्य 'हसादिः' इति रेफमकारयोर्लोपे 'चक्रम् अ' इति स्थिते 'अत उपधायाः' अनेन सूत्रेण वृद्धिः । ('रः') 'कुहोश्चुः' चक्राम चक्रमतुः चक्रमुः । क्रम्यात् क्रमिता । अन्यानि रूपाणि मूले उक्तानि सन्ति । 'णित्पे' इति णित्त्वात् । 'अत उ०' अनेन वृद्धिप्राप्तौ 'म्यन्तक्षण०' इत्यनेन सूत्रेण वृद्धेरभावः । अक्रमीत् अक्रमिष्टाम् अक्रमिषुः ॥

**यम उपरमे ॥ गमां छः ॥ गमूयमूइषूणां छो भवत्यपि ॥ यच्छति । यच्छेत् । यच्छतु अयच्छत् ययाम येमतुः येमुः । येमिथ-ययन्थ । यम्यात् । यन्ता । यंस्यति अयंस्यत् ॥**

यम उपरमे ॥ 'गमां छः । इदं सूत्रमिति । गमां छः । गम् यम् इषूणां धातूनां छकारादेशो भवति तिबादिषु चतुर्षु लकारेषु परेषु । यम् अप् तिप् इति स्थिते अनेन मकारस्य छकारः । कुतोऽयमादेशो मकारस्य भवति, तत्राह 'षष्ठीनि०' अनेन नियमसूत्रेण मकारस्य छादेशो भवति तदा यच्छ् अप् तिबिमि जाते 'स्वरहीनं०' 'छः' 'खसे चपा०' । यच्छतः यच्छेत् यच्छतु अयच्छत् । 'अत उपधायाः' ययाम । 'य यम् अतुस्' इति स्थिते 'लोति पचां०' अनेनैत्वपूर्वलोपौ भवतः । येमतुः । येमुः । येमिथ । 'अत्वतः' अनेन वा इट् । इडभावे एत्वपूर्वलोपत्वाभावः 'सेटिथपि' इत्युक्तत्वात् । ययन्थ । यम्यात् । 'नश्चा०' यन्ता यंस्यति अयंस्यत् । अयं सि ईट् दिप् इति स्थिते ॥

**आदन्तानां यमिरमिनमीनां सेरिट् सक् च पे वक्तव्यौ ॥ अयंसीत् अयंसिष्टाम् अयंसिषुः ॥**

सूत्रम्—'आदन्तानाम्' ॥ आदन्तानां यमिरमिनमीनां सेरिट् चैतेषां धातूनां सगागम एतौ द्वौ परस्मैपदे वक्तव्यौ । अनेनास्येट्सकौ भवतः । तदा अयं सक् इट् सि ईप् दिपिति स्थिते । ककारः टकारश्चेतौ 'इटईटि' 'सवर्णे०' दिसिमि । पकारः इत् । 'स्वरहीनं०' 'वावसाने' 'ह्र्यन्त०' अनेन वृद्धेरभावो भवति । 'नश्चापदान्ते' अनेन मकारस्यानुस्वारो भवति । अयंसीत् अयंसिष्टाम् अयंसिषुः । समाप्तोयम् ।

णमु प्रह्वत्वे शब्दे च । नमति । नमेत् । नमतु । अनमत् । ननाम नेमतुः । नेमुः । नेमिथ-ननन्थ । नम्यात् । नन्ता । नंस्यति । अनंस्यत् । अनंसीत् अनंसिष्टाम् अनंसिषुः ।

णमु प्रह्वत्वे शब्दे च । पूर्ववत्तिबादयः 'आदेः ष्णः स्नः' अनेन णकारस्य नकारो भवति । नमति । लिट्लकारे 'अत उपधायाः' ननाम । लोपः । नेमतुः । नेमुः । नेमिथ । अत्वतः । ननन्थ । अन्येषां लकाराणां रूपाणि मूले उक्तानि । लुङ्लकारे 'आदन्तानां' अनेनेट्सकौ भवतः । 'ह्र्यन्त०' अनेन वृद्धेरभावः । अनंसीत् । अनंसिष्टाम् अनंसिषुः । अयं धातुरनिट् ।

गम्लृ गतौ । लृकारो लित्कार्यार्थः । गच्छति । गच्छेत् । गच्छतु । अगच्छत् । जगाम ॥ गमां स्वरे ॥ गम् हन् जन् खन् घस् एतेषामुपधाया लोपो भवति क्ङित्यङे स्वरे ॥ जग्मतुः जग्मुः । जगमिथ जगन्थ । गम्यात् । गन्ता ॥ हनृतः स्यपः ॥ हन्तेर्ऋकारान्तात्स्यप इडागमो भवति गमेश्च पे ॥ गमिष्यति । अगमिष्यत् ॥ लित्पुषादेर्ङः ॥ लितो धातोः पुषादेर्द्युतादेश्च ङप्रत्ययो भवति दिबादौ परस्मैपदे ॥ सेरपवादः अङे । इत्युक्तेर्नोपधालोपः ॥ अगमत् अगमताम् अगमन् ॥

गम्लृ गतौ । लृकारो लृदित्कार्यार्थः । गम् अप् तिप् इति स्थिते । 'गमां छः' अनेन मकारस्य छकारः । 'स्वर' 'छः' 'खसे०' गच्छति । गम् णप् इति स्थिते 'द्विश्च' पूर्ववत् 'कुहोश्चुः' 'अत उपधायाः' जगाम । ज गम् अतुस् इति स्थिते ॥ सूत्रम्—'गमां स्वरे' ॥ गमां स्वरे । गम् हन् जन् खन् घस् एतेषां धातूनां किति ङिति च स्वरे परे च उपधाया लोपो भवति अङे स्वरे । अनेनोपधाया लोपो भवति । 'स्वर०' जग्मतुः जग्मुः । जगमिथ । 'अत्वतो०' 'नश्चा०' जगन्थ । अन्यानि मूले सन्ति तथापि लिखामि । गन्ता । गम् स्यप् तिपिति स्थिते । सूत्रम्—'हनृतः स्यपः' ॥ हन्च ऋतृच हनृत् तस्मात् हनृतः स्यपः । हन्तेर्ऋकारान्ताद्धातोः स्यप इडागमो भवति गमेश्च परस्मैपदे । अनेनेट् । गमिष्यति अगमिष्यत् ॥ सूत्रम्—'लित्पुषोदेर्ङः' ॥ ल लृकारः इत् यस्यासौ लित् । पुष् आदिर्यस्यासौ पुषादिः । लिच्च पुषादिश्च लित्पुषादिः तस्मात् लित्पुषादेः ङः द्विपदं सूत्रम् । लितो धातोः पुषादेर्द्युतादेश्च भूतार्थे ङप्रत्ययो भवति दिबादौ परे सति । सेरपवादो भवति । अ गम् ङ दिपिति जाते 'गमां स्वरे' अनेनोपधाया लोपे प्राप्तेऽङ इत्युक्तत्वान्नोपधाया लोपः । ङकारो गुणप्रतिषेधार्थः । 'स्वर०' अगमत् ।

**इषु इच्छायाम् । इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । इयेष ईषतुः ईषुः । इयेषिथ । इष्यात् ॥ इषुसहलुबरिषरुषामनपि तस्येड्वा वक्तव्यः ॥ एषिता-एष्टा । एषिष्यति । ऐषिष्यत् ऐषीत् । ऐषिष्टाम् ऐषिषुः ॥**

इषु इच्छायाम् । पूर्ववत् तिबादयः 'गमां छः' अनेन षस्य छः । 'छः' 'खसे०' 'स्वर०' इच्छति । लिट्लकारे इ इष् णपिति स्थिते 'उपधाया लघोः' अनेन गुणः । 'असवर्णे०' अनेनेय् 'स्वर०' इयेष । 'सवर्णे' ईषतुः ईषुः । इयेषिथ । इष्यात् । इष् ता इति स्थिते सूत्रम्—'इषुसह०' ॥ इषुश्च सहश्च लुभश्च रिषश्च रुष्च इषुसहलुभरिषरुषः तेषां इषुसहलुभरिषरुषां धातूनामनपि विषये तादिप्रत्ययस्येद् वा वक्तव्यः । अनेनेट् । गुणः । एषिता । इडभावे गुणः । 'ष्टुभिः ष्टुः' एष्टा एषिष्यति 'स्वरादेः' अनेन द्वितीयोद् । ऐषिष्यत् ।

**ञिफला विशरणे । फलति । फलेत् । फलतु । अफलत् । पफाल ॥ आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते ॥ तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्तव्यौ ॥ फेलतुः फेलुः । फेलिथ । फल्यात् । फलिता । फलिष्यति । अफलिष्यत् । लघ्वकारोपधत्वेन वृद्धिविकल्पे प्राप्ते ॥ लरान्तस्याकारस्य सौ नित्यं वृद्धिर्वाच्या ॥ अफालीत् ।**

ञिफला विशरणे । पूर्ववत्तिबादयः । फलति । लिट्लकारे 'अत उपधायाः' अनेन वृद्धिः । 'झपानां' अनेन फस्य पः । पफाल । पफल् अतुस् इति स्थिते आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते ॥ सूत्रम्—'तॄफल' ॥ तॄफलभजत्रपां धातूनां किति णादौ परे च सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ । अनेनास्यैत्वपूर्वलोपौ । फेलतुः फेलिथ । अन्यानि मूले सन्ति । लुङ्लकारे 'हसादेः' अनेन वृद्धिविकल्पे प्राप्ते सूत्रम्—'लरान्तस्या०' ॥ लकारान्तस्य रेफान्तस्य च धातोरकारस्य सौ परे नित्यं वृद्धिर्वाच्या । अनेन नित्यं वृद्धिः । अफलीत् ।

**जि जये । जयति । जयेत् । जयतु । अजयत् ॥ सपरोक्षयोर्जेर्गिः ॥ सप्रत्यये परोक्षे च जि जय इति धातोर्गिरादेशो भवति ॥ जिगाय जिग्यतुः जिग्युः । जिगयिथ-जिगेथ । जीयात् । जेता । जेष्यति । अजेष्यत् । अजैषीत् अजैष्टाम् अजैषुः ।**

जि जये । गुणः । जयति । लिट्लकारे जि जि णपिति स्थिते ॥ सूत्रम्—'सपरोक्षयोः०' ॥ सश्च परोक्षश्च सपरोक्षौ तयोः सपरोक्षयोः जेः गिः त्रिपदं सूत्रम् । सप्रत्यये च परोक्षे णबादौ परे सति जिजय इति धातोर्गिरादेशो भवति । अनेन गिरादेशः । 'द्विश्च' 'धातोः' 'कुहोश्चुः' अनेन गकारस्य जकारः । जिगाय । 'नु धातोः' अनेन यकारः । जिग्यतुः । 'ये' जीयात् । जेता । अनिटोनेन ( धातोर्नामिनः ) वृद्धिः । अजैषीत् ।

**कृष विलेखने । कर्षति । कर्षेत् । कर्षतु । अकर्षत् । चकर्ष । उपधाया लघोः चकृषतुः चकृषुः । चकर्षिथ । कृष्यात् गुणे कृते ॥ रारो झसे दृशाम् ॥ दृशसृजकृषमृशतृपदृपस्पृशां झसे परे अरो रो भवति ॥ रार इति तत्रोपा-**

त्तम् । तेन रा आरः र अरः । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । ष्टुत्वम् । क्रष्टा ॥ कृषादीनां रो वा वक्तव्यः ॥ कर्ष्टा । रारो झसे दृशाम् ॥ षढोः कः से ॥ धातोः षकारढकारयोः कत्वं भवति सकारे परे ॥ किलात्षः सः कृतस्य । कषसंयोगे क्षः । क्रक्ष्यति-कर्क्ष्यति । अक्रक्ष्यत्-अकर्क्ष्यत्-अक्राक्षीत् । अनिटो नामिवतः । अकार्क्षीत् ॥ कृषादीनां वा सिर्वक्तव्यः ॥ 'कृष् स्पृश् मृष् तृप् दृप्' एते कृषादयः तत्पक्षे ॥ हशषान्तात्सक् ॥ हकारान्तात् शकारान्तात् षकारान्ताच्च नाम्युपधादविद्यमानेटो दिवादौ परे सक्प्रत्ययो भवति दृशं वर्जयित्वा । सेरपवादः ॥ अकृक्षत्-अकृक्षताम् अकृक्षन् ।

कृष् विलेखने । पूर्ववत् । उपधायाः । कर्षति । लिट्लकारे 'द्विश्च' 'रः' 'कुहोश्चुः' 'उपधायाः' 'स्वर०' चकर्ष चकृषतुः चकर्षिथ कृष्यात् । कृष् ता इति स्थिते । 'उपधायाः' । क् अर् ष् ता इति जातम् ॥ तत्र सूत्रम्—'रारो झसे दृशाम्' ॥ र अरः झसे दृशां 'ह्वे' 'उओ' । दृशादीनां दृश् स्पृश् मृश् सृज् कृष् मृष् दृप् तृप् इत्यादीनां धातूनां संबन्धिनो ऋ इत्येतस्यावयवस्य झसे परे र इत्यादेशो भवति सस्वर एवादेशो भवति । तत्र द्रष्टव्य इत्यादौ रस्यैव दर्शनात् अरो रो भवति । अर् इति निर्देशात् दृशादीनां गुणोपि सूचितस्तेन पूर्वं गुणं विधाय पश्चात् रकारः कार्यः इत्यभिप्रायः । रा र इति तत्रोपात्तम् । तेन रा आरः, र अरः । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । अनेन अरः रः जातः । तदा क् र् ष् ता इति जाते 'स्वरहीनं०' 'ष्टुभिः ष्टुः' क्रष्टा ॥ तथाच सूत्रम्—'कृषादीनाम्०' ॥ कृष् स्पृश् मृष् तृप् दृप् एतेषां धातूनां रः अरो वा भवति । अनेन विकल्पः । कर्ष्टा कृष् स्यप् इति स्थिते । गुणः । 'रारो झसे०' 'स्वरहीनं०' तदा क्रष् स्यप् इति जातम् ॥ तत्र सूत्रम्—'षढोः कः से' ॥ षश्च ढश्च षढौ तयोः षढोः कः से त्रिपदं सूत्रम् । धातुसंबन्धिनोः षकारढकारयोः कत्वं भवति सकारे परे । त्यादावेवायं विधिः । तेन मधुलिट् सु इत्यादौ ककारो न भवेत् अनेन षकारस्य ककारः । 'किलात्' 'कषसंयोगे क्षः' 'स्वरहीनं०' क्रक्ष्यति । विकल्पेन अरो रो न भवति । कर्क्ष्यति । लङ् लकारे । अक्रक्ष्यत् । अकर्क्ष्यत् । अकृष् सि ईट् दिप् इति स्थिते 'अनिटो०' 'रारो झसे' 'स्वरहीनं०' अक्राष् सि इट् दिप् इति जाते 'षढोः कः से' अनेन षस्य कः । 'किलात्' 'कषसं०' 'स्वरहीनं०' अक्राक्षीत् अक्राष्टां अक्राक्षुः । रकाराभावे अकार्क्षीत् अकार्ष्टाम् अकार्क्षुः । सूत्रं—'कृषादीनां०' ॥ कृषादीनां धातूनां 'भूते सिः' इति सूत्रेण विहितः सिप्रत्ययो वा भवति । सेरभावपक्षे ॥ सूत्रम्—'हशषान्तात्सक्' ॥ हश्च शश्च षश्च हशषाः ते अन्ते यस्य स हशषान्तस्तस्मात् हशषान्तात् सक् हकारान्तात् दुह् लिह् इत्यादेः शकारान्तात् दृशिं वर्जयित्वा विश् आदेः, षकारान्तात् कृषादेर्नाम्युपधात् अविद्यमानेटो धातोर्भूतेऽर्थे दिबादौ परे सेः स्थाने सक्प्रत्ययो भवति । ककारो गुणनिषेधार्थः स्थाननियमार्थश्च । तदा अकृष् स दिप् इति जाते 'षढोः कः से' 'किलात्०' 'कषसं०' 'स्वरहीनं०' अकृक्षत् अकृक्षतां अकृक्षन् । सक्प्रत्ययस्य सकारः सस्वर एव तिष्ठति ।

रुष् हिंसायाम् । 'उपधाया लघोः' रोषति । रोषेत् । रोषतु । अरोषत् । रुरोष ।

रुरुषतुः । रुरुषुः । रुरोषिथ । रुष्यात् । रोषिता । रोष्टा । रोषिष्यति । अरोषिष्यत् । अरोषीत् ।

रुष् हिंसायाम् पूर्ववत् तिबादयः 'उपधाया लघोः' रोषति । लिट्लकारे रुरोष । रुष्यात् रोषिता 'इषुसह०' अनेनेड् विकल्पः 'ष्टुभिः ष्टुः' रोष्टा । अन्यानि मूले सन्ति ।

उष् दाहे । ओषति । ओषेत् । ओषतु । औषत् ॥ उषविद्जागृणामाम्वा वक्तव्यः ॥ ओषांचकार । उवोष । उवोषिथ । उष्यात् । ओषिता । ओषिष्यति । औषिष्यत् । औषीत् ।

उष् दाहे । पूर्ववत् । ओषति । 'स्वरादेः' । उष् णप् इति स्थिते ॥ सूत्रम्—'उषविद्जागृणां०' ॥ ओषांचकार । आमभावे उवोष ऊषतुः । उवोषिथ । अन्यानि सन्ति ।

मिह सेचने । मेहति । मेहेत् । मेहतु । अमेहत् । मिमेह मिमिहतुः मिमिहुः । मिमेहिथ । मिह्यात् । 'हो ढः' 'तथोर्धः' ष्टुत्वम् ॥ ढि ढो लोपो दीर्घश्च ॥ ढकारस्य ढकारे परे लोपो भवति पूर्वस्य च दीर्घः ॥ मेढा । मेक्ष्यति । अमेक्ष्यत् । 'हशषान्तात्सक्' 'हो ढः' 'षढोः कः से' । अमिक्षत् अमिक्षताम् अमिक्षन् ॥

मिह सेचने । 'उपधायाः' मेहति । लिट् मिमेह । मिह्यात् । मिह् ता इति स्थिते । हो ढः तदा मिढ् ता इति जाते तथोर्धः । मिढ् ता इति जाते । 'ष्टुभिः ष्टुः' मिढ् ढा इति जाते ॥ सूत्रम्—'ढि ढो लोपो०' ॥ मी ढा इति जाते गुणः । वात्र 'ढि ढो लोपो दीर्घश्च' इति सूत्रप्राप्तेः प्राक् 'उपधाया लघोः' अनेन गुणः कार्यः । मेढा मेढारौ मेढारः । मिह स्यप् तिप् इति स्थिते 'हो ढः' 'षढोः कः से' 'किलात्' 'कषसंयोगे' 'उपधाया लघोः' मेक्ष्यति । अमेक्ष्यत् । 'हशषान्तात्सक्' । मिह् स दिप् इति जाते 'हो ढः' 'षढोः कः सेः' 'किलात्' 'कषसं०' 'स्वरहीनं०' अमिक्षत् ।

दह भस्मीकरणे । दहति । दहेत् । दहतु । अदहत् । ददाह देहतुः देहुः । देहिथ-ददग्ध । दह्यात् । दग्धा । दादेर्घः । आदिजबानां झभान्तस्य झभाः स्ध्वोः । खसे चपा । किलात्षः सः कृतस्य । कषसंयोगे क्षः । धक्ष्यति । अधक्ष्यत् । अधाक्षीत् । 'झसात्' अदाग्धाम् अधाक्षुः ।

दह भस्मीकरणे । दहति 'अत उपधायाः' ददाह । 'लोपः पचां' देहतुः देहिथ । 'अत्वतो' अनेनेड्विकल्पः । तदा दह् थप् इति स्थिते । 'दादेर्घः' अनेन हस्य घः 'तथोर्धः' अनेन थस्य धः । 'झबे जबाः' अनेन घस्य गः । ददग्ध । दह्यात् । दग्धा । इदमपि रूपं पूर्वोक्तसूत्रैः सिध्यति । दह् स्यप् तिप् इति स्थिते । 'दादेर्घः' अनेन हस्य घः 'आदिजबानां' अनेन दस्य धः । 'खसे चपा०' अनेन घस्य कः 'किलात्०' 'कषसंयोगे' धक्ष्यति । अधक्ष्यत् । दह् सि इट् दिप् इति स्थिते दिवादौ 'दादेर्घः' 'आदिजबानां' 'खसे' 'कषसं०' 'स्वरहीनं' 'अत उपधायाः' 'अधाक्षीत्' । 'झसात्' अदाग्धाम् । अधाक्षुः । समाप्तोऽयम् ।

ग्लै म्लै हर्षक्षये। आयादेशः। ग्लायति। ग्लायेत्। ग्लायतु। अग्लायत्॥ सन्ध्यक्षराणामा॥ सन्ध्यक्षराणां धातूनामात्वं भवति अनपि विषये॥ णप्। 'द्विश्च' 'ह्रस्वः' 'पूर्वस्य हसादिः शेषः' 'कुहोश्चुः'॥ आतो णप् डौ॥ आकारान्ताद्धातोः परो णप् डौ भवति॥ टिलोपः। जग्लौ॥ आतोऽनपि॥ धातोराकारस्य लोपो भवति अनपि किति ङिति स्वरे सेटि थपि च॥ जग्लतुः जग्लुः। जग्लिथ-जग्लाथ जग्लथुः जग्ल। जग्लौ जग्लिव जग्लिम॥ संयोगादेरादन्तस्य किति यादादावेकारो वा वक्तव्यः॥ ग्लायात् ग्लेयात्। ग्लाता। ग्लास्यति। अग्लास्यत्। अग्लासीत् अग्लासिष्टाम् अग्लासिषुः।

ग्लै म्लै हर्षक्षये। पूर्ववत्तिबादायः। 'ऐ आय्' ग्लायति। लिट्लकारे—ग्लै णप् इति स्थिते॥ सूत्रम्—'संध्यक्षराणामा'॥ संध्यक्षराणां आ सांकेतिकं द्विपदं। संध्यक्षरान्तानां धातूनां अन्त्यस्वरस्यानपि विषये कर्तरि तिबादिचतुर्गणवर्जितस्थले आकारो भवति। अनेन ग्लै इत्यस्य ग्ला जातः। तदा ग्ला णप् इति जाते 'द्विश्च' 'ह्रस्वः'। ग्ल ग्ला णप् इति स्थिते—'पूर्वस्य हसादिः' अनेन गकारोऽवशिष्टः 'कुहोश्चुः' जग्ला णप् इति जाते॥ सूत्रम्—'आतो णप् डौ'॥ आतः णप् डौ। सांके० त्रिपदम्॥ आकारान्ताद्धातोः परो यः प्रथमपुरुषे उत्तमपुरुषे च णप् डौ भवति। डकारष्टिलोपार्थः। डित्करणं विनापि रूपसिद्धौ यत् डौ इति डित्करणं तत् 'आतो युक्' इति युगागमनिषेधार्थम्। कृतेऽपि युगागमे टिलोपः स्यादेव। अनेन णप् डौ जातः डित्वाट्टिलोपः 'स्वर०' जग्लौ जग्ला अतुक् इति जाते॥ सूत्रम्—'आतोऽनपि'॥ आतः न अप् अनप् तस्मिन् अनपि यत्र 'अप् कर्तरि' इत्यादि विकरणं न भवति तत्र विभक्तौ परतः तस्या एव किति ङिति च स्वरे परे इटि च धातोराकारस्य लोपो भवति। यत्र णबादौ अनप् तत्रापि तं विना सर्वोऽपि प्रत्ययः कित्। तत्रानेनाकारस्य लोपो भवति। जग्लतुः। अन्यानि मूले सन्ति। ग्लायात् इति स्थिते॥ सूत्रं—'संयोगादे०'॥ संयोगादेः आदन्तस्य धातोः किति यादौ परे एकारो वा वक्तव्यः। 'षष्ठीनिर्दिष्ट' अनेन नियमसूत्रेण अन्तस्यैव भवति। ग्लायात् ग्लेयात्। अग्लासि ईट् दिप् इति स्थिते। 'आदन्तानाम्' अग्लास् इट् सि ईट् दिप् इति जाते 'इट ईटि' 'सवर्णे' 'स्वरहीनं' अग्लासीत्।

गै रै कै शब्दे। गायति। गायेत्। गायतु। अगायत्। जगौ जगतुः जगुः॥ दादेरे॥ अपित्दाधामागैहाक्पिबसोस्थानामाकारस्यैकारो भवति आशीर्यादादौ परस्मैपदे परे॥ गेयात्। गाता। गास्यति। अगास्यत्। अगासीत् अगासिष्टाम् अगासिषुः।

गै रै कै शब्दे। गायति। अन्यानि रूपाणि मूले सन्ति। आशिषि लिङ्लकारे विशेषः। गायात् इति स्थिते॥ सूत्रम्—'दादेरे'॥ दादेः ए॥ अपित् दा धा मा गै हाक् पिबति सोस्थानां आकारस्य एकारो भवति यादादेः परस्मैपदे परे। गेयात्। अन्यानि रूपाणि पूर्ववत्साध्यानि वैयाकरणैः।

**ष्ट्यै शब्दसंघातयोः । सत्वनिषेधः । ष्ट्यायति । ष्ट्यायेत् । ष्ट्यायतु । अष्ट्यायत् । 'सन्ध्यक्षराणामा' 'शसात्खपाः' 'षाट्टवर्गस्तवर्गजः' इति षकारे गते तकार एव । तष्ट्यौ । ष्ट्यायात् ष्ट्येयात् । ष्ट्याता । ष्ट्यास्यति अष्ट्यास्यत् । अष्ट्यासीत् ।**

ष्ट्यै शब्दसंघातयोः । नामधातुः । अनेनास्य सत्वनिषेधः । 'ऐ आय्' । ष्ट्यायति । लिट्लकारे ष्ट्यै णप् इति स्थिते 'संध्यक्ष०' ष्ट्या णप् इति जाते । 'द्विश्च' । 'झसात्' । पूर्वस्य 'षाट्टवर्गस्तवर्गजः' इति षकारे गते तकार एव शेषः । तष्ट्या णप् इति जाते 'आतो णप् डौ' 'स्वरहीनं' तष्ट्यौ । अत्वतो नित्यानिटश्च धातोः थपो वेट् भवति । तष्ट्यिथ तष्ट्याथ । 'संयोगादेः' । ष्ट्यायात् ष्ट्येयात् । अन्यानि मूले सन्ति तेषां साधनं सुगमं पूर्वधातुवत् ।

**दैप् शोधने । दायति । दायेत् । दायतु । अदायत् । ददौ । पित्त्वादेकाराभावः । दायात् । दाता । दास्यति । अदास्यत् । अदासीत् अदासिष्टाम् अदासिषुः । पित्त्वात्सिलोपाभावः इत्यादि ।**

दैप् शोधने । पकारो धातुभेदज्ञापनार्थः । पूर्ववत् तिबादयः । 'ऐ आय्' दायति । ददौ । पित्त्वात् 'दादेरे' अनेन एकारो न भवति । दायात् । 'आदन्तानाम्' । अदासीत् । पित्त्वात् 'दादेरे' अनेन सिलोपो न भवति ।

**धेट् पाने । ट ईबर्थः । धयति । धयेत् । धयतु । अधयत् । दधौ । धेयात् । धाता । धास्यति । अधास्यत् । वा सिलोपः । अधासीत् अधासिष्टाम् अधासिषुः । अधात् अधाताम् । 'स्याविदः' ॥ उस्यालोपः ॥ उसि परे धातोराकारस्य लोपो भवति ॥ अधुः । धेटः सेरङ् । धातोर्द्वित्वं वेति केचित् ॥ आतोऽनपि ॥ धातोराकारस्य लोपो भवति अनपि किति ङिति स्वरे सेटि थपि च ॥ अदधत् अदधताम् अदधन् ।**

धेट् पाने । ट ईबर्थः । 'ए अय्' धयति । लिट्लकारे । 'संध्यक्षराणां' 'द्विश्च' 'ह्रस्वः' । 'झपानाम्' 'आतो णप् डौ' दधौ । 'दादेरे' धेयात् अधासीत् । 'शाच्छा' अनेन वा सिलोपः । अधात् अधाताम् । अधा अन् इति जाते 'स्याविदः' अधा उस् इति जाते ॥ सूत्रम्—'उस्यालोपः' ॥ उसि, आ सांके०, लोपः । उसि परे सति धातोराकारस्य लोपो भवति । अनेनाकारस्य लोपः । अधुः ॥ धेटः सेः स्थाने अङ् धातोर्द्वित्वं वा भवति इति केचिदाचार्या वदन्ति । अनेनाङ्द्वित्वे भवतः । अ धा धा अङ् दिप् इति जाते । 'ह्रस्वः' । 'झपानां' 'आतोऽनपि' 'स्वरहीनं०' अदधत् ।

**दृशिर् प्रेक्षणे ॥ दृशादेः पश्यादिः ॥ दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु ॥ 'दृश् ऋ सृ शद सद पा घ्रा ध्मा स्था म्ना दाण्' एते दृशादयः । 'पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम तिष्ठ मन यच्छ' एते पश्यादयः । पश्यति । पश्येत् । पश्यतु । अपश्यत् । ददर्श ददृशतुः ददृशुः ।**

---

१ 'स्वरान्तान्नित्यानिटः०' इत्येवोचितम् ॥

**सृजिदृशोस्थपो वेट् । ददर्शिथ । गुणः 'रारो झसे दृशाम्' यत्वम् ! ष्टुत्वम् । दद्रष्ठ ददृशथुः ददृश । ददर्श ददृशिव ददृशिम । दृश्यात् । द्रष्टा । द्रक्ष्यति । अद्रक्ष्यत् । 'अत उपधायाः' अद्राक्षीत् । 'झसात्' ष्टुत्वम् । अद्राष्टाम् अद्राक्षुः । पक्षे । 'इरितो वा' 'दृशादेर्ङे गुणः' । अदर्शत् अदर्शताम् अदर्शन् ।**

दृशिर् प्रेक्षणे पूर्ववत्तिबादयः । इर् अनुबन्धः 'इरितो वा' इति सूत्रस्यविशेषार्थः । दृश् अप् तिप् इति जाते ॥ सूत्रम्—'दृशादेः पश्यादिः' ॥ दृश् आदिर्यस्यासौ दृशादिस्तस्य दृशादेः पश्य आदिर्यस्यासौ पश्यादिः । दृशादेर्धातोस्तिबादौ विभक्तिचतुष्टये परे पश्य इत्यादिरादेशो भवति । अनेन पश्यादेशः । पश्य अप् तिप् इति जाते । 'अदे' 'स्वरहीनं' पश्यति । लिट्लकारे—'उपधायाः' अनेन गुणः । ददर्श ददृशतुः ददृशुः । ददर्शिथ । 'सृजिदृशोः' इति सृजिदृशोर्धात्वोः थपो वा इट् भवति । अनेनास्य थपि वा इट् भवति । इडभावे ददृश् थप् इति जाते गुणः । 'उपधाया लघोः' 'रारो झसे' अनेन अरो रः जातः 'छशष०' ष्टुत्वम् । दद्रष्ठ । 'रारो' द्रष्टा । 'अत उपधायाः' अद्राक्षीत् । 'झसात्' अद्राष्टाम् । अस्य 'इरितो वा' अनेन ङ प्रत्ययो भवति । तदा अदृश् ङ दिप् इति जाते । 'दृशादेः' दृशादेर्धातोर्ङकारे परे गुणो भवति । अनेन गुणः । ङकारो ङित्कार्यार्थः 'स्वर०' अदर्शत् ।

**ऋ गतौ । ऋच्छादेशः । ऋच्छति । ऋच्छेत् । ऋच्छतु । आर्च्छत् । रः पश्चात् ऋ अर् वृद्धिः । आर आरतुः आरुः ॥ अत्त्यर्तिव्ययतीनां थपो नित्यमिट् ॥ आरिथ आरथुः । आर । आर आरिव आरिम ॥ गुणोर्तिसंयोगाद्योः ॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणो भवति यकि यङि किति णादावाशीर्यादादौ च । अर्यात् । अर्ता । 'हनृतः स्यपः' अरिष्यति । आरिष्यत् ॥ सर्तिशास्त्यर्तिभ्यो ङो लुङि ॥ सेरपवादः ॥ लित्पुषादेर्ङः । आरत् आरताम् आरन् ॥ अर्तेर्ह्वादेः सेरपवादो लुङीति केचित् । आर्षीत् ।**

ऋ गतौ । 'दृशादेः' अनेन ऋच्छादेशः । 'अदे' ऋच्छति चतुर्णां लकाराणां रूपाणि सन्ति सुगमत्वाव्द्याख्यानं न कृतम् । ऋ णप् इति स्थिते 'द्विश्च' 'रः' । अ ऋ णप् इति जाते । 'ऋ अर्' अर् णप् इति जाते 'अत उपधायाः' अनेन वृद्धिः । आर । 'गुणोर्ति' 'सवर्णे' आरतुः आरुः ॥ सूत्रम्—'अत्त्यर्ति०' ॥ अत्त्यर्तिव्ययतीनां धातूनां थपो नित्यमिट् भवति । 'अत्वतो' अस्य विकल्पस्यायमपवादः । आरिथ । ऋ यात् इति स्थिते । सूत्रम्—'गुणोऽर्तिसंयोगाद्योः' ॥ अर्तिश्च संयोगादिश्च अर्तिसंयोगादी तयोः अर्तिसंयोगाद्योः ऋ गतावित्यस्य धातोः संयोगादेर्ऋदन्तस्य च ऋकारस्य गुणो भवति यकि यङि किति णादौ आशीर्यादादौ च । अनेनारतुरिति रूपं सिद्धं भवति । गुणोऽनेन तदा अर्यात् । 'गुणः' अर्ता । 'हनृतः स्यपः' अनेनास्येट् । गुणः अरिष्यति 'स्वरादेः' आरिष्यत् ॥ सूत्रम्—'सर्तिशास्त्य०' ॥ सर्तिशास्तिअर्ति एभ्यो धातुभ्यो ङप्रत्ययो भवति सेरपवादः । अनेनास्य ङः । 'दृशादेः' 'स्वरादेः' । आरत् ॥ 'अर्तेः' । अर्तेर्ह्वादेर्धातोर्ङप्रत्ययो भवति लुङि । सेरपवादः इति केचिदाचार्या वदन्ति तेषां मते 'सेः' । 'स्वरादेः' । आर्षीत् इति रूपं सिद्धं भवति ।

ह्वृ कौटिल्ये। कुटिलस्य भावः कौटिल्यं। तस्मिन्कौटिल्ये। गुणः। ह्वरति। ह्वृ णप्इति स्थिते 'द्विश्च' 'रः' 'पूर्वस्य' 'कुहोश्चुः' 'धातोर्नामिनः' अनेन वृद्धिः—जह्वार। 'गुणोऽर्तिसंयोगाद्योः' अनेन किति णबादौ गुणः। जह्वरतुः॥ सूत्रम्—'ऋदन्तस्य०'॥ ऋदन्तस्य धातोः थप इड् न भवति। जह्वर्थ ह्वर्यात् ह्वर्ता। 'हनृतः' ह्वरिष्यति। अह्वरिष्यत्। 'णित्पे' अनेन णित्त्वाद्वृद्धिः। अह्वार्षीत्।

**स्कन्दिर् गतिशोषणयोः। स्कन्दति। स्कन्देत्। स्कन्दतु। अस्कन्दत्। चस्कन्द चस्कन्दतुः चस्कन्दुः। चस्कन्दिथ॥ हसात्परस्य झसस्य सवर्णे झसे लोपो वाच्यः॥ चस्कन्थ। 'नो लोपः' स्कद्यात्। स्कन्ता। स्कन्त्स्यति। अस्कन्त्स्यत्॥ सावनिटो नित्यं वृद्धिः॥ णित्त्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः। अस्कान्सीत्। 'इरितो वा' अस्कदत्।**

स्कन्दिर् गतिशोषणयोः। इर् अनुबन्धः 'इरितोवा' इति सूत्रस्य विशेषणार्थः। स्कन्दति। लिट्लकारः। स्कन्द् णप् इति स्थिते 'द्विश्च' 'शसात्' 'पूर्वस्य' 'कुहोश्चुः' चस्कन्द। 'ऋसंयोगात्'—अनेन कित्त्वात् 'नो लोपः' इति सूत्रेणानुस्वारस्य लोपो न भवति। चस्कन्दतुः। 'अत्वतः' अनेनास्य वेट्। चस्कन्दिथ। इडभावे चस्कन्द थप् इति स्थिते॥ सूत्रम्—'हसात्परस्य०'॥ हसात्परस्य सवर्णे झसे परे लोपो वाच्यः। अनेन दस्य लोपः चस्कन्थ। 'नोलोपः' स्कन्यात् 'हसात्' स्कन्ता। 'खसे' स्कन्त्स्यति। अस्कन्त्स्यत्॥ सूत्रम्—'सावनिटः'॥ सौ परे सति अनिटो धातोर्नित्यं वृद्धिर्भवति। अस्य धातोर्वृद्धिप्राप्तिरेव नास्ति, तत्राह। णित्त्वविधानसामर्थ्यात् अनुपधाभूतस्यातोकारस्य वृद्धिः। 'खसे' अस्कान्सीत्। 'इरितो वा' अनेनास्य वा ङ प्रत्ययो भवति—'नो लोपः' अस्कदत्।

**तॄ प्लवनतरणयोः। तरति। तरेत्। तरतु। अतरत्। कित्त्वाभावाद्गुणः॥ ऋसंयोगादेर्णादेरकित्त्वं वाच्यम्॥ तॄफलभजत्रपाम्' इत्येत्वपूर्वलोपौ॥ ततार तेरतुः तेरुः। तेरिथ॥ ऋत इर्॥ ऋकारस्य इर् भवति किति परे॥ 'य्वोर्विहसे' तीर्यात्॥ ईटो ग्रहाम्॥ ग्रहादीनामिट ईकारो भवति। तरीता-तरिता। तरीष्यति-तरिष्यति। अतरीष्यत्-अतरिष्यत्। अतारीत् अतारिष्टाम् अतारिषुः॥ वृद्धिहेतौ साविटो न दीर्घो वाच्यः॥**

तॄ प्लवनतरणयोः। गुणः। तरति। अन्यानि मूले सन्ति। लिट्लकारे। 'ऋसंयोगात्' अनेनाकित्त्वात् गुणः। 'तॄ फलभजत्रपाम्' अनेनास्यैत्वपूर्वलोपौ भवतः। तेरतुः। तॄ यादिति स्थिते॥ सूत्रम्—'ऋत इर्'॥ ऋतः इर् ऋकारस्य किति ङिति च परे इर् भवति। 'य्वोर्विहसे' अनेन दीर्घः। तीर्यात्। तर् इट् ता इति स्थिते॥ सूत्रम्—'ईटो ग्रहाम्'॥ ई इटः ग्रहाम्। ग्रहादीनां धातूनामिट ईकारो भवति नतु णादौ वृङ् वृञ्ऋदन्तानां वा भवति। अनेनास्येट इकारो भवति। तरीता तरिता। अन्यानि मूले सन्ति। अतारीत् अतारिष्टाम् अतारिषुः। अत्रेट ईकारे प्राप्ते॥ सूत्रम्—'वृद्धिहेतौ०'॥ वृद्धिहेतौ सौ परे इटो दीर्घो न वाच्यः। अनेन लुङ्लकारे दीर्घाभावः।

रञ्ज रागे। उभयपदी ॥ अपि रञ्जदंशषञ्जष्वञ्जाम् ॥ एषामनुस्वारस्य लोपो भवत्यपि परे ॥ रजति रजते। रजेत् रजेत। रजतु रजताम्। अरजत् अरजत। ररञ्ज ररञ्जतुः ररञ्जुः। ररञ्जिथ-ररङ्क्थ ररञ्जथुः ररञ्ज। ररञ्जे। रज्यात्। रङ्क्षीष्ट। रङ्क्ता। रङ्क्ष्यति रङ्क्ष्यते। अरङ्क्ष्यत् अरङ्क्ष्यत। अराङ्क्षीत्। 'चोः कुः' 'खसे चपा' षत्वम्। अराङ्क्ताम् अराङ्क्षुः। अरङ्क्त अरङ्क्षाताम् अरङ्क्षत।

रञ्ज रागे। उभयपदी॥ सूत्रम्—'अपिरञ्ज०'॥ अपि रञ्जदंशषञ्जष्वञ्जां एषां धातूनामनुस्वारस्य लोपो भवति अपि परे। अनेनास्यानुस्वारस्य लोपो भवति। रजति रजते। अन्यानि मूले लिखितानि सन्ति। लिट्लकारे। ररञ्ज। अकित्त्वादनुस्वारस्य लोपो न भवति। ररञ्जतुः। 'अस्वतः'-ररञ्जिथ। ररञ्ज् थप् इति स्थिते। 'चोः कुः' 'खसे' ररङ्क्थ। आत्मनेपदे। ररञ्जे। 'नोलोपः'-रज्यात्। 'चोः कुः' 'खसे०' रङ्क्षीष्ट॥ अराङ्क्षीत् 'झसात्' 'चोः कुः' 'खसे०'अराङ्क्ताम् अराङ्क्षुः। आत्मनेपदे—अरङ्क्त अरङ्क्षाताम् अरङ्क्षत।

दंश दशने। दशति। दशेत्। दशतु। अदशत्। ददंश ददंशतुः ददंशुः। ददंशिथ-ददंष्ठ ददंशथुः। दश्यात्। ष्टुत्वम्। दंष्टा। दङ्क्ष्यति। अदङ्क्ष्यत्। 'णित्पे' णित्वाद्वृद्धिः। 'षढोः कः से' अदाङ्क्षीत्॥

दंश दशने। 'अपि रञ्जदंश' अनेनास्यापि लोपो भवत्यनुस्वारस्य। दशति। ददंश ददंशतुः। 'अस्वतः'—ददंशिथ। इडभावे ददंश् थप् इति जाते 'छशष०' अनेन षकारः। 'ष्टुभिः ष्टुः' ददंष्ठ। 'नो लोपः' दश्यात्। दंष्टा। 'षढोः कः से' दङ्क्ष्यति। 'णित्पे' अनेन णित्वाद् वृद्धिः। 'षढोः कः से' अदाङ्क्षीत्॥

षञ्ज सङ्गे। सजति। सजेत्। सजतु। असजत्। ससञ्ज ससञ्जिथ ससङ्क्थ। सज्यात्। सङ्क्ता सङ्क्ष्यति। असङ्क्ष्यत्। असाङ्क्षीत् असाङ्क्ताम् असाङ्क्षुः॥

षञ्ज सङ्गे। 'आदेः ष्णः स्नः' अनेन षस्य सः। पूर्ववत्तिबादयः। सजति। लिट्लकारे। ससञ्ज। 'अस्वतः' अनेनास्य वेट्। ससंजिथ। इडभावे ससञ्ज थप् इति जाते 'चोः कुः' 'खसे०' ससंक्थ॥ 'नो लोपः' सज्यात्। सञ्ज् ता इति स्थिते 'चोः कुः' 'खसे०' 'स्वर०' सङ्क्ता। सञ्ज् स्यप् तिप् इति स्थिते 'चोः कुः' 'खसे०' 'षढोः' 'क्विलात्' 'कष संयोगे सङ्क्ष्यति। असङ्क्ष्यत्। 'सावनिटः' असाङ्क्षीत्। 'झसात्'—असाङ्क्ताम् असाङ्क्षुः।

कित रोगापनये संशये च॥ गुप्भ्यः॥ गुप् तिज् कित् मान् बध् दान् शान् एभ्यः स्वार्थे सः प्रत्ययो भवति धातोश्च द्वित्वम्॥ 'कुहोश्चुः' गुप्तिज्किद्भ्यः क्रमान्निन्दाक्षमारोगापनयनेषु सः। तेन गोपति तेजति केतति। 'सधातुः' 'गुबादिभ्यः सस्येण्नेष्यते'॥ नानिटि से॥ इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति॥ तिप्। चिकित्सति। चिकित्सेत्। चिकित्सतु। अचिकित्सत्। चिकित्सांचकार चिकित्सामास चिकित्सांबभूव। चिकि-

सृ गतौ । धावादेशः । धावति । शीघ्रगतावेव धावादेशः । सरति । ससार सस्रतुः सस्रुः । क्रादित्वात् ससर्थ । सस्रथुः सस्र । ससार-ससर सस्रव सस्रम ॥ यादादौ ॥ ऋकारस्य रिङादेशो भवति यदादौ परस्मैपदे परे ॥ ङकारो व्यवधानार्थः तेन 'ये' इति न दीर्घः । स्रियात् । सर्ता । सरिष्यति । असरिष्यत् । पुषादित्वात् ङः । असरत् असरताम् असरन् ।

सृ गतौ । धावादेशः धावति । शीघ्रगतावेव धावादेशः । तदभावे सरति । लिट्लकारे । ससार । थपि क्रादित्वान्नेट् । ससर्थ । सृ यात् इति स्थिते ॥ सूत्रम्—'यादादौ' ॥ एकपदं सूत्रम् । आशीरर्थे यादादौ परे धातोर्ऋकारस्य रिङ् इत्यादेशः परस्मैपदे एव । अत्रापि ङकारो 'ये' इति सूत्रेण विहितदीर्घनिषेधार्थः । स्रियात् । सर्ता । 'ह्नृतः स्यपः' सरिष्यति । असरिष्यत् । 'पुषादि०' अनेन ङः । 'दृशादेः' । असरत् ।

शद्लृ शातने ॥ शीयादेशो आत्मनेपदं वाच्यम् ॥ शीयते । शीयेत् । शीयताम् । अशीयत । शशाद । 'लोपः पचाम्' शेदतुः शेदुः । शेदिथ-शशत्थ । शद्यात् । शत्ता । शत्स्यति । अशत्स्यत् । लृदित्त्वात् ङः । अशदत् ।

शद्लृ शातने । शीयादेशः ॥ सूत्रम्—'शीयादेशे०' ॥ शीयादेशे कृते सति आत्मनेपदं वाच्यम् । अनेनास्यात्मनेपदत्वम् । शीयते । लिट्कारे । 'अत उपधायाः' शशाद 'लोपः पचां' शेदतुः । 'अत्वतः' अनेन वा इट् । शेदिथ । 'खसे' 'चपाझसानाम्' शशत्थ शद्यात् 'खसे' शत्ता । अन्यानि मूले सन्ति । 'लित्पुषादेर्ङः' अनेनास्य लृदित्त्वाद् ङः । अशदत् ।

षद्लृ विशरणगत्यवसादनेषु । सत्वम् । सीदादेशः । सीदति । ससाद सेदतुः सेदुः । सेदिथ-ससत्थ । सद्यात् । सत्ता । सत्स्यति । असत्स्यत् । असदत् । निपूर्वः । न्यषदत् ।

षद्लृ विशरणगत्यवसादनेषु । सत्वम् । सीदादेशः । सीदति । ससाद । 'लोपः' सेदतुः । 'अत्वतः' सेदिथ । 'खसे०' ससत्थ । 'खसे०' सत्ता । अन्यानि मूले सन्ति ॥ लुङ्लकारे 'लित्पुषादेर्ङः' असदत् । अयं धातुर्यदा निपूर्वो भवति तदा 'प्रादेश्च' अनेन षत्वम् । न्यषदत् ।

पा पाने ॥ पिबादेशः । पिबति । पिबेत् । पिबतु । अपिबत् । पपौ पपतुः पपुः । पपिथ-पपाथ । 'दादेरे' पेयात् । पाता । पास्यति । अपास्यत् । 'दादेः पे' अपात् ।

पा पाने । पिबादेशः । पिबति । लिट्लकारे पा णप् इति स्थिते । 'द्विश्च' 'ह्रस्वः' 'आतो णप् डौ' पपौ 'आतोऽनपि' पपतुः 'अत्वतो' पपिथ पपाथ । 'दादेरे' पेयात् । 'दादेः पे' अनेन सेर्लोपो भवति । अपात् । अपाताम् । अपुः 'आतोनेपि' इत्यनेनाकारस्य लोपः ।

---

१ 'स्वरान्तान्नित्यानिटः०' इत्येवोचितम् ॥ २ 'उस्यालोपः' इत्येवोचितम् ॥

घ्रा गन्धोपादाने । जिघ्रादेशः । जिघ्रति । जिघ्रेत् । जिघ्रतु । अजिघ्रत् । जघ्रौ जघ्रतुः जघ्रुः । जघ्रिथ-जघ्राथ । घ्रायात्-घ्रेयात् । घ्राता । घ्रास्यति । अघ्रास्यत् । अघ्रासीत् अघ्रात् ॥ ध्मा शब्दाग्निसंयोगयोः । धमादेशः । धमति धमेत् । धमतु । अधमत् । दध्मौ । ध्मायात् । ध्मेयात् । ध्माता । ध्मास्यति । अध्मास्यत् । अध्मासीत् ॥

घ्रा गन्धोपादाने जिघ्रादेशः । जिघ्रति । घ्रा णप् इति स्थिते 'द्विश्च' 'ह्रस्वः' 'झपानाम्' 'कुहोश्चुः' 'आतो णप् डौ' जघ्रौ । 'अत्त्वतः'[१]—जघ्रिथ जघ्राथ । 'संयोगादेः'—घ्रायात् घ्रेयात् । 'आदन्तानाम्' अघ्रासीत् । 'शाच्छासा०' अनेन वा सेर्लोपः । अघ्रात् ॥

ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' सकारे जाते निमित्ताभावेन ठस्य थः । तिष्ठादेशः । तिष्ठति । तिष्ठेत् । तिष्ठतु । अतिष्ठत् । 'शसात्खपाः' तस्थौ तस्थतुः तस्थुः । स्थेयात् स्थायात् । स्थाता । स्थास्यति । अस्थास्यत् । निपूर्वः । षत्वम् । न्यष्ठात् ॥

ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' अनेन षस्य सः । 'निमित्ताभावे' अनेन न्यायेन ठस्य थः । 'दृशादेः' तिष्ठादेशः तिष्ठति । स्था णप् इति स्थिते । 'द्विश्च' 'ह्रस्वः' 'शसात्' 'झपानां' सवर्णत्वात् 'आतो णप्' तस्थौ । 'दादेरे' स्थेयात् स्थायात् । लुङ्लकारे निपूर्वोयं । 'दादेः पे' अनेन सेर्लोपो भवति । 'प्रादेश्च'—न्यष्ठात् ।

म्ना अभ्यासे । मनादेशः । मनति । मनेत् । मनतु । अमनत् । मम्नौ । मम्नतुः मम्नुः । मम्निथ मम्नाथ । म्नायात् म्नेयात् । म्नाता । म्नास्यति । अम्नास्यत् । अम्नासीत् ।

म्ना अभ्यासे । मनादेशः । पूर्ववत् तिबादयः । 'अदे' मनति । 'पूर्वस्य' मम्नौ । 'अत्वतः'[२] मम्निथ मम्नाथ । 'संयोगादेः'—म्नायात् म्नेयात् । अन्यानि मूले सन्ति । लुङ्लकारे 'आदन्तानाम्' अम्नासीत् ।

दाण् दाने । यच्छादेशः । यच्छति । यच्छेत् । यच्छतु । अयच्छत् । ददौ ददतुः ददुः । दादेरे देयात् । दाता । दास्यति । अदास्यत् । अदात् ।

दाण् दाने 'दृशादेः'—अनेन यच्छादेशः । यच्छति । दा णप् इति स्थिते । 'द्विश्च' 'ह्रस्वः' 'आतो णप्' ददौ । 'आतोऽनपि' ददतुः 'अत्वतः'[३] ददिथ ददाथ । 'दादेरे' देयात् । लुङ्लकारे 'दादेः पे' अनेन सेर्लोपो भवति । अदात् ।

हृ कौटिल्ये । ह्वरति । ह्वरेत् । ह्वरतु । अह्वरत् । जह्वार । 'गुणोर्तिसंयोगाद्योः' जह्वरतुः जह्वरुः ॥ ऋदन्तस्य थपो नेट् ॥ जह्वर्थ जह्वरथुः जह्वर । जह्वार । जह्वर । जह्वरिव । जह्वरिम । ह्वर्यात् । ह्वर्ता । 'हनृतः स्यपः' ह्वरिष्यति । अह्वरिष्यत् । वृद्धिः अह्वार्षीत् अह्वार्ष्टाम् ॥

---

१,२,३ 'स्वरान्तान्नित्यानिटः' इत्येवोचितम् ॥

ह्वृ कौटिल्ये । कुटिलस्य भावः कौटिल्यं । तस्मिन्कौटिल्ये । गुणः । ह्वरति । ह्वृ णप् इति स्थिते 'द्विश्च' 'रः' 'पूर्वस्य' 'कुहोश्चुः' 'धातोर्नामिनः' अनेन वृद्धिः—जह्वार । 'गुणोऽर्तिसंयोगाद्योः' अनेन किति णबादौ गुणः । जह्वरतुः ॥ सूत्रम्—'ऋदन्तस्य०' ॥ ऋदन्तस्य धातोः थप इड् न भवति । जह्वर्थ ह्वर्यात् ह्वर्ता । 'हनृतः' ह्वरिष्यति । अह्वरिष्यत् । 'णित्पे' अनेन णित्त्वाद्वृद्धिः । अह्वार्षीत् ।

**स्कन्दिर् गतिशोषणयोः । स्कन्दति । स्कन्देत् । स्कन्दतु । अस्कन्दत् । चस्कन्द चस्कन्दतुः चस्कन्दुः । चस्कन्दिथ ॥ हसात्परस्य झसस्य सवर्णे झसे लोपो वाच्यः ॥ चस्कन्थ । 'नो लोपः' स्कद्यात् । स्कन्ता । स्कन्त्स्यति । अस्कन्त्स्यत् ॥ सावनिटो नित्यं वृद्धिः ॥ णित्त्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्सीत् । 'इरितो वा' अस्कदत् ।**

स्कन्दिर् गतिशोषणयोः । इर् अनुबन्धः 'इरितोवा' इति सूत्रस्य विशेषणार्थः । स्कन्दति । लिड्लकारः । स्कन्द् णप् इति स्थिते 'द्विश्च' 'शसात्' 'पूर्वस्य' 'कुहोश्चुः' चस्कन्द । 'ऋसंयोगात्'—अनेन कित्त्वात् 'नो लोपः' इति सूत्रेणानुस्वारस्य लोपो न भवति । चस्कन्दतुः । 'अत्वतः' अनेनास्य वेट् । चस्कन्दिथ । इडभावे चस्कन्द थप् इति स्थिते ॥ सूत्रम्—'हसात्परस्य०' ॥ हसात्परस्य सवर्णे झसे परे लोपो वाच्यः । अनेन दस्य लोपः चस्कन्थ । 'नोलोपः' स्कन्द्यात् 'हसात्' स्कन्ता । 'खसे' स्कन्त्स्यति । अस्कन्त्स्यत् ॥ सूत्रम्—'सावनिटः' ॥ सौ परे सति अनिटो धातोर्नित्यं वृद्धिर्भवति । अस्य धातोर्वृद्धिप्राप्तिरेव नास्ति, तत्राह । णित्त्वविधानसामर्थ्यात् अनुपधाभूतस्यातोकारस्य वृद्धिः । 'खसे' अस्कान्सीत् । 'इरितो वा' अनेनास्य वा ङ प्रत्ययो भवति—'नो लोपः' अस्कदत् ।

**तॄ प्लवनतरणयोः । तरति । तरेत् । तरतु । अतरत् । कित्त्वाभावाद्गुणः ॥ ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् ॥ तॄफलभजत्रपाम्' इत्त्वेत्वपूर्वलोपौ ॥ ततार तेरतुः तेरुः । तेरिथ ॥ ऋत इर् ॥ ऋकारस्य इर् भवति किति ॥ परे ॥ 'य्वोर्विहसे' तीर्यात् ॥ ईटो ग्रहाम् ॥ ग्रहादीनामिट ईकारो भवति । तरीता-तरिता । तरीष्यति-तरिष्यति । अतरीष्यत्-अतरिष्यत् । अतारीत् अतारिष्टाम् अतारिषुः ॥ वृद्धिहेतौ साविटो न दीर्घो वाच्यः ॥**

तॄ प्लवनतरणयोः । गुणः । तरति । अन्यानि मूले सन्ति । लिड्लकारे । 'ऋसंयोगात्' अनेनाकित्त्वात् गुणः । 'तॄ फलभजत्रपाम्' अनेनास्यैत्वपूर्वलोपौ भवतः । तेरतुः । तॄ यादिति स्थिते ॥ सूत्रम्—'ऋत इर्' ॥ ऋतः इर् ऋकारस्य किति ङिति च परे इर् भवति । 'य्वोर्विहसे' अनेन दीर्घः । तीर्यात् । तर् इट् ता इति स्थिते ॥ सूत्रम्—'ईटो ग्रहाम्' ॥ ई इटः ग्रहाम् । ग्रहादीनां धातूनामिट ईकारो भवति नतु णादौ वृङ् वृञ्ऋदन्तानां वा भवति । अनेनास्येट इकारो भवति । तरीता तरिता । अन्यानि मूले सन्ति । अतारीत् अतारिष्टाम् अतारिषुः । अत्रेट ईकारे प्राप्ते ॥ सूत्रम्—'वृद्धिहेतौ०' ॥ वृद्धिहेतौ सौ परे इटो दीर्घो न वाच्यः । अनेन लुङ्लकारे दीर्घाभावः ।

रञ्ज रागे। उभयपदी ॥ अपि रञ्जदंशषञ्जष्वञ्जाम् ॥ एषामनुस्वारस्य लोपो भवत्यपि परे॥ रजति रजते। रजेत् रजेत। रजतु रजताम्। अरजत् अरजत। ररञ्ज ररञ्जतुः ररञ्जुः। ररञ्जिथ-ररङ्क्थ ररञ्जथुः ररञ्ज। ररञ्जे। रज्यात्। रङ्क्षीष्ट। रङ्क्ता। रङ्क्ष्यति रङ्क्ष्यते। अरङ्क्ष्यत् अरङ्क्ष्यत। अराङ्क्षीत्। 'चोः कुः' 'खसे चपा' षत्वम्। अराङ्क्ताम् अराङ्क्षुः। अरङ्क्त अरङ्क्षाताम् अरङ्क्षत।

रञ्ज रागे। उभयपदी॥ सूत्रम्—'अपिरञ्ज०'॥ अपि रञ्जदंशषञ्जष्वञ्जां एषां धातूनामनुस्वारस्य लोपो भवति अपि परे। अनेनास्यानुस्वारस्य लोपो भवति। रजति रजते। अन्यानि मूले लिखितानि सन्ति। लिट्लकारे। ररञ्ज। अकित्त्वादनुस्वारस्य लोपो न भवति। ररञ्जतुः। 'अस्वतः'–ररञ्जिथ। ररञ्ज् थप् इति स्थिते। 'चोः कुः' 'खसे' ररङ्क्थ। आत्मनेपदे। ररञ्जे। 'नोलोपः'–रज्यात्। 'चोः कुः' 'खसे०' रङ्क्षीष्ट॥ अराङ्क्षीत्। 'झसात्' 'चोः कुः' 'खसे०'अराङ्क्ताम् अराङ्क्षुः। आत्मनेपदे–अरङ्क्त अरङ्क्षाताम् अरङ्क्षत।

दंश दशने। दशति। दशेत्। दशतु। अदशत्। ददंश ददंशतुः ददंशुः। ददंशिथ-ददंष्ठ ददंशथुः। दश्यात्। ष्टुत्वम्। दंष्टा। दङ्क्ष्यति। अदङ्क्ष्यत्। 'णित्पे' णित्त्वाद्वृद्धिः। 'षढोः कः से' अदाङ्क्षीत्॥

दंश दशने। 'अपि रञ्जदंश' अनेनास्यापि लोपो भवत्यनुस्वारस्य। दशति। ददंश ददंशतुः। 'अस्वतः'–ददंशिथ। इडभावे ददंश् थप् इति जाते 'छशष०' अनेन षकारः। 'ष्टुभिः ष्टुः' ददंष्ठ। 'नो लोपः' दश्यात्। दंष्टा। 'षढोः कः से' दङ्क्ष्यति। 'णित्पे' अनेन णित्त्वाद् वृद्धिः। 'षढोः कः से' अदाङ्क्षीत्॥

षञ्ज सङ्गे। सजति। सजेत्। सजतु। असजत्। ससञ्ज ससञ्जिथ ससङ्क्थ। सज्यात्। सङ्क्ता सङ्क्ष्यति। असङ्क्ष्यत्। असाङ्क्षीत् असाङ्क्ताम् असाङ्क्षुः॥

षञ्ज सङ्गे। 'आदेः ष्णः स्नः' अनेन षस्य सः। पूर्ववत्तिबादयः। सजति। लिट्लकारे। ससञ्ज। 'अस्वतः' अनेनास्य वेट्। ससंजिथ। इडभावे ससञ्ज थप् इति जाते 'चोः कुः' 'खसे०' ससंक्थ॥ 'नो लोपः' सज्यात्। सञ्ज् ता इति स्थिते 'चोः कुः' 'खसे०' 'स्वर०' सङ्क्ता। सञ्ज् स्यप् तिप् इति स्थिते 'चोः कुः' 'खसे०' 'षढोः' 'किलात्' 'कष संयोगे सङ्क्ष्यति। असङ्क्ष्यत्। 'सावनिटः' असाङ्क्षीत्। 'झसात्'–असाङ्क्ताम् असाङ्क्षुः।

कित रोगापनये संशये च॥ गुब्भ्यः॥ गुप् तिज् कित् मान् बध् दान् शान् एभ्यः स्वार्थे सः प्रत्ययो भवति धातोश्च द्वित्वम्॥ 'कुहोश्चुः' गुप्तिज्किद्भ्यः क्रमान्निन्दाक्षमारोगापनयनेषु सः। तेन गोपति तेजति केतति। 'सधातुः' 'गुबादिभ्यः सस्वेणनेष्यते'॥ नानिटि से॥ इङ्गिते सप्रत्यये परे धातोर्गुणो न भवति॥ तिप्। चिकित्सति। चिकित्सेत्। चिकित्सतु। अचिकित्सत्। चिकित्सांचकार चिकित्सामास चिकित्सांबभूव। चिकि-

**त्स्यात् चिकित्सिता । चिकित्सिष्यति ॥ अचिकित्सिष्यत् । अचिकित्सीत् । अचिकित्सिष्टाम् ॥**

कित् रोगापनयने संशये च ॥ सूत्रम्—'गुप्भ्यः'॥ गुप् तिज् कित् मान् बध् दान् शान् इत्येतेभ्यो धातुभ्यः स्वार्थे धात्वर्थे एव । इगर्थे(?) विनैव दशस्वपि लकारेषु, क्वचि च सः प्रत्ययो भवति तत्सन्नियोगे द्विश्च ॥ 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे एव भवन्ति' । गुप् तिज् किद्भ्यः क्रमात् निन्दाक्षमारोगापनयनेषु सः प्रत्ययो भवति । तेन गोपति तेजति केतति इत्यत्र पूर्वोक्तसूत्रेण सः प्रत्ययो धातोः द्वित्वं च भवति । तदा 'किकित् स' इति जाते 'कुहोश्चुः' अनेन कस्य चः । चिकित् स इति जाते 'सिसता' अनेनेटि प्राप्ते । 'गुपादिभ्यो धातुभ्यः सस्य इट् न इष्यते आचार्यैः' अनेन इड्निषेधः । 'उपधाया लघोः' अनेन गुणे प्राप्ते 'नानिटि से' न अनिटि से । इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति । अनेन गुणाभावः । चिकित्स इति जाते 'स धातुः' अनेन धातुत्वात्तिबादयः । चिकित्स तिप् इति स्थिते । 'अप् कर्तरि' 'अदे' चिकित्सति । अन्यानि मूले सन्ति । लिट् लकारे 'कासादिप्रत्ययादाम्'—चिकित्सांचकार । अन्ये द्वे मूले स्तः । चिकित्स्यात् । लुङ्लकारे अचिकित्सीत् । अचिकित्सिष्टाम् ।

**पत्लृ पतने । पतति । पतेत् । पततु । अपतत् । पपात पेततुः पेतुः । पत्यात् । पतिता । पतिष्यति । अपतिष्यत् । लित्पुषादेर्ङः ॥ पतेर्ङे पुगागमो वाच्यः ॥ अपप्तत् ॥**

पत्लृ पतने । पतति । लिट्लकारे 'अत उपाधायाः' पपात । 'लोपः पचां' पेततुः । पतिता । लुङ्लकारे 'लित्पुषा०' अनेन ङः प्रत्ययो भवति । अपत् ङ दिप् इति जाते ॥ सूत्रम्—'पतेर्ङे०' पतेर्धातोः ङप्रत्यये परे पुगागमो वाच्यः । कित्त्वादन्ते । 'स्वर' अपप्तत् अपप्तताम् ।

**भ्रमु चलने ॥ शमां दीर्घः ॥ शमादीनां दीर्घो भवति यकारे परे ॥ शम् दम् श्रम् भ्रम् क्षम् क्लम् मद् एते शमादयः । भ्राम्यति । भ्रमति । भ्राम्येत् भ्रमेत् । भ्राम्यतु-भ्रमतु । अभ्राम्यत् अभ्रमत् । बभ्राम ॥ फणादीनामेत्वपूर्वलोपौ वा वाच्यौ ॥**

**फणतिर्भ्राजिराजी च भ्राशिभ्लाशी स्यमिस्वनी ।**
**भ्रमित्रसी जीर्यतिश्च दशैते तु फणादयः ॥**

**भ्रेमतुः-बभ्रमतुः । भ्रेमुः-बभ्रमुः । भ्रेमिथ-बभ्रमिथ । भ्रम्यात् । भ्रमिता । भ्रमिष्यति । अभ्रमिष्यत् । अभ्रमीत् ॥**

भ्रमु चलने ॥ सूत्रम्—'शमां दीर्घः' ॥ शमां दीर्घः द्विपदं सूत्रम् । शमादीनां धातूनां दीर्घो भवति यकारे परे । शमादयो मूले उक्ताः । भ्रम् तिप् इति स्थिते 'क्रमु भ्रमु' अनेन यः प्रत्ययः । भ्रम् य तिप् इति जाते 'शमां दीर्घः' अनेन दीर्घः । भ्राम्यति । यप्रत्ययाभावे दीर्घाभावः । भ्रमति । अन्यानि मूले सन्ति । लिट्लकारे 'अत उपधायाः' अनेन वृद्धिः । 'झपानाम्' बभ्राम ॥ 'फणादीनाम्' फणादीनां एत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा

एत्वपूर्वलोपौ । भ्रेमतुः बभ्रमतुः । भ्रेमिथ बभ्रमिथ । फणादयः श्लोकेनोक्ताः । भ्रम्यात् । भ्रमिता । लुङ्लकारे अभ्रमीत् ।

टुवम् उद्गिरणे । टु इत्संज्ञकः । वमति । वमेत् । वमतु । अवमत् । ववाम ॥ वम एत्वपूर्वलोपौ वा वाच्यौ ॥ वेमतुः ववमतुः वेमुः-ववमुः । वम्यात् । वमिता । वमिष्यति । अवमिष्यत् । अवमीत् ॥

टुवम् उद्गिरणे । टु इत्संज्ञकः । वमति । लिट्लकारे 'शसृददवादि' अनेन निषेधे प्राप्ते ॥ सूत्रम्—'वम एत्व०' ॥ वमधातोरेत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा एत्वपूर्वलोपौ । ववाम वेमतुः ववमतुः । वमिता । लुङ्लकारे । अवमीत् ॥

फण गतौ । फणति । फणेत् । फणतु । अफणत् । पफाण फेणतुः फेणुः । फण्यात् । फणिता । फणिष्यति । अफणिष्यत् । अफाणीत् अफणीत् ॥

फण गतौ । फणति । लिट् लकारे 'अत उपधायाः' 'झपानां' पफाण । 'फणादीनाम्' अनेन वा एत्वपूर्वलोपौ भवतः । फेणतुः पफणतुः । फेणिथ पफणिथ । फणिता । अफणीत् ।

स्वन स्यम शब्दे । स्वनति । स्वनेत् । स्वनतु । अस्वनत् । सस्वान स्वेनतुः स्वेनुः । स्वन्यात् । स्वनिता । स्वनिष्यति । अस्वनिष्यत् । अस्वानीत्-अस्वनीत् ॥

स्वन स्यम शब्दे । स्वनति स्यमति । सस्वान । सस्याम । स्वनिता । स्यमिता । अस्वानीत् अस्वनीत् 'ह्सादेः' अनेन वा वृद्धिः । अस्यामीत् अस्यमीत् ।

वस निवासे । वसति । वसेत् । वसतु । अवसत् । वस् णप् इति स्थिते द्वित्वम् ॥ णबादौ पूर्वस्य ॥ णबादौ परे यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं भवति । यकारवकाररेफाणामिकारोकारऋकारा भवन्ति । सस्वरस्य संप्रसारणं दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः ॥

ग्रहिज्यावयीव्यधिर्वष्टिर्विचतिर्वृश्चतिस्तथा ।
पृच्छतिर्भृज्जतिश्चैव नवैते तु ग्रहादयः ॥

पूर्ववकारस्योत्वे । 'अत उपधायाः' उवास । उवस् अतुस् इति स्थिते ॥ यजां यवराणां य्वृतः संप्रसारणं किति ॥ यजादीनां संप्रसारणं भवति किति परे ॥

यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः ।
वदवसी श्वयतिर्वक्तिरेकादश यजादयः ॥

सवर्णे दीर्घः सह ॥ घसादेः षः ॥ घसिशासिवसीनां सस्य षो भवति षत्वनिमित्ते सति ॥ ऊषतुः ऊषुः । उवसिथ-उवस्थ । संप्रसारणम् । षत्वम् । उष्यात् । वस्ता ॥ सस्तोऽनपि ॥ सकारस्य तकारो भवति अनपि सकारे

**परे ॥ वत्स्यति । अवत्स्यत् । वृद्धिः । अवात्सीत् । झसात् 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति न्यायात् । अवात्ताम् । अवात्सुः ॥**

वस निवसे । वसति । वस् णप् इति स्थिते । 'द्विश्च' ववस् णप् इति जाते ॥ सूत्रम्—'णबादौ पूर्वस्य' यजादीनां यज् वच् स्वप् वह् वेञ् वप् वद् वसां श्वयतेर्ग्रहादीनां ग्रह ज्या व्येञ् वेञ् व्यध् वश् व्यच् प्रच्छ व्रश्च भ्रस्जादीनां च धातूनां पूर्वस्य द्वित्वस्य णबादौ परे संप्रसारणं भवति यकारवकाररेफाणां इकारोकारऋकारा भवन्ति । सस्वरस्याक्षरस्य संप्रसारणं भवति । ह्रस्वस्याक्षरस्य ह्रस्वः । दीर्घस्याक्षरस्य दीर्घः ॥ ग्रहादयः श्लोकोक्ताः सन्ति । अनेन पूर्वस्य वकारस्य संप्रसारणं जातम् । ह्रस्वत्वात् 'ह्रस्वः' अनेन सूत्रेण पूर्वस्य वकारस्य उकारः । तदा उवस् णप् इति जाते । 'अत उपधायाः' 'स्वरहीनं०' उवास । ववस् अतुस् इति स्थिते । 'णबादौ' अनेन पूर्वस्य संप्रसारणम् । उवस् अतुस् इति जाते ॥ सूत्रम्—'यजां यवराणां०'॥ यजां यवराणां इश्च उश्च ऋत् च य्वृतः संप्रसारणं किति पंचपदं सूत्रम् । ग्रहादीनां तु किति ङिति च परे संप्रसारणं भवति । यजादीनां तु केवले किति परे एव संप्रसारणं भवति । अत एव पृथक्सूत्रकरणम् । यत्तु 'स्वप्व्येञोर्यङि संप्रसारणं' तत्र प्रक्रियायां पृथक् सूत्रमस्ति—'स्वपिस्यमिव्येञां यङि' ॥ अथवा 'स्वप्व्येञ्ह्वेञां ग्रहादिमध्ये यद् ग्रहणं तत् यङि' प्रत्यये संप्रसारणार्थं नान्यत्र । यजादीनां धातूनां यकारवकारयोः किति परे संप्रसारणं भवति । यवराणामित्यत्र रकारग्रहणं 'ग्रहां क्ङिति' इति संप्रसारणसूत्रेऽनुवृत्त्यर्थं ज्ञेयम् । यकारवकाररेफाणां इकारोकारवकारा भवन्ति । सस्वरस्य संप्रसारणं भवति । ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः । अनेन द्वितीयस्य वकारस्य संप्रसारणं भवति ॥ यजादयस्तु मूले श्लोकेनोक्ताः । उ उस् अतुस् इति स्थिते ॥ 'सवर्णे०' ऊस अतुस्' इति जाते सूत्रम्—'घसादेः षः' ॥ घस् आदिर्यस्य सः घसादिः 'तस्य घसादेः षः' । 'किलात्' 'घस्ल अदने' 'शास् अनुशिष्टौ' 'वस् निवासे' इत्येतेषां धातूनां सकारस्य षकारो भवति । अत्र 'किलात्' इति सूत्रस्य प्राप्तिरेव नास्ति तस्मात्सूत्रं कृतम् । अनेन सस्य षः 'स्वरहीनं' ऊषतुः ऊषुः । 'अस्वतः' । उवसिथ उवस्थ । 'यजाम्' । 'घसादेः' । उष्यात् । वस्ता वस् स्यप् तिप् इति स्थिते ॥ सूत्रम्—'सस्तोऽनपि'॥ सः, तः, अनपि, त्रिपदं सूत्रम् । धातोः सकारस्यानपि विषये णबादिविभक्तिषट्कविषये सकारे परे तकारो भवति । अनेन सकारस्य तकारो भवति । वत्स्यति । अवत्स्यत् । 'सावनिटो नित्यम्' । अनेन वृद्धिः । अवात्सीत् । 'झसात्' । 'सस्तोऽनपि' 'प्रत्ययलोपे' इति न्यायात् वृद्धिः । अवात्ताम् । अवात्सुः ।

**वद व्यक्तायां वाचि । वदति । वदेत् । वदतु । अवदत् । उवाद ऊदतुः ऊदुः । उवदिथ । उद्यात् । वदिता । वदिष्यति । अवदिष्यत् । अवादीत् ॥**

वद व्यक्तायां वाचि । वदति । लिट्लकारे 'णबादौ' अनेन संप्रसारणम् 'अत उपधायाः' अनेन वृद्धिः । उवाद । 'यजाम्' । ऊदथुः ऊदुः । उवदिथ । संप्रसारणम् । उद्यात् । वदिता । लुङ् लकारे 'वदिव्रज्योः सौ नित्यम्' अवादीत् ॥

**टुओश्विइर् गतिवृद्ध्योः । टुकारोकारौ कार्यार्थौ । इर् इत्संज्ञकः । श्वयति ।**

श्वयेत्। श्वयतु। अश्वयत्॥ श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम्॥ ततो द्वित्वम्। शुशाव शुशुवतुः शुशुवुः। शुशविथ। संप्रसारणाभावपक्षे। शिश्वाय शिश्वियतुः शिश्वियुः। शिश्वयिथ। संप्रसारणम्। ये। शूयात्। श्वयिता। श्वयिष्यति। अश्वयिष्यत्॥ श्वयतेः सौ वृद्ध्यभावो वाच्यः॥ अश्वयीत् अश्वयिष्टाम् अश्वयिषुः। इरितो वा॥ श्वयतेरिलोपो ङे वक्तव्यः॥ अश्वत्॥ श्वयतेर्ङे द्वित्वं वा॥ अशिश्वियत् इत्यादि॥

इति भ्वादिषु परस्मैपदिनः॥

टुओश्वि इर् गतिवृद्ध्योः। टुकारोकारौ कार्यार्थौ। इर् इत्संज्ञकः। पूर्ववत् तिबादयः। गुणः। 'एअय्' श्वयति। लिट्लकारे॥ सूत्रम्—'श्वयतेः०' श्वयतेर्धातोर्णादौ परे प्रथमं संप्रसारणं वा वाच्यम्। अनेनास्य पूर्वं संप्रसारणं ततो द्वित्वम्। शु शु णप् इति जाते। 'धातोर्नामिनः' अनेन वृद्धिः। शुशाव। शुशु अतुस् इति जाते 'नु धातोः' अनेन वकारे प्राप्ते। 'नानप्योर्वः' अनेन वक्ष्यमाणेन सूत्रेण तन्निषेधः किं तु इय् एव भवति। शुशुवतुः शुशविथ। संप्रसारणाभावपक्षे 'धातोर्नामिनः' शिश्वाय। 'नुधातोः' शिश्वियतुः। 'गुणः'। शिश्वयिथ। संप्रसारणम्। 'ये'। शूयात्। श्वयिता। श्वयिष्यति। अश्वयिष्यत्। अश्वि इसि इट् दिप् इति जाते 'णित्पे' अनेन सेर्णित्त्वात् वृद्धेः प्राप्तौ॥ सूत्रम्—'श्वयतेः०' श्वयतेर्धातोः सौ परे वृद्ध्यभावो वाच्यः। अनेन तन्निषेधः। गुणः। 'इट ईटि' इत्यादिसूत्रैः अश्वयीत् इत्यादिरूपं सिद्धं भवति। अस्य 'इरितो वा' अनेन वा ङप्रत्ययो भवति। तदा अश्वि ङ दिप् इति जाते॥ सूत्रम्—'श्वयतेः०'॥ श्वयतेर्धातोर्ङप्रत्यये परे इकारस्य लोपो वक्तव्यः। अनेनेकारस्य लोपो भवति। अश्वत् अश्वताम् अश्वन्॥ सूत्रम्—'श्वयतेः०' श्वयतेर्धातोः ङप्रत्यये परे द्वित्वं वा भवति पूर्वस्य। 'नुधातोः' अशिश्वियत्। अशिश्वियताम्। अशिश्वियन्। इत्यादीनि रूपाणि ज्ञातव्यानि॥ इति भ्वादिगणस्य परस्मैपदिनः कथिताः॥

---

## ॥ भ्वादिष्वात्मनेपदिनः॥ २॥

अथ भ्वादिष्वात्मनेपदिप्रक्रिया॥ एध वृद्धौ। अकार आत्मनेपदार्थः। ततः पराणि तिबादिवचनानि। अप् कर्तरि। एधते। 'आदाथ ई'। अकारान्तात्परस्य आतआथसंबन्धिन आकारस्येकारो भवति। अ इ ए एधेते। धर्मादेधतेऽदो राज्यम्॥ विधिसंभावनयोरीतेत्यादीनि नव वचनानि। एधेत। एधताम्। ऐधत। कासादिप्रत्ययादाम्। एधांचक्रे॥ आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मनेपदं भ्वसोर्नात्मनेपदम्॥ एधामास एधांबभूव। विधानसामर्थ्यादस्तेर्भूभावो न। इट्। एधिषीष्ट। एधिता। एधिष्यते ऐधिष्यत। ऐधिष्ट ऐधिषाताम्॥

आत्मनेपदिनां प्रयोगमाह—एध वृद्धौ। एध् अयं धातुः वृद्ध्यर्थे। एध इत्यत्राकारोऽनुदात्तस्तेनायमनुदात्तेत् तेनात्मनेपदी। तदेव ग्रन्थकार आह—अकार आत्मनेपदार्थः। तत-

स्तस्मात्कारणात् विभक्तिचतुष्टयेऽपि पराणि ते आते अन्ते । तथा ईत, ईयाताम्, ईरन् । ताम्, आताम्, अन्ताम् । तन्, आताम्, अन्त, इत्यादीनि नव वचनानि योज्यानि ॥ तत्र वर्तमानात्मनेपदे प्रक्रिया लिख्यते । अबादिप्रयोगः 'अप्कर्तरि' इति कार्यं पूर्ववत् । सर्वत्र 'अप् कर्तरि' 'स्वरहीनं०' एधते। द्विवचने एध आते इति स्थिते सूत्रम्—'आदाथ ई' ॥ आ षष्ठ्येकवचनान्तं सांकेतिकम् । आच्च आथ् च आदाथ् तस्य आदाथ षष्ठ्येकवचनान्तम् । ई प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'आदौ सवर्णे०' मध्ये । 'आदबे लोपश्' त्रिपदमिदं सूत्रम् । अ अकारात्परस्य आते, आथे, आताम्, आथाम्, इति वर्तमानाशीःप्रेरणानद्यतनीयप्रथमपुरुषमध्यमपुरुषद्विवचनस्याकारस्य ईकारादेशो भवति । अनेन आते इत्याकारस्य इकारादेशो भवति । 'अइए' एधेते । बहुवचने—'अदे' इत्यकारलोपः । 'स्वरहीनं०' एधन्ते । एधसे । द्विवचने—'आदाथ ई' इतीकारः । 'अ इ ए' एधेथे । एधध्वे । उत्तमपुरुषैकवचने—'अदे' एधे। द्वित्वे बहुत्वे च—'व्मोरा' एधावहे एधामहे । अथोदाहरणम्—धर्मादिति । अदः समीपवर्ति राज्यं धर्मात् एधते । वर्धते इति वर्तमानप्रक्रिया । विधिसंभावनयोः ईतेत्यादि नव वचनानि योज्यानि । सर्वत्र । 'अप् कर्तरि' 'स्वरहीनं' 'अइए' एधत एधेयाताम् एधेरन् इत्यादि नव रूपाणि । साधुर्जनो मनुष्यो धर्मतः धर्मात् एधेत वर्धेत इति विधिः । 'आशीःप्रेरणयोः' ताम् आताम् अन्ताम् इत्यादयो नव प्रत्ययाः । 'अप्कर्तरि' आताम् आथाम् इत्यत्र 'आदाथ ई' 'अ इ ए' । अन्तामित्यत्र । 'अदे' 'स्वरहीनं०' ॥ मध्यमपुरुषे द्वित्वे । 'आदाथ ई' 'अइए' । एकत्वबहुत्वयोरविशेषः । उत्तमपुरुषैकवचने । 'एऐऐ' एधै । द्विबहुत्वयोः 'सवर्णे०' एधताम् एधेतामित्यादीन्युदाहरणानि ज्ञेयानि । तवायुरेधताम् ॥ अथानद्यतने—एध । तनादि नव वचनानि योज्यानि । सर्वत्र 'अप् कर्तरि' 'दिबादावट्' इति प्रागडागमः । सूत्रम्—'स्वरादेः' ॥ षष्ठ्येकवचनान्तम् । स्वर आदिर्यस्यासौ स्वरादिस्तस्य धातोः अडागमानन्तरमनेन द्वितीयोऽडागमः । 'सवर्णे०' 'एऐऐ' । अथवा द्विवारमपि । 'एऐऐ' साधना प्राग्वत् । केवलमुत्तमपुरुषैकवचने । 'अइए' ऐधत । ऐधेताम् 'आदाथ ई' । ऐधन्त 'अदे' इत्यादिरूपाणि ज्ञेयानि । अत्र यद्यपि द्वितीयमडागमं विनापि रूपसिद्धिर्भवति तथापि ऐक्षत इत्यादौ रूपसिद्ध्यर्थं सूत्रस्यास्य प्रयोगः ॥

**ईक्ष दर्शनाङ्कनयोः ईक्षते । ईक्षेत । ईक्षताम् । ऐक्षत । ईक्षांचक्रे । ईक्षिषीष्ट । ईक्षिता । ईक्षिष्यते । ऐक्षिष्यत । ऐक्षिष्ट ॥**

एवम् ईक्ष दर्शनाङ्कनयोः । ईक्षधातुः दर्शनाङ्कनार्थे । अङ्कनं परीक्षणम् । अत्राप्यकार आत्मनेपदार्थः । तेन विभक्तिचतुष्टयेऽप्यात्मनेपदानि योज्यानि । एधवत्प्रक्रिया । ईक्ष ते आते अन्ते। 'अप् कर्तरि' ईक्षते 'आदाथई' ईक्षेते। 'अदे' ईक्षन्ते । ईक्षसे ईक्षेथे ईक्षध्वे। ईक्षे ईक्षावहे ईक्षामहे 'व्मोरा' ॥ विधिसंभावनयोः । ईक्ष । ईत ईयातामित्यादि । 'अप् कर्तरि' 'स्वरहीनं०' सर्वत्र । 'अइए' ॥ 'आशीःप्रेरणयोः' । ईक्ष ताम् आताम् अन्तामित्यादयः । 'अप् कर्तरि' 'स्वरहीनं०' ईक्षताम् । 'आदाथ ई' 'अइए' ईक्षेताम् । ईक्षस्व । 'आदाथ ई' ईक्षेथाम् ईक्षध्वम् । ईक्षै 'एऐऐ' । ईक्षावहै ईक्षामहै 'सवर्णे०' ॥ अनद्यतने तनादयः । 'अप् कर्तरि' 'दिवादावट्' 'स्वरादेः' इत्यडागमद्वयं विधाय अग्रेतनाडागमेन सह 'अइए' द्वितीयेन तु 'एऐऐ' ऐक्षत इत्यादीनि रूपाणि ॥

दद दाने । ददते । ददेत । ददताम् । अददत । 'शसददवा०' इति नैत्वपूर्वलोपौ । ददे ददाते ददिरे । ददिषीष्ट । ददिता । ददिष्यते । अददिष्यत । अददिष्ट ॥

दद दाने । अत्राप्यकार आत्मनेपदार्थः । ददते । ददेत । ददताम् । अददत । 'लोपः' अनेनैत्वपूर्वलोपे प्राप्ते । 'शसददवादि०' अनेन तन्निषेधः । ददे । ददिषीष्ट । ददिता । लुङ् । अददिष्ट अददिषाताम् अददिषत । सुगमोऽयं धातुः ॥

ष्वष्क गतौ । 'नामधातु' अनेन सत्वाभावः । ष्वष्कते । ष्वष्केत । ष्वष्कताम् । अष्वष्कत । षष्वष्के । ष्वष्किषीष्ट । ष्वष्किता । ष्वष्किष्यते । अष्वष्किष्यत । अष्वष्किष्ट अष्वष्किषाताम् ॥

ष्वष्क गतौ । 'नामधातु०' अनेन सत्वाभावः । ष्वष्कते । 'पूर्वस्य हसादिः' । षष्वष्के । षष्वष्काते । षष्वष्किरे । ष्वष्किषीष्ट । ष्वष्किता । लुङ्लकारे । अष्वष्किष्ट । अष्वष्किषाताम् । अष्वष्किषत ॥

ऋज गतौ स्थैर्ये स्पर्शे च । 'उपधाया लघोः' अर्जते । अर्जेत । अर्जताम् । आर्जत । 'नुगशाम्' 'आभ्वोर्णादौ' आनृजे । अर्जिषीष्ट । अर्जिता । अर्जिष्यते । आर्जिष्यत । आर्जिष्ट ॥

ऋज् गतौ स्थैर्ये स्पर्शे च । अकार आत्मनेपदार्थः । पूर्ववत् तिबादयः । 'उपधायाः' अनेन गुणः । अर्जते । अर्जेत । अर्जताम् । 'स्वरादेः' । आर्जत । ऋज् णप् इति स्थिते । 'द्विश्च' । 'रः' । 'नुगशाम्' अनेन पूर्वस्य नुगागमो भवति । 'आभ्वोर्णादौ' । 'स्वरहीनं०' । आनृजे आनृजाते आनृजिरे । अर्जिषीष्ट । अर्जिता । 'स्वरादेः' । आर्जिष्ट आर्जिषाताम् आर्जिषत ॥

ष्वञ्ज परिष्वञ्जने । सत्वम् । 'अपिरञ्जदंशषञ्जष्वञ्जाम्' स्वजते । स्वजेत । स्वजताम् । अस्वजत । सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे ॥ स्वजतेर्णादौ वा कित्त्वम् ॥ सस्वजे सस्वजाते सस्वजिरे । 'चोः कुः' 'खसे चपाः' षत्वम् । 'कषसंयोगे क्षः' स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । 'झसात्' अस्वङ्क्त अस्वङ्क्षाताम् अस्वङ्क्षत । अस्वङ्क्थाः ॥

ष्वञ्ज परिष्वञ्जने । 'आदेः ष्णः स्नः' । अनेन सत्वम् । 'अपिरञ्ज' अनेनानुस्वारस्य लोपः । स्वजते । स्वजेत । स्वजताम् । अस्वजत । 'द्विश्च' । सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे ॥ सूत्रम्—'स्वजतेः०' ॥ स्वजतेर्धातोर्णादौ वा कित्त्वं वाच्यम् । कित्त्वात् 'नो लोपः' अनेनैवानुस्वारस्य लोपो भवति । सस्वजे सस्वजाते सस्वजिरे । स्वज् सीष्ट इति स्थिते । 'चोः कुः' । अनेन जकारस्य गकारः । 'खसे०' । अनेन गस्य कः । 'किलात्०' अनेन सस्य षः 'कषसं०' स्वंक्षीष्ट । 'चोः कुः' 'खसे०' अनेन गस्य कः । 'स्वरहीनम्' स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । 'झसात्' अनेन सेर्लोपः । अस्वङ्क्त ॥

**त्रपूष् लज्जायाम्। ऊकारषकारौ कार्यार्थौ। त्रपते। त्रपेत। त्रपताम्। अत्रपत। 'तृफलभजत्रपाम्' इत्येत्त्वपूर्वलोपौ। त्रेपे त्रेपाते त्रेपिरे। 'ऊदितो वा' त्रपिषीष्ट-त्रप्सीष्ट। त्रपिता। त्रप्ता। त्रपिष्यते-त्रप्स्यते। अत्रपिष्यत अत्रप्स्यत। अत्रपिष्ट अत्रपिषाताम् अत्रपिषत। अत्रप्त॥**

त्रपूष् लज्जायाम्। ऊकारषकारौ कार्यार्थौ। पूर्ववत्तआदयः। त्रपते। लिट् लकारे त्र त्रप् ए इति स्थिते 'तृफलभजत्रपाम्' अनेनैत्वपूर्वलोपौ भवतः। त्रेपे त्रेपाते त्रेपिरे। अस्य धातोः 'ऊदितो वा' अनेनेड्विकल्पो भवति। त्रपिषीष्ट-त्रप्सीष्ट। लुङ्लकारे अत्रपिष्ट। इडभावे 'झसात्०' अनेन सेर्लोपो भवति तदा अत्रप्त अत्रप्साताम् अत्रप्सत॥

**तिज् निशाने क्षमायां च॥ "गुब्भ्यः' तितिक्षते। तितिक्षेत। तितिक्षताम्। अतितिक्षत। तितिक्षांचक्रे। तितिक्षांबभूव। तितिक्षामास। तितिक्षिषीष्ट। तितिक्षिता। तितिक्षिष्यते। तितिक्षिष्यत। अतितिक्षिष्ट॥**

तिज् निशाने क्षमायां च। निशानं तीक्ष्णीकरणम् इति सिद्धान्तकौमुद्यामुक्तम्। 'गुब्भ्यः' अनेन स्वार्थे सप्रत्ययो भवति धातोर्द्वित्वं च। तितिज् स अप् ते इति जाते। 'चोः कुः' अनेन जस्य गः। 'खसे चपा०' अनेन गस्य कः। 'किलात्०'। 'कषसं०'। 'अदे'। अनेनाकारस्य लोपो भवति। 'स्वरहीनं०'। तितिक्षते। तितिक्षेत। तितिक्षताम्। अतितिक्षत। लिट्लकारे 'कासादिप्रत्ययादाम्' अनेनाम्प्रत्ययो भवति। तितिक्षांचक्रे। 'आम्प्रत्ययो यस्मात्' अनेन व्याख्यानेन भ्वसोरनुप्रयोगे सति आत्मनेपदं न भवति। तेन तितिक्षांबभूव। तितिक्षामास। अन्यानि मूले सन्ति तानि सुगमान्येव। लुङ्लकारे अतितिक्षिष्ट॥

**गुप गोपनकुत्सनयोः॥ जुगुप्सते। जुगुप्सेत। जुगुप्सताम्। अजुगुप्सत। जुगुप्सांचक्रे जुगुप्सांबभूव जुगुप्सामास। जुगुप्सिषीष्ट। जुगुप्सिष्यते। अजुगुप्सिष्यत। अजुगुप्सिष्ट॥**

गुप गोपनकुत्सनयोः। 'गुब्भ्यः'। अनेनास्य धातोरपि सप्रत्ययो भवति धातोर्द्वित्वं च तदा। गुगुप् स् इति जाते 'कुहोश्चुः'। अनेन गस्य जः। जुगुप् स इति जाते। 'स धातुः' अनेन धातुत्वात् तआदयः प्रत्यया भवन्ति। तदा जुगुप्सते इति जाते। 'अप् कर्तरि'। अदे जुगुप्सते। लिट्लकारे। जुगुप्सांचक्रे। जुगुप्सामास। जुगुप्सांबभूव। लुङ्लकारे अजुगुप्सिष्ट अजुगुप्सिषाताम् अजुगुप्सिषत। अन्येषां लकाराणां रूपाणि मूले सन्ति तस्मात् न लिखितानि॥

**मान विचारणे। द्वित्वम्। ह्रस्वः॥ यः से॥ पूर्वस्याकारस्येकारो भवति से परे॥ मानादीनां पूर्वस्य दीर्घो वक्तव्यः॥ मीमांसते। मीमांसेत। मीमांसताम्। अमीमांसत। मीमांसांचक्रे मीमांसामास मीमांसांबभूव। मीमांसिषीष्ट। मीमांसिता। मीमांसिष्यते। अमीमांसिष्यत। अमीमांसिष्ट॥**

मान विचारणे । अकार इत् आत्मनेपदार्थः । 'गुप्भ्यः' अनेन सद्वित्वे भवतः । ह्रस्वः । 'म मान् स' इति जाते ॥ सूत्रम्—'यः से' ॥ धातोः पूर्वस्य अकारस्य इकारो भवति सप्रत्यये परे । अनेनाकारस्य इकारः । तदा मिमान् स इति जाते ॥ सूत्रम्—'मानादीनाम्०' ॥ मान् बध् दान् शान् इत्येतेषां धातूनां पूर्वस्य सप्रत्यये परे दीर्घो वक्तव्यः । अनेन पूर्वस्येकारस्य दीर्घः । 'स धातुः' 'अप्कर्तरि' 'नश्चापदान्ते' मीमांसते । लिट्लकारे। मीमांसांचक्रे । लुङ्लकारे । अमीमांसिष्ट इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति पिष्टपेषणैः किं प्रयोजनम् ॥

**बध निन्दायाम् । आदिजबानाम् । बीभत्सते । बीभत्सेत । बीभत्सताम् । अबीभत्सत । बीभत्सांचक्रे । बीभत्सिषीष्ट । बीभत्सिता । बीभत्सिष्यते । अबीभत्सिष्यत । अबीभत्सिष्ट ॥**

बध निन्दायाम् । अकार उभयपदार्थः । 'गुप्भ्यः' । 'आदिजबानाम्' । 'यः से' । 'मानादीनाम्' । 'स धातुः' । 'अप्कर्तरि' 'अदे' 'खसे चपा०' बीभत्सते । लिट्लकारे । बीभत्सांचक्रे । अन्यानि मूले सन्ति । लुङ्लकारे । अबीभत्सिष्ट ॥

**पण व्यवहारे स्तुतौ च । पन च । आयः । पणायते । पणायेत । पणायताम् । अपणायत । पणायांचक्रे । आयाभावपक्षे । पेणे पेणाते पेणिरे । पणायिषीष्ट-पणिषीष्ट । पणायिता पणिता । पणायिष्यते-पणिष्यते । अपणायिष्यत-अपणिष्यत । अपणायिष्ट अपणिष्ट । एवं पन च ॥**

पण व्यवहारे स्तुतौ च । 'आयः' अनेनास्य आयः प्रत्ययो भवति । 'स धातुः' 'अप्कर्तरि' 'सवर्णे दीर्घः सह' पणायते । पणायेत । पणायताम् । अपणायत । पणायांचक्रे । आयप्रत्ययोऽनपि वा भवति सूत्रोक्तत्वात् । आयाभावपक्षे—'लोपः पचाम्' अनेनास्यैत्वपूर्वलोपौ । पेणे पेणाते पेणिरे । पणाय इट् सीष्ट इति जाते । 'यतः' । 'स्वरहीनं०' 'किलात्' पणायिषीष्ट । आयाभावपक्षे—पणिषीष्ट । पणायिता । पणिता । लुङ्लकारे—अपणायिष्ट । अपणिष्ट । एवं पनधातोरपि रूपाणि ज्ञेयानि ॥

**कमु कान्तौ ॥ कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः ॥ अनपि तु वा । वृद्धिः । सधातुः । अप्गुणौ । अयादेशः । कामयते । कामयेत् । कामयताम् । अकामयत । कामयांचक्रे-चकमे । कामयिषीष्ट कमिषीष्ट । कामयिता-कमिता । कामयिष्यते-कमिष्यते । अकामयिष्यत-अकमिष्यत । अकामि त इति स्थिते ॥ ञेरङ्द्विश्च ॥ ञ्यन्ताद्धातोर्भूतेऽर्थे अङ् प्रत्ययो भवति दिवादौ परतः । सेरपवादः । धातोश्च द्वित्वम् ॥ ञेः ॥ इडागमवर्जिते अनपि विषये ञेर्लोपो भवति ॥ ह्रस्वः । कुहोश्चुः ॥ अङि लघौ ह्रस्व उपधायाः ॥ अङि सत्युपधाया ह्रस्वो भवति पूर्वसंबन्धिनोऽकारस्येकारो भवति लघुनि धात्वक्षरे परे ॥ लघोर्दीर्घः ॥ अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि**

धात्वक्षरे परे। अचीकमत अचीकमेताम् अचीकमन्त ॥ ञेरभावपक्षे—॥ कमेरङ्द्वित्वे वाच्ये ॥ ञ्यन्तत्वाभावान्न दीर्घेकारौ। अचकमत ॥

कमु कान्तौ। कान्तिरत्र इच्छा। उकार इत् आत्मनेपदार्थः ॥ 'कमेः' कमेर्धातोः स्वार्थे ञिः प्रत्ययो वक्तव्यः। अनपि तु वा वक्तव्यः। कम् ञि इति जाते। 'अत उपधायाः' अनेन वृद्धिः। 'स धातुः' ञकारो ञित्कार्यार्थः। 'अप्कर्तरि' 'गुणः' 'एअय्' कामयते। कामयेत। कामयताम्। अकामयत। कामयांचक्रे। ञेरभावपक्षे—चकमे। कामयिषीष्ट—कमिषीष्ट। कामयिता-कमिता। अन्यानि मूले सन्ति। लुङ्लकारे—अकामि तन् इति स्थिते। सूत्रम्—'ञेरङ् द्विश्च'॥ इदं ञेः अङ् द्विः च चतुःपदं सूत्रम्। ञिप्रत्ययान्ताद्धातोर्भूतमात्रेऽतीते काले सिविषये दिबादौ परे अङ्प्रत्ययो भवति। सेरपवादो धातोः द्वित्वं भवति। चकारात् श्रिद्रुस्रुभ्यो ञिप्रत्ययाभावेऽपि अङ् द्वित्वं च ॥ 'ञेः' ञेः इडागमवर्जिते अनपि विषये ञिप्रत्ययस्य लोपो भवति। तदा अ का काम इति स्थिते। 'ह्रस्वः'। 'कुहोश्चुः' तदा अचकाम् तन् इति जाते सूत्रम्—'अङि लघौ ह्रस्व उपधायाः'॥ अङि लघौ ह्रस्वः उपधायाः चतुःपदम्। अङि प्रत्यये सति धातोः लघौ परे पूर्वसंबन्धिनोऽकारस्य इकारो भवति। दीर्घादेर्धातोरुपधाया ह्रस्वोऽपि भवति। अनेन अकारस्य इकारः। उपधायाः ह्रस्वः। तदा अचिकम् अङ् तन् इति जाते सूत्रम्—'लघोर्दीर्घः'॥ लघोः दीर्घः। अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे सति। अनेनेकारस्य दीर्घः अङ्तनोर्ङकारनकारलोपः। 'स्वरहीनं०' अचीकमत अचीकमेताम् अचीकमन्त। ञेरभावपक्षे। सूत्रम्—'कमेः'॥ कमेर्धातोरङ्प्रत्ययद्वित्वे वाच्ये। अनेनाङ्प्रत्ययः द्वित्वं च भवति। ञ्यन्तत्वाभावात् न दीर्घेकारौ। अचकमत। अचकमेताम्। अचकमन्त। इत्यादीनि रूपाणि ज्ञेयानि ॥

अय गतौ। अयते। अयेत। अयताम्। आयत ॥ परापूर्वेऽयतावुपसर्गरेफस्य लत्वं वाच्यम् ॥ पलायते। पलायेत। पलायताम्। अपलायत। अयांचक्रे अयामास अयांबभूव। अयिषीष्ट। अयिता। अयिष्यते। आयिष्यत। आयिष्ट आयिषाताम् आयिषत। अयिढ्वं-आयिध्वम् ॥

अय गतौ। पूर्ववत् तेआदयः प्रत्यया भवन्ति। अयते। यदायं धातुः परापूर्वः स्यात्तदा वक्ष्यमाणेन सूत्रेण लत्वं भवति ॥ सूत्रम्—'परापूर्वेऽयतौ०'॥ अयतौ धातौ परे उपसर्गरेफस्य लत्वं वाच्यम्। अनेन रकारस्य लकारः। तदा पलायते इति रूपं सिद्धम्। लिट्लकारे। 'कासादिप्रत्ययादाम्' अनेनाम् प्रत्ययो भवति। अयांचक्रे। द्वे मूले स्तः। अयिषीष्ट। लुङ्लकारे। आयिष्ट ॥

दय दानगतिहिंसादानेषु। दयते। अयतिवत्प्रक्रिया ॥

दय दानगतिहिंसादानेषु। अस्यापि धातोरयतिवत् रूपाणि ज्ञेयानि ॥

घट चेष्टायाम्। घटते। घटेत। घटताम्। अघटत। कुहोश्चुः। जघटे। घटिषीष्ट। घटिता। घटिष्यते। अघटिष्यत-अघटिष्ट ॥

घट चेष्टायाम् । पूर्ववत् तआदयः । घटते । लिट्लकारे । 'कुहोश्चुः' अनेन घस्य झः । जघटे जघटाते जघटिरे । घटिषीष्ट । लुङ्लकारे । अघटिष्ट ॥

**ईह चेष्टायाम् । ईहते । ईहेत । ईहताम् । ऐहत । ईहांचक्रे । ईहिषीष्ट । ईहिता । ईहिष्यते । ऐहिष्यत । ऐहिष्ट ॥**

ईह चेष्टायाम् । दीर्घोपधत्वात् न गुणः । ईहते लुङ्लकारे । 'स्वरादेः' ऐहत । लिट्लकारे । 'कासादि०' अनेनास्याम् । ईहांचक्रे । ईहिषीष्ट । लुङ्लकारे ऐहिष्ट ॥

**काशृङ् दीप्तौ । काश्यते । काशेत । काशताम् । अकाशत ॥**

काशृङ् दीप्तौ । उकारङकारौ इतौ । काशते । लिट्लकारे । 'विदूदरिद्रा' अनेनास्य वाम् प्रत्ययो भवति । काशांचक्रे (?) ॥ आमभावे—'कुहोश्चुः' 'ह्रस्वः' चकाशे । काशिषीष्ट । लुङ्लकारे—अकाशिष्ट ॥

**विदूदरिद्रा० । काशांचक्रे (?) । चकाशे । काशिषीष्ट । काशिता । काशिष्यते । अकाशिष्यत । अकाशिष्ट ॥ कासृ शब्दकुत्सायाम् । कासते । कासेत । कासताम् । अकासत । कासांचक्रे । चकासे (?) । कासिषीष्ट । कासिता । कासिष्यते । अकासिष्यत । अकासिष्ट ॥**

कासृ शब्दकुत्सायाम् । ऋकार इत् । पूर्ववत् तआदयः । कासते । लिट्लकारे 'कासादिप्रत्ययादाम्' अनेन नित्ये प्राप्ते । 'विदूदरिद्रा०' अनेन वा भवति । कासांचक्रे । आमभावे—चकासे (?) । कासिषीष्ट । कासिता । लुङ्लकारे अकासिष्ट ॥

**षेवृ सेवने । सत्वम् । सेवते । सेवेत । सेवताम् । असेवत । सिषेवे सिषेवाते । सेविषीष्ट । सेविता । सेविष्यते । असेविष्यत । असेविष्ट ॥**

षेवृ सेवने । 'आदेः ष्णः स्नः' अनेन सत्वम् । ऋकार इत् । सेवते । लिट्लकारे । सिषेवे सिषेवाते सिषेविरे । सेविषीष्ट । लुङ्लकारे । असेविष्ट ॥

**गाङ् गतौ । सवर्णदीर्घे कृते आकारत्वात्—आतोऽन्तोदनतः । गाते गाते गाते । गेत । गाताम् । अगात । जगे जगाते जगिरे । गासीष्ट । गाता । गास्यते । अगास्यत । अगास्त अगासाताम् ॥**

गाङ् गतौ । ङकार आत्मनेपदार्थः । पूर्ववत् तआदयः । 'सवर्णे०' गाते । गाते । आकारान्तत्वात् । 'आतोऽन्तोदनतः' । अनेन अन्ते इत्यस्य अते भवति । 'सवर्णे०' गाते । गासे । गाथे । गत्यादीनि । 'अ इ ए' गेत । गाताम् । गाताम् । गाताम् । अगात अगाताम् अगात । गा णप् इति स्थिते । 'द्विश्च' 'ह्रस्वः' 'कुहोश्चुः' 'आतोऽनपि' । जगे जगाते जगिरे । गासीष्ट । गाता । गास्यते । लुङ्लकारे । अगास्त अगासाताम् अगासत ॥

**रुङ् गतौ भाषणे च । गुणः । रवते । रवेत । रवताम् । अरवत अरवेताम् । अनेकस्वरत्वादसंयोगपूर्वत्वाचोकारस्य वत्वे प्राप्ते ॥ नानप्योर्वः ॥ अनपि**

**विषये धातोरुवर्णस्य वत्वं न भवति ॥ तत उव् । नुधातोः । रुरुवे रुरुवाते रुरुविरे । रविषीष्ट । रविता । रविष्यते । अरविष्यत अरविष्ट ॥**

रुङ् गतौ भाषणे च । पूर्ववत् तआदयः । 'गुणः' रवते । लिट्लकारे—'नुधातोः' अनेनानेकस्वरासंयोगपूर्वत्वात् वकारे प्राप्ते ॥ सूत्रम्—'नानप्योर्वः' ॥ न अनपि ओः वः । तिबादिचतुष्टयस्याप्प्रत्ययो भवति नान्यविभक्तिगणस्य । ततो विभक्तिचतुष्टयवर्जितो विभक्तिगणोऽनप् कथ्यते । ततोऽनप्संबन्धिनि स्वरे परे धातोरुवर्णस्य वत्वं न भवति । किंतु उवेव भवति । अनेनोव् भवति । रुरुवे । रुरुवाते । रुरुविरे । रविषीष्ट । रविता । लुङ्लकारे—अरविष्ट अरविषाताम् अरविषत ॥

**देङ् पालने । दयते । दयेत । दयताम् । अदयत ॥ दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः ॥ दिग्ये । संध्यक्षराणामा । दासीष्ट । दाता । दास्यते । अदास्यत ॥ अपिद्दाधास्थामित्वं सेर्ङित्वं आत्मनेपदे वाच्यम् ॥ ङित्वान्न गुणः ॥ लोपो ह्रस्वाज्झसे ॥ ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे ॥ अदित अदिषाताम् अदिषत ॥**

देङ् पालने । ङकार आत्मनेपदार्थः । दयते । लिट्लकारे ॥ सूत्रम्—'दयतेः०' ॥ दयतेर्धातोर्णादौ परे सति दिग्यादेशो भवति । द्वित्वाभावश्च वक्तव्यः । 'आतोऽनपि' दिग्ये दिग्याते दिग्यिरे । 'संध्यक्षराणामा०' दासीष्ट । दाता । दास्यते । अदास्यत । अदासि तन् इति स्थिते । सूत्रम्—'अपिद्दाधास्थाम्०' अपिद्दाधास्थां धातूनां इत्वं सेर्ङित्वं च आत्मनेपदे वाच्यम् । 'षष्ठीनिर्दि०' ङित्वात् गुणाभावो भवति । तदा अदि सि तन् इति जाते ॥ सूत्रम्—'लोपो ह्रस्वाज्झसे' ॥ लोपः ह्रस्वात् झसे । ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अनेन सेर्लोपो भवति । अदित अदिषाताम् अदिषत ॥

**डीङ् विहायसा गतौ । डयते । डयेत । डयताम् । अडयत । नुधातोः । डीड्ये । डयिषीष्ट । डयिता । डयिष्यते । अडयिष्यत । अडयिष्ट ॥**

डीङ् विहायसा गतौ । ङकारः सर्वत्रात्मनेपदार्थो ज्ञातव्यः । 'गुणः' डयते । डयेत । लिट्लकारे–'नुधातोः' अनेन इ य् भवति । डिड्ये डिड्याते डिड्यिरे। 'गुणः' डयिषीष्ट । अन्यानि मूले सन्ति । लुङ्लकारे—अडयिष्ट अडयिषाताम् अडयिषत ॥

**दैङ्[1] त्रैङ् पालने । दायते । दायेत । दायताम् । अदायत ॥ दैङो णादौ दिग्यादेशो द्वित्वाभावश्च ॥ दिग्ये । दासीष्ट । अपिद्दाधास्थामि लोपो ह्रस्वाज्झसे अदित ॥ त्रायते । तत्रे । अत्रास्त ॥**

दैङ् त्रैङ् पालने । पूर्ववत् तआदयः । 'ऐ आय्' । दायते । त्रायते । लिट्लकारे सूत्रम्—'दैङः०' ॥ दैङो धातोर्णादौ परे सति दिग्यादेशो द्वित्वाभावश्च भवति । 'आतोऽनपि' । दिग्ये दिग्याते दिग्यिरे । 'संध्यक्षराणा०' दासीष्ट । लुङ्लकारे । 'अपिद्दाधा०' 'लोपो ह्रस्वा०'।

---

१ पाणिनीयानां तु 'दैङ्' धातुर्नोपलभ्यते ॥

अदित अदिषाताम् अदिषत ॥ त्रैङ्धातोर्लिट्लकारे 'संध्यक्षराणामा०' अनेनाकारः 'द्विश्च' 'ह्रस्वः' । 'पूर्वस्य' 'आतोऽनपि' अनेनाकारलोपः । तत्रे तत्राते तत्रिरे । अस्य धातोर्लुङ्ल-कारे । 'संध्यक्षरा०' अत्रास्त अत्रासाताम् अत्रासत ॥

**द्युतङ् द्योतने । उपधाया लघोः । द्योतते । द्योतेत । द्योतताम् । अद्योतत ॥ द्युतेः पूर्वस्य संप्रसारणं वक्तव्यं णादौ परे ॥ दिद्युते । द्योतिषीष्ट । द्योतिता । द्योतिष्यते । अद्योतिष्यत । अद्योतिष्ट ॥ द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् ॥ लित्पुषादेर्ङः । अद्युतत् ॥**

द्युतङ् द्योतने । अकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । 'उपधायाः' अनेन गुणो भवत्यस्य । द्योतते । अन्यानि मूले सन्ति । द्युत् ण इति स्थिते । 'द्विश्च' द्यु द्युत् ण इति जाते ॥ सूत्रम्—'द्युतेः०' ॥ द्युतेर्धातोः पूर्वस्य संप्रसारणं वक्तव्यं णबादौ परे सति । अनेनास्य पूर्वस्य संप्रसारणम् । 'स्वरहीनम्' । दिद्युते दिद्युताते दिद्युतिरे । द्योतिषीष्ट । द्योतिता । लुङ्लकारे—अद्योतिष्ट । सूत्रम्—'द्युतादिभ्यः०' ॥ द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् । अनेनास्य लुङि वा परस्मैपदं भवति । तदा 'लित्पुषादेर्ङः' अनेन ङः । ङित्त्वात् गुणा-भावः । अद्युतत् अद्युतताम् अद्युतन् ॥

**वृतुङ् वर्तने । वर्तते वर्तेते वर्तन्ते । वर्तेत । वर्तताम् । अवर्तत । ववृते । वर्तिषीष्ट । वर्तिता । वर्तिष्यते । अवर्तिष्यत ॥ वृतादिभ्यः स्यप्स्योर्वा पं पेऽनिट्त्वं च ॥ 'वृतु वृधु शृधु स्यन्दू कृपू' एते वृतादयः । वर्त्स्यति । अवर्त्स्यत् । अवर्तिष्ट। परस्मैपदपक्षे—लित्पुषादेर्ङः । अवृतत् ॥**

वृतुङ् वर्तने । उकार उच्चारणार्थः । वर्तते । लिट्लकारे । 'द्विश्च' 'रः' ववृते । वर्ति-षीष्ट । वर्तिता । वर्तिष्यते । अवर्तिष्यत् ॥ सूत्रम्—'वृतादिभ्यः०' ॥ वृतादिभ्यो धातुभ्यः स्यप्स्योः परतो वा पं परस्मैपदमनिट्त्वं च वाच्यम् । वृतादयस्तु मूले उक्ताः । 'गुणः' वर्त्स्यति । अवर्त्स्यत् । लुङ्लकारे । अवर्तिष्ट । परस्मैपदपक्षे—'लित्पुषादेर्ङः' अनेनास्य ङः । अवृतत् ।

**वृधुङ् वृद्धौ । वर्धते । वर्धेत । वर्धताम् । अवर्धत । ववृधे । वर्धिषीष्ट । वर्धिता । वर्धिष्यते । अवर्धिष्यत । वर्त्स्यति । अवर्त्स्यत् । अवर्धिष्ट । अवृधत् ॥**

वृधुङ् । 'उपधाया लघोः' । वर्धते । लिट्लकारे । ववृधे । वर्धिषीष्ट । अस्य धातोरपि पूर्वधातुवत् रूपाणि साध्यानि ॥

**शृधुङ् पर्दने । शर्धते । शर्धेत । शर्धताम् । अशर्धत ॥ शशृधे । शर्धिषीष्ट । शर्धिता । शर्धिष्यते । अशर्धिष्यत । अशर्धिष्ट । शर्त्स्यति । अशर्त्स्यत् । अशृधत् ॥**

शृधुङ् पर्दने । पर्दनं गुदरवः । शर्धते । अयमपि तद्वत् । न किंचिद्विशेषः ।

स्यन्दू प्रस्रवणे । स्यन्दते । स्यन्देत । स्यन्दताम् । अस्यन्दत । सस्यन्दे । ऊदितो वा । स्यन्दिषीष्ट । स्यन्त्सीष्ट । स्यन्दिता-स्यन्ता । स्यन्दिष्यते-स्यन्त्स्यते । स्यन्त्स्यति । अस्यन्दिष्यत-अस्यन्त्स्यत अस्यन्त्स्यत् । अस्यन्दिष्ट अस्यन्त । पक्षे अस्यदत् ॥

स्यन्दू प्रस्रवणे । ऊकार इड्विकल्पार्थः । स्यन्दते । लिट्लकारे द्वित्वम् । पूर्वस्य । सस्यन्दे सस्यन्दाते सस्यन्दिरे । अस्य धातोः 'ऊदितो वा' अनेनेड्विकल्पो भवति । स्यन्दिषीष्ट । इडभावपक्षे 'खसे चपा झसानाम्' अनेन दस्य तः । स्यन्त्सीष्ट । स्यन्दिता—स्यन्ता । स्यन्दिष्यते । इडभावपक्षे 'खसे०' स्यन्त्स्यते । अस्यन्दिष्यत-अस्यन्त्स्यत । अस्यन्दिष्ट । इडभावे । अस्यन्त । परस्मैपदपक्षे—'लित्पुषादेर्ङः' 'नो लोपः' अनेन अनुस्वारस्य लोपो भवति । अस्यदत् ॥

कृपू सामर्थ्ये । गुणः ॥ कृपो रो लः ॥ कृपो रेफस्य लो भवति ऋकारस्य ऌकारो भवति ॥ कल्पते । कल्पेत । कल्पताम् । अकल्पत । चक्लृपे । कल्पिषीष्ट । इडभावपक्षे ॥ सिस्योः ॥ उपधाया गुणो न भवति सिस्योरनिटोः परतः ॥ क्लृप्सीष्ट । कल्पिता-कल्प्ता । कल्पिष्यते-कल्प्स्यते कल्प्स्यति । अकल्पिष्यत अकल्प्स्यत । अकल्पिष्ट । अक्लृप्त अक्लृप्साताम् अक्लृप्सत । अक्लृपत् ।

कृपू सामर्थ्ये । पूर्ववत् तआदयः । 'उपधायाः' सूत्रम्—'कृपो रो लः' ॥ कृपः रः लः । कृपो धातो रेफस्य लकारो भवति ऋकारस्य ऌकारो भवति । अनेन रस्य लः । कल्पते । लिट्लकारे 'कृपो रो लः' । अनेन ऋकारस्य ऌकारः । चक्लृपे । कल्पिषीष्ट । अस्यापि ऊदित्वादिड्विकल्पो भवति । तदा क्लृप्सीष्ट इति जाते । 'उपधाया लघोः' अनेन गुणे प्राप्ते सति ॥ सूत्रम्—'सिस्योः' ॥ सिश्च सीश्च सिस्यौ तयोः सिस्योः । सिस्योरनिटोः परत उपधाया गुणो न भवति । अनेन गुणाभावः । 'कृपो रो लः' । क्लृप्सीष्ट । कल्पिता । कल्प्ता । कल्पिष्यते । कल्प्स्यते । अकल्पिष्यत । अकल्प्स्यत । परस्मैपदपक्षे । कल्प्स्यति । अकल्प्स्यत् । अकल्पिष्ट । 'लित्पुषादेर्ङः' 'कृपो रो लः' अक्लृपत् । अक्लृपताम् । अक्लृपन् । समाप्तोऽयं धातुः ॥

व्यथ दुःखभयचलनयोः । व्यथते । व्यथेत । व्यथताम् । अव्यथत ॥ व्यथतेर्णादौ पूर्वस्य संप्रसारणं वक्तव्यम् ॥ विव्यथे । व्यथिशीष्ट । व्यथिता । व्यथिष्यते । अव्यथिष्यत । अव्यथिष्ट ॥

व्यथ दुःखभयचलनयोः । अकार आत्मनेपदार्थः । व्यथते ॥ 'व्यथतेर्धातोर्णादौ परे पूर्वस्य संप्रसारणं वक्तव्यम्' इदं मूले सूत्रमस्ति । अनेनास्य धातोः संप्रसारणं भवति । विव्यथे विव्यथाते विव्यथिरे । व्यथिषीष्ट । व्यथिता । लुङ्लकारे । अव्यथिष्ट ।

रमु क्रीडायाम् । रमते । रमेत । रमताम् । अरमत ॥ व्याङ्पर्युपेभ्यो रमः पम् ॥ विरमति आरमति परिरमति उपरमति । रेमे । रंसीष्ट ।

रन्ता । रंस्यते । अरंस्त अरंसाताम् अरंसत । विपूर्वः । आदन्तानाम् इतीट्सकौ । व्यरंसीत् व्यरंसिष्टाम् ॥

रमु क्रीडायाम् । रमते । रमेत । रमताम् । अरमत ॥ सूत्रम्—'व्याङ्पर्युपेभ्यः०' । वि आङ् परि उप एभ्य उपसर्गेभ्यो रमधातोः पं परस्मैपदं भवति । विरमति । आरमति । परिरमति । उपरमति । लिट्लकारे । 'लोपः पचाम्' अनेनैत्वपूर्वलोपौ भवतः । रेमे रेमाते रेमिरे । 'नश्चापदान्ते झसे' अनेन मकारस्यानुस्वारो भवति । रंसीष्ट । रन्ता । लुङ्लकारे—अरंस्त अरंसाताम् अरंसत । यदायं धातुर्विपूर्वः स्यात् तदात्मनेपदं भवति । 'आदन्तानाम्' अनेन परस्मैपदे सति इट्सकौ भवतः । व्यरम् स् इट् सि ईट् दिप् इति स्थिते । 'इट ईटि' 'सवर्णे०' 'स्वरहीनम्' 'नश्चापदान्ते' । 'वावसाने' व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः ।

ञित्वरा संभ्रमे । ञिआवितौ । त्वरते । त्वरेत । त्वरताम् । अत्वरत । तत्वरे । त्वरिषीष्ट । त्वरिता । त्वरिष्यते । अत्वरिष्यत । अत्वरिष्ट । अत्वरिढ्वं-अत्वरिध्वम् ॥

ञित्वरा संभ्रमे । ञिआवितौ । पूर्ववत् तआदयः । त्वरते । लिट्लकारे 'द्विश्च' । पूर्वस्य हसादिः शेषः । तत्वरे । तत्वराते । तत्वरिरे । त्वरिषीष्ट । लुङ्लकारे । अत्वरिष्ट अत्वरिषाताम् अत्वरिषत ॥

षह मर्षणे । सहते । सहेत । सहताम् । असहत । सेहे । सहिषीष्ट । सहिता । इषुसह इति वेट् । हो ढः । तथोर्धः । ष्टुत्वम् । ढलोपः ॥ सहिवहोरोदवर्णस्य ॥ सहिवहोरवर्णस्यौकारादेशो भवति ढलोपनिमित्ते ढकारे परे ॥ सोढा । सहिष्यते । असहिष्यत । असहिष्ट ॥ इति भ्वादिष्वात्मनेपदिनः ॥

षह मर्षणे । 'आदेः ष्णः स्नः' अनेन सत्वम् । सहते । लिट्लकारे । 'लोपः पचाम्' अनेनेत्वपूर्वलोपौ । सेहे सेहाते सेहिरे । सहिषीष्ट । सहिता । 'इषुसह०' अनेनास्य वा दट् भवति । इडभावपक्षे सह् ता इति स्थिते । 'हो ढः' अनेन हस्य ढः । 'तथोर्धः' अनेन तस्य धः 'ष्टुभिः ष्टुः' 'ढि ढो लोपः' दीर्घश्च तदा सा ढा इति जाते ॥ सूत्रम्—'सहिवहोरोदवर्णस्य' सहिश्च वह च सहिवहौ तयोः सहिवहोः ओत् अवर्णस्य । सहिवहोर्धात्वोरवर्णस्य ओकारो भवति ढलोपनिमित्ते ढकारे परे । अनेन ओकारः । सोढा सोढारौ सोढारः । सहिष्यते । असहिष्यत । असहिष्ट असहिषाताम् असहिषत ॥

इति भ्वादिष्वात्मनेपदिनः ।

---

## भ्वादिषूभयपदिनः ॥ ३ ॥

अथोभयपदिप्रक्रिया ॥ राजृ दीप्तौ । ऋकार ऋदित्कार्यार्थः । राजति राजते । राजेत् । राजेत । राजतु राजताम् । अराजत् । अराजत । रराज । फणादित्वादेत्वपूर्वलोपौ । रेजतुः-रराजतुः रेजुः-रराजुः । रेजे-रराजे । रा-

ज्यात् । राजिषीष्ट । राजिता राजिता । राजिष्यति-राजिष्यते । अराजिष्यत्-अराजिष्यत । अराजीत् अराजिष्ट ॥

अथ भ्वादिगणस्योभयपदिनः कथ्यन्ते । राजृ दीप्तौ । उभयपदिनो धातोस्तिबादयस्त-आदयश्च प्रत्यया भवन्ति । द्वयोः परयोः सतोः 'अप् कर्तरि' अनेन अप् प्रत्ययो भवति । ऋकार ऋदित्कार्यार्थः । राजति । राजते । लिट्लकारे 'फणादीनां' अनेनास्य वा एत्व-पूर्वलोपौ । रराज । रेजतुः । रराजतुः । रेजिथ । रराजिथ । आत्मनेपदे । रेजे । एत्वपूर्व-लोपाभावे । रराजे । राज्यात् । राजिषीष्ट । राजिता । अन्यानि मूले सन्ति तानि सुग-मानि पूर्वोक्तैः सूत्रैः सिद्ध्यन्ति । लुङ्लकारे । अराजीत् अराजिषाताम् अराजिषत ॥

खन खनने । खनति खनते । खनेत् खनेत । खनतु खनताम् । अखनत् अखनत । चखान । गमां स्वरे । चख्नतुः चख्नुः । चख्ने । खन्यात् ॥ जनखनसनां क्ङिति ये आकारो वा वक्तव्यः ॥ खायात् खनिषीष्ट । खनिता खनिता । खनिष्यति खनिष्यते । अखनिष्यत् अखनिष्यत । अखा-नीत्-अखनीत् । अखनिष्ट ॥

खन खनने । अकार उभयपदार्थः । खनति । खनते । लिट्लकारे । 'अत उपधायाः' अनेन वृद्धिः । 'कुहोश्चुः' चखान । चखन् अतुस् इति जाते 'गमां स्वरे' अनेनोपधाया लोपो भवति । 'स्वरहीनं०' चख्ने । खन्यात् ॥ सूत्रम्—'जनखनसनाम्' ॥ जन खन सन एतेषां धातूनां क्ङिति यकारे परे आकारो वा वक्तव्यः । 'षष्ठीनिर्दि०' खायात् । खनिषीष्ट । खनिता । खनिता । लुङ्लकारे 'हसादेः' अनेनास्य वा वृद्धिः । अखानीत्-अखनीत् । अखनिष्ट अखनिषाताम् अखनिषत ॥

हृञ् हरणे । हरति । हरते । हरेत् हरेत । हरतु हरताम् । अहरत् अहरत । जहार जह्रतुः जह्रुः ॥ ऋदन्तस्य थपो नेट् ॥ जहर्थ । जह्रे । यादादौ । ह्रियात् ॥ उः ॥ ऋकारस्य गुणो न भवति सिस्योरनिटोः परतः ॥ हृषीष्ट । हर्ता । हनृतः स्यपः । हरिष्यति हरिष्यते । अहरिष्यत् अहरिष्यत । अहार्षीत् । लोपो ह्रस्वाज्झसे । अहृत अहृषाताम् अहृषत ॥

हृञ् हरणे । ञकार उभयपदार्थः । 'गुणः' । हरति । हरते । लिट्लकारे । 'धातोर्नामिनः' । अनेन वृद्धिः । 'कुहोश्चुः' । जहार । जह्रतुः ॥ 'ऋदन्तस्य' ऋदन्तस्य धातोस्थप इट् न भवति । 'गुणः' जहर्थ । जह्रे 'यादादौ' अनेन ऋकारस्य रिङादेशः । ह्रियात् । हृषीष्ट इति जाते । 'गुणः' अनेन गुणे प्राप्ते । सूत्रम् 'उः' अनिटोः सिस्योः परतः ऋकारस्य गुणो न भवति । अनेन गुणनिषेधः । हृसीष्ट । 'गुणः' हर्ता । 'हनृतः स्यपः' अनेन स्यपि इड् भवति । 'गुणः' हरिष्यति । हरिष्यते । लुङ्लकारे । वृद्धिः । अहार्षीत् । 'लोपो ह्रस्वाज्झसे' अनेन सेर्लोपो भवति । अहृत अहृषाताम् अहृषत ॥

गुहू संवरणे ॥ गुहेरुपधाया ऊद्गुणहेतौ स्वरे ॥ गूहति-गूहते । जुगूह ।

**जुगूहतुः । जुगूहिथ । जुगोढ । जुघुक्षे-जुगुहिषे । जुगुहिढ्वे-ध्वे, जुघूढ्वे । गूहिषीष्ट-घूक्षीष्ट । गूहिता-गोढा । गूहिष्यति-घोक्ष्यति ॥ दुह्दिह्लिह्गुहृभ्यः सको लुग्वा वकारतवर्गयोराति ॥ अगूढ-अघुक्षत ॥ आति सकोऽकारलोपः स्वरे ॥ अघुक्षाताम् अघुक्षन्त । अगूढाः-अघुक्षथाः । अघुक्षाथाम् । अघूढ्वं-अघुक्षध्वम् । अघुक्षि । अगुह्वहि अघुक्षावहि अघुक्षामहि ॥**

गुहू संवरणे । ऊकार इड्विकल्पार्थः । पूर्ववत् तिबादयस्तआदयश्च प्रत्यया भवन्ति ॥ 'गुहेः' इदं सूत्रमस्ति । गुहेर्धातोरुपधाया ऊत् स्याद् गुणहेतौ स्वरे परे । अनेनास्योपधाया ऊत् । गूहति । गूहते । अन्यानि मूले सन्ति तानि सुगमान्येवानेनैव क्रमेण साध्यानि । लिट्लकारे—जुगूह जुगूहतुः जुगूहुः । 'गुहेः' जुगूहिथ । 'ऊदितो वा' अनेनास्येड्विकल्पः । गुहेरिति सूत्रे स्वरादौ इति वक्तव्यं तेन हलादौ गुणनिमित्ते प्रत्यये परे ऊत् न भवति किंतु गुणो भवति । जुगुह् थप् इति स्थिते 'गुणः' । जुगोह् थप् इति जाते । 'हो ढः' 'तथोर्धः' 'ढिढो लोपो०' जुगोढ । आत्मनेपदे । जुगुहे जुगुहाते जुगुहिरे । 'ऊदितो वा' जुगुहिषे । इडभावे जुगुह् से इति जाते । 'हो ढः' 'आदिजबानाम्' जुघुढ् से इति जाते । 'षढोः कः से' अनेन ढस्य कः । 'किलात्०' 'कषसंयोगे क्षः' जुघुक्षे । जुगुहिषे । जुगुहिध्वे-ढ्वे, इडभावे 'हो ढः' 'तथोर्धः' 'आदिजबानां' 'ढि ढो०' जुघूढ्वे । गुह्यात् । 'गुहेः' । 'सिसता०' गूहिषीष्ट । इडभावे 'हो ढः' 'आदिजबानाम्' 'षढोः कः से' 'किलात्' कष०' घुक्षीष्ट ॥ गूहिता । इडभावे गुणः 'उपधाया लघोः' अनेन सूत्रेण भवति । 'होढः' 'तथोर्धः' 'ढिढो०' गोढा । आत्मनेपदे । गूहिता । गोढा ॥ गूहिष्यति । इडभावे । 'उपधायाः' । 'हो ढः' 'आदिजबानाम्' 'षढोः कः से' 'किलात्०' 'कषसं०' घोक्ष्यति ॥ गूहिष्यते घोक्ष्यते ॥ अगूहिष्यत् । अघोक्ष्यत् । अगूहिष्यत । अघोक्ष्यत ॥ लुङ्लकारे । अगूहीत् । इडभावे । 'हशषान्ता०' अनेन सक्प्रत्ययो भवति । अघुक्षत् । आत्मनेपदे । अगूहिष्ट । इडभावे अगुह् सक् तन् इति स्थिते । 'हो ढः' 'आदिजबानाम्' अघुढ् स् क् तन् इति जाते ॥ सूत्रम्—'दुहदिहलिहगुहभ्यः०' ॥ दुह् लिह् गुह् एभ्यो धातुभ्यः सको वा लुग् भवति वकारतवर्गयोराति आत्मनेपदे ॥ [ वर्गग्रहणात् ] धकारे परेऽपि भवति । अनेन सको वा लुक् । 'तथोर्धः' 'ढिढो लोपः' दीर्घश्च । अगूढ । लुगभावे अगूढ सक् तन् इति जाते । 'षढोः कः से' 'किलात्०' 'कषसंयोगे क्षः' अघुक्षत । अघुक्ष् आताम् इत्यत्र । 'आदाथ इः' अनेन आकारस्य इकारे प्राप्ते 'आति०' आति आत्मनेपदे सकः अकारस्य लोपो भवति स्वरे परे । अनेन अकारस्य लोपः । अघुक्षाताम् अघुक्षत । अगूढाः अघुक्षथाः अघुक्षाथाम् अघूढ्वम् अघुक्षध्वम् । अघुक्षि अगुह्वहि अघुक्षावहि अघुक्षामहि ॥

**दान आर्जवे । गुब्भ्यः । यः से । मानादीनां पूर्वस्य दीर्घो वक्तव्यः । दीदांसति दीदांसते । दीदांसेत् दीदांसेत । दीदांसतु दीदांसताम् । अदीदांसत् अदीदांसत । दीदांसांचक्रे दीदांसामास दीदांसांबभूव । दीदांस्यात् दीदांसि-**

---

१-२ 'तकारयोः' इति पाठ आसीत् तथापि चन्द्रिकायामुपलभ्यमानः 'तवर्गयोः' इति पाठः स्थापितः ।

षीष्ट । दीदांसिता २ । दीदांसिष्यति-दीदांसिष्यते । अदीदांसिष्यत्-अदीदांसिष्यत । अदीदांसीत् अदीदांसिष्ट ॥

दान आर्जवे । 'गुब्भ्यः' 'यः से' । 'मानादीनाम्' । 'स धातुः' 'नश्चापदान्ते' । दीदांसति दीदांसेत । अन्यानि मूले सन्ति । दीदांसांचकार । दीदांसांचक्रे । द्वे मूले स्तः । अस्यायतः । दीदांस्यात् । दीदांसिषीष्ट । अन्यानि मूले सन्ति तानि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति ॥

शान तेजने । शीशांसति शीशांसते । दानवत् ॥

शान तेजने । 'गुब्भ्यः' शीशांसति शीशांसते । दानवत् ॥

भज सेवायाम् । भजति भजते । भजेत् भजेत । भजतु भजताम् । अभजत् अभजत । बभाज । तृफलभज इत्येत्वपूर्वलोपौ । भेजतुः भेजुः । भेजिथ बभक्थ । भेजे भेजाते भेजिरे । भज्यात् भक्षीष्ट । भक्ता भक्ता । भक्ष्यति भक्ष्यते । अभक्ष्यत्-अभक्ष्यत । अभाक्षीत् अभाक्ताम् अभाक्षुः । अभक्त अभक्षाताम् अभक्षत ॥

भज सेवायाम् । भजति भजते । लिट्लकारे । 'अत उपधायाः' बभाज । 'तृफलभज०' अनेनैत्वपूर्वलोपौ भवतः । भेजतुः । भेजे । भेजाते । 'चोः कुः' । 'खसे०' 'षढोः कः से' 'किलात्०' 'कषसं०' भक्षीष्ट । भक्ता ॥ लुङ्लकारे । 'सावनिटः' अभाक्षीत् । 'झसात्' अभाक्ताम् । अभक्त । अभक्षाताम् ॥

डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति पचते । पचेत् । पचेत । पचतु । पचताम् । अपचत् । अपचत । पपाच पेचतुः पेचुः । पेचे । पच्यात् । पक्षीष्ट । पक्ता पक्ता । पक्ष्यति । पक्ष्यते । अपक्ष्यत् अपक्ष्यत । अपाक्षीत् । अपक्त अपक्षाताम् अपक्षत ॥

डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति पचते । लिट्लकारे । 'अत उपधायाः' पपाच । 'लोपः पचाम्०' पेचतुः । पेचे । पेचाते । पच्यात् । पच् सीष्ट इति स्थिते । 'चोः कुः' 'किलात्०' 'कषसंयोगे क्षः' पक्षीष्ट । 'चोः कुः' पक्ता । लुङ्लकारे । 'सावनिटः' अपाक्षीत् । 'झसात्' अपाक्ताम् । आत्मनेपदे । अपक्त । अपक्षाताम् ॥

अञ्चु गतौ । याचने च । आञ्चीत् ॥

व्यय गतौ । वव्यये । अव्ययीत् ॥

अञ्चु गतौ याचने च । अञ्चति । अञ्चते । लिट्लकारे । आनञ्च । आनञ्चे । 'नोलोपः' अच्यात् । अङ्क्षीष्ट । अङ्क्ता । लुङ्लकारे । आञ्चीत् । आङ्क्त ॥

श्रिञ् सेवायाम् । गुणः श्रयति श्रयते । शिश्राय शिश्रियतुः । शिश्रिये । श्रीयात् श्रयिषीष्ट । श्रयिता-श्रयिता । श्रयिष्यति-श्रयिष्यते । अश्रयिष्यत्-

**अश्रयिष्यत ॥ स्नुश्रिद्रुवां सेरङ् धातोर्द्वित्वं च ॥ अशिश्रियत्-अशिश्रियत ।**

श्रिञ् सेवायाम् । पूर्ववत् तिबादयस्तआदयश्च । 'अप् कर्तरि' 'गुणः' 'ए अय्' श्रयति । श्रयते । लिट्लकारे । 'द्विश्च' । पूर्वस्य 'धातोर्नामिनः' अनेन वृद्धिः । शिश्राय । 'नुधातोः' शिश्रियतुः—शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता । अन्यानि मूले सन्ति । लुङ्लकारे ॥ सूत्रम्—'स्नुश्रिद्रुवाम्०' ॥ स्नु श्रि द्रु एतेषां धातूनां सेरङ् प्रत्ययो भवति धातोर्द्वित्वं च भवति । अशिश्रियत् अशिश्रियत ॥

**त्विष् दीप्तौ । त्वेषति-त्वेषते । तित्वेष तित्विषे । त्विष्यात् । त्विक्षीष्ट । त्वेष्टा २ । त्वेक्ष्यति त्वेक्ष्यते । अत्वेक्ष्यत् अत्वेक्ष्यत । हशषान्तात्सक् । अत्विक्षत ॥ सस्यात्मनेपदे स्वरे टिलोपो वाच्यः ॥ अकारलोपे कृते । 'आतोऽन्तोदनतः' अत्विक्षाताम् अत्विक्षत ।**

त्विष् दीप्तौ । 'उपधाया लघोः' अनेन गुणः । त्वेषति । त्वेषते । अन्यानि सुगमानि । लिट्लकारे । 'उपधायाः' 'पूर्वस्य' । तित्वेष । तित्विषतुः । आत्मनेपदे । तित्विषे । तित्विषाते । त्विष्यात् । 'षढोः कः से' । त्विक्षीष्ट । 'उपधायाः' । 'ष्टुभिः ष्टुः' । त्वेष्टा । अन्यानि मूले सन्ति । लुङ्लकारे । 'हशषान्तात्सक्' अनेन सक् प्रत्ययो भवति । 'षढोः कः से' 'किलात्०' 'कषसंयोगे क्षः' अत्विक्षत् अत्विक्षताम् अत्विक्षन् । आत्मनेपदे । अत्विक्षत । अत्विक्ष आताम् इति जाते । 'आदाथ इः' अनेन आकारस्य इकारे प्राप्ते ॥ सूत्रम्—'सस्या०' ॥ सस्य आत्मनेपदे स्वरे परे सति टेर्लोपो वाच्यः । अनेन अकारस्य लोपः । 'स्वरहीनं०' अत्विक्षाताम् । 'आतोऽन्तोदनतः' अत्विक्षत । समाप्तोऽयं धातुः ॥

**यज देवपूजासंगतिकरणदानेषु । यजति यजते । यजेत् यजेत । यजतु यजताम् । अयजत् अयजत । 'णबादौ पूर्वस्य' इयाज । यजां यवराणां य्वृतः संप्रसारणम् । ईजतुः ईजुः । इयजिथ-इयष्ठ । ईजे । इज्यात् । यक्षीष्ट । यष्टा यष्टा । यक्ष्यति-यक्ष्यते । अयक्ष्यत् अयक्ष्यत । अयाक्षीत् अयाष्टाम् अयाक्षुः । अयष्ट अयक्षाताम् अयक्षत । अयष्ठाः अयक्षाथाम् ॥ ध्वे च सेर्लोपः ॥ षत्वम् । झबे जबाः । ष्टुत्वम् । अयड्ढ्वम् । अयक्षि अयक्ष्वहि अयक्ष्महि ।**

यज देवपूजासंगतिकरणदानेषु । यजति यजते । अन्यानि मूले सन्ति । लिट्लकारे—यज् णप् इति स्थिते । 'द्विश्च' 'णबादौ पूर्वस्य' अनेन संप्रसारणम् । 'अत उपधायाः' इयाज । य यज् अतुस् इति जाते । 'णबादौ पूर्वस्य' 'यजां यवराणाम्' 'सवर्णे' ईजतुः । ईजुः । इयजिथ । 'अत्वतो नित्यानिटः' अनेनास्य वा इड् भवति । इयज् थप् इति जाते । 'छशषराजादेः षः' अनेन जस्य षः । 'ष्टुभिः ष्टुः' इयष्ठ । आत्मनेपदे द्वाभ्यां सूत्राभ्यां संप्रसारणं भवति । ईजे ईजाते ईजिरे । 'यजाम्' इज्यात् । 'छशषराजादेः षः' । 'षढोः कः से' । 'किलात्' 'कषसंयोगे' यक्षीष्ट । 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' यष्टा । अन्यानि लिखितानि सन्ति तस्मान्न लिखितानि मया । तानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । लुङ्ल-

कारे—'सावनिटः' अनेन वृद्धिः। अयाक्षीत्। 'झसात्' अयाष्टाम्। अयाक्षुः। आत्मनेपदे। 'झसात्' अनेन सेर्लोपः। 'ष्टुभिः ष्टुः' अयष्ट अयक्षाताम्। अयक्षत। अयज् स् ध्वं इति जाते॥ 'ध्वे च सेर्लोपः' अनेन सेर्लोपः। 'छशषराजादेः षः' 'षो ढः'। अनेन षस्य ढः। ष्टुत्वम्। अयड्ढ्वम्॥

**टुवप् बीजतन्तुसन्ताने। टु इत्। वपति। वपेत्। उवाप ऊपतुः ऊपुः। उवपिथ-उवप्थ। ऊपे। उप्यात्। वप्सीष्ट। वप्ता २। वप्स्यति वप्स्यते। अवप्स्यत् अवप्स्यत। अवाप्सीत् अवप्त।**

टु वप् बीजतन्तुसन्ताने। टु इत्। वपति वपते। लिट्लकारे। 'णबादौ' अनेन संप्रसारणम्। 'अत उपधायाः' उवाप। द्वे संप्रसारणे भवतः अत्र 'सवर्णे'। ऊपतुः। 'अत्त्वतः' उवपिथ। इडभावे। उवप्थ। ऊपे ऊपाते ऊपिरे। 'यजाम्'। उप्यात्। वप्सीष्ट। वप्ता। अन्यानि मूले सन्ति। लुङ्लकारे। 'सावनिटः' अवाप्सीत्। 'झसात्' अवाप्ताम् अवाप्सुः। आत्मनेपदे। अवप्त अवप्साताम् अवप्सत॥

**वह प्रापणे। वहति वहते। उवाह ऊहतुः ऊहुः। उवहिथ। हो ढः। तथोर्धः। ष्टुत्वम्। ढलोपः। सहिवहोरोदवर्णस्य। उवोढ। उह्यात्। वक्षीष्ट। वोढा २। वक्ष्यति-वक्ष्यते। अवक्ष्यत् अवक्ष्यत। अवाक्षीत् अवोढाम्। अवोढ अवक्षताम् अवक्षत।**

वह प्रापणे। वहति वहते। लिट्लकारे। 'णबादौ पूर्वस्य'। 'अत उपधायाः' उवाह। 'यजाम्' ऊहतुः। ऊहुः। उवहिथ। 'अत्त्वतः'। उवह् थप् इति जाते। 'हो ढः' अनेन हस्य ढः। 'तथोर्धः' अनेन थस्य धः। ष्टुत्वम्। ढलोपः। 'सहिवहोरोदवर्णस्य'। उवोढ। ऊहे। ऊहाते। ऊहिरे। 'यजाम्'। उह्यात् 'हो ढः'। 'तथोर्धः'। ष्टुत्वम्। ढलोपः। 'सहिवहोरोदवर्णस्य' वोढा। 'षढोः कः से' वक्ष्यति। वक्ष्यते। अन्यानि सन्ति मूले। लुङ्लकारे 'सावनिटः'। अवाक्षीत् अवोढाम् अवाक्षुः। अवोढ अवक्षाताम् अवक्षत॥

**वेञ् तन्तुसन्ताने। वयति वयते॥ वेञो णादौ संप्रसारणाभावो वाच्यः॥ सन्ध्यक्षराणामा। ववौ। वादित्वान्नैत्वपूर्वलोपौ। ववतुः ववुः। ववे। वेञो वय् णादौ वा वक्तव्यः॥ उवाय॥**

**ग्रहां क्ङिति च॥ ग्रहादीनां संप्रसारणं स्यात् किति ङिति च परे॥ इति संप्रसारणम्। यकारस्य संप्रसारणनिषेधः। ऊयतुः ऊयुः। उवयिथ ऊयथुः। ऊये ऊयाते ऊयिरे॥**

**वयो यस्य किति णादौ वो वा वक्तव्यः॥ ऊवतुः ऊवुः। ऊवे। ऊयात्। वासीष्ट। वाता वाता। वास्यति वास्यते। अवास्यत्। अवास्यत। अवासीत्। आदन्तानाम् इति इट्सकौ अवासिष्टाम् अवास्त।**

वेञ् तन्तुसंताने। ञकार उभयपदार्थः। वयति वयते। लिट्लकारे॥ सूत्रम्—'वेञः०'॥

वेञो धातोर्णबादौ परे संप्रसारणाभावो वाच्यः । अनेनास्य संप्रसारणनिषेधो भवति । 'संध्यक्षराणामा' 'द्विश्च' 'आतो णप् डौ' ववौ । 'लोपः पचाम्' अनेनेत्वपूर्वलोपौ प्राप्तौ । 'शसूददवादि' अनेन तन्निषेधः । 'आतोऽनपि' ववतुः । ववुः । आत्मनेपदे । ववे ववाते वविरे ॥ सूत्रम्—'वेञो वय् णादौ वा वक्तव्यः' ॥ वय् णप् इति स्थिते । 'द्विश्च' 'णबादौ पूर्वस्य' । 'अत उपधायाः' । उवाय । वय् अतुस् इति स्थिते । 'णबादौ–पूर्वस्य' सूत्रम्—ग्रहां ग्रहां क्ङिति च त्रिपदं सूत्रम् । ग्रह उपादाने । ज्या वयोहानौ । वेञ् तन्तुसंताने । ह्वेञ् आह्वाने । व्यध् ताडने । वश् कान्तावभिलाषे । व्यच् व्यक्तीकरणे । प्रच्छ ज्ञीप्सायां (पृच्छायाम्) । भ्रस्ज् पाके । व्रश्च् छेदने । इत्येतेषां संबन्धिनां यकारवकाररेफाणां किति ङिति च परे संप्रसारणं भवति । यकारस्य इकारः । वकारस्य उकारः । रेफस्य ऋकारः । [ लकारस्य ऌकारः ] संप्रसारणम् । अनेन द्वितीयं संप्रसारणम् । 'यकारस्य संप्रसारण-निषेधो वाच्यः' । अत्र । ऊयतुः ऊयुः । उवयिथ । आत्मनेपदे । ऊये ऊयाते ऊयिरे ॥ सूत्रम्—'वयः०' ॥ वयो यस्य किति णादौ परे वकारो वा वक्तव्यः । तदा । उवाय ऊवतुः ऊवुः । आत्मनेपदे । ऊवे ऊवाते ऊविरे । 'ग्रहां क्ङिति च' ऊयात् । 'संध्यक्षरा-णामा' वासीष्ट । वाता । वाता । अन्यानि मूले सन्ति । लुङ्लकारे । 'आदन्तानाम्' । अवासीत् अवासिष्टाम् अवासिषुः । अवास्त । अवासाताम् । अवासत ॥

**व्येञ् संवरणे । व्ययति व्ययते ॥ व्येञो णादौ नात्वम् ॥ विव्याय विव्यतुः विव्युः ॥ अत्त्यर्तिव्ययतीनां थपो नित्यमिट् ॥ विव्ययिथ विव्ये । वीयात् व्यासीष्ट । व्याता व्याता । व्यास्यति व्यास्यते । अव्यास्यत् अव्यास्यत । अव्यासीत् । अव्यास्त ।**

व्येञ् संवरणे । व्ययति । व्ययते । लिट्लकारे ॥ सूत्रम्—'व्येञः०' ॥ व्येञो धातोर्ण-बादौ परे 'संध्यक्षराणामा' अनेन सूत्रेण आत्वं न भवति । व्येञ् णप् इति स्थिते । 'द्विश्च' 'णबादौ पूर्वस्य' अनेन संप्रसारणं तदा । विव्ये णप् इति जाते । 'धातोर्नामिनः' । विव्याय विव्यतुः विव्युः । 'अत्त्यर्ति०' विव्ययिथ । विव्ये । वीयात् । 'संध्यक्षराणामा' व्यासीष्ट । व्याता । व्याता । अन्यानि मूले सन्ति । अव्यासीत् । अव्यास्त ॥

**ह्वेञ् स्पर्धायाम् । ह्वयति ह्वयते ॥ अद्विरुक्तस्य ह्वयतेः संप्रसारणं वक्तव्यम् ॥ जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोऽथ । जुहुवे जुहुवाते जुहुविरे । हुयात् । ह्वासीष्ट । ह्वाता ह्वाता । ह्वास्यति ह्वास्यते । अह्वास्यत् अह्वास्यत ॥ अस्यतिवक्तिख्यातिलिपिसिचिह्वयतीनां सेर्ङो वा वाच्यः ॥ अह्वत अह्वेताम् अह्वन्त । अह्वास्त अह्वासाताम् अह्वासत ।**

ह्वेञ् स्पर्धायाम् । ह्वयति । ह्वयते । लिट्लकारे ॥ सूत्रम्—'अद्विरुक्तस्य०' ॥ अद्विरुक्तस्य ह्वयतेर्धातोः संप्रसारणं वक्तव्यम् । 'द्विश्च' 'धातोर्नामिनः' जुहाव जुहुवतुः जुहुवुः । जुह-विथ-जुहोथ । जुहुवे जुहुवाते जुहुविरे । संप्रसारणम् । हूयात् । ह्वासीष्ट । अन्यानि मूले सन्ति लुङ्लकारे । अह्वासीत् । सूत्रम्—'अस्यतिवक्तिख्याति०' ॥ अस्यति वक्ति ख्याति

लिपि सिचि ह्वयति एतेषां धातूनां सेर्ङो वा वाच्यः । 'आतोऽनपि' अह्वत् । अह्वत अह्वेताम् अह्वन्त । अह्वास्त ॥

ऋत जुगुप्सायां कृपायां च । ऋतेरीयङ् स्वार्थेऽनपि तु वा ॥ ऋतीयते । ऋतीयांचक्रे । आनर्त । ऋतीयिष्यते । आर्तीत् । आर्तीयिष्ट ॥

॥ इति भ्वादिषूभयपदिप्रक्रिया ॥ ३ ॥ इत्यब्विकरणा भ्वादयो धातवः ॥

ऋत जुगुप्सायां कृपायां च ॥ सूत्रम्—'ऋतेः०' ॥ 'ऋतेर्धातोरीयङ्प्रत्ययो भवति स्वार्थे । अनपि तु वा भवति । ऋतीयते । ऋतीयांचक्रे । ईयङभावे । आनर्त । ऋतीयिष्यते । आर्तीत् । आर्तीयिष्ट ॥ इति भ्वादिगणस्योभयपदिनः समाप्ताः ॥ इत्यब्विकरणा भ्वादयो धातवः ॥

---

## अदादिषु परस्मैपदिनः ४

इदानीं लुग्विकरणाददादेर्गणात्कर्तरि तिबादयो वर्ण्यन्ते ॥ अद् भक्षणे ॥ अप्कर्तरि—अदादेर्लुक् ॥ अदादेर्गणादुत्पन्नस्यापो लुग्भवति । खसे चपा झसानां । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । अद्यात् । अत्तु-अत्ताद्वा अत्ताम् अदन्तु ॥ झसाद्धिर्हेः ॥ झसादुत्तरस्य हेर्धिर्भवति । अद्धि-अत्ताद्वा अत्तम् अत्त । अदानि अदाव अदाम ॥ अदो दिस्योरडागमो वक्तव्यः ॥ आदत् आदः ॥ जघास । गमां स्वरे । खसे चपा० । घसादेः षः क्षः । जक्षतुः जक्षुः । जघसिथ । पक्षे-आद आदतुः आदुः । आदिथ । अद्यात् । अत्ता । अत्स्यति । आत्स्यत् ॥ स्सिसयोरदेर्घस्लृ लिटि तु वा ॥ लृदित्त्वादङ् । अघसत् अघसताम् अघसन् ॥

इदानीं लुग्विकरणाददादेर्गणात् कर्तरि तिबादयो योज्यन्ते । अद् भक्षणे । पूर्ववत् तिबादयः । 'अप्कर्तरि' । सूत्रम्—'अदादेर्लुक्' ॥ अदादेः लुक् द्विपदं० । अदादेर्धातुगणादुत्पन्नो योऽप्प्रत्ययः तस्य लुग्भवति । अनेन सर्वत्राऽपि लुक् । तत्र वर्तमाने तिप् तस् अन्ति सिप् थस् इत्येतेषु । 'खसे चपा०' इति दस्य तकारः । अत्ति अत्तः अदन्ति । अद्यात् । अत्तु अत्तात् अत्ताम् अदन्तु । अद् हि इति स्थिते । सूत्रम्—'झसाद्धिर्हेः' ॥ झसात् धिः हेः । झसादुत्तरस्य हि इति वचनस्य धिरित्यादेशो भवति । तातङादेशे कृते तु न भवति । 'स्वर०' अद्धि अत्तात् अत्तम् अत्त । उत्तमपुरुषे सर्वत्र । 'स्वर०' अदानि अदाव अदाम । अनद्यतनेऽप् । प्रत्ययलुकि कृते । 'दिबादावट्' 'स्वरादेः' इत्यडागमद्वये च कृते उभयत्रापि 'सवर्णे०' ॥ सूत्रम्—'अदो दिस्योः०' ॥ अदो धातोः परयोर्दिप् सिप् इत्येतयोः अमागमो भवति । अनेनामागमः टित्त्वादादौ । 'स्वर०' 'वावसाने०' आदत् । तकारादौ । 'खसे०' आत्ताम् आदन् । आदः आत्तम् आत्त । आदम् आद्व आद्म । अद् णप् इति स्थिते । सूत्रम्—'स्सिसयोः' ॥ स्सिसयोः परतः अदधातोर्घस्लृ इत्यादेशो भवति णबादौ वा भवति । लकारः लृदित्कार्यार्थः । घस् णप् इति स्थिते । 'द्विश्च' 'कुहोश्चुः' । 'झपानां जब-

चपाः'। 'अत उपधायाः' जघास। जघस् अतुस् इति स्थिते। 'गमां स्वरे' अनेनोपधाया लोपः। 'खसे०' अनेन घस्य कः। 'घसादेः षः'। अनेन षत्वम्। 'क्षसंयोगे०' जक्षतुः। जक्षुः। जघसिथ। पक्षे। आद आदतुः आदुः। अद्यात्। 'खसे०' अत्ता। अन्यानि सन्ति मूले। लुङ्लकारे। 'सिसयोः' 'लृदित्त्वादङ्'। अघसत् अघसताम् अघसन्॥

**प्सा भक्षणे। प्साति प्सातः प्सान्ति। प्सायात् प्सायाताम् प्सायुः। प्सातु-प्साताद्वा प्साताम् प्सान्तु। अप्सात् अप्साताम्॥ आदन्तविद्द्विषामन उस् वा वक्तव्यः॥ उस्यालोपः अप्सुः अप्सान्। पप्सौ पप्सतुः पप्सुः। पप्सिथ-पप्साथ। प्सेयात् प्सायात्। प्साता। प्सास्यति। अप्सास्यत्। आदन्तानाम् इतीट्सकौ। अप्सासीत् अप्सासिष्टाम्॥**

प्सा भक्षणे। प्साति प्सातः प्सान्ति। अन्यानि मूले सन्ति तानि सुगमान्येव। लुङ्लकारे। अप्सात् अप्साताम्। आप्सा अन् इति स्थिते॥ सूत्रम्—'आदन्तविद्द्विषाम्०'॥ आदन्तः विद् द्विष् एतेषां धातूनां अन उस् वा वक्तव्यः। 'उस्यालोपः'। अप्सुः। अप्सात्। 'द्विश्च' 'पूर्वस्य' 'हसादिः' 'अतो णप् डौ' पप्सौ। पप्सतुः। 'अस्त्वतः' पप्सिथ। पप्साथ। 'संयोगादेः०' प्सेयात् प्सायात्। लुङ्लकारे प्साता। 'आदन्तानाम्' अप्सासीत्॥

**मा माने। माति। मायात्। मातु। अमात् अमाताम् अमुः। अमान्। ममौ। दादेरे। मेयात्। माता। मास्यति। अमास्यत्। अमासीत्॥**

मा माने। माति। लिट्लकारे। ममौ। 'दादेरे' मेयात्। माता। 'आदन्तानाम्' अमासीत्। अमासिष्ट अमासिष्टाम् अमासिषुः। समाप्तोयम्॥

**या प्रापणे। याति। यायात्। यातु। अयात् अयाताम् अयुः। अयान्। ययौ। यायात्। याता। यास्यति। अयास्यत् अयासीत्॥**

या प्रापणे। याति। ययौ। अयासीत्॥

**वा गतिगन्धनयोः। वाति। यातिवत्॥**

वा गतिगन्धनयोः। वाति। अयं धातुर्यातिवत् ज्ञेयः। न कश्चित् विशेषः॥

**रा दाने। तद्वत्॥**

रा दाने। राति। अयमपि तद्वत्॥

**ला दानग्रहणयोः। लाति। ललौ। तद्वत्॥**

ला दानग्रहणयोः। लाति। ललौ। अलासीत्॥

**द्रा कुत्सायां गतौ च। द्राति। दद्रौ। द्रायात् द्रेयात्। द्राता। द्रास्यति। अद्रास्यत्। अद्रासीत्॥**

द्रा कुत्सायां गतौ च। द्राति। 'रः' दद्रौ। 'संयोगादेः' द्रायात। द्रेयात्। अद्रासीत्॥

ख्या प्रकथने । ख्याति । ख्यायात् । ख्यातु । अख्यात् । चख्यौ । ख्यात् ख्येयात् । ख्याता । ख्यास्यति । अख्यास्यत् । पुषादित्वात् ङः । आतोऽनपि अख्यत् ॥

ख्या प्रकथने । ख्याति । 'कुहोश्चुः' 'झपानाम्' चख्यौ । 'संयोगादेः' ख्यायात् । ख्येयात् । अस्य धातोर्लुङ्लकारे । पुषादित्वात् 'लित्पुषादेर्ङः' । 'आतोऽनपि' अनेनाकारस्य लोपः । अख्यत् अख्यताम् अख्यन् ॥

पा रक्षणे । पाति । पायात् । पातु । अपात् । पपौ । पाता । पास्यति । अपास्यत् । अपासीत् ॥ भा दीप्तौ । भाति । बभौ । अभासीत् ॥ ष्णा शौचे । स्नाति सस्नौ । स्नायात् स्नेयात् । अस्नासीत् ॥

भा दीप्तौ । भाति । 'झपानां०' । बभौ । अभासीत् अभासिष्टाम् अभासिषुः । सुगमत्वात् एतेषां धातूनां व्याख्यानं न कृतम् ॥

वश कान्तौ । 'छशषराजादेः षः' इति षत्वम् । ष्टुत्वम् । वष्टि । ग्रहां क्क्ति च । उष्टः उशन्ति । षत्वम् । षढोः कः से । क्षः । वक्षि उष्टः उष्ट । वश्मि उश्वः उश्मः । उश्यात् उश्याताम् उश्युः । वष्टु उष्टात् उष्टाम् उशन्तु । झसाद्धिर्हेः । झबे जबाः । ष्टुत्वम् । उड्ढि उष्टात् उष्टम् उष्ट । वशानि वशाव वशाम ॥ दिस्योर्हसात् ॥ हसादुत्तरयोर्दिप्सिपोर्लोपो भवति ॥ षत्वम् । षो डः । बावसाने । अवट् अवड् । संप्रसारणम् । अडागमः । उ ओ । ओ औ औ । औष्टाम् औशन् । अवट्-अवड् औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश ऊशिव ऊशिम । उश्यात् उश्यास्ताम् उश्यासुः । वशिता । वशिष्यति । अवशिष्यत् । अवाशीत् ॥

वश कान्तौ । कान्तिरिच्छा । पूर्ववत् तिबादयः । 'अदादेर्लुक्' अनेन सर्वत्र अपो लुग् भवति । वश् तिप् इति जाते 'छशष०' अनेन शस्य षः । 'ष्टुभिः ष्टुः' । अनेन तस्य टः । वष्टि । वश् तस् इति जाते । 'ग्रहां क्क्ति च' अनेन संप्रसारणम् । 'छशष०' ष्टुत्वम् । उष्टः । उशन्ति । वश् सिप् इति स्थिते । 'छशष०' 'षढोः कः से' । 'किलात्०' । 'कषसंयोगे क्षः' वक्षि । उश्यात् । लोट्लकारे । वष्टु । वश् हि इति जाते । संप्रसारणम् । 'झसाद्धिर्हेः' शस्य षत्वम् । 'षो डः' । उड्ढि । उष्टात् । वशानि वशाव वशाम । वश् दिप् इति स्थिते । षत्वम् । वष् दिप् इति जाते । 'षो डः' ॥ सूत्रम्—'दिस्योर्हसाम्' ॥ दिश्च सिश्च दिसि तयोः दिस्योः हसात् । हसादुत्तरौ यौ दिप्सिपौ तयोर्लोपो भवति । अनेनास्य वशो धातोर्दिस्योर्लोपो भवति । 'वावसाने' अनेन डस्य टः । अवट् अवड् । वश् ताम् इति स्थिते । 'ग्रहां क्क्ति च' । अनेन संप्रसारणम् । षत्वम् । ष्टुत्वम् । अडागमः । 'इयं०' । 'उ ओ' । 'ओ औ औ' । औष्टाम् । औशन् । अन्यानि मूले सन्ति । वश् णप् इति स्थिते । 'द्विश्च' 'णबादौ पूर्वस्य' 'अत उपधायाः' । उवाश 'ग्रहां क्किति' अनेन द्वितीयं संप्रसारणम् ।

ऊशतुः । ऊशुः । उवशिथ—संप्रसारणम् । उश्यात् । लुङ्लकारे—'हसादेः' अनेन वा वृद्धिः । अवाशीत्—अवशीत् ॥

हन् हिंसागत्योः । हन्ति ॥ लोपस्त्वनुदात्ततनाम् ॥ अनुदात्तानां तनादीनां च ञमस्य लोपो भवति किति ङिति झसे परे ॥ तुशब्दात्कचिदझसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपः ॥

रमिर्यमिनमी हन्तिरनुदात्ता गमिर्मनिः ।
तनुः क्षणु क्षिणु ऋणुकृणू वनुर्वमुस्तनादयः ॥

हतः । 'गमां स्वरे' 'हनो घ्ने' घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः । हन्यात् हन्याताम् हन्युः । हन्तु-हताद्वा हताम् घ्नन्तु ॥ जह्येधिशाधि ॥ हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः शास्तेः शाधिशब्दो निपात्यते हिविषये । जहि-हताद्वा हतम् हत । हनानि हनाव हनाम ॥ अहन् अहताम् अघ्नन् । अहन् अहतम् अहत । अहनम् अहन्व अहन्म ॥ हनो घ्ने । वृद्धिः जघान जघ्नतुः जघ्नुः ॥ द्विरुक्तस्य हन्तेस्थपि घत्वं वाच्यम् ॥ जघनिथ-जघन्थ जघ्नथुः जघ्न । जघान-जघन जघ्निव जघ्निम ॥ हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः ॥ वध्यात् वध्यास्ताम् वध्यासुः ॥ हन्ता हन्तारौ हन्तारः ॥ हनृतः स्यपः । हनिष्यति हनिष्यतः हनिष्यन्ति । अहनिष्यत् अहनिष्यताम् अहनिष्यन् ॥ जनिवध्योर्न वृद्धिः ॥ वधादेशे कृते इट् । अवधीत् अवधिष्टाम् अवधिषुः । अवधीः अवधिष्टम् अवधिष्ट ॥

हन् हिंसागत्योः । पूर्वं तिबादयः । 'नश्चापदान्ते झसे' । अनेन नस्यानुस्वारः । 'ञमा यपेस्य' हन्ति । तस् इति स्थिते ॥ सूत्रम्—'लोपस्त्वनुदात्ततनाम्' ॥ लोपः अनुदात्तश्च तनश्च अनुदात्ततनः । तेषामनुदात्ततनाम् । अनुदात्तानां धातुपाठोक्तानामनिटां हन्गम्नम्म-न्यत्यादीनां तथा तनादीनां तन्मन्वन्षण्क्षिण् क्षण्पृण्ऋण्इत्यादीनां धातूनां ञमस्य लोपो भवति किति ङिति च झसे परे । तुशब्दात्कचिदझसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपो भवति । अनेन नकारस्य लोपः । हतः । हन् अन्ति इति स्थिते । 'अप् कर्तरि' । 'अदादेर्लुक्' । अनेनापो लुग्भवति । हन् अन्ति इति जाते । 'गमां स्वरे' अनेनोपधाया लोपः । हन् अन्ति इति जाते । 'हनो घ्ने' अनेन हस्य घः । 'स्वरहीनम्०' । घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः ॥ हन्यात् हन्याताम् हन्युः ॥ लोट्लकारे । हन्तु । 'तुह्योः' । हतात् । हताम् । 'गमां स्वरे' । 'हनो घ्ने' । 'स्वरहीनं०' । घ्नन्तु । हन् हि इति स्थिते ॥ सूत्रम्—'जह्येधि-शाधि' ॥ जहिश्च एहिश्च शाधिश्च जह्येधिशाधि हविषये हन इत्यस्य जहि, अस् इत्यस्य एधि, शास् इत्यस्य शाधि, एते आदेशा भवन्ति । हिसहितानामेतेषां धातूनां निपाता

भवन्तीति ज्ञातव्यम् । अनेन हिसहितस्य हन्तेर्धातोरयमादेशः । जहि हतात् हतम् हत । हनानि हनाव हनाम । हन् दिप् इति स्थिते । 'दिस्योर्हसात्' अनेन दिपो लोपो भवति । 'दिबादावट्' । अनेनाडागमः । अहन् । 'लोपस्त्वनुदात्ततनाम्' अनेन नस्य लोपः । अहताम् । 'गमां स्वरे' 'हनो घ्ने' अघ्नन् । अहन् अहतं अहत । अहनं अहन्व अहन्म । हन् णप् इति स्थिते । 'द्विश्च' 'पूर्वस्य' 'हसादिः' 'कुहोश्चुः' । 'हनो घ्ने' । 'अत उपधायाः' । अनेन वृद्धिः । जघान । हन् अतुस् इति स्थिते । 'गमां स्वरे' । 'हनो घ्ने' । जघ्नतुः जघ्नुः । हन् थस् इति स्थिते । 'द्विश्च' ॥ सूत्रम्—'द्विरुक्तस्य०' द्विरुक्तस्य हन्तेर्धातोस्थपि घत्वं वाच्यम् । अनेन घत्वम् । 'क्रादेः' । जघनिथ । 'अत्त्वतः' । 'नश्चापदान्ते' । जघन्थ । जघ्ने । अन्यानि मूले सन्ति ॥ हन् यात् इति स्थिते । सूत्रम्—'हन्तेः०' ॥ हन्तेर्धातोः स्याशीर्यादादौ परे सति वधादेशो वक्तव्यः । अनेन वधादेशः । 'यतः' । वध्यात् वध्यास्ताम् वध्यासुः । लुट्लकारे । 'नश्चापदान्ते' हन्ता हन्तारौ हन्तारः । 'हनृतः स्यपः' अनेन स्यपि इट् भवति । हनिष्यति । अहनिष्यत् । हन् दिप् इति स्थिते । 'भूते सिः' हन् सि दिप् इति जाते । 'हन्तेः' अनेन वधादेशः । तदा वध् सि दिप् इति जाते । 'यतः' । 'सिसतासीस्यपाम्' । 'सेः' । 'णित्पे' । अनेन सेर्णित्त्वात् वृद्धौ प्राप्तायाम् ॥ सूत्रम्—'जनिवध्योः०' जनिवध्योर्धात्वोर्वृद्धिर्न भवति । अनेन वृद्धिनिषेधः । 'इट ईटि' । अवधीत् अवधिष्टाम् अवधिषुः ॥

**यु मिश्रणे । ओरौ ॥ उकारस्याद्विरुक्तस्य औकारादेशो भवति पिति त्सि अबादौ विषये ॥ यौति युतः । नु धातोः । युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयात् । यौतु-युताद्वा युताम् युवन्तु । युहि-युताद्वा युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम ॥ धातोर्नामिनः । युयाव । नानप्योर्वः । युयुवतुः युयुवुः । युयविथ युयुवथुः । यूयात् । गुणः । यविता । यविष्यति । अयविष्यत् । अयावीत् अयाविष्टाम् अयाविषुः ॥**

यु मिश्रणे । पूर्ववत्तिबादयः । 'अदादेर्लुक्' अनेन लुग् भवति । यु तिप् इति स्थिते ॥ सूत्रम्—'ओरौ' ॥ ओः औ । अद्विरुक्तस्य उकारस्य औकारादेशो भवति पिति त्सि परे अबादौ विषये । अनेनोकारस्यौकारः । यौति युतः । 'नुधातोः' । युवन्ति । युयात् । यौतु-युतात् युताम् युवन्तु । युहि युतात् युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम । यु णप् इति स्थिते । 'द्विश्च' 'धातोर्नामिनः' अनेन वृद्धिः । युयाव । यु अतुस् इति स्थिते । 'द्विश्च' 'नुधातोः' 'नानप्योर्वः' युयुवतुः । युयुवुः । युयविथ । 'ये' यूयात् । 'गुणः' 'सिसतासीस्यपाम्' 'ओ अव्' यविता । लुङ्लकारे । 'णित्पे' 'धातोर्नामिनः' । अयावीत् अयाविष्टाम् अयाविषुः ॥

**तु गतिवृद्धिहिंसासु ॥ तुरुनुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा ॥ तौति-तवीति तुतः-तुवीतः तुवन्ति । तौषि तवीषि तुथः-तुवीथः**

**तुथ तुवीथ । तौमि-तवीमि ॥ तुयात्-तुवीयात् । तौतु-तवीतु तुतात्-तुवीतात् तुताम्-तुवीताम् तुवन्तु । तुहि-तुवीहि ॥ अतौत्-अतवीत् । तुताव । तोता । तोष्यति । अतोष्यत् । अतौषीत् ॥**

तु गतिवृद्धिहिंसादिषु । पूर्ववत्तिबादयः । 'अदादेर्लुक्' 'ओरौ' तौति ॥ सूत्रम्—'तुरुनुस्तुभ्यः०' ॥ तु गतिवृद्धिहिंसासु । रु शब्दे । णु स्तुतौ । ष्टुञ् स्तुतौ । अद्विरुक्तेभ्य एभ्यो हसादीनां चतुर्णां ईड् वा भवति । 'गुणः' 'ओ अव्' । तवीति तुतः । 'नुधातोः' तुवीतः तुवन्ति । लिङ्लकारे—तुयात् तुवीयात् । तुयाताम् तुवीयाताम् । तुयुः तुवीयुः । लोट्लकारे—तौतु तवीतु । तुतात् तुवीतात् । तुताम् तुवीताम् । तुवन्तु । तुहि तुवीहि । तुतात् तुवीतात् । तुतम् तुवीतम् । तुत तुवीत । तवानि तवाव तवाम । लङ्लकारे—अतौत् अतुवीत् । अतुताम् अतुवीताम् । अतुवन् । अतौः अतवीः । अतुतम् अतुवीतम् । अतुत अतुवीत । अतवम् अतुव-अतुवीव । अतुम अतुवीम । लिट्लकारे—'द्विश्च' 'धातोर्नामिनः' अनेन वृद्धिः । तुताव । तुतु अतुस् इति जाते । 'नु धातोः' 'नानप्योर्वः' आभ्यामुव् भवति । तुतुवतुः तुतुवुः । 'स्वरान्तान्नि०' तुतोथ तुतविथ । 'ये' तूयात् । तोता । लुङ्लकारे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अतौषीत् अतौष्टाम् अतौषुः । अतौषीः अतौष्टम् अतौष्ट । अतौषम् अतौष्व अतौष्म ॥

**रु शब्दे । रौति-रवीति रुतः रुवीतः रुवन्ति । रौषि-रवीषि । रुयात् रुवीयात् । रौतु-रवीतु रुतात्-रुवीतात् । अरौत्-अरवीत् अरुताम्-अरुवीताम् अरुवन् । अरौः-अरवीः । रुराव रुरुवतुः रुरुवुः । रुरविथ । रूयात् । रोता । रोष्यति । अरोष्यत् । अरौषीत् ॥**

रु शब्दे । पूर्ववत्तिबादयः । 'अदादेर्लुक्' अनेन तिबादिचतुर्षु लकारेषु अपो लुग् भवति । अस्य धातोरपि रूपाणि तुधातुवत् ज्ञेयानि । 'तुरुनुस्तुभ्यः०' अनेन सूत्रेण हसादीनां प्रत्ययानां वा ईड् भवत्यस्य । 'ओरौ' अनेन अबादौ विषये पितिद्धि परे ओकारस्य औकारः । रौति रवीति । रुयात् रुवीयात् । रौतु रवीतु । अरौत्-अरवीत् । लिट्लकारे । 'धातोर्नामिनः' अनेन प्रथमपुरुषस्यैकवचने वृद्धिः । रुराव । 'नुधातोः' रुरुवतुः । 'गुणः' रुरविथ । 'ये' अनेन पूर्वस्य दीर्घः । रूयात् । 'गुणः' रोता । लुङ्लकारे । 'अनिटो नामिवतः' अनेन वृद्धिः । अरौषीत् अरौष्टाम् अरौषुः ॥

**दु गतौ । भौवादिकः । दवति । दवेत् । दवतु । अदवत् । दुदाव । दूयात् । दोता । दोष्यति । अदोष्यत् । अदौषीत् अदौष्टाम् अदौषुः ॥**

दु गतौ । अयं धातुर्भ्वादिकः । तेन 'अप् कर्तरि' अनेनाप्प्रत्ययो भवति । तस्य 'अदादेर्लुक्' अनेन सूत्रेण लुग् न भवति भ्वादित्वात् । 'गुणः' दवति । अन्यानि मूले सन्ति तानि सुगमान्येवातो व्याख्यानस्यानावश्यकत्वम् । लिट्लकारे । 'धातोर्नामिनः' अनेन

१ 'रु-णु' धात्वोरनिटत्वं प्रामादिकं प्रागुपदर्शिताखिलनिट्कारिकासु सेट्त्वस्यैव निर्णीतत्वेन पूर्वापरविरोधात्। तस्मात् 'यु' धातोरिव रूपाणि साधनीयानि ॥

वृद्धिर्णित्प्रत्यये परे । दुदाव । 'नुधातोः' दुदुवतुः । 'गुणः' दुदविथ दुदोथ । 'ये' अनेन दीर्घः । दूयात् । 'गुणः' दोता । लुङ्लकारे—'अनिटो नामिवतः', अनेन वृद्धिः । अदौषीत् अदौष्टाम् अदौषुः ॥

**णु स्तुतौ । आदेः ष्णः स्नः । नौति-नवीति नुतः—नुवीतः नुवन्ति । नुनाव । नूयात् । नोता । नोष्यति । अनोष्यत् । अनौषीत् ॥**

णु स्तुतौ । 'आदेः ष्णः स्नः' अनेन णस्य नः । 'अप् कर्तरि' 'अदादेर्लुक्' अनेन तस्यापो लुग् भवति । 'ओरौ' अनेनोकारस्यौकारः । 'तुरुस्तुभ्यः' अनेनास्य ईड् भवति वा तदा 'गुणः' अनेन गुण एव । अस्यापि धातो रूपाणि नुधातुवत् ज्ञातव्यानि । नौति नवीति । लिट्लकारे । नुनाव नुनुवतुः नुनुवुः । 'ये' अनेन दीर्घः । नूयात् । 'गुणः' । लुङ्लकारे । 'अनिटो नामिवतः' । अनौषीत् ॥

**टुक्षु शब्दे । टु इत् । क्षौति क्षुतः क्षुवन्ति । क्षुयात् । क्षौतु । अक्षौत् । चुक्षाव चुक्षुवतुः चुक्षुवुः । क्षूयात् । क्षविता । क्षविष्यति । अक्षविष्यत् अक्षावीत् ॥**

टुक्षु शब्दे । टु इत् । 'अप् कर्तरि' 'अदादेर्लुक्' 'ओरौ' । क्षौति । क्षुतः । लिट्लकारे । 'द्विश्च' पूर्वस्य । 'कुहोश्चुः' । 'धातोर्नामिनः' । चुक्षाव । 'नु धातो' चुक्षुवतुः । 'ये' अनेन पूर्वस्य दीर्घः । क्षूयात् । 'सिसता०' 'गुणः' 'ओ अव्' क्षविता । अन्यानि मूले सन्ति । लुङ्लकारे । 'णित्पे' अनेन सेर्णित्त्वात् वृद्धिः । अक्षावीत् ॥

**क्ष्णु तेजने । क्ष्णौति क्ष्णुतः क्ष्णुवन्ति । क्ष्णुयात् । क्ष्णौतु । अक्ष्णौत् । चुक्ष्णाव । क्ष्णूयात् । क्ष्णविता । क्ष्णविष्यति । अक्ष्णविष्यत् । अक्ष्णावीत् ॥**

क्ष्णु तेजने । अयमपि क्षुधातुवत् ज्ञातव्यः । क्ष्णौति । लिट्लकारे—'द्विश्च' पूर्वस्य 'कुहोश्चुः' 'धातोर्नामिनः' अनेन वृद्धिः । चुक्ष्णाव 'नुधातोः' चुक्ष्णुवतुः । 'गुणः' चुक्ष्णुविथ । 'ये' क्ष्णूयात् । 'गुणः' 'सिसता०' क्ष्णवीयात् । लुङ्लकारे । 'धातोर्नामिनः' अनेन वृद्धिः । अक्ष्णावीत् अक्ष्णाविष्टाम् अक्ष्णाविषुः ॥

**ष्णु प्रस्रवणे । स्नौति । स्नुयात् । स्नौतु । अस्नौत् । सुस्नाव । स्नूयात् । स्नविता स्नविष्यति । अस्नविष्यत् । अस्नावीत् ॥**

ष्णु प्रस्रवणे । 'आदेः ष्णः स्नः' अनेन षस्य सः । पूर्ववत् तिबादयः । 'अदादेर्लुक्' 'ओरौ' अनेन उकारस्यौकारः । स्नौति । लिट्लकारे । सुस्नाव । 'नुधातोः' सुस्नुवतुः । 'गुणः' सुस्नविथ । 'ये' स्नूयात् । 'गुणः' 'सिसता०' । 'ओ अव्' स्नविता । लुङ्लकारे । अस्नावीत् ॥

**इण् गतौ । गुणः । एति । इतः ॥ इणः क्ङिति स्वरे यो वक्तव्यः ॥ यन्ति । एषि इथः इथ । एमि इवः इमः । इयात् इयाताम् इयुः । एतु-इताद्वा इताम् यन्तु । इहि-इताद्वा इतम् इत । अयानि अयाव अयाम । अडागमद्वयम् । ऐत् ऐताम् आयन् । ऐः ऐतम् ऐत । आयम् ऐव ऐम । द्वित्वम्**

**वृद्धिः । पूर्वस्य इयादेशः । इयाय ॥ इणः किति णादौ पूर्वस्य दीर्घो वक्तव्यः ॥ ईयतुः ईयुः । इययिथ-इयेथ ईयथुः ईय । इयाय-इयय ईयिव ईयिम । ये । ईयात् ईयास्ताम् ईयासुः । एता । एष्यति । ऐष्यत् । दादेः पे । इणिकोः सिलोपे गा वक्तव्यः ॥ अगात् अगाताम् अगुः ॥**

इण् गतौ । णकार इण् इति सूत्रस्य विशेषणार्थः । पूर्ववत् तिबादयः । 'अदादेर्लुक्' 'गुणः' एति इतः । इ अन्ति इति स्थिते ॥ सूत्रम्—'इणः०' ॥ इणो धातोः क्ङिति स्वरे परे सति यकारो वक्तव्यः । अनेनेकारस्य यकारः । 'स्वरहीनम्०' यन्ति । एषि । अस्मिन् रूपे 'किलात्०' अनेन षत्वं भवति । इथः इथ । एमि इवः इमः । इयात् । एतु । इहि । 'गुणः' अयानि । लङ्लकारे—'गुणः' अडागमद्वयं भवति । 'एऐऐ' पुनः । 'एऐऐ' ऐत् । 'अइए' । 'एऐऐ' ऐताम् । अडागमद्वयम् 'सवर्णे०' 'इणः०' । आयन् । ऐः ऐतम् ऐत । आयम् । इत्यत्र गुणो भवति । इ णप् इति स्थिते । 'द्विश्च' धातोर्नामिनः' । 'सवर्णे' अनेन पूर्वस्य इय् । 'स्वरहीनं०' इयाय । इ इ अतुस् इति जाते । 'नुधातोः' इय् अतुस् इति जाते ॥ सूत्रम्—'इणः०' ॥ इणो धातोः किति णादौ परे पूर्वस्य दीर्घो वक्तव्यः । अनेन इकारस्य दीर्घः [ विधानसामर्थ्याद् 'ह्रस्वः' इति पूर्वस्य ह्रस्वो न भवति । 'सवर्णे०' ] ईयतुः ईयुः । 'गुणः' 'सवर्णे' 'ए अय्' 'क्रादेर्णादेः' । इययिथ । 'अस्वतः' । इयेथ ईयथुः ईय । इयाय । 'णबुत्तमः' । 'गुणः' इयय ईयिव ईयिम । 'ये' अनेन पूर्वस्य दीर्घः । ईयात् । 'गुणः' एता । अन्यानि मूले सन्ति । लङ्लकारे—अडागमद्वयम् । ऐष्यत् । लुङ्लकारे—इ सि दिप् इति जाते । 'दादेः पे' । अनेन सेर्लोपो भवति । इ दिप् इति जाते ॥ सूत्रम्—'इणिकोः०'॥ इणिकोर्धात्वोः सिलोपे कृते सति गा इत्यादेशो वक्तव्यः । गुरुत्वात्सर्वस्यादेशः । 'दिबादावट्' अगात् अगाताम् अगुः । अस्मिन् रूपे । 'आतोऽनपि' अनेनाकारस्य लोपो भवति । अगाः अगातम् अगात । अगाम् अगाव अगाम ॥

**इक् स्मरणे । इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति अधीतः । अधियन्ति । अधीयात् । अध्येतु । अध्यैत् । अध्यैताम् अध्यायन् । अधीयाय । अधीयात् । अध्येता । अध्येष्यति । अध्यैष्यत् । अध्यगात् । इणवत् ॥**

इक् स्मरणे । ककार 'इणिकोः' इति सूत्रस्य विशेषणार्थः । अधिपूर्वोयं नित्यम् । इङिकौ धातू अध्युपसर्गतो न व्यभिचरतः । 'गुणः' 'इयं स्वरे' अध्येति । 'सवर्णे दीर्घः' अधीतः अधियन्ति । 'इण्वदिक इति वक्तव्यम्' । अनेन इणो यानि कार्याणि भवन्ति तानि कार्याणि इकोऽपि भवन्ति । लिट्लकारे—अधीयाय । अधीयतुः । अध्येता । 'गुणः' अध्येष्यति । लुङ्लकारे 'दादेः पे' 'इणिकोः' अध्यगात् । अध्यगाताम् । 'आतोऽनपि' । अध्यगुः ॥

**विद् ज्ञाने । उपधाया लघोः । वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः ॥ विदो नवानां त्यादीनां णबादिर्वा ॥ विद उत्तरेषां तिबादीनां नवानां णबादिर्नवको वा भवति । वेद विदतुः विदुः । वेत्थ**

**विदथुः विद । वेद विद्व विद्म । विद्यात् । वेत्तु-वित्ताद्वा वित्ताम् विदन्तु । झसाद्धिर्हेः विद्धि-वित्ताद्वा वित्तम् वित्त । वेदानि वेदाव वेदाम । दिस्योर्हे-सात् । अवेत् अवेद् अवित्ताम् । अन उस् वा । अविदन्-अविदुः ॥ दः सः ॥ दकारस्य वा सकारो भवति सिविषये ॥ अवेः-अवेत् अवित्तम् अवित्त । अवेदम् अविद्व अविद्म । विवेद विविदतुः विविदुः । विवेदिथ । पक्षे ॥ आमि विदेर्न गुणः ॥ विदांचकार विदामास विदांबभूव । विद्यात् विद्या-स्ताम् । वेदिता । वेदिष्यति । अवेदिष्यत् । अवेदीत् अवेदिष्टाम् अवेदिषुः ॥**

विद् ज्ञाने । पूर्ववत् तिबादयः । 'अदादेर्लुक्' 'उपधाया लघोः' अनेन गुणः । 'खसे चपा झसानाम्' अनेन दस्य तः । वेत्ति । 'खसे चपाः' इदं सूत्रं खसे परे सर्वत्र प्राप्नोति । वित्तः विदन्ति । अन्यानि मूले सन्ति ॥ सूत्रम्—'विदो नवानां त्यादीनां णबादिर्वा'॥ विदः नवानां त्यादीनां णबादि वा अव्ययम् । पञ्चपदं सूत्रं वर्तते । विद ज्ञाने इत्यस्मात्परेषां तिबा-दीनां नवानां वचनानां णबादिनवकं वा भवति । अनेन तिबादीनां णबादयो भवन्ति । णप् अतुस् इत्यादीनि नव वचनानि वा भवन्ति तिबाद्यर्थे एव । तदा विद् णप् इति जाते । 'द्विश्च' अनेन द्वित्वे प्राप्ते 'यदादेशः' इति न्यायेन द्वित्वं न भवति । किंतु 'अप् कर्तरि' अनेनाप् प्रत्ययो भवति । तस्य 'अदादेर्लुक्' अनेन लुक् भवति । 'उपधाया लघोः' अनेन गुणः । वेद विदतु विदुः । 'उपधायाः' 'खसे०' वेत्थ । अन्यान्यस्य लकारस्य रूपाणि मूले सन्ति । विद्यात् । विद्याताम् । लोट्लकारे—वेत्तु । मध्यमपुरुषस्यैकवचने । 'झसा-द्धिर्हेः' अनेन हस्य धः । 'स्वरहीनं०' विद्धि । अन्यानि सन्ति । लङ्लकारे—विद् दिप् इति स्थिते । 'उपधायाः०' 'दिस्योर्हसात्' अनेन दिप्सिपोर्लोपः । 'दिबादावट्' 'वावसाने' अवेत् । अवेद् । 'खसे०' अवित्ताम् । 'आदन्तविद्द्विषाम्०' अनेन वा अन उस् भवति । अविदन् । अविद् सिप् इति जाते । 'दिस्योः' अनेन सिपो लोपः । अविद् इति जाते । 'उपधायाः' ॥ सूत्रम्—'दः सः'॥ दः दकारस्य सिविषये वा सकारो भवति । अनेन दस्य सः । 'स्रोर्विसर्गः' । अवेः । सस्याभावे । अवेत् । अन्यानि सन्ति । लिट्लकारे । 'उप-धायाः' विवेद । विविदतुः । विवेदिथ । 'विद्दरिद्रा' अनेनास्य वा आम्प्रत्ययः । आमि परे सति 'उपधायाः' अनेन गुणे प्राप्ते ॥ सूत्रम्–'आमि०' ॥ आमि परे सति विदेर्धातोर्गुणो न भवति । अनेन गुणनिषेधः । साधनं तु पूर्ववत् । विदांचकार । विदामास । विदांब-भूव । विद्यात् । विद्यास्ताम् । वेदिता । अन्यानि मूले सन्ति । लुङ्लकारे । 'उपधाया लघोः' । अनेन गुणः । अन्यत्तु पूर्ववत् । अवेदीत् अवेदिष्टाम् अवेदिषुः ॥

**अस् भुवि । अस्ति ॥ नमसोऽस्य ॥ नम् इत्येतस्य विकरणस्यास्भुवीति धातोश्चकारस्य लोपो भवति ङिति परे ॥ स्तः सन्ति ॥ सि सः ॥ अस्तेः सकारस्य लोपो भवति सकारे परे ॥ सि स इत्यत्र अस्तेः सलोपः सकार-मात्रे न तु पिति । तेन व्यतिसे । असि स्थः स्थ । अस्मि स्वः स्मः । स्यात् स्याताम् स्युः । अस्तु-स्तात् स्ताम् सन्तु । जह्येधिशाधि । एधि स्तात् स्तम् स्त ।**

**असानि असाव असाम ॥ अस्तेरीट् ॥ अस्तेः परयोर्दिसोरीडागमो भवति ॥ आसीत् ॥ लोपागमयोर्मध्ये आगमविधिर्बलवान् ॥ आस्ताम् आसन् । आसीः आस्तम् आस्त । आसम् आस्व आस्म ॥ अस्तेरनपि भू वक्तव्यः ॥ बभूव ॥**

अस् भुवि । भू सत्तायाम् । अर्थादयं धातुः सत्तायां वर्तते इत्यर्थः । पूर्ववत् तिवादयः । 'अदादेर्लुक्' अनेन लुक् । अस्ति । अस् तस् इति जाते ॥ सूत्रम्—'नमसोऽस्य'॥ नम् च अस् च नमस् तस्य नमसः । अस्य द्विपदं सूत्रम् । नम इत्येतस्य रुधादिगणोत्पन्नविकरणस्य अस् भुवि इति धातोश्च संबन्धिनोऽकारस्य ङिति विभक्तौ परतो लोपो भवति । अनेन अकारस्य लोपः । स्तः । 'नमसोऽस्य' सन्ति । अस् सिप् इति स्थिते ॥ सूत्रम्—'सि सः'॥ अस्ते सकारस्य लोपो भवति सकारे परे । अनेन सकारस्य लोपे प्राप्ते 'सि सः' इत्यत्र अस्तेः सलोपः सकारमात्रे न तु पित्येव । तेन व्यतिसे इति रूपं सिद्धं भवति । अनेनात्र सलोपः। असि । अन्यानि मूले सन्ति । 'नमसोऽस्य' । स्यात् स्याताम् स्युः । स्याः स्यातम् स्यात । स्याम् स्याव स्याम । अस्तु स्तात्—स्ताम् सन्तु । 'जह्येधिशाधि' एधि स्तात् । अन्यानि सन्ति। अस् दिप् इति स्थिते॥ सूत्रम्—'अस्तेरीट्'॥ अस्तेः ईट् । अस्तेर्धातोः परयोर्दिप्सिपोरीडागमो भवति । टित्त्वादादौ । 'दिबादावट्' 'स्वरादेः' । आसीत् । अस् ताम् इति जाते । 'लोपागमयोर्मध्ये' तेन प्रथममडागमद्वयं भवति । पश्चात् 'नमसोऽस्य' अनेन अकारस्य लोपो भवति । आस्ताम् आसन् । आसीः । अन्यानि सन्ति मूले ॥ सूत्रम्—'अस्तेः०' ॥ अस्तेर्धातोरनपि गुरुत्वात् सर्वस्यादेशः । तेनास्य धातोरनपि भूधातुवत् रूपाणि ज्ञेयानि । बभूव बभूवतुः बभूवुः । इत्यादीनि ॥

**मृजूष् शुद्धौ ॥ मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या किति ङिति स्वरे वा ॥ षत्वम् ष्टुत्वम् ॥ रात्सस्य ॥ रेफादुत्तरस्य सस्यैव लोपः स्यान्न त्वन्यस्य ॥ मार्ष्टि मृष्टः मृजन्ति मार्जन्ति । मार्क्षि मृष्टः मृष्ट । मार्ज्मि मृज्वः मृज्मः । मृज्यात् । मार्ष्टु-मृष्टात् मृष्टाम् मृजन्तु-मार्जन्तु । मृड्ढि-मृष्टात् मृष्टम् । मृष्ट । मार्जानि मार्जाव मार्जाम । अमार्ट् अमार्ड् अमृष्टाम् अमृजन्-अमार्जन् । अमार्ट्-अमार्ड् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म । ममार्ज ममृजतुः-ममार्जतुः ममृजुः-ममार्जुः । ममार्जिथ-ममार्ष्ठ ममृजथुः-ममार्जथुः । मृज्यात् । मार्जिता मार्ष्टा । मार्जिष्यति-मार्क्ष्यति । अमार्जिष्यत्-अमार्क्ष्यत् । अमार्जीत् अमार्जिष्टाम् अमार्जिषुः । अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः ॥**

मृजूष् । ऊकारषकारौ कार्यार्थौ । पूर्ववत् तिबादयः । 'अदादेर्लुक्' मृज् तिप् इति जाते । सूत्रम्—'मृजेः०' ॥ मृजेर्धातोर्गुणनिमित्ते प्रत्यये परे वृद्धिर्भवति किति ङिति स्वरे वा भवति । अनेन वृद्धिः । 'छशषराजादेः षः' अनेन षत्वम् । 'ष्टुभिः ष्टुः' अत्र 'संयोगान्तस्य लोपः' अनेन षकारस्य लोपे प्राप्ते—सूत्रम्—'रात्सस्य'॥ रात् सस्य । रेफादुत्तरस्य सकारस्यैव लोपो भवति नान्यस्य । अनेन षकारस्य लोपो न भवति । मार्ष्टि मृष्टः मृजन्ति । 'मृजेः'

अनेन वा वृद्धिः । मार्जन्ति । मृज् सिप् इति स्थिते । 'मृजेः०' 'छशषराजादेः०' 'षढोः कः से' 'किलात्०' 'कषसंयोगे क्षः' मार्क्षि मृष्ठः । अन्यानि मूले सन्ति । मृज्यात् । मार्ष्टु । मृष्टात् । मृष्टाम् मृजन्तु-मार्जन्तु । मृज् हि इति स्थिते । 'झसाद्धिर्हिः' । 'छशष०' 'षो डः' ष्टुत्वम् । मृड्ढि । अन्यानि मूले सन्ति । लिट्लकारे—'मृजेः०' अनेन वृद्धिः । ममार्ज ममृजतुः ममृजुः । ममार्जिथ । 'ऊदितो वा' अनेन इड्विकल्पे सति । 'मृजेः०' 'छशष०' ष्टुत्वम् । ममार्ष्ठ ममृजथुः ममृज-ममार्ज । ममार्ज ममृजिव ममृजिम । मृज्यात् मृज्यास्ताम् मृज्यासुः । अस्य धातोरूदित्त्वादिड् वा भवति । 'मृजेः' मार्जिता । इडभावे । वृद्धिः । 'छशष०' । ष्टुत्वम् । मार्ष्टा । मार्जिष्यति । मृज् स्यप् तिप् इति स्थिते । 'मृजेः' । छशष०' 'षढोः कः से' । 'किलात्०' । 'कषसंयोगे क्षः' । मार्क्ष्यति । अमार्जिष्यत् अमार्क्ष्यत् । अमार्जीत् अमार्जिष्टाम् अमार्जिषुः । इडभावे । अमार्क्षीत् । 'झसात्०' । 'छशष०' । ष्टुत्वम् । अमार्ष्टाम् अमार्क्षुः । अमार्क्षीः अमार्ष्टम् अमार्ष्ट । अमार्क्षम् अमार्क्ष्व अमार्क्ष्म । समाप्तोऽयं धातुः ॥

**वच परिभाषणे । वक्ति वक्तः ॥ नहि वचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम् ॥ वदन्ति । वक्षि वक्थः वक्थ । वच्मि वच्वः वच्मः । वच्यात् । वक्तु-वक्तात् वक्ताम् वचतु । वग्धि-वक्तात् वक्ताम् वक्त । अवक्-अवग् अवक्ताम् अवचन् । अवक्-अवग् अवक्तम् अवक्त । अवचम् अवच्व अवच्म । णबादौ पूर्वस्य । उवाच । यजां यवराणां य्वृतः संप्रसारणम् । ऊचतुः ऊचुः । उवचिथ-उवक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् ॥ अस्यतिवक्ति इति ङः ॥ अस्यतिवक्तीति ङे वचेरुमागमो वक्तव्यः ॥ उ ओ । अवोचत् अवोचताम् अवोचन् ॥**

वच परिभाषणे । पूर्ववत् तिबादयः । 'अदादेर्लुक्' 'चोः कुः' अनेन चकारस्य ककारो भवति । वक्ति वक्तः ॥ सूत्रम्—'नहिवचिरन्तिपरः' ॥ वदन्ति । वच् सिप् इति स्थिते । 'चोः कुः' 'किलात्०' 'कषसं०' वक्षि । 'चोः कुः' वक्थः वक्थ । अन्यानि मूले सन्ति । वच्यात् वच्याताम् वच्युः । वक्तु-वक्तात् । 'नहि वचि०' वदन्तु । वच् हि इति स्थिते । 'झसाद्धिर्हिः' 'चोः कुः' । 'झबे जबाः' वग्धि । लङ्लकारे । 'चोः कुः' 'दिस्योर्हसात्' अनेन सेर्लोपो भवति । 'वावसाने' अवक्—अवग् । अन्यानि मूले सन्ति । लिट्लकारे—'द्विश्च' पूर्वस्य । 'णबादौ पूर्वस्य' अनेन पूर्वस्य संप्रसारणम् । 'अत उपधायाः' उवाच । 'यजां०' अनेन द्वितीयं संप्रसारणम् । 'सवर्णे०' ऊचतुः ऊचुः । उवचिथ । 'अत्वतः' । 'चोः कुः' उवक्थ । 'चोः कुः' वक्ता । 'चोः कुः' 'किलात्०' 'कषसंयोगे क्षः' वक्ष्यति । अवक्ष्यत् । वच् सि दिप् इति स्थिते । 'अस्यति वक्ति' अनेन सेर्ङो भवति । वच् दिप् इति जाते ॥ सूत्रम्—'अस्यतिवक्तीति ङे०' ॥ ङप्रत्यये परे सति वचेर्धातोः उमागमो भवति । 'मिदन्त्यात्०' । 'उओ' । 'दिबादावट्' । अवोचत् अवोचताम् अवोचन् ॥

**रुदिर् अश्रुविमोचने ॥ रुदादेश्चतुर्णां हसादेः ॥ रुदादेः परेषां तिबादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् भवति ॥**

रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चैव विज्ञेयो रुदादिःपञ्चको गणः ॥

रोदिति रुदितः रुदन्ति । रोदिषि रुदिथः रुदिथ । रोदिमि रुदिवः रुदिमः । रुद्यात् । रोदितु-रुदिताद्वा रुदिताम् रुदन्तु । रुदिहि-रुदिताद्वा रुदितम् रुदित । रोदानि रोदाव रोदाम ॥ रुदादेर्दिस्योरीडटौ च वक्तव्यौ ॥ अरोदीत् अरोदत् । रुरोद रुरुदतुः । रुद्यात् । रोदिता । रोदिष्यति । अरोदिष्यत् । अरोदीत् । इरितो वा । अरुदत् ॥

रुदिर् अश्रुविमोचने । इर् अनुबन्धः 'इरितो वा' इत्यस्य सूत्रस्य विशेषणार्थः । तिबादयः 'अदादेर्लुक्' इत्येतत्सर्वं पूर्ववत् । 'उपधाया लघोः' अनेन गुणः—सूत्रम्—'रुदादेश्चतुर्णां ह्वसादेः' ॥ रुदादेः चतुर्णां ह् च वस् च ह्वसौ तौ आदी यस्य स ह्वसादिः तस्य ह्वसादेः त्रिपदं सूत्रम् । रुदादेः परस्य चतुर्णां तिबादीनां संबन्धिनो हकारादेर्वस्प्रत्याहारादेश्च प्रत्ययस्य इडागमो भवति । टित्त्वादादौ । अनेन स्वरादिरहिते प्रत्यये परे इडागमो भवति । रुदादयस्तु मूले श्लोकेनोक्ताः । रोदिति रुदितः रुदन्ति । अन्यानि मूले सन्ति । रुद्यात् रुद्याताम् । रोदितु । रुदिहि । लङ्लकारे—सूत्रम्—'रुदादेः०' ॥ रुदादेर्धातोः परयोर्दिप्सिपोरीडटौ च वक्तव्यौ । इडपवादोऽयम् । अरोदीत् । अरोदत् । 'उपधायाः' रुरोद रुरुदतुः । रुरोदिथ । रुद्यात् रुद्यास्ताम् रुद्यासुः । रोदिता । अन्यानि मूले सन्ति । अरोदीत् । 'इरितो वा' अनेनास्य वा ङप्रत्ययो भवति । अरुदत् । अरुदताम् । अरुदन् । अत्र ङित्त्वात् गुणाभावः ॥

ञिष्वप् शये । ञिइत् । स्वपिति । स्वप्यात् । स्वपितु-स्वपिताद्वा । अस्वपीत् अस्वपत् । संप्रसारणम् । सुष्वाप सुषुपतुः सुषुपुः । सुष्वपिथ-सुष्वप्थ । सुप्यात् । स्वप्ता । स्वप्स्यति । अस्वप्स्यत् ॥ अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः ।

ञिष्वप् शयने । पूर्ववत् सर्वं भवति । ञि इत् । 'आदेः ष्णः स्नः' अनेन सत्वम् । 'रुदादेश्चतुर्णाम्' अनेनास्यापि इट् । स्वपिति । लङ्लकारे । 'रुदादेर्दिस्योः०' अस्वपीत् । अस्वपत् । लिट्लकारे । 'द्विश्च' । 'णबादौ पूर्वस्य' । अनेन संप्रसारणम् । 'किलात्०' 'अत उपधायाः' । सुष्वाप । 'यजां०' । अनेन द्वितीयं संप्रसारणम् । सुषुपतुः । 'अत्त्वतः' सुष्वपिथ । सुष्वप्थ । संप्रसारणम् । सुप्यात् सुप्यास्ताम् । स्वप्ता । लुङ्लकारे । 'सावनिटः' अनेन नित्यं वृद्धिः । अस्वाप्सीत् । 'झसात्' । अनेन सेर्लोपः । अस्वाप्ताम् । अस्वाप्सुः ॥

श्वस् प्राणने । श्वसिति । श्वस्यात् । श्वसितु । अश्वसीत् । अश्वसत् अश्वसिताम् अश्वसन् । शश्वास शश्वसतुः शश्वसुः । श्वस्यात् । श्वसिता । श्वसिष्यति । अश्वसिष्यत् । ह्म्यन्तक्षण इति वृद्ध्यभावः । अश्वसीत् ॥

श्वस् प्राणने । अयमपि पूर्ववत् । श्वसिति । लङ्लकारे दिप्सिपोरीडटौ भवतः । अश्वसीत् अश्वसत् । लिट्लकारे । 'द्विश्च' पूर्वस्य । 'अत उपधायाः' अनेन वृद्धिः । शश्वास ।

शश्वसतुः । शश्वसिथ । 'अस्वतः' शश्वत्थ । श्वस्यात् । श्वसिता । अन्येषां रूपाणि मूले सन्ति । लुङ्लकारे 'ह्यन्तक्षण०' । अनेन वृद्ध्यभावः । अश्वसीत् अश्वसिष्टाम् अश्वसिषुः ॥

**अन प्राणने ॥ अनिति । प्रपूर्वः । अनिति ॥ [ उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् ] ॥ प्राणिति । अन्यात् । अनितु । आनीत् । आनत् । आन आनतुः आनुः । अन्यात् । अनिष्यति । आनिष्यत् । आनीत् आनिष्टाम् आनिषुः ॥**

अन प्राणने । पूर्ववत्सर्वम् । अनिति । यदायं धातुः प्रपूर्वस्तदा ॥ सूत्रम्—[अनिति?] 'उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम्' ॥ अनेन नकारस्यास्य णकारो भवति । 'सवर्णे०' प्राणिति । लङ्लकारे । 'रुदादेः' 'स्वरादेः' । आनीत् । आनत् । लिट्लकारे । 'द्विश्च' । 'सवर्णे०' । आन आनतुः आनुः । अन्यात् अन्यास्ताम् अन्यासुः । अनिता । अन्यानि मूले सन्ति । लुङ्लकारे । 'स्वरादेः' परः । अनेन द्वितीयोऽडागमो भवति । आनीत् आनिष्टाम् आनिषुः ॥

**जक्ष भक्ष हसनयोः । जक्षिति जक्षितः ॥ जक्षादेरन्तोऽदन उस् ॥ जक्षजागृदरिद्राशास्चकास्भ्यः परस्य अन्त अत् अन उस् भवति ॥ जक्षति । जक्षिषि । जक्ष्यात् । जक्षितु । अजक्षीत् अजक्षत् । जजक्ष । जक्ष्यात् । जक्षिता । जक्षिष्यति । अजक्षिष्यत् । अजक्षीत् ॥**

जक्ष भक्षहसनयोः । पूर्ववत् सर्वं भवति । जक्षिति । जक्षितः । जक्ष अन्ति इति स्थिते ॥ सूत्रम्—'जक्षादेरन्तोदन उस्' ॥ जक्षादेः अन्तः अत् अनः उस् पंचपदं सूत्रम् ॥ जक्षजागृदरिद्राशास्चकास्भ्यः परस्य अन्तः अत् भवति । अन उस् भवति । जक्षादयः केनचिदाचार्येण गणिताः श्लोकेन 'जक्षि जागृ दरिद्राति चकास्तिः शास्तिरेव च । दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः ॥' अनेन अन्ति इत्यस्य अतिः । जक्षति । जक्ष्यात् । जक्षितु जक्षितात् । जक्षिताम् । 'जक्षादेः०' जक्षतु । जक्षिहि । 'रुदादेर्दिस्योः०' अजक्षीत् । अजक्षत् अजक्षताम् अजक्षुः । लिट्लकारे—'द्विश्च' । 'पूर्वस्य हसादिः शेषः' । जजक्ष जजक्षतुः जजक्षुः । जजक्षिथ । जक्ष्याम् । जक्ष्यास्ताम् । जक्षिता । लुङ्लकारे—अजक्षीत् अजक्षिष्टाम् अजक्षिषुः ॥

**जागृ निद्राक्षये । जागर्ति जागृतः जाग्रति । जागर्षि । जागृयात् । जागर्तु-जागृतात् जागृताम् जाग्रतु । जागृहि-जागृताद्वा जागृतम् जागृत । जागराणि जागराव जागराम । गुणः । दिस्योर्हसात् । स्रोर्विसर्गः । अजागः अजागृताम् ॥ उसि जागर्तेर्धातोर्गुणो वक्तव्यः ॥ अजागरुः । अजागः अजागृतम् अजागृत । अजागरम् अजागृव अजागृम । जजागार ॥ जागर्तेः किति गुणो वक्तव्यः ॥ जजागरतुः जजागरुः । जजागरिथ जजागरथुः जजागर । जजागार-जजागर जजागरिव जजागरिम । 'विद्' इति पक्षे**

आम् । जागरांचकार जागरामास जागरांबभूव । जागर्यात् । जागरिता । जागरिष्यति । अजागरिष्यत् । ह्यन्तक्षण इति न वृद्धिः । अजागरीत् ॥

जागृ निद्राक्षये । पूर्ववत् तिबादयः । 'अदादेर्लुक्' । 'गुणः' । अनेन गुणो भवति । जागर्ति । जागृतः । 'ऋरम्' । 'जक्षादेः०' । जाग्रति । जागर्षि । अत्र 'किलात्०' अनेन षत्वम् । जागृथः जागृथ । जागर्मि जागृवः जागृमः । जागृयात् जागृयाताम् जागृयुः । जागर्तु । अन्यानि मूले सन्ति । जागृ दिप् इति स्थिते 'गुणः' । 'दिस्योर्हसात्' । अनेन दिपो लोपो भवति । 'स्रोर्विसर्गः' । 'दिबादावद्' अजागः । अजागृताम् । जागृ अन् इति स्थिते । 'जक्षादेः०' अनेन अन उस् ॥ सूत्रम्—"डसि०" । डसि परे सति जागर्तेर्धातोर्गुणो वक्तव्यः । अनेन गुणः । अजागरुः । अजागः अजागृतम् अजागृत । अन्यानि मूले सन्ति । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'ह्रस्वः' 'धातोर्नामिनः' अनेन वृद्धिः । जजागार ॥ सूत्रम्—'जागर्तेः०' ॥ जागर्तेर्धातोः किति प्रत्यये परे गुणो वक्तव्यः । अनेन गुणः । जजागरतुः । अन्यानि मूले सन्ति । 'विद् दरिद्रा' अनेन सूत्रेणास्य वा आम् प्रत्ययो भवति । 'गुणः' । जागरांचकार । अन्ये द्वे मूले स्तः । 'जागर्तेः' अनेन गुणः । जागर्यात् । जागर्यास्ताम् । जागर्यासुः । 'गुणः' । जागरिता । अन्यानि मूले सन्ति । लुङ्लकारे 'ह्यन्तक्षण०' अनेनास्य वृद्धेरभावः । किंतु गुणः । अजागरीत् अजागरिष्टाम् अजागरिषुः ॥

दरिद्रा दुर्गतौ । दरिद्राति ॥ दरिद्रातेरिदालोपश्च ङिति ॥ दरिद्रातेराकारस्य लोपो भवति ङिति स्वरे परे, इकारश्च ङिति हसे परे ॥ दरिद्रितः दरिद्रति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः । दरिद्रियात् । दरिद्रातु-दरिद्रताद्वा दरिद्रिताम् दरिद्रतु । दरिद्राहि-दरिद्रिताद्वा दरिद्रितम् दरिद्रित । दरिद्राणि दरिद्राव दरिद्राम । अदरिद्रात् अदरिद्रिताम् । अदरिद्रुः । अदरिद्राः अदरिद्रितम् अदरिद्रित । अदरिद्राम् अदरिद्रिव अदरिद्रिम ॥ णप् वुण् सयुटो हित्वा अन्यस्माद्दरिद्रातेरनप्यालोपो लुङि वा ॥ ददरिद्रौ ददरिद्रतुः ददरिद्रुः । ददरिद्रिथ ददरिद्रथुः । पक्षे-ददरिद्राञ्चकार । दरिद्र्यात् । दरिद्रिता । दरिद्रिष्यति । अदरिद्रिष्यत् । अदरिद्रीत् अदरिद्रिष्टाम् अदरिद्रिषुः । पक्षे । अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः ॥

दरिद्रा दुर्गतौ । पूर्ववत् तिबादयः । 'अदादेर्लुक्' दरिद्राति । दरिद्रा तस् इति जाते ॥ सूत्रम्—'दरिद्रातेरिदालोपश्च ङिति' ॥ दरिद्रातेः इत् आलोपः । च अव्ययम् । ङिति पञ्चपदं सूत्रम् । दरिद्रातेर्धातोराकारस्य ङिति स्वरे परे लोपो भवति च ङिति हसे परे अकारस्य लोपो भवति । अनेनात्र आकारस्य इ । दरिद्रितः । अत्र 'दरिद्रातेः' अनेन आकारस्य लोपः । 'जक्षादेः' । दरिद्रति । अन्यानि मूले सन्ति । अनेनैव प्रकारेण साध्यानि । दरिद्रियात् । दरिद्रातु । अदरिद्रात् । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'आतो णप्डौ' ।

ददरिद्रौ । ददरिद्रा अतुस् इति जाते ॥ सूत्रम्—'णप् वुण् सयुटः०' ॥ णप् वुण् सयुटः हित्वा अन्यस्मात् दरिद्रातिर्धातोरनपि आकारस्य लोपो भवति लुङ्लकारे वा आकारस्य लोपो भवति । अनेनाकारस्य लोपः । ददरिद्रतुः । ददरिद्रिथ । 'विद् दरिद्रा०' अनेन सूत्रेणास्य धातोर्वा आम् प्रत्ययो भवति । 'णप्' अनेनाकारस्य लोपः । अन्यत् साधनं तु पूर्ववत् ज्ञेयम् । दरिद्रांचकार । दरिद्रामास । दरिद्रांबभूव । 'णप् वुण्०' । अनेनाकारस्य लोपः । दरिद्र्यात् । दरिद्र्यास्ताम् । दरिद्र्यासुः । अयं धातुः सेट् । अतः 'सिसता०' अनेनेड् भवति 'णप् वुण्०' अनेनाकारस्य लोपः । दरिद्रिता । दरिद्रिष्यति । अदरिद्रिष्यत् । लुङ्लकारे । अदरिद्रीत् अदरिद्रिष्टाम् अदरिद्रिषुः । 'लुङि वा' इत्युक्तत्वात् वा आकारलोपः । तत्पक्षे 'आदन्तानां०' अनेनेट्सकौ भवतः । अदरिद्रासीत् । अदरिद्रासिष्टाम् अदरिद्रासिषुः । समाप्तोऽयं धातुः ॥

**शास् अनुशिष्टौ शास्ति ॥ शासेरिः ॥ क्ङितीत्यनुवृत्तम् । शास्तेराकारस्येकारादेशो भवति किति ङिति हसे ङे च परे ॥ घसादेः षः । शिष्टः शासति । शास्सि शिष्टः शिष्ट । शास्मि शिष्वः शिष्मः । शिष्यात् । शास्तु-शिष्टात् शिष्टाम् शासतु । जह्येधिशाधि । शाधि-शिष्टाद्वा शिष्टम् शिष्ट । शासानि शासाव शासाम ॥ दिपि सस्य तः सिपि वा ॥ दिपि परे सस्य तकारो भवति सिपि तु वा भवति ॥ अशात् अशिष्टाम् अशासुः । अशात्-अशाः अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म । शशास शशासतुः शशासुः । शिष्यात् । शासिता । शासिष्यति । अशासिष्यत् । लित्पुषादेर्ङः । शासेरिः । अशिषत् ॥**

शास् अनुशिष्टौ । पूर्ववत् तिबादयः । 'अदादेर्लुक्' । अनेनापो लुग् भवति । शास्ति । शास् तस् इति स्थिते ॥ सूत्रम्—'शासेरिः' ॥ शासेः इः । शास्तेर्धातोराकारस्य इकारो भवति किति ङिति हसे ङे च परे । अनेन आकारस्य इकारः । 'घसादेः षः' । अनेन सूत्रेण सस्य षः । शिष्टः । शासति । अस्मिन् रूपे 'जक्षादेः' अनेन अन्तोऽत् अन उस् । अन्यानि मूले सन्ति । लोट्लकारस्य मध्यमपुरुषैकवचने । 'जह्येधिशाधि' अनेन हिसहितस्य शासः शाधिनिपातो भवति । शाधि । अस्यान्यानि सन्ति मूले । लङ्लकारे शास् दिप् इति जाते ॥ सूत्रम्—'दिपि सस्य तः सिपि वा' ॥ दिपि सस्य तः सिपि वा अव्ययम् । सकारान्तस्य धातोः सकारस्य दिपि परे तकारो भवति सिपि तु विकल्पेन भवति सस्य तः । अनेन सकारस्य तकारः । 'दिस्योर्हसात्' अनेन दिपो लोपः । 'दिबादावट्' अशात् । दिपि परे द्वे रूपे भवतः । वाग्रहणात् । अशात् । अशाः । अन्यानि सन्ति । लिट्लकारे 'द्विश्च' । पूर्वस्य ह्रस्वः । शशास । शशासतुः । शशासिथ । शासिता । शासिष्यति । लुङ्लकारे । 'लित्पुषादेर्ङः' । अनेन ङप्रत्ययो भवति । 'शासेरिः' अनेनाकारस्येकारो भवति । 'घसादेः षः' अनेन सस्य षः । 'दिबादावट्' । अशिषत् अशिषताम् अशिषुः ॥

**चकासृ दीप्तौ । ऋ इत् । चकास्ति चकास्तः चकासति । चकासात् । चका-**

**स्तु-चकास्तात् चकास्ताम् चकासतु । झसाद्धिर्हेः ॥ धौ सलोपो वाच्यः ॥ चकाधि-चकास्तात् चकास्तम् चकास्त । अचकात् अचकास्ताम् अचकासुः । अचकात्-अचकाः । कासादिप्रत्ययादाम् । चकासाञ्चकार । चकास्यात् । चकासिता । चकासिष्यति । अचकासिष्यत् । अचकासीत् अचकासिष्टाम् अचकासिषुः ॥ इत्यदादिषु परस्मैपदिनः ॥ ४ ॥**

चकासृ दीप्तौ । ऋकार इत् । प्रत्ययलुगादि सर्वं पूर्ववत् । चकास्ति । प्रथमपुरुषस्य बहुवचने । 'जक्षादेः०' अनेन सूत्रेण अन्तः अत् अन उस् भवति । चकासति । चकास्यात् । चकास्तु । अस्य लकारस्य मध्यमपुरुषस्यैकवचने । 'झसाद्धिर्हेः' । अनेन हेर्धिः । चकास् धि इति जाते ॥ सूत्रम्—'धौ सलोपो वाच्यः' ॥ धिप्रत्यये परे सति सकारस्य लोपो भवति । अनेन सकारस्य लोपः । चकाधि । लङ्लकारे । चकास् दिप् इति स्थिते । 'दिपि सस्य तः' अनेन सस्य तः । 'दिस्योर्हसात्' । 'दिबादावट्' । अचकात् । अस्य प्रथमपुरुषस्य बहुवचने । 'जक्षादेः०' । अनेन अन उस् । अचकासुः । अन्यानि मूले सन्ति । 'कासादिप्रत्ययादाम्' अनेनास्य धातोराम्प्रत्ययो भवति चकासांचकार । चकासामास । चकासांबभूव । चकास्यात् चकास्यास्ताम् चकास्यासुः । 'सिसता०' अनेनेट् । चकासिता । अन्यानि मूले सन्ति । लुङ्लकारे । अचकासीत् ॥ इत्यदादिगणे परस्मैपदिनः कथिताः ॥

---

## अदादिष्वात्मनेपदिनः ॥ ५ ॥

**अथात्मनेपदिप्रक्रिया ॥ चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । स्कोराद्योश्च । ष्टुत्वम् । चष्टे चक्षाते । आतोऽन्तोदनतः । चक्षते । षढोः कः से । चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे । चक्षीत । चष्टाम् । अचष्ट अचक्षाताम् अचक्षत ॥ चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ वा वक्तव्यौ ॥ चख्यौ चख्यतुः चख्युः । चक्शौ चक्शतुः चक्शुः चचक्षे ख्यायात् ख्येयात् क्शायात् क्शेयात् । ख्यासीष्ट-क्शासीष्ट । ख्याता २ क्शाता २ । ख्यास्यति ख्यास्यते क्शास्यति-क्शास्यते । अख्यास्यत्-अख्यास्यत अक्शास्यत् -अक्शास्यत । पुषादित्वाद् ङः । अख्यत् ॥ अस्यतिवक्तिख्यातीनामात्मनेपदे सेङो वाच्यः ॥ अख्यत अक्शासीत् अक्शास्ताम् ॥**

अथात्मनेपदिनः कथ्यन्ते । चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । तआदयः प्रत्यया भवन्ति । 'अप् कर्तरि' 'अदादेर्लुक्' । अनेनापो लुग्भवति तदा चक्ष् ते इति जाते । 'स्कोराद्योश्च' । अनेन ककारस्य लोपः । 'ष्टुभिः ष्टुः' । चष्टे चक्षाते । 'आतोन्तोदनतः' । अनेन अन्तः अत् । चक्षते । चक्ष् से इति जाते 'स्कोराद्योश्च' अनेन कस्य लोपः । 'षढोः कः से' । अनेन षस्य कः । 'किलात्०' । 'कषसंयोगे क्षः' । चक्षे । चक्ष् ध्वे इति जाते । 'स्कोराद्योश्च' । 'षो डः' । चड्ढ्वे । अन्यानि सुगमानि ।

चक्षीत चक्षीयाताम् चक्षीरन् । चष्टाम् चक्षाताम् चक्षताम् । 'स्कोराद्योश्च' । ष्टुत्वम् । चष्टा । अन्यानि तु सुगमान्येव तथापि लिखामि । चक्षाथाम् चड्ढ्वम् । चक्षै चक्षावहै चक्षामहै । अचष्ट अचक्षताम् अचक्षत । अचष्टाः अचक्षाथाम् अचड्ढ्वम् । अचक्षि अचक्ष्वहि अचक्ष्महि । चक्ष णप् इति स्थिते ॥ सूत्रम्—'चक्षिङः०' ॥ चक्षिङ्धातोरनपि विषये ख्याञ्क्शाञौ वा वक्तव्यौ णादौ वा वक्तव्यौ । गुरुत्वात्सर्वस्यादेशः । ञकार उभयपदार्थः । ख्या णप् इति जाते । 'द्विश्च' । पूर्वस्य हसादिः । 'कुहोश्चुः' । 'झपानाम्' । 'आतो णप् डौ' । चख्यौ । 'आतोऽनपि' । चख्यतुः । चख्युः । 'अत्त्वतः' । चख्यिथ । चख्याथ । चख्ये चख्याते चख्यिरे । क्शाञादेशे कृते । 'द्विश्च' । पूर्वस्य ह्रस्वः । 'कुहोश्चुः' 'आतो णप्डौ' । चक्शौ । 'आतोऽनपि' । चक्शतुः । 'अत्त्वतः' । चक्शिथ चक्शाथ । चक्शे चक्शाते चक्शिरे । एतयोः प्रत्यययोर्विकल्पः । तदा चक्ष् णप् इति स्थिते । 'द्विश्च' पूर्वस्य । चचक्षे चचक्षाते चचक्षिरे । 'संयोगादेरादन्तस्य' ख्यायात् ख्येयात् । क्शायात् क्शेयात् । अन्यानि मूले सन्ति । सर्वत्र विकल्पेन ख्याञ्क्शाञौ भवतः । अत एकस्मिँल्लकारे द्विधा रूपाणि भवन्ति । लुङ्लकारे । 'लित्पुषादेर्ङः' । 'दिबादावट्' । 'आतोऽनपि' अख्यत् अख्यताम् अख्यन् । आत्मनेपदे ॥ सूत्रम्—'अस्यति०' ॥ अस्यतिवक्तिख्यातीनां धातूनामात्मनेपदे सेर्ङो वाच्यः । अनेन सेर्ङः । 'आतोऽनपि' अख्यत अख्येताम् अख्यन्त । क्शाञादेशे सति । लुङ्लकारे । 'आदन्तानाम्०' । अनेनेट्सकौ भवतः । अक्शासीत् अक्शासिष्टाम् अक्शासिषुः । अक्शास्त अक्शासाताम् अक्शासत । अक्शास्थाः अक्शासाथाम् अक्शाध्वम् ॥

**ईड स्तुतौ । खसे चपा झसानाम् । ईट्टे ईडाते ईडते ॥ ईडीशोः सध्वयोरिड्वक्तव्यः ॥ ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईडीत । ईट्टाम् । ऐट्ट ॥ लङो ध्वस्य नेट् ॥ ऐड्ढ्वम् । ईडांचक्रे । ईडिषीष्ट । ईडिता । ईडिष्यते । ऐडिष्यत ऐडिष्ट ॥**

इड स्तुतौ । पूर्ववत् तिबादयः । 'अदादेर्लुक्' । इड् ते इति जाते । 'खसे चपा झसानाम्' अनेन डकारस्य टकारः । 'ष्टुभिः ष्टुः' । ईट्टे ईडाते । 'आतोन्तोदनतः' । ईडते । ईड् से इति स्थिते ॥ सूत्रम्—'ईडीशोः०' ॥ ईडीशोर्धात्वोः सध्वयोः प्रत्यययोरिड् वक्तव्यः । अनेनेट् । 'किलात्०' ईडिषे । ईडाथे । ईड् ध्वे इति जाते पूर्वोक्तेनैव सूत्रेण इट् । ईडिध्वे । अन्यानि मूले सन्ति । लिङ्लकारे । ईडीत ईडीयाताम् ईडीरन् । इत्यादीनि रूपाणि ज्ञातव्यानि । लोट्लकारे । ईट्टाम् ईडाताम् ईडताम् । 'ईडीशोः०' अनेनेट् । 'किलात्०' । ईडिष्व ईडाथाम् ईडिध्वम् । लघूपधत्वाभावान्न गुणः । ईडै ईडावहै ईडामहै । लङ्लकारे ईड् तन् इति जाते । 'खसे चपा०' । 'ष्टुभिः ष्टुः' । 'दिबादावट्' । 'स्वरादेः परः' । 'अइए' । 'एऐऐ' । ऐट्ट । ऐडाताम् । ऐडत । ऐट्ठाः । ऐडाथाम् । ऐड् ध्वमिति जाते । 'ईडीशोः०' । अनेनेटि प्राप्ते सति ॥ सूत्रम्—'लङः०' ॥ लङ्लकारस्य ध्वप्रत्ययस्य इट् न भवति । अनेन तन्निषेधः । 'ष्टुभिः ष्टुः' । ऐड्ढ्वम् । 'कासादिप्रत्ययादाम्' अनेन आम् प्रत्ययः । अन्यत् साधनं पूर्ववत् । ईडांचक्रे । अन्यानि सुगमानि ।

ईडिषीष्ट । अन्यानि मूले सन्ति । अन्येषाम् लुङ्लकारे । 'भूते सिः' । 'सिसता०' । 'किलात्०' । 'ष्टुभिः ष्टुः' द्वौ अडागमौ । 'अइए' 'एऐऐ' । ऐडिष्ट ऐडिषाताम् ऐडिषत । अन्यानि सुगमानि ॥

**ईश् ऐश्वर्ये । ईष्टे ईशिषे । ईशीत । ईष्टाम् । ऐष्ट । ईशाञ्चक्रे । ईशिषीष्ट । ईशिता । ईशिष्यते । ऐशिष्यत । ऐशिष्ट ॥**

ईश् ऐश्वर्ये 'छशष०' अनेन शकारस्य षकारः । 'ष्टुभिः ष्टुः' । इष्टे ईशाते ईशते । 'ईडीशोः०' अनेनेट् । 'किलात्०' । ईशिषे । ईशाथे ईशिध्वे । ईशे ईश्वहे ईश्महे । ईशीत ईशीयाताम् ईशीरन् । लोट्लकारे । ईष्टाम् ईशाताम् ईशताम् । 'ईडीशोः०' । अनेनेट् । 'किलात्०' । ईशिष्व ईशाथाम् ईशिध्वम् । दीर्घोपधत्वान्न गुणः । ईशै ईशावहै ईशामहै । लुङ्लकारे । अडागमद्वयं भवति । अन्यत् साधनं तु पूर्ववत् । ऐष्ट ऐशाताम् ऐशत । ऐष्ठाः ऐशाथाम् । 'लङो ध्वस्य०' अनेन सूत्रेण इड्निषेधः । 'छशष०' । 'ष्टुभिः ष्टुः' । ऐड्ढ्वम् । लिट्लकारे । 'कासादिप्रत्ययादाम्' । ईशांचक्रे । ईशामास । ईशांबभूव । 'सिसता०' ईशिषीष्ट । अत्र 'किलात्' अनेन षत्वम् । लुङ्लकारे । अडागमद्वयम् । ऐशिष्ट । ऐशिषाताम् । ऐशिषत । सुगमोऽयं धातुः ॥

**आस् उपवेशने । आस्ते । आसीत् । आस्ताम् आस्त । कासादित्वादाम् । आसाञ्चक्रे आसिषीष्ट । आसिता । आसिष्यते । आसिष्यत । आसिष्ट ॥**

आस् उपवेशने । 'अप्कर्तरि' । 'अदादेर्लुक्' आस्ते आसाते आसते । अत्र 'आतोन्तोदनतः' । अनेन अन्तः अत् । आसीत् आसीयाताम् आसीरन् । आस्ताम् आसाताम् । 'आतोन्तोऽदनतः' । आसताम् । आस्त । आसाताम् आसत । 'कासादिप्रत्ययादाम्' आसांचक्रे । आसामास । आसांबभूव । 'सिसता०' अनेनेट् । आसिषीष्ट । अन्येषां सन्ति मूले रूपाणि तानि सुगमान्येव । अतो व्याख्यानं न कृतम् । लुङ्लकारे द्वौ अटौ । 'सवर्णे०' । आसिष्ट आसिषाताम् आसिषत ॥

**वस् आच्छाने । वस्ते । वसीत । अवसिष्ट ॥**

वस् आच्छादने । 'अप् कर्तरि' । 'अदादेर्लुक्' इत्यादि सर्वं पूर्ववत् । तआदयः प्रत्यया भवन्ति । वस्ते वसाते वसते । वसीत वसीयाताम् वसीरन् । वस्ताम् वसाताम् वसताम् । 'आतोन्तोदनतः' । अनेन अन्तः अत् । पूर्वरूपम् । वस्ताम् वसाताम् वसताम् । अन्यानि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य हसादिः । 'लोपः पचां कित्ये चास्य' । अनेन सूत्रेण एत्वपूर्वलोपौ प्राप्तौ । वादित्वान्न भवतः एत्वपूर्वलोपौ । ववसे ववसाते ववसिरे । 'क्रादेर्णादेः' अनेनेट् । 'किलात्०' । ववसिषे । अन्यानि सुगमानि । 'सिसता०' अनेनेट् । 'किलात्०' । वसिषीष्ट । वसिता । वसिष्यति । अवसिष्यत् । लुङ्लकारे । अवसिष्ट अवसिषाताम् अवसिषत । अत्र 'आतोन्तो'० अनेन अन्तः अत् भवति । अन्यानि सुगमानि ॥

**षूङ् प्राणिगर्भविमोचने । आदेः ष्णः स्नः । सूते सुवीत । सूताम् ॥ सूतेः**

**पिति गुणाभावो वाच्यः ॥ सुवै सुवावहै । सुवामहै । असूत । सुषुवे । स्वरति इति वेट् । सविषीष्ट-सोषीष्ट । सविता सोता । सविष्यते-सोष्यते । असविष्यत-असोष्यत । असविष्ट-असोष्ट ॥**

षूङ् प्राणिगर्भविमोचने । पूर्ववत् सर्वम् । 'आदेः ष्णः स्नः' अनेन षस्य सः । सूते । 'नुधातोः' अनेन उव् । सुवाते । 'आतोन्तो०' । सुवते । 'किलात्०' । सूषे सुवाथे सूध्वे । सुवे सूवहे सूमहे । 'नुधातोः' सुवीत सुवीयाताम् सुवीरन् । सूताम् । 'नुधातोः' । सुवाताम् । 'आतोन्तोद०' । सुवताम् । 'किलात्०' सूष्व सुवाथाम् सूध्वम् । सू ऐप् इति जाते । 'गुणः' । अनेन गुणे प्राप्ते ॥ सूत्रम्—'सूतेः०' ॥ सूतेर्धातोः पिति प्रत्यये परे गुणस्य अभावो वाच्यः । किं तु 'नुधातोः' अनेन उव् भवति । सुवै सुवावहै सुवामहै । लङ्लकारे । असूत असुवाताम् । 'आतोन्तो०' । असुवत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'किलात्०' । 'नुधातोः' । सुषुवे सुषुवाते सुषुविरे । इत्यादीनि । 'स्वरतिसूयति' अनेनास्य धातोरिड्विकल्पः । 'सिसता०' । 'गुणः' 'ओ अव्' । सविषीष्ट । इडभावे गुणः । सोषीष्ट । अन्येषां लकाराणां द्वे रूपे मूले स्तः । लुङ्लकारे । 'सिसता०' । अनेनेट् । पूर्वं । 'भूते सिः' अनेन सिप्रत्ययः । 'किलात्०' । ष्टुत्वम् । 'दिबादावट्' । असविष्ट असविषाताम् असविषत । इडभावे । असोष्ट असोषाताम् असोषत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥

**शीङ् स्वप्ने ॥ शीङः सर्वत्र गुणो भवत्यपि विषये ॥ शेते शयाते ॥ शीङोऽतो रुट् ॥ शीङः परस्यादित्येतस्य रुडागमो भवति ॥ शेरते । शयीत । शेताम् शयाताम् शेरताम् । अशेत अशयाताम् अशेरत । शिश्ये शिश्याते । शयिषीष्ट । शयिता । शयिष्यते । अशयिष्यत । अशयिष्ट ॥**

शीङ् स्वप्ने । ङकार आत्मनेपदार्थः ॥ सूत्रम्—'शीङः०' ॥ शीङो धातोः सर्वत्र अपिविषये गुणो भवति । अनेनास्य धातोः सर्वत्र गुणो भवति । शेते । 'ए अय्' शयाते । गुणे कृते । शे अन्त इति जाते 'आतोन्तोदनतः' । शे अते इति जाते ॥ सूत्रम्—'शीङोऽतो रुट्' ॥ शीङः अतः रुट् । शीङ् धातोः परस्य अत् इत्येतस्य रुडागमो भवति । टित्त्वादादौ । टकारष्टित्कार्यार्थः । उकार उच्चारणार्थः । शेरते । शेषे शयाथे शेध्वे । इत्यादीनि रूपाणि ज्ञातव्यानि तानि सुगमान्येव । शयीत शयीयाताम् शयीरन् । शेताम् शयाताम् । 'शीङोतो रुट्' । अनेन रुट् । शेरताम् । अशेत अशयाताम् रुडागमः । अशेरत । अन्यानि सुगमानि । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'ह्रस्वः' । 'नुधातोः' अनेन यकारः । शिश्ये शिश्याते शिश्यिरे । अन्यानि सुगमानि । 'गुणः' । 'ए अय्' शयिषीष्ट । अत्र 'किलात्–' । अनेन सकारस्य षकारो भवति । लुङ्लकारे । अशयिष्ट अशयिताम् अशयिषत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥

**इङ् अध्ययने । अधिपूर्वः । अधीते अधीयाते अधीयते । अधीयीत अधीयाताम् अधीयताम् । अध्यैत । इयादेशे कृते पश्चादडागमद्वयम् । अध्यैयाताम्**

**अध्यैयत ॥ इङो णादौ गा वक्तव्यः ॥ अधिजगे । अध्येषीष्ट । अध्येता । अध्येष्यते । अध्यैष्यत ॥ इङो वा गी सौ लङि च तत्परस्य प्रत्ययस्य ङित्त्वं वाच्यम् ॥ ङित्त्वाद्गुणो न । अध्यगीष्यत अध्यगीष्येताम् अध्यगीष्यन्त । अध्यैष्यत । अध्यगीष्ट अध्यगीषाताम् अध्यगीषत । अध्यैष्ट अध्यैषाताम् अध्यैषत ॥ इत्यदादिष्वात्मनेपदिनः ॥ ५ ॥**

इङ् अध्ययने । अयं धातुर्नित्यमधिपूर्वः । ङकार आत्मनेपदार्थः 'सवर्णे दीर्घः सह' । अधीते । अधि इ आते इति जाते 'नुधातोः' अनेन इय् । 'सवर्णे०' अधीयाते अधीयते । अधीषे । 'किलात्०' अनेन षकारः । अधीयाथे अधीध्वे । अधीये अधीवहे अधीमहे । अधीयीत अधीयीयाताम् । अधीयीरन् । लोट्लकारे । अधीताम् अधीयाताम् । अधीयताम् । लुङ्लकारे । अधि इ तन् इति जाते । 'दिबादावट्' । 'स्वरादेः' । अनेन द्वितीयोऽडागमः । 'अइए' । 'एऐऐ' । 'इ यं स्वरे' । अध्यैत । इयादेशे कृते पश्चादडागमद्वयम् । अध्यैयाताम् अध्यैयत । अध्यैथाः । अन्यानि सुगमानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । लिट्लकारे । अधि इ णप् इति स्थिते ॥ सूत्रम्—'इङः०' ॥ इङो धातोर्णादौ परे गा इत्यादेशो वक्तव्यः । गुरुत्वात्सर्वादेशः । अधि गा णप् इति जाते । 'द्विश्च' । 'ह्रस्वः' । 'कुहोश्चुः' । 'अतोऽनपि' । अनेन आकारस्य लोपो भवति । अधिजगे अधिजगाते अधिजगिरे । इत्यादीनि । अध्येषीष्ट । अध्येता । अध्येष्यते ॥ अडागमद्वयम् । अध्यैष्यत । अध्यैष्येताम् । अध्यैष्यन्त । इत्यादीनि ॥ सूत्रम्—'इङो०' ॥ इङ्धातोर्वा गी इत्यादेशो भवति सौ परे च लङि विषये । तस्मात्परस्य प्रत्ययस्य ङित्त्वं वाच्यम् । अनेन गी इत्यादेशः । ङित्त्वाद्गुणाभावो भवति । अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त ॥ लुङ्लकारे । 'इङो वा' अनेन गीरादेशः । 'भूते सिः' । 'किलात्०' । ष्टुत्वम् । अध्यगीष्ट अध्यगीषाताम् अध्यगीषत । अन्यानि सुगमानि । गीआदेशाभावे अडागमद्वयम् । 'गुणः' । 'एऐऐ' । 'इ यं स्वरे' । अध्यैष्ट अध्यैषाताम् अध्यैषत । इत्यादीनि रूपाणि ज्ञातव्यानि । इत्यात्मनेपदिनः समाप्ताः ॥ ५ ॥

---

## अदादिषूभयपदिनः ६

**अथोभयपदिप्रक्रिया प्रदर्श्यते ॥ द्विष अप्रीतौ । अकार उभयपदार्थः । द्वेष्टि द्विष्टे । द्विष्यात् द्विषीत । द्वेष्टु-द्विष्टात् द्विष्टाम् । अद्वेट्-अद्वेड् अद्विष्टाम् अद्विषुः-अद्विषन् । अद्विष्ट । दिद्वेष-दिद्विषे । द्विष्यात् । द्विक्षीष्ट । द्वेष्टा २ । द्वेक्ष्यति द्वेक्ष्यते । अद्वेक्ष्यत् अद्वेक्ष्यत । हशषान्तात्सक् । अद्विक्षत् । अद्विक्षत ॥ सत्यात्मनेपदे स्वरे टिलोपो वाच्यः ॥ अद्विक्षाताम् अद्विक्षन्त ॥**

अथोभयपदिनः प्रदर्श्यन्ते । द्विष अप्रीतौ । अकार उभयपदार्थः । तिबादयस्तआदयश्च प्रत्यया भवन्ति । 'अप् कर्तरि' । अनेन चतुर्षु लकारेषु अप्प्रत्ययो भवति । 'अदादेर्लुक्' । अनेन तस्य लुग् भवति । द्विष् तिप् इति जाते । 'गुणः' 'ष्टुभिः ष्टुः' । द्वेष्टि द्विष्टः द्विषन्ति । द्विष् सिप् इति स्थिते । 'गुणः' । 'षढोः कः से' । अनेन षस्य कः । 'किलात्०' 'कपसं-

योगे०' । द्वेक्षि द्विष्टः द्विष्ट । द्वेष्मि द्विष्वः द्विष्मः । द्विष्टे द्विषाते द्विषते । द्विष्यात् द्विष्यास्ताम् द्विष्यासुः । द्विषीत द्विषीयाताम् द्विषीरन् ॥ द्वेष्टु-द्विष्टात् द्विष्टाम् द्विषन्तु । द्विष् हि इति जाते । 'झसाद्धिर्हेः' । 'षो डः' । ष्टुत्वम् । द्विड्ढि-द्विष्टात् । द्वेषाणि द्वेषाव द्वेषाम । द्विष्टाम् द्विषाताम् द्विषताम् । इत्यादीनि । द्विष् दिप् इति जाते । 'गुणः' । 'षो डः' । 'दिस्योर्हसात्' । 'वावसाने' । 'दिबादावद्' अनेन पूर्वमडागमः । अद्वेट् अद्वेड् अद्विष्टाम् । 'आदन्तविद्द्विषाम्०' । अनेन वा अन उस् भवति । अद्विषुः अद्विषन् । अन्यानि सुगमानि । आत्मनेपदे । अद्विष्ट अद्विषाताम् अद्विषत ॥ द्विष् णप् इति स्थिते । 'द्विश्च' 'पूर्वस्य' । 'उपधाया लघोः' । अनेन गुणः । दिद्वेष दिद्विषतुः दिद्विषुः । दिद्वेषिथ । दिद्विषे द्विद्विषाते दिद्विषिरे । द्विष्यात् । 'दिस्योः०' । अनेन गुणनिषेधः । 'षढोः कः से' । 'किलात्०' । 'कषसंयोगे०' । द्विक्षीष्ट । द्वेष्टा । 'उपधाया लघोः' । अनेन गुणः । द्वेष्टा । अन्येषां लकाराणां रूपाणि सुगमानि ॥ लुङ्लकारे । 'हशषान्तात् सक्' अनेन सक्प्रत्ययो भवति । कित्त्वाद्गुणाभावः । 'षढोः कः से' । 'किलात्०' । 'कषसं०' । अद्विक्षत् अद्विक्षाताम् अद्विक्षन् । आत्मनेपदेऽपि सक्प्रत्ययो भवति । अद्विक्षत ॥ सूत्रम्—'सस्या०'॥ 'आत्मनेपदे स्वरे टिलोपो वाच्यः' । अनेन टेर्लोपः । अद्विक्षाताम् अद्विक्षत । अद्विक्षथाः अद्विक्षाथाम् । अन्यानि सुगमानि ॥

**दुह प्रपूरणे । दादेर्घः । दोग्धि दुग्धः दुहन्ति । धोक्षि दुग्धः दुग्ध । दोह्मि दुह्वः । दुह्मः । दुग्धे । दुह्यात् दुहीत । दोग्धु ॥ हकारस्य कचिज्झसभावो वाच्यः ॥ दुग्धि दुग्धाम् । अधोक्-अधोग् अदुग्धाम् अदुहन् । अदुग्ध । दुदोह । दुदुहे । दुह्यात् । धुक्षीष्ट । दोग्धा दोग्धा । धोक्ष्यति धोक्ष्यते । अधोक्ष्यत् अधोक्ष्यत । अधुक्षत् अधुक्षत ॥ दुहदिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति ॥ अदुग्ध अधुक्षाताम् अधुक्षन्त । अदुग्धाः-अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम्-अधुक्षध्वम् । अधुक्षि अधुक्षावहि-अदुह्वहि अधुक्षामहि ।**

दुह प्रपूरणे । अकार उभयपदार्थः । दुह् तिप् इति जाते 'दादेर्घः' अनेन हस्य घः । 'उपधाया लघोः' अनेन सर्वत्र गुणनिमित्ते प्रत्यये परे गुणो भवति । दोह् तिप् इति जाते । 'तथोर्धः' । 'झबे जबाः' । दोग्धि दुग्धः दुहन्ति । दुह् सिप् इति जाते । 'दादेर्घः' । 'आदिजबानाम्०' । 'उपधायाः' । 'खसे चपा०' । 'किलात्०' । 'कषसंयोगे क्षः' धोक्षि । अन्यानि मूले सन्ति । दुग्धे दुहाते दुहते । अत्र 'आतोन्तोदनतः' अनेन अन्तः अत् । दुह्यात् दुह्याताम् दुह्युः । दुहीत दुहीयाताम् दुहीरन् । दोग्धु दुग्धात् दुग्धाम् दुहन्तु ॥ सूत्रम्—'हकारस्य कचित्०' ॥ अनेन हकारो झसवत् ज्ञातव्यः । 'दादेर्घः' अनेन घत्वम् । 'झसाद्धिर्हेः' । 'झबे जबाः' । दुग्धि दुग्धात् दुग्धम् दुग्ध । 'उपधायाः' । दोहानि दोहाव दोहाम । दुग्धाम् दुहाताम् दुहताम् । दुहस्व इति जाते । 'दादेर्घः' । 'आदिजबानाम्०' । 'खसे चपा झसानाम्' । 'किलात्०' । 'कषसंयोगे०' । धुक्ष्व दुहाथाम् धुग्ध्वम् । दोहै दोहावहै दोहामहै ॥ दुह् दिप् इति जाते । 'दादेर्घः' । 'गुणः' । 'दिस्योर्हसात्' । 'आदिजबानाम्०' । 'वावसाने' । 'दिबादावट्' । अधोक् अधोग् अदुग्धाम् अदुहन् । अधोक्

अधोग् अदुग्धम् अदुग्ध । 'गुणः' । अदोहम् अदुह्व अदुह्म । अदुग्ध अदुहाताम् अदुहत । अदुग्धाः । इत्यादीनि रूपाणि ज्ञेयानि । लिट्लकारे । 'द्विश्च' 'पूर्वस्य' । 'उपधाया लघोः' । दुदोह दुदुहतुः दुदुहुः । 'उपधाया लघोः' । दुदोहिथ । इत्यादीनि । आत्मनेपदे । दुदुहे दुदुहाते दुदुहिरे । इत्यादीनि रूपाणि ज्ञातव्यानि वैयाकरणैः । दुह्यात् दुह्यास्ताम् दुह्यासुः । दुह् सीष्ट इति स्थिते । 'सिस्योः०' अनेन गुणनिषेधः । 'दादेर्घः' । 'आदिजबानाम्०' । 'खसे चपा०' । 'किलात्०' । 'कषसंयोगे०' । धुक्षीष्ट । दुह् ता इति स्थिते घत्वम् । 'गुणः' । 'तथोर्धः' । 'झबे जबाः' । दोग्धा । दोग्धा । दुह् स्यप् तिप् इति जाते । घत्वम् । 'गुणः' । 'आदिजबानाम्' । 'खसे चपा०' । षत्वम् । 'कषसंयोगे क्षः' । धोक्ष्यति धोक्ष्यते । अधोक्ष्यत् अधोक्ष्यत । लुङ्लकारे । 'हशषान्तात् सक्' । अनेन सक् प्रत्ययो भवति । सिविषये कित्त्वाद्गुणाभावः । घत्वं धत्वं कत्वं । 'किलात्०' । 'कषसंयोगे क्षः' । अधुक्षत् अधुक्षताम् अधुक्षन् । आत्मनेपदे । अधुक्षत ॥ सूत्रम्—'दुह्दिह्लिह्गुहूभ्यः०' ॥ अनेन सको लुक् । अदुह् तन् इति जाते घत्वम् । 'तथोर्धः' । 'झबे जबाः' । अदुग्ध । 'सस्यात्मन०' । अनेन टिलोपः । अधुक्षाताम् अधुक्षत । थकारे परेऽपि सको लुग् भवति । विकल्पेनैव लुकि सति । अदुह् थास् इति जाते । घत्वम् । 'तथोर्धः' । 'झबे जबाः' । अदुग्धाः अधुक्षथाः अधुक्षाथाम् । ध्वे परेऽपि सको लुक् । अदुग्धम् अधुक्षध्वम् । अधुक्षि अधुक्षावहि अधुक्षामहि । समाप्तोऽयं धातुः ॥

**दिह उपचये । देग्धि । तद्वत् ॥**

दिह उपचये । अयं धातुः पूर्ववत् ॥

**लिह आस्वादने । हो ढः । लेढि । तद्वत् ॥**

लिह आस्वादने । आस्वादनमीषद्भक्षणम् । पूर्ववत् प्रत्यया भवन्ति । 'अदादेर्लुक्' । लिह् तिप् इति जाते । 'हो ढः' । 'तथोर्धः' । ष्टुत्वम् । 'उपधायाः' । 'ढि ढो लोपः' । दीर्घश्च । लेढि लीढः लिहन्ति । आत्मनेपदे । लीढे लिहाते लिहते । लिह्यात् । लिहीत । लोट्लकारे । लेढु लीढात् लीढाम् लिहन्तु । लिह् हि इति स्थिते । अत्र झस्परत्वाभावात् 'हो ढः' अनेन ढत्वं न भवति । परम् । 'क्वचिदपदान्तेऽपि पदान्तताश्रयणीया' । अनेन पदान्तत्वमाश्रित्य । 'हो ढः' अनेन ढकारो भवति । अथवा हौ हकारोऽपि झस्वत् । इति सरस्वतीकण्ठाभरणे उक्तत्वात् ढत्वं भवति । 'झसाद्धिर्हेः' । ष्टुत्वम् । 'ढि ढो लोपः' । लीढि । लीढात् लीढाम् लीढ । लेहानि लेहाव लेहाम । लीढाम् लिहाताम् । लिहताम् । लङ्लकारे । 'हो ढः' । 'दिबादावट्' । 'उपधाया लघोः' । 'दिस्योर्हसात्' । 'वावसाने' । अलेट् अलेड् अलीढाम् अलिहन्त । इत्यादीनि । अलीढ अलिहाथाम् । 'आतोन्तोदन्तः' अलिहत । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । लिलेह लिलिहतुः लिलिहुः। लिलिहे लिलिहाते लिलिहिरे । लिह्यात् लिह्यास्ताम् लिह्यासुः । लिह सीष्ट इति स्थिते । 'सिस्योः०' अनेन गुणाभावः । 'हो ढः' । 'षढोः कः से' । 'किलात्०' । 'कष०' । लिक्षीष्ट लिक्षीयास्ताम् लिक्षीरन् । लिह ता इति स्थिते । 'हो ढः' । 'उपधाया लघोः' । 'तथोर्धः' । ष्टुत्वम् । 'ढिढो लोपः' । लेढा । आत्मनेपदेऽपि । लेढा लेढारौ लेढारः । लट्लकारे ।

लिह् स्यप् तिप् इति स्थिते। घत्वम्। गुणः। कत्वम्। षत्वम्। 'कषसंयोगे०'। लेक्ष्यति लेक्ष्यते। अलेक्ष्यत् अलेक्ष्यत। लुङ्लकारे। 'हशषान्तात्सक्'। कित्त्वाद् गुणाभावः। अन्यत् साधनं पूर्ववत्। अलिक्षत् अलिक्षताम् अलिक्षन्। आत्मनेपदे। अलिक्षत। 'दुहदिहलिह०' अनेन सको लुक्। अन्यत्साधनं पूर्ववत्। अलीढ। 'सस्यात्मने०'। अलिक्षाताम् अलिक्षत। साध्योऽयं धातुर्दुहधातुवत्॥

**ष्टुञ् स्तुतौ। आदेः ष्णः स्नः। ओरौ। स्तौति-स्तवीति स्तुतः स्तुवीतः स्तुवन्ति। स्तुते स्तुवीते। स्तुयात्-स्तुवीयात्। स्तौतु-स्तवीतु स्तुतात्-स्तुवीतात् स्तुताम्-स्तुवीताम् स्तुवन्तु। स्तुहि-स्तुवीहि स्तुवीतात्। अस्तौत्-अस्तवीत् अस्तुताम्-अस्तुवीताम् अस्तुवन्। अस्तुत-अस्तुवीत। तुष्टाव तुष्टुवतुः तुष्टुवुः। क्रादित्वान्नेट्। तुष्टोथ तुष्टुवथुः तुष्टुव। तुष्टाव तुष्टुव तुष्टुम। तुष्टुवे। स्तूयात् स्तोषीष्ट। स्तोता स्तोता। स्तोष्यति स्तोष्यते। अस्तोष्यत् अस्तोष्यत॥ स्तुसुधूञ्भ्यः पे सेरिड् वक्तव्यः॥ अस्तावीत् अस्तोष्ट॥**

ष्टुञ् स्तुतौ। यकार उभयपदार्थः। 'आदेः ष्णः स्नः'। 'ओरौ'। स्तौति। 'तुरुनुस्तुभ्यः' अनेन ईट्। यत्र ईट् भवति तत्र गुणः। 'ओ अव्'। स्तवीति स्तुतः स्तवीतः। 'नुधातोः'। स्तुवन्ति। इत्यादीनि। स्तुते। स्तुवीते स्तुवाते स्तुवते। स्तुयात् स्तुवीयात् स्तुयाताम् स्तुवीयाताम् स्तुयुः स्तुवीयुः। लोट्लकारे स्तौतु स्तवीतु स्तुतात् स्तुवीतात् स्तुवन्तु। इत्यादीनि रूपाणि ज्ञातव्यानि। स्तुताम् स्तुवीताम् स्तुवाताम् स्तुवताम्। लङ्लकारे। अस्तौत् अस्तवीत्। अस्तुताम् अस्तुवीताम्। 'नुधातोः'। अस्तुवन्। अस्तुत अस्तुवीत अस्तुवाताम्। 'आतोन्तो०'। अस्तुवत इत्यादीनि। लिट्लकारे। 'द्विश्च'। 'शसात्खपाः'। अनेन तकारः शेषः। षत्वम्। 'धातोर्नामिनः'। अनेन वृद्धिः। तुष्टाव 'नुधातोः' तुष्टुवतुः तुष्टुवुः। क्रादित्वात् अस्य धातोः स्यपि इडागमो न भवति। गुणः। तुष्टोथ। अन्यानि मूले सन्ति। तुष्टुवे तुष्टुवाते तुष्टुविरे। अन्यानि सुगमानि। 'ये' अनेन पूर्वस्य दीर्घः। स्तूयात्। गुणः। षत्वम्। स्तोषीष्ट। स्तोता। लुङ्लकारे। सूत्रम्—'स्तुसुधूञाम्०'॥ स्तुसुधूञां धातूनां परस्मैपदे सिप्रत्ययस्य इड् वक्तव्यः। 'धातोर्नामिनः' अनेन वृद्धिः। अस्तावीत् अस्ताविष्टाम् अस्ताविषुः। इत्यादीनि। अस्तोष्ट अस्तोषाताम् अस्तोषत॥

**ब्रूञ् व्यक्तायां वाचि॥ अबादावी पिति त्स्मि॥ ब्रुव ईकारः प्रत्ययो भवति तकारसकारमकारादौ पिति परे अबादौ विषये॥ ब्रवीति ब्रूतः ब्रुवन्ति। ब्रवीषि ब्रूथः॥ आहश्च पञ्चानाम्॥ ब्रुव उत्तरेषां तिबादीनां पञ्चानां णबादयः पञ्चादेशा भवन्ति ब्रुव आहश्चादेशो भवति॥ आह आहतुः आहुः॥ तस्थे॥ आहो हकारस्य तकारादेशो भवति थे परे॥ आत्थ आहथुः ब्रूथ। ब्रवीमि ब्रूवः ब्रूमः। ब्रूयात् ब्रुवीत। ब्रवीतु ब्रूताम्।**

अब्रवीत् अब्रूत ॥ ब्रुवो वचिः ॥ ब्रुवो वचिरादेशो भवति अनपि विषये ॥ इकार इत् । उवाच ऊचे । अवोचत् अवोचत । शेषस्य पूर्ववत्प्रक्रिया ।

ब्रूञ् व्यक्तायां वाचि । ञकारः सर्वत्र उभयपदार्थः । अप्प्रत्ययो भवति । तस्य लुग् भवति ॥ सूत्रम्—'अबादावीपिति त्स्मि' ॥ अबादौ ई पिति त् च स् च म् च त्स्म तस्मिन् त्स्मि चतुःपदं सूत्रम् । यद्वा द् च त् च स् च म् च । त्स्म् । तस्मिन् । त्स्मि । 'खसे चपा०' । अनेन दस्य तः । तेन दकारे परेऽपि ईप् प्रत्ययः । ब्रूञ्धातोस्तकारसकारमकारादौ पिति परे ईप् प्रत्ययो भवति । अबादौ विषये । अत्रापूविषये इत्येव वक्तव्ये आदिशब्दश्चिन्त्यः । यद्वा अप् आदिः प्रथमो यस्य सः अबादिः । अब्लुक् इत्यर्थः । तस्मिन्नबादौ अपो लुकि कृते सति इत्यर्थः । अनेनेकारः प्रत्ययो भवति । 'गुणः' । 'ओ अव्' । ब्रवीति ब्रूतः । 'नुधातोः' । ब्रुवन्ति । षत्वम् । ब्रवीषि ब्रूथः ॥ सूत्रम्—'आहश्च पञ्चानाम्' ॥ आहः च अव्ययं पञ्चानाम् । ब्रूञ्धातोरुत्तरेषां तिबादीनां पञ्चानां णबादयः पञ्चादेशा भवन्ति । ब्रुवो धातोराहश्च आदेशो भवति । 'यदादेशः०' अनेन न द्वित्वम् । आह आहतुः आहुः । आह थप् इति जाते ॥ सूत्रम्—'तस्थे' ॥ आहादेशस्य हकारस्य तकारादेशो भवति थकारे परे । अनेन हस्य तः । आत्थ । आहथुः ब्रूथ । गुणः । ब्रवीमि ब्रूवः ब्रूमः । ब्रूते ब्रुवाते 'आतोऽन्तो०' । ब्रुवते । इत्यादीनि । ब्रूयात् । 'नुधातोः' ब्रुवीत । ब्रवीतु । ब्रूतात् ब्रूताम् । 'नुधातोः' । ब्रुवन्तु । ब्रूताम् ब्रुवाताम् ब्रुवताम् । 'दिवादावट्' अब्रवीत् अब्रूताम् अब्रुवन् । अब्रूत अब्रुवाताम् अब्रुवत । इत्यादीनि रूपाणि पूर्वसूत्रैरेव सिध्यन्ति ॥ सूत्रम्—'ब्रुवो वचिः' ॥ ब्रुवो धातोर्वचिरादेशो भवति अनपि विषये । इकार इत् । अनेन वचादेशः । वच् णप् इति जाते । 'द्विश्च' । पूर्वस्य । 'णबादौ पूर्वस्य' अनेन संप्रसारणम् । 'अत उपधायाः' । अनेन वृद्धिः । उवाच । 'ग्रहां क्ङिति च' अनेन द्वितीयं संप्रसारणम् । ऊचतुः ऊचुः । 'अस्वतो०' । उवचिथ उवक्थ । अन्यानि सुगमानि । ऊचे ऊचाते ऊचिरे । इत्यादीनि । अन्यानि 'वच् परिभाषणे' इति धातुवत् रूपाणि ज्ञातव्यानि । लुङ्लकारे । 'अस्यति' अनेन सेर्ङो भवति । 'ङे वचेः' अनेन उमागमः । अवोचत् अवोचताम् अवोचन् । आत्मनेपदे । अवोचत अवोचेताम् अवोचन्त । इत्यादीनि रूपाणि भवन्ति तानि सुगमानि ज्ञातव्यानि विद्वद्भिः ॥

ऊर्णुञ् आच्छादने ॥ ऊर्णोतेर्वा वृद्धिः ॥ हसादौ पिति । ऊर्णोति ऊर्णौति ॥ ऊर्णोतेर्गुणो दिस्योः ॥ वृद्धेरपवादः । और्णोत् और्णोः ॥ ऊर्णोतेराम्न ॥ स्वरादेः परः ॥ स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ॥ स्वरात्पराः संयोगादयो नदरा द्विर्न ॥ ऊर्णुनाव ऊर्णुनुवतुः ॥ ऊर्णोतेरिडादिः प्रत्ययो वा ङित् ॥ ऊर्णुनुविथ-ऊर्णुनविथ । ऊर्णुयात् ऊर्णुविषीष्ट-ऊर्णविषीष्ट । ऊर्णुविता उर्णविता ॥ ऊर्णोतेर्वा वृद्धिः सौ परे ॥ पक्षे गुणः । और्णावीत् और्णवीत् और्णुवीत् और्णविष्ट-और्णुविष्ट । इत्यदादिषूभयपदिनः ॥ ६ ॥ इति लुग्विकरणा अदादयो धातवः ॥

ऊर्णुञ् आच्छादने । पूर्ववत् प्रत्ययो भवति । 'अदादेर्लुक्' । अनेन लुक् भवति । ञकार इत् । ऊर्णु तिप् इति जाते ॥ सूत्रम्—'ऊर्णोतेः०' ॥ ऊर्णोतेर्धातोर्वा वृद्धिर्भवति हसादौ पिति प्रत्यये परे । अनेन वा वृद्धिः । ऊर्णौति ऊर्णोति ऊर्णुतः ऊर्णुवन्ति । अत्र 'नुधातोः' । अनेनोव् । ऊर्णौषि ऊर्णोषि । अत्र षत्वम् । अन्यानि सुगमानि । ऊर्णुते । 'नुधातोः' । ऊर्णुवाते ऊर्णुवते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णौतु ऊर्णोतु ऊर्णुतात् ऊर्णुताम् । लङ्लकारे । सूत्रम्—'ऊर्णोतेः०'॥ ऊर्णोतेर्धातोर्दिस्योः परतो गुणो भवति वृद्धेरपवादः । अनेन दिस्योर्गुणो भवति । अडागमद्वयं च । और्णोत् और्णुताम् और्णुवन् । और्णोः । और्णुत और्णुवाताम् और्णुवत इत्यादीनि ज्ञातव्यानि । लिट्लकारे । अनेकस्वरत्वादाम्प्रत्यये प्राप्ते । सूत्रम्—'ऊर्णोतेः०' ॥ ऊर्णोतेर्धातोराम्प्रत्ययो न भवति । अनेनास्याम् प्रत्ययो न । 'द्विश्च' । अस्य धातोर्द्वित्वविधायकं सूत्रम्—'स्वरादेः परः' ॥ स्वरादेर्धातोरद्विरुक्तः सस्वरो द्वितीयोऽवयवो द्विर्भवति । रकारस्य द्वित्वे प्राप्ते । सूत्रम्—(स्वरात्पराः०) संयोगादयो नकारदकाररकारा द्विर्न भवन्ति । अनेन रकारस्य न द्वित्वम् किंतु णकारस्यैव भवति । 'धातोर्नामिनः' अनेन वृद्धिः । रकारस्तु पूर्वस्य णत्वे निमित्तं नेतरस्य । ऊर्णुनाव । 'नुधातोः'। अनेनोव् । ऊर्णुनुवतुः । ऊर्णुनुवुः । ऊर्णुनु इट् थप् इति जाते ॥ सूत्रम्—'ऊर्णोतेः०' ॥ ऊर्णोतेर्धातोरिडादिः प्रत्ययो वा ङिद् भवति । ङित्त्वाद्वा गुणाभावः । ऊर्णुनुविथ ऊर्णुनविथ ऊर्णुनुवथुः ऊर्णुनुव । अन्यानि सुगमानि । आत्मनेपदे । ऊर्णुनुवे ऊर्णुनुवाते ऊर्णुनुविरे । 'ये' । अनेन पूर्वस्य दीर्घः । ऊर्णूयात् ऊर्णूयास्ताम् ऊर्णूयासुः । ङित्त्वात् । ऊर्णुविषीष्ट । विकल्पेन गुणः । ऊर्णविषीष्ट । अन्येषां रूपाणि ज्ञातव्यानि विस्तरभयान्न लिख्यन्ते । लुङ्लकारे ॥ सूत्रम्—'ऊर्णोतेः०' ॥ ऊर्णोतेर्धातोर्वा वृद्धिर्भवति सिप्रत्यये परे । अनेनास्य वा वृद्धिः । द्वौ अडागमौ भवतः स्वरादित्वात् । और्णावीत् । पक्षे गुणो भवति । ङित्त्वात् वा उव् भवति । और्णुवीत् और्णुविष्टाम् और्णुविषुः । यदा गुणो भवति तदा और्णवीत् और्णविष्टाम् और्णविषुः । आत्मनेपदे । और्णविष्ट और्णविषाताम् और्णविषत । और्णविष्ठाः । और्णुविष्ट और्णुविषाताम् और्णुविषत । इत्युभयपदिनः । इति लुग्विकरणा अदादयो धातवः कथिताः ॥ इति द्वितीयो गणः ॥

---

## जुहोत्यादिषु परस्मैपदिनः ७

लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः । हु दानादनयोः ॥ ह्वादेर्द्विश्च ॥ हु इत्यादेर्गणादुत्पन्नस्यापो लुग्भवति तस्मिन् लुकि सति धातोर्द्विर्वचनम् ॥ कुहोश्चुः । गुणः । जुहोति जुहुतः ॥ द्वेः ॥ द्विरुक्तादुत्तरस्यात इत्येतस्माद्भवति । जुह्वति ॥ जुहोषि जुहुथः जुहुथ । जुहोमि जुहुवः जुहुमः । जुहुयात् जुहुयाताम् ॥ जुहोतु जुहुतात् जुहुताम् जुह्वतु ॥ हेर्धिः ॥ जुहोतेरुत्तरस्य हेर्धिर्भवति ॥ जुहुधि । अजुहोत् अजुहुताम् । अन उस् ॥ अद्व्युसीत्युक्तेर्गुणः ॥ अजुहवुः । अजुहोः अजुहुतम् अजुहुत । अजुहवम् अजुहुव अजुहुम । जुहाव जुहुवतुः जुहुवुः । जुहविथ-जुहोथ ॥ भीह्रुभृहीणा-

**माम्वा वक्तव्यः स लुग्वत् ॥ लुकि सति धातोर्द्वित्वम् ॥ जुहवाश्चकार । हूयात् । होता । होष्यति । अहोष्यत् । अहौषीत् अहौष्टाम् अहौषुः ॥**

अधुना लुग्विकरणा ह्वादयो धातवः कथ्यन्ते । लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः । तिबादयः प्रत्यया भवन्ति । हु दानादनयोः । अयं धातुः प्रायोऽग्नितर्पणेऽर्थे होमार्थे वर्तते । उदात्तेत् । तेन परस्मैपदी । हु अप् तिप् इति जाते सूत्रम्—'ह्वादेर्द्विश्च' ॥ ह्वादेः द्विः च । आद्ये 'नामिनो रः' । द्वितीये 'विसर्जनीयस्य सः' 'स्तोश्चुभिः श्चुः' त्रिपदं सूत्रम् । हु इत्यादेर्गणात् धातुपाठोक्तादुत्तरस्य अप्प्रत्ययस्य लुग् भवति । तस्मिंश्च लुकि कृते सति धातोर्द्विर्वचनं द्वित्वं भवति । अनेन अपो लुग्, धातोर्द्वित्वे । सूत्रम्—'सस्वरादिर्द्विरद्विः' ॥ हसादौ अनेकस्वरे धातौ एकस्वरे वा संयोगादौ व्यञ्जनान्ते च धातौ सस्वर आदिरवयवोऽद्विरुक्तो द्विर्भवति । इदं द्वित्वविधायकं सूत्रम् । हु हु तिप् । 'कुहोश्चुः' । 'झपानां जबचपाः' जु हु तिप् । इति जाते । गुणः । जुहोति जुहुतः । 'जुहु अन्ति' इति जाते ॥ सूत्रम्—'द्वेः' ॥ द्विरुक्तात् कृतद्वित्वाद्धातोरुत्तरस्य अन्तः अत् भवति । अनेन अन्तः अत् । 'नुधातोः' । जुह्वति । अन्यानि मूले सन्ति । जुहुयात् जुहुयाताम् जुहुयुः । जुहोतु जुहुतात् जुहुताम् जुह्वतु । जुहुहि इति जाते । सूत्रम्—'हेर्धिः' ॥ हेः धिः । जुहोतेरुत्तरस्य हिप्रत्ययस्य धिर्भवति । अनेन हेर्धिः । जुहुधि । अन्यानि सुगमानि । अजुहोत् अजुहुताम् । अजुहु अन् इति जाते । सूत्रम्—अन उस् ॥ अनः उस् । द्विरुक्ताद्धातोरन उस् भवति । 'अव्युसि' इत्युक्तत्वात् गुणो भवति । अजुहवुः । अन्यानि मूले सन्ति । हु णप् इति स्थिते । 'द्विश्च' । 'सस्वरादिः' 'कुहोश्चुः' । 'झपानाम्' । 'धातोर्नामिनः' । जुहाव । जुहुवतुः । 'अस्वंतो०' जुहुविथ । जुहोथ ॥ सूत्रम्—'भीहुभृह्रीणामाम् वा०' ॥ भीहुभृह्रीणां धातूनां आम् वा वक्तव्यः स आम लुग्वत् । लुकि सति धातोर्द्वित्वं भवति । जुहवांचकार । जुहवामास । जुहवांबभूव । एतानि सुगमानि । 'ये' हूयात् । होता । अत्र गुणो भवति । अन्येषां लकाराणां प्रथमपुरुषस्यैकवचनान्तानि मूले सन्ति । लुग्लकारे—'अनिटो नामिवतः' अनेन वृद्धिः । अहौषीत् अहौष्टाम् अहौषुः । अहौषीः अहौष्टम् अहौष्ट । इत्यादीनि ॥

**ञिभी भये । ञि इत् । बिभेति बिभीतः ॥ ङिति हसे भिय इकारो वा वक्तव्यः ॥ सार्वधातुके । बिभितः बिभ्यति । बिभीयात्-बिभीयात् । बिभेतु बिभीतात् बिभितात् बिभीताम् बिभिताम् । अबिभेत् अबिभिताम् अबिभीताम् अबिभयुः । बिभाय । पक्षे आम् । बिभयाश्चकार । भीयात् । भेता । भेष्यति । अभेष्यत् । अभैषीत् ॥**

ञिभी भये । ञिइत् । पूर्ववत् तिबादयः । 'अप् कर्तरि' । 'ह्वादेर्द्विश्च' । 'ह्रस्वः' । 'झपानाम्' 'गुणः' । बिभेति बिभीतः ॥ सूत्रम्—( ङिति० )॥ ङिति हसे परे भियो धातोरिकारो वा वक्तव्यः सार्वधातुके । सुगममिदं सूत्रम् । बिभितः । 'नुधातोः' । बिभ्यति ।

---

१ 'स्वरान्तान्नित्यानिटः०' इत्येवोचितम् ।

अत्र रूपे । 'द्विरुक्तात्' अनेन अन्तः अत् । बिभेषि । अत्र षत्वम् । बिभीथः बिभिथः । बिभीथ बिभिथ । इत्यादीनि रूपाणि ज्ञातव्यानि । बिभीयात् । बिभियात् । बिभीयाताम् बिभियाताम् । बिभीयुः बिभियुः । इत्यादीनि लोट्लकारे—बिभेतु । बिभीतात्—बिभितात् । बिभीताम्—बिभिताम् । बिभ्यतु इत्यादीनि । अबिभेत् । अबिभीताम् अबिभिताम् । अबिभयुः । इत्यादीनि । लिट्लकारे—'द्विश्च' । 'सस्वरादिः' । 'ह्रस्वः' । 'झपानाम्०' । 'धातोर्नामिनः' । बिभाय बिभ्यतुः बिभ्युः । इत्यादीनि । 'भीह्रुभृह्रीणां०' । अनेनास्याम्प्रत्ययः । बिभयांचकार बिभयामास बिभयांबभूव । भीयात् । गुणः । भेता । लुङ्लकारे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अभैषीत् अभैष्टाम् अभैषुः । इत्यादीनि ॥

ह्री लज्जायाम् । जिह्रेति जिह्रीतः जिह्रियति । जिह्रीयात् । जिह्रेतु । अजिह्रेत् अजिह्रीताम् अजिह्रयुः । जिह्राय जिह्रियतुः । जिह्रियुः । जिह्रयांचकार । ह्रीयात् । ह्रेता । ह्रेष्यति । अह्रेष्यत् । अह्रैषीत् ॥

ह्री लज्जायाम् । पूर्ववत् तिबादयः । 'अप्कर्तरि' । 'ह्वादेर्द्विश्च' । 'सस्वरादिः' । कुहोश्चुः' । 'झपानां जबचपाः' । 'गुणः' । जिह्रेति जिह्रीतः । 'नुधातोः' । द्विरुक्तात् । जिह्रियति । इत्यादीनि । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'कुहोश्चुः' । 'झपानाम्' । 'धातोर्नामिनः' । जिह्राय । 'नुधातोः' । जिह्रियतुः जिह्रियुः । इत्यादीनि । 'भीह्रु०' अनेनाम् । जिह्रयांचकार । जिह्रयामास । जिह्रयांबभूव । ह्रीयात् । 'गुणः' । ह्रेता । अन्यानि सुगमानि । लुङ्लकारे अनिटः । अह्रैषीत् अह्रैष्टाम् अह्रैषुः । इत्यादीनि । सुगमोऽयं धातुः ॥

पॄ पालनपूरणयोः ॥ ॠप्रोरिः पूर्वस्य ॥ ॠप्रोः पूर्वस्य ऋकारस्य इकारो भवति लुकि सति ॥ गुणः पिपर्ति ॥ पोरुर् ॥ पवर्गादुत्तरस्य ॠकारस्य उर् भवति किति ङिति च परे ॥ य्वोर्विहसे । पिपूर्तः पिपुरति । पिपूर्यात् । पिपर्तु-पिपूर्तात् पिपूर्ताम् पिपुरतु । पिपूर्हि । अपिपः ॥ ॠप्रोर्दिस्योरडागमो वा वक्तव्य इति केचित् ॥ अपिपरत् अपिपूर्ता अपिपरुः । अपिपः-अपिपरः अपिपूर्तम् अपिपूर्त । अपिपरम् अपिपूर्व अपिपूर्म । पपार ॥ ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् ॥ कित्त्वाभावाद्गुणः । पपरतुः पपरुः । पपरिथ । पूर्यात् । ईटो ग्रहाम् । परीता परिता । परीष्यति परिष्यति । अपरीष्यत्-अपरिष्यत् । अपारीत् ॥ वृद्धिहेतौ साविटो न दीर्घः ॥ अपारिष्टाम् अपारिषुः । ह्रस्वोऽपि पिपर्तिरस्ति । पिपर्ति पिपृतः पिप्रति । पिपृयात् । पिपर्तु । अपिपः । अपिपरत् अपिपृताम् अपिपरुः । अपिपः अपिपरः । पपार पप्रतुः पप्रुः । ऋतोरिङ् । प्रियात् । पर्ता । हनृतः स्यपः । परिष्यति । अपरिष्यत् । अपार्षीत् ॥

पॄ पालनपूरणयोः । पूर्ववत् तिबादयः । 'अप् कर्तरि' । 'ह्वादेर्द्विश्च' । पॄ पॄ तिप् इति

जाते ॥ सूत्रम्—'ऋप्रोरिः पूर्वस्य' ॥ ऋप्रोः इः पूर्वस्य । ऋ गतौ पृ पालनपूरणयोः इत्येतयोः धात्वोस्तिबादौ अपो लुकि कृते पूर्वस्य ऋकारस्य इकारो भवति, लुकि सति । 'रः' अस्य सूत्रस्यापवादोयम् । पिपृ तिप् इति जाते 'गुणः' । 'राद्यपो द्विः' । पिपर्ति । पिपृ तस् इति जाते ॥ सूत्रम्—'पोरुर्' ॥ पोः उर् । पवर्गात् उत्तरस्य ऋकारस्य किति ङिति प्रत्यये परे उर् भवति । 'य्वोर्विहसे' अनेन दीर्घः । पिपूर्तः । 'पोरुर्' । पिपुरति । पिपर्षि पिपूर्थः पिपूर्थ । पिपर्मि पिपूर्वः पिपूर्मः । पिपूर्यात् पिपूर्याताम् पिपूर्युः । इत्यादीनि । एतानि रूपाणि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति ॥ लोट्लकारे—पिपर्तु पिपूर्तात् पिपूर्ताम् पिपुरतु । पिपूर्हि पिपूर्तात् पिपूर्तम् पिपूर्त । 'गुणः' पिपराणि पिपराव पिपराम ॥ लङ्लकारे—अपिपृ दिप् इति जाते । 'गुणः' । अपिपर् दिप् इति जाते । 'दिस्योर्हसात्' 'रसोर्विसर्गः' अपिपः । 'ऋप्रोर्दिस्योः' । ऋप्रोर्धात्वोः दिस्योः प्रत्यययोः अमागमो वा वक्तव्यः इति केचिदाचार्या वदन्ति । तन्मते–अपिपरत् अपिपूर्ताम् अपिपरुः । अपिपः 'ऋप्रोः' । अपिपरः । अन्यानि मूले सन्ति ॥ लिट्लकारे—पृ णप् इति स्थिते । 'द्विश्च' । 'सस्वरादिः' 'रः' 'धातोर्नामिनः' पपार । 'ऋसंयोगादेः' इत्यनेनास्य कित्त्वाभावात् गुणो भवति । पपरतुः पपरुः । पपरिथ पपरथुः पपर । पपार पपर पपरिव पपरिम । पृ यात् इति स्थिते । 'पोरुर्' । 'य्वोर्विहसे' । पूर्यात् पूर्यास्ताम् पूर्यासुः । इत्यादीनि ॥ पृ ता इतिस्थिते । 'गुणः' । 'सिसता०' । 'ईटो ग्रहाम्०' । परीता परिता । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । 'णित्पे' । अनेन सेर्णित्त्वात् 'धातोर्नामिनः' अनेन वृद्धिः । अपारीत् अपारिष्टाम् । अस्मिन् रूपे । 'ईटो ग्रहाम्०' । अनेन दीर्घे प्राप्ते ॥ 'वृद्धिहेतौ सौ' अनेन तन्निषेधः । अपारिषुः । इत्यादीनि ॥ ह्रस्वोऽपि पिपर्तिरस्ति । पूर्ववत् तिबादयः । 'ह्वादेर्द्विश्च' । 'ऋप्रोरिः पूर्वस्य' । 'गुणः' । पिपर्ति पिपृतः पिप्रति । पिपर्षि पिपृथः पिपृथ । पिपर्मि पिपृवः पिपृमः । पिपृयात् । पिपर्तु पिपृतात् पिपृताम् पिपरतु । पिपृहि पिपृतात् पिपृतम् पिपृत । अपिपः । 'ऋप्रोः' । अपिपरत् । अपिपृताम् अपिपरुः । अपिपः अपिपरः । अन्यानि सुगमानि ॥ लिट्लकारे—'द्विश्च' । 'सस्वरादिः' । 'रः' । 'धातोर्नामिनः' । पपार । 'ऋरम्' । पप्रतुः पप्रुः । पपर्थ । 'यादादौ' अनेन ऋकारस्य रिङ् । प्रियात् । 'गुणः' । 'राद्यपो द्विः' । पर्ता पर्तारौ पर्तारः । 'हनृतः स्यपः' । अनेन स्यप इडागमो भवति । 'गुणः' । परिष्यति । इत्यादीनि रूपाणि । अपरिष्यत् । लुङ्लकारे—'णित्पे' । अनेन णित्त्वात् 'सावनिटः' । अनेन नित्यं वृद्धिर्भवति । षत्वम् । 'दिबादावट्' अनेन अडागमः । अपार्षीत् अपार्ष्टाम् अपार्षुः । इत्यादीनि रूपाणि सुगमानि ॥

ओहाक् त्यागे । ओकावितौ । जहाति ॥ द्वेस्तौ ॥ लोपोऽनुवर्तते इकारश्च ॥ द्विरुक्तस्य धातोराकारस्य लोपो भवति ङिति स्वरे इकारश्च ङिति हसे परे ॥ जहितः ॥ जहातेराकारस्य क्ङिति हसे ईर्वा वाच्यः ॥ जहीतः जहति ॥ जहातेर्यादादावालोपो वाच्यः ॥ जह्यात् । जहातु-जहितात् जहीतात् जहिताम् जहीताम् जहतु ॥ ईर्वा हौ ॥ जहातेर्हौ परे इकारः

सिद्ध एव। पक्षे आकारेकारौ भवतः ॥ जहीहि-जहिहि-जहाहि। अजहात्। अजहिताम्-अजहीताम् अजहुः। जहौ जहतुः जहुः। जहिथ जहाथ। दादेरे। हेयात्। हाता। हास्यति। अहास्यत्। अहासीत् ॥

ओहाक् त्यागे। ओकावितौ। पूर्ववत् प्रत्ययः। 'ह्वादेर्द्विश्च'। अनेनापो लुग् धातोर्द्वित्वं च भवति। तदा हा हा तिप् इति जाते। 'ह्रस्वः' 'कुहोश्चुः'। 'झपानाम्०'। जहाति। इति सिद्धम्। जहा तस् इति जाते ॥ सूत्रम्—'द्वेस्तौ' ॥ द्वेः तौ ॥ लोपः इकारश्च अनुवर्तते। सूत्रं तु द्विपदमस्ति। कस्मात्सूत्रादनुवर्तते इति शङ्कायां वृत्तिकारो विशेषेण व्याचष्टे। 'नातः' इति सूत्रादाकारस्य लोपोऽनुवर्तते। तथा 'घ्वोर्विहसे' इति सूत्रात् इकारोऽनुवर्तते। द्विरुक्तस्य धातोराकारस्य ङिति स्वरे परे लोपो भवति। ङिति हसे परे आकारस्य इकारो भवति अनेन आकारस्य इकारः। जहितः ॥ 'जहातेः०' ॥ जहातेर्धातोराकारस्य क्ङिति हसे परे वा इकारो भवति। अनेन वा आकारस्य ईकारः। जहीतः। जहा अन्ति इति जाते। 'द्विरुक्तात्'। 'द्वेस्तौ'। अनेन आकारस्य लोपो भवति। जहति। जहासि। जहिथः जहीथः। जहिथ जहीथ। जहामि जहिवः जहीवः। जहिमः जहीमः। इत्यादीनि रूपाणि ज्ञेयानि। जहा यात् इति जाते ॥ सूत्रम्—'जहातेः०' ॥ जहातेर्धातोर्यादादौ परे आकारस्य लोपो भवति। अनेन आकारस्य लोपः। जह्यात्। शेषाणि सुगमानि। 'आशीःप्रेरणयोः'। जहातु जहितात् जहीतात्। जहिताम् जहीताम्। 'द्वेस्तौ'। 'द्विरुक्तात्'। जहतु। जहा हि इति स्थिते ॥ सूत्रम्—'ईर्वा हौ' ॥ ईः वा अव्ययम् हौ। जहातेर्धातोर्हौ परे ईकारः सिद्ध एव। पक्षे आकारेकारौ भवतः। सुगमम्। अनेन सूत्रेण त्रीणि रूपाणि भवन्ति। जहीहि जहिहि जहाहि। अत्र भट्टिः 'जहिहि जहीहि जहाहि रामभार्याम्' इत्युदाजहार। अन्यानि सुगमानि। लङ्लकारे। अजहात् अजहिताम् अजहीताम्। 'द्वेस्तौ' अनेनाकारस्य लोपो भवति। अजहुः। अन्यानि सुगमानि ॥ परोक्षे। द्वित्वम्। 'ह्रस्वः'। 'कुहोश्चुः'। 'झपानाम्'। 'आतो णप् डौ' जहौ। 'आतोऽनपि'। अनेन आकारस्य लोपो भवति। तदा। जहतुः जहुः। 'अत्वतो०'। जहिथ जहाथ। अन्यानि सुगमानि। लिङ्लकारे हा यात् इति जाते 'दादेरे'। अनेन आकारस्यैकारः। हेयास्ताम् हेयासुः। हाता। लुङ्लकारे—'आदन्तानाम्' अनेनेट्सकौ भवतः। 'सेः' अनेनेट्—अहासीत् अहासिष्टाम् अहासिषुः। अन्यानि सुगमानि ॥

ऋ गतौ ॥ ऋप्रोरिः पूर्वस्य ॥ असवर्णे स्वरे पूर्वं इयादेशो भवति ॥ इयर्ति इयृतः इय्रति। इयृयात्। इयर्तु इयृतात् इयृताम् इय्रतु। इयृहि-इयृतात् इयृतम् इयृत। इयराणि इयराव इयराम। ऐयः ऐयरत् ऐयृताम् ऐयरुः। ऐयः-ऐयरः ऐयृतम् ऐयृत। ऐयरम् ऐयृव ऐयृम ॥ रः। वृद्धिः। आर आरतुः आरुः ॥ गुणोर्तिसंयोगाद्योः। अर्यात्। अर्ता। अरिष्यति।

१ 'दादेरिः' इत्येवोचितम् 'घ्वोर्विहसे' इत्यस्य दीर्घविधायकत्वात् ॥

**अरिष्यत् । ऋदृशोः । पुषादित्वात् ङप्रत्ययः । सेरपवादः । गुणः । आरत् ॥**
**इति जुहोत्यादिषु परस्मैपदिनः ॥ ७ ॥**

ऋ गतौ । तिबादयः । 'अप् कर्तरि' । अनेन चतुर्षु अप् । 'ह्वादेर्द्विश्च' । ऋ ऋ तिप् इति जाते । 'ऋतोरिः पूर्वस्य' गुणः ॥ 'असवर्णे' अनेनेय् । इयर्ति इयृतः । अत्र ङित्त्वाद्गुणो न भवति । 'द्विरुक्तात्' अनेन अन्तः अत् । 'ऋरम्' । इय्रति । अन्यानि यथासंभवं ज्ञेयानि । इयृयात् ॥ लोट्लकारे—इयर्तु । अन्यानि मूले ॥ सन्ति ॥ इयृ दिप् इति जाते । 'गुणः' द्वौ अडागमौ । ऐयः । 'दिस्योः०' । ऐयरत् । अन्यानि मूले सन्ति ॥ लिट्लकारे—'द्विश्च' 'रः' 'धातोर्नामिनः' । अनेन वृद्धिः । 'सवर्णे०' । आर । 'गुणोऽर्ति०' अनेन गुणः । आरतुः आरुः । आरिथ । अन्यानि । सुगमानि । ऋ यात् इति जाते । 'गुणोर्ति०' अनेन गुणो भवति । अर्यात् अर्यास्ताम् अर्यासुः । इत्यादीनि । ऋ ता इति स्थिते । 'गुणः' । अर्ता अर्तारौ अर्तारः । 'हनृतः स्यपः' । गुणः । अरिष्यति । स्वरादित्वादडागमद्वयम् । आरिष्यत् ऋदृशोर्धात्वोः पुषादित्वात् ङप्रत्ययो भवति सेरपवादः । 'दृशादेः' । अनेन गुणः । अडागमद्वयम् । आरत् आरताम् आरन् । अन्यानि सुगमानि ॥ इति परस्मैपदिनः समाप्ताः ॥ ७ ॥

---

## जुहोत्यादिष्वात्मनेपदिनः ८

**॥ अथात्मनेपदिनः ॥ ओहाङ् गतौ ॥ भृञां लुकि ॥ डुभृञ् धारणपोषणयोः । ओहाङ् गतौ माङ् माने इत्येतेषां पूर्वस्याकारस्य इकारो भवति लुकि सति ॥ द्वेस्तौ । जिहीते जिहाते जिहते । जिहीत । जिहीताम् । अजिहीत । जहे । हासीष्ट । हाता । हास्यते । अहास्त । अहास्त अहासाताम् अहासत ॥**

अथात्मनेपदिनः कथ्यन्ते । ओहाङ् गतौ । ओकार इत् । ङकार आत्मनेपदार्थः । तेआदयः प्रत्यया भवन्ति । 'ह्वादेर्द्विश्च' । हा हा ते इति जाते । 'ह्रस्वः' । 'कुहोश्चुः' । सूत्रम्—'भृञां लुकि' ॥ भृञाम् लुकि । डुभृञ् धारणपोषणयोः ओहाङ् गतौ माङ् माने इत्येतेषां धातूनां पूर्वस्याकारस्य इकारो भवति । 'द्वेस्तौ' । जिहीते । अकारलोपः । जिहाते । 'आतोन्तो' । जिहते । जिहीषे । जिहाथे जिहीध्वे । जिहे जिहीवहे जिहीमहे । 'द्वेस्तौ' । अनेनाकारस्य लोपः । जिहीत जिहीयाताम् जिहीरन् । अन्यानि सुगमानि ॥ लोट्लकारे । जिहीताम् । आकारलोपः । जिहाताम् जिहताम् । जिहीष्व । अन्यानि सुगमानि ॥ लङ्लकारे । अजिहीत अजिहाताम् अजिहत । अन्यानि सुगमानि ॥ लिट्लकारे । 'द्विश्च' । 'ह्रस्वः' । 'कुहोश्चुः' । 'झपानाम्०' । 'आतोनपि' । अनेन आकारस्य लोपः । जहे जहाते जहिरे । हासीष्ट । अन्येषां रूपाणि सुगमानि मूलाज्ज्ञातव्यानि ॥ लुङ्लकारे । 'भूते सिः' अनेन सिप्रत्ययो भवति । 'दिवादावट्' । अहास्त अहासाताम् अहासत । 'आतोन्तो०' । अनेनान्तः अत् ॥

**माङ् माने । मिमीते मिमाते मिमते । मिमीत । मिमीताम् । अमिमीत । ममे । मासीष्ट । माता । मास्यते । अमास्यत । अमास्त ॥ इति जुहोत्यादिष्वात्मनेपदिनः ॥ ८ ॥**

माङ् माने । पूर्वसूत्रैरेवायं धातुः सिध्यति । 'ह्वादेर्द्विश्च' । अनेन चतुर्षु धातोर्द्वित्वम् । मिमीते मिमाते । 'आतो०' । मिमीते । अन्यानि सुगमानि । मिमीत मिमीयाताम् मिमीरन् । मिमीताम् अमिमीत । अमिमाताम् 'आतो०' । अमिमत । लिट्लकारे । ममे ममाते ममिरे । अन्यानि सुगमानि । मासीष्ट । माता ॥ लुङ्लकारे 'भूते सिः' । अमास्त अमासाताम् अमासत । अन्यानि सुगमानि तानि ज्ञातव्यानि विद्वद्भिः । इत्यात्मनेपदिनः समाप्तः ॥ ८ ॥

---

## जुहोत्यादिषूभयपदिनः ९

**अथोभयपदिनः ॥ डुभृञ् धारणपोषणयोः । डुञावितौ । बिभर्ति बिभृतः बिभ्रति । बिभृते । बिभृयात् । बिभ्रीत । बिभर्तु बिभृताम् । अबिभः अबिभृताम् अबिभरुः । अबिभृत । बभार बभ्रतुः बभ्रुः । बभर्थ । बभ्रे बिभराञ्चकार बिभरांचक्रे बिभरामास बिभरांबभूव । यादादौ । बिभ्रियात् भृषीष्ट । भर्ता २ । हनृतः स्यपः । भरिष्यति-भरिष्यते । अभरिष्यत्-अभरिष्यत । अभार्षीत् । उः । अभृत ॥**

डुभृञ् धारणपोषणयोः । डुञावितौ स्तः । तिबादयस्तआदयश्च प्रत्यया भवन्त्यस्य धातोः । ह्वादेर्द्विश्च' । अनेनापो लोपो धातोर्द्वित्वं च भवति । भृ भृ तिप् इति जाते । 'रः' 'झपानाम्०' । 'भृञां लुकि' । 'गुणः' । बिभर्ति बिभृतः । 'द्विरुक्तात्' । 'ऋरम्' । बिभ्रति । अन्यानि एतैरेव सूत्रैः सिध्यन्ति । बिभृते बिभ्राते बिभ्रते । बिभृयात् बिभृयाताम् बिभृयुः । बिभ्रीत बिभ्रीयाताम् बिभ्रीरन् । बिभर्तु बिभृताम् ॥ अबिभः अबिभृताम् । 'अन उस्' । 'गुणः' । अबिभरुः । अन्यानि सुगमानि । अबिभृत अबिभ्राताम् अबिभ्रत ॥ लिट्लकारे—'द्विश्च' । अनेन द्वित्वम् । 'रः' । 'झपानाम्' । 'धातोर्नामिनः' । अनेन वृद्धिः । बभार । 'ऋरम्' बभ्रतुः बभ्रुः । क्रादित्वान्नेट् । 'गुणः' बभर्थ । अन्यानि सुगमानि । आत्मनेपदे बभ्रे बभ्राते बभ्रिरे । 'भीह्रु०' । अनेनाम्प्रत्ययः स लुग्वत् । अन्यत्साधनं तु पूर्ववत् । बिभरांचकार बिभरांचक्रे । बिभरामास । बिभरांबभूव । एतानि रूपाणि सुगमानि । यादादौ । भ्रियात् । 'उः' । अनेन गुणाभावः । षत्वम् । भृषीष्ट । 'गुणः' । भर्ता । भर्ता । 'हनृतः स्यपः' । अनेनेट् प्रत्ययो भवति । 'गुणः' । षत्वम् । भरिष्यति । भरिष्यते । 'दिबादावट्' । अभरिष्यत् अभरिष्यत । एतानि रूपाणि सुगमानि । लुङ्लकारे णित्त्वात्सेर्वृद्धिः । 'दिबादावट्' षत्वम् । अभार्षीत् अभार्ष्टाम् अभार्षुः । अन्यानि सुगमानि । आत्मनेपदे 'लोपो ह्रस्वाज्झसे' । अनेन सेर्लोपो भवति । अभृत । षत्वम् । अभृषाताम् । अभृषत । 'आतोन्तो०' ॥

डुदाञ् दाने । ददाति ॥ दादेः ॥ द्विरुक्तस्य धातोराकारस्य लोपो भवति ङिति परे ॥ दत्तः ददति । दत्ते ददाते ददते । दद्यात् ददीत । ददातु दत्ताद्वा दत्ताम् ददतु ॥ दां हौ ॥ दाधोराकारस्यैकारो भवति पूर्वस्य च लोपो भवति हौ परे ॥ देहि दत्तात् । अददात् अदत्ताम् अददुः । अदत्त ॥ ददौ ददे । देयात् । दासीष्ट । दाता २ । दास्यति दास्यते । अदास्यत् अदास्यत । दादेः पे । अदात् अदाताम् अदुः ॥ दाधास्थामित्वं सेर्ङित्वम् ॥ ङित्वान्न गुणः ॥ लोपो ह्रस्वाज्झसे । अदित अदिषाताम् अदिषत ॥

डुदाञ् दाने । डुञौ इतौ । पूर्ववत् प्रत्यया भवन्ति । 'ह्वादेर्द्विश्च' । 'ह्रस्वः' । ददाति । ददा तस् इति जाते । सूत्रम्—'दादेः' ॥ दाधातुरादिर्यस्य सः दादिः तस्य दादेः एकपदं सूत्रम् । द्विरुक्तस्य दादेर्धातोराकारस्य लोपो भवति ङिति विभक्तौ स्वरे ह्से च परे । 'द्वेस्तौ' इत्यस्यापवादः । अनेन पिद्वर्जे षट्स्वपि वचनेषु आकारलोपः । तकारथकारेषु 'खसे चपा०' । अनेन दकारस्य तकारः । दत्तः ददति । ददासि दत्थः दत्थ । ददामि दद्वः दद्मः । दत्ते ददाते ददते । दत्से ददथे दद्ध्वे । ददे दद्वहे दद्महे । एतानि सर्वाणि रूपाणि एतैरेव सूत्रैः सिध्यन्ति ॥ दद्यात् दद्याताम् दद्युः । अन्यानि सुगमानि । ददीत ददीयाताम् ददीरन् ॥ ददातु दत्तात् दत्ताम् ददतु । ददा हि इति जाते ॥ सूत्रम्—'दां हौ' ॥ दां हौ द्विपदं सूत्रम् । दादीनां दा धा इति धातूनां द्विवचनस्य द्वित्वस्य लोपो भवति आकारस्य च एकारो भवति । देहि । द्वितीये तु तातङादेशः । आकारलोपः । दत्तात् दत्तम् दत्त । उत्तमपुरुषे । 'सवर्णे०' ददामि ददाव ददाम । दत्ताम् ददाताम् । 'आतोन्तो०' । ददताम् । अन्यानि सुगमानि ॥ अददात् अदत्ताम् । 'अत उस्' । अददुः । अददाः अदत्तम् अदत्त । 'सवर्णे०' । अददाम् अदद्व अदद्म । अदत्त अददाताम् अददत । अदत्थाः । अन्यानि सुगमानि ॥ लिट्लकारे—'द्विश्च' 'ह्रस्वः' । 'आतो णप् डौ' ददौ । 'आतोऽनपि' ददतुः ददुः । 'अंत्त्वतो०' ददिथ ददाथ । अन्यानि सुगमानि । आत्मनेपदे । ददे ददाते ददिरे । दा यात् इति जाते । 'दादेरे' अनेनाकारस्यैकारः । देयात् देयास्ताम् देयासुः । दासीष्ट । अन्येषां सकाराणां रूपाणि सुगमानि । लुङ्लकारे । अदासि दिप् इति जाते । 'दादेः पे' अनेन सेर्लोपः । अदात् अदाताम् । अ दा सि अन् इति जाते । 'स्याविदः' 'दादेः पे ।' अदुः । अदाः अदातम् अदात । अदाम् अदाव अदाम । अदा सि तन् इति जाते ॥ सूत्रम्—'दाधास्थाम्०' ॥ दाधास्थाधातूनां इत्वं भवति सेर्ङित्वं च । आत्मनेपदे ङित्वात् गुणाभावः । 'लोपो ह्रस्वाज्झसे' अनेन सेर्लोपः । अदित अदिषाताम् । 'आतोन्तो०' अदिषत ॥

डुधाञ् धारणपोषणयोः । दधाति । दादेः ॥ पूर्वस्य ङिति झसे धः ॥ झभान्तस्य दधातेः पूर्वदकारस्य धकारो भवति ङिति झसे परे ॥ धत्तः दधति । धत्ते । दध्यात् दधीत । दधातु धेहि धत्ताम् । अदधात् अधत्ताः

---

१ 'स्वरान्तान्निद्यानिटः०' इति सूचितम् ॥

**अदत्त दधौ दधे । धेयात् । धासीष्ट । धाता २ । धास्यति धास्यते । अधास्यत् अधास्यत । दादेः पे । अधात् । अधित ॥**

डुधाञ् धारणपोषणयोः । डुञावितौ । पूर्ववत् प्रत्यया भवन्ति । 'ह्वादेर्द्विश्च' अनेनापो लोपः धातोर्द्वित्वम् । 'ह्रस्वः' 'झपानां जबचपाः' दधाति । दधा तस् इति जाते । 'दादेः' अनेनाकारस्य लोपः । दध् तस् इति जाते ॥ सूत्रम्—'पूर्वस्य ङिति झसे धः' ॥ पूर्वस्य ङिति झसे झसे धः । झभान्तस्य धातोः पूर्वस्य दकारस्य धकारो भवति ङिति झसे प्रत्यये परे। अनेन दकारस्य धकारः । ध् ध् तस् इति जाते । अत्र 'तथोर्धः' अनेन तकारस्य धकारे प्राप्ते 'दधातिं विना' इत्युक्तत्वात् न भवति । 'खसे चपा०' धत्तः दधति । दधासि धत्थः धत्थ । दधामि दध्वः दध्मः । धत्ते दधाते । 'आतोन्तो०' दधते । धत्से दधाथे धद्ध्वे । दधे दध्वहे दध्महे । 'दादेः०' दध्यात् दध्याताम् दध्युः । दधीत दधीयाताम् दधीरन् ॥ दधातु धत्तात् धत्ताम् । द्विरुक्तात् । दधतु । 'ह्वां हौ' धेहि धत्तात् धत्तम् धत्त । 'सवर्णे०' दधानि दधाव दधाम । धत्ताम् दधाताम् दधताम् । धत्स्व दधाथाम् धद्ध्वम् । 'एऐऐ' दधै दधावहै दधामहै ॥ अदधात् । अधत्ताम् । 'अन उस्' अदधुः । अधत्त अदधाताम् अदधत । अन्यानि सुगमानि । लिट्लकारे । 'द्विश्च' 'सस्वरादिः' 'झपानाम्०' 'आतो णप् डौ' दधौ । 'आतोऽनपि' अनेनाकारस्य लोपः । दधतुः दधुः । दधिथ दधाथ । आत्मनेपदे—'आतोऽनपि' दधे दधाते दधिरे । 'दादेरे' धेयात् धेयास्ताम् धेयासुः । धासीष्ट । धाता । लुङ्लकारे । 'दादेः पे' अनेन सेर्लोपः । अधात् अधाताम् । 'स्साविदः' अधुः । आत्मनेपदे । 'दाधास्थाम्' अनेन इत्वम् । सेर्ङित्त्वम् । ङित्वात् 'लोपो ह्रस्वाज्झसे' अनेन सेर्लोपः । अधित अधिषाताम् । 'आतोन्तो०' अधिषत । अधिथाः अधिषाथाम् अधिध्वम् । अधिषि अधिष्वहि अधिष्महि ॥

**णिजिर् शौचपोषणयोः । इरित् । आदेः ष्णः स्नः ॥**

**निजां गुणः ॥ निज्विज्विषां पूर्वस्य गुणो भवति लुकि सति ॥ नेनेक्ति नेनिक्तः नेनिजति । नेनेक्षि नेनिक्थः नेनिक्थ । नेनेज्मि नेनिज्वः नेनिज्मः । नेनिक्ते । नेनिज्यात् । नेनिजीत् । नेनेक्तु नेनिक्तात् नेनिक्ताम् नेनिजतु । नेनिग्धि-नेनिक्तात् नेनिक्तम् नेनिक्त ॥ द्वेः स्वरेऽपि नोपधागुणः ॥ द्विरुक्तस्य धातोरपि विषये पिति स्वरे उपधाया गुणो न भवति ॥ नेनिजानि नेनिजाव नेनिजाम । नेनिक्ताम् । अनेनेक्-अनेनेग् अनेनिक्ताम् अनेनिजुः । अनेनिक्त । निनेज निनिजे । निज्यात् । सिस्योः निक्षिष्ट नेक्ता नेक्ता । नेक्ष्यति नेक्ष्यते । अनेक्ष्यत् अनेक्ष्यत । अनिजत् अनिजताम् । अनिटो नामिवतः । अनैक्षीत् अनैक्ताम् अनैक्षुः ॥**

णिजिर् शौचपोषणयोः । इरित् । 'आदेः ष्णः स्नः' अनेन णकारस्य नकारः । पूर्ववत् प्रत्ययाः । 'ह्वादेर्द्विश्च' निनिज् तिप् इति जाते ॥ सूत्रम्—निजां गुणः ॥ निजां गुणः ।

निज्विज्विषां धातूनां पूर्वस्य गुणो भवति लुकि कृते सति। अनेन चतुर्षु लकारेषु पूर्वस्य गुणो भवति। ने निज् तिप् इति जाते। 'उपधाया लघोः' अनेन गुणः। नेनेज् तिप् इति जाते 'खसे चपा०'। नेनेक्ति नेनिक्तः नेनिजति। नेनेज् सिप् इति जाते। 'खसे चपा०' 'क्लिात्०' 'कषसंयोगे'। नेनेक्षि नेनिक्थः नेनिक्थ। अन्यानि रूपाणि सन्ति मूले। नेनिक्ते नेनिजाते। 'आतोन्तो०' नेनिजते। नेनिज्यात् नेनिज्याताम् नेनिज्युः। नेनिजीत। नेनेक्तु नेनिक्तात् नेनिक्ताम्। 'द्विरुक्तात्'। नेनिजतु। नेनिज् हि इति जाते। 'झसाद्धिर्हैः' अनेन हेर्धिः। 'चोः कुः' 'झबे जबाः'। नेनिग्धि नेनिक्तात् नेनिक्तम् नेनिक्त। नेनिज् आ निप् इति स्थिते। 'उपधाया लघोः' अनेन गुणे प्राप्ते॥ सूत्रम्—'द्वेः स्वरेऽपि नोपधागुणः'॥ द्वेः स्वरे अपि न अव्ययम्। उपधायाः गुणः। द्विरुक्तस्य धातोरपि विषये पिति स्वरे परे उपधाया गुणो न भवति। अनेन गुणनिषेधोऽत्र। नेनिजानि नेनिजाव नेनिजाम। नेनिक्ताम् नेनिजाताम् नेनिजताम्। नेनिज् स्व इति जाते। 'चोः कुः'। 'खसे चपा०'। षत्वम् 'कषसंयोगे क्षः'। नेनिक्ष्व। अन्यानि सुगमानि। लङ्लकारे प्रथमपुरुषस्यैकवचने। नेनेज् दिप् इति जाते। 'चोः कुः'। 'दिस्योर्हसात्' अनेन सेर्लोपो भवति। 'वावसाने'। 'दिबादावद्'। अनेनेक्—अनेनेग्। अनेनिक्ताम्। अनेनिजुः। अनेनेक्—अनेनेग् अनेनिक्तम् अनेनिक्त। अनेनिजम्। अनेनिक्त अनेनिजाताम्। 'आतोऽन्तो०'। अनेनिजत। अनेनिक्थाः अनेनिजाथाम् अनेनिग्ध्वम्। लिट्लकारे। 'द्विश्च'। अनेन द्वित्वम्। पूर्वस्य 'उपधाया लघोः' अनेन गुणो भवति। निनेज निनिजतुः निनिजुः। 'उपधायाः। निनेजिथ। अन्यानि सुगमानि। निनिजे निनिजाते निनिजिरे। षत्वम्। निनिजिषे निनिजाथे निनिजिध्वे। निज्यात् निज्यास्ताम् निज्यासुः। 'सिस्योः०' अनेनात्र गुणाभावो भवति। निज् सीष्ट इति जाते। 'चोः कुः'। 'खसे०'। षत्वम्। 'कषसंयोगे क्षः' निक्षीष्ट निक्षीयास्ताम् निक्षीरन्। इत्यादीनि। 'उपधाया लघोः'। 'चोः कुः'। नेक्ता नेक्तारौ नेक्तारः। नेज् स्यप् तिप् इति जाते। चुत्वम्। षत्वम्। 'कषसंयोगे०'। नेक्ष्यति नेक्ष्यते। अनेक्ष्यत् अनेक्ष्यत॥ लुङ्लकारे—अनिज् सि ईट् दिप् इति जाते। 'अनिटो ना०'। अनेन वृद्धिः। चुत्वम्। षत्वम्। 'कषसंयोगे०'। अनैक्षीत् अनैक्ताम् अनैक्षुः। इत्यादीनि। आत्मनेपदे वृद्धिर्न भवति। अनिक्त। अत्र 'झसात्' अनेन सेर्लोपो भवति। अनिक्षाताम्। 'आतोन्तो०'। अनिक्षत। अनिक्थाः अनिक्षाथाम् अनिग्ध्वम्। अस्य धातोः 'इरितो वा' अनेन ङप्रत्ययो भवति। ङित्वाद्गुणाभावः। अनिजत् अनिजताम् अनिजन्। इत्यादीनि॥

**विजिर् पृथग्भावे। वेवेक्ति। नेनेक्तिवत्॥**

विजिर् पृथग्भावे। पूर्ववत् तिबादयस्तेआदयश्च प्रत्यया भवन्ति। 'अप् कर्तरि'। 'ह्वादेर्द्विश्च'। 'चोः कुः'। खसे चपा झसानाम्'। 'निजां गुणः'। 'उपधाया लघोः' वेवेक्ति। वेविक्तः। 'द्विरुक्तात्' वेविजति। अयं धातुर्नेनेक्तिवज्ज्ञातव्यो न कश्चिद्विशेषः॥

**विष्लृ व्याप्तौ। वेवेष्टि वेविष्टे। वेविष्यात् वेविषीत। वेवेष्टु वेविष्टाम्। अवेवेट् अवेवेड्। विवेष विविषे। विष्यात् विक्षीष्ट। वेष्टा २। वेक्ष्यति वेक्ष्यते।**

अवेक्ष्यत् अवेक्ष्यत । लित्पुषादेर्ङः । अविषत् । ङो वेति केचित् । हशषान्तात्सक् अविक्षत् अविक्षत ॥ इति जुहोत्यादिषूभयपदिनः ॥ ९ ॥ इति लुग्विकरणा जुहोत्यादयः ॥

विष्लृ व्याप्तौ । लकार इत् । पूर्ववत् प्रत्यया भवन्ति । 'ह्वादेर्द्विश्च' । 'निजां गुणः' । अनेन पूर्वस्य गुणः । 'उपधाया लघोः' । अनेन द्वितीयस्य गुणो भवति । ष्टुत्वम् । वेवेष्टि वेविष्टः । 'द्विरुक्तात्' वेविषति । 'षढोः कः से' अनेन षस्य कः । वेवेक्षि । इत्यादीनि । वेविष्टे । वेविष्यात् वेविषीत । वेवेष्टु वेविष्टात् वेविष्टाम् वेविषतु । वेविष् हि इति जाते । 'झसात्' । 'षो डः' । वेविड्ढि । अन्यानि सुगमानि । वेविष्टां वेविषाताम् वेविषताम् ॥ अवेवेष् दिप् इति जाते । 'षो डः' । 'दिस्योर्हसात्' । अनेन दिप्सिपोर्लोपः । 'वावसाने' । अवेवेट् अवेवेड् अवेविष्टाम् अवेविषुः । अन्यानि सुगमानि । अवेविष्ट अवेविषाताम् अवेविषत । एतानि सर्वाणि रूपाणि एतैरेव सूत्रैः सिध्यन्ति । ततस्तेषां व्याख्यानस्यानावश्यकत्वम् । लिट्लकारे 'द्विश्च' । पूर्वस्य । 'उपधायाः' । विवेष विविषतुः विविषुः । विवेषिथ । इत्यादीनि । आत्मनेपदे । विविषे विविषाते विविषिरे । विविषिषे । विष्यात् । विष् सीष्ट इति स्थिते । 'षढोः कः से' । षत्वम् । 'कषसं०' । 'सिस्योः०' । अनेन गुणाभावः। विक्षीष्ट । ष्टुत्वम् । वेष्टा । वेष्टा । 'षढोः कः से' । 'किलात्०' 'कषसंयोगे' । उपधायाः' । वेक्ष्यति वेक्ष्यते । अवेक्ष्यत् अवेक्ष्यत । एतेषां लकाराणां रूपाणि सुगमानि ॥ लुङ्लकारे । 'लित्पुषादेर्ङः' । अनेन ङप्रत्ययो भवति । ङित्त्वात् गुणाभावः । 'दिवादावट्' । अविषत् अविषताम् अविषन् । ङप्रत्ययो वा भवति इति केचिदाचार्या वदन्ति । तत्पक्षे 'हशषान्तात्सक्' । कित्त्वाद्गुणाभावः । कत्वम् । षत्वम् । 'कषसं०' । अविक्षत् अविक्षताम् अविक्षन् । आत्मनेपदेऽपि । 'हशषान्तात्०' अनेन सक्प्रत्ययो भवति । अविक्षत । 'आतिसकोकारलोपः स्वरे' । अनेनाकारस्य लोपः । अविक्षाताम् । 'आतोन्तो०' । अविक्षत । इत्युभयपदिनः । इति लुग्विकरणा ह्वादयो धातवः कथिताः ॥ समाप्तोऽयं ह्वादिगणः ॥९॥

---

## दिवादिषु परस्मैपदिनः १०

अथ दिवादयः ॥ ॥ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्रकान्तिगतिषु ॥ दिवादेर्यः ॥ दिवादेर्गणाद्यः प्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः ॥ य्वोर्विहसे । दीव्यति । दीव्येत् । दीव्यतु । अदीव्यत् । दिदेव दिदिवतुः दिदिवुः । दिदेविथ । दीव्यात् । देविता । देविष्यति । अदेविष्यत् । अदेवीत् ॥

अथ दिवादिगणः कथ्यते । तत्रादौ परस्मैपदिनः कथ्यन्ते । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्रकान्तिगतिषु । दिव्धातुरेष्वर्थेषु वर्तते । तत्र क्रीडा खेलनम् । विजिगीषा जेतुमिच्छा । कान्तिरभिलाषः । शेषाः प्रतीतार्थाः । प्रसिद्धिस्तु क्रीडार्थस्यैव द्युत्यर्थस्य च । उकार उदित्कार्यार्थः—'उदितः क्तो वेट्' इति इड्विकल्पार्थः । 'परतोऽन्यत्'। अनेन परस्मैपदं भवत्यस्य तिबादयः प्रत्यया भवन्ति । तदा दिवु तिप् इति जाते सूत्रम्—

'दिवादेर्यः' दिवादेः यः द्विपदं सूत्रम् । दिवादेर्गणाच्चतुर्षु तिबादिषु दिप्पर्यन्तेषु प्रत्ययेषु परेषु यः प्रत्ययो भवति सस्वरो यः प्रत्ययो भवति । अयमपोऽपवादः । अनेन यः प्रत्ययो भवति । 'य्वोर्विहसे' अनेन दीर्घो भवति । दीव्यति दीव्यतः दीव्यन्ति । 'अदे' अनेनाकारस्य लोपः । दीव्यसि दीव्यथः दीव्यथ । दीव्यामि 'म्वोरा' । दीव्यावः दीव्यामः । ननु 'अप्कर्तरि' इति सामान्येनोक्तत्वात् दिवादेरपि अप्प्रत्ययः क्रियतां तत्राह—अपोऽपवादः । दिवादेरारभ्य क्र्यादिगणो यावत् तावत् अप्प्रत्ययो न भवतीत्यर्थः । यादादौ तु भवतिवत् या इत्यादीनि सूत्राणि योज्यानि । दीव्येत् दीव्येताम् । युस इट् 'अ इए' । दीव्येयुः । दीव्येः दीव्येतम् दीव्येत । 'यामियम्' दीव्येयम् दीव्येव दीव्येम । तुबादौ यप्रत्यये कृते सति भवतिवत्कार्यं भवति । दीव्यतु दीव्यतात् दीव्यताम् दीव्यन्तु अस्मिन् 'अदे' अनेनाकारस्य लोपो भवति । 'अतः' । दीव्य दीव्यतात् दीव्यतम् दीव्यत । 'सवर्णे०' । दीव्यानि दीव्याव दीव्याम । 'दिबादावट्' । अन्यत्तु भवतिवत् । अदीव्यत् अदीव्यताम् । 'अदे' अदीव्यन् । अन्यानि सुगमानि । लिट्लकारे । 'द्विश्च' पूर्वस्य । 'उपधायाः' दिदेव दिदिवतुः दिदिवुः । 'गुणः' । दिदेविथ । शेषाणि सुगमानि । 'य्वोर्विहसे' दीव्यात् दीव्यास्ताम् 'उपधाया लघोः' । 'सिसता०' । अनेनेट् । देविता । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे द्वौ इटौ । अडागमः । 'गुणः' । अदेवीत् अदेविष्टाम् अदेविषुः ॥

**षिवु तन्तुसन्ताने । सीव्यति । सीव्येत् । सीव्यतु । असीव्यत् । सिषेव । सीव्यात् । सेविता । सेविष्यति । असेविष्यत् । असेवीत् ॥**

षिवु तन्तुसंताने । उकारः । 'आदेः ष्णः स्नः' तिबादयः । 'दिवादेर्यः' । 'य्वोर्विहसे' अनेन दीर्घः । सीव्यति । सीव्येत् । सीव्यतु । असीव्यत् । एतेषां रूपाणि सुगमान्यतो व्याख्यानं न कृतम् । लिट्लकारे । द्वित्वम् । पूर्वस्य 'उपधायाः' । 'किलात्०' । सिषेव सिषिवतुः सिषिवुः । 'गुणः' । सिषेविथ । 'य्वोर्विहसे' । सीव्यात् सीव्यास्ताम् सीव्यासुः । 'उपधायाः' । 'सिसता०' । अनेनेट् । सेविता । सेविष्यति । अत्र षत्वम् । लुङ्लकारे द्वौ इटौ । 'इट ईटि' । गुणः । अडागमः । असेवीत् असेविष्टाम् असेविषुः । इत्यादीनि रूपाणि ज्ञातव्यानि ॥

**नृती गात्रविक्षेपे । ईकार इत् । नृत्यति । नृत्येत् । नृत्यतु । अनृत्यत् । ननर्त ननृततुः ननृतुः । नृत्यात् । नर्तिता । नर्तिष्यति । अनर्तिष्यत् ॥ चृतृतृदृछृदृचृतृकृतां सस्यासेरिट् वा वक्तव्यः ॥ नर्त्स्यति अनर्त्स्यत् । अनर्तीत् ॥**

नृती गात्रविक्षेपे । पूर्ववत् तिबादयो भवन्ति । 'दिवादेर्यः' अनेन यप्रत्ययो भवति । ईकार इत् । नृत्यति नृत्यतः नृत्यन्ति । नृत्येत् । नृत्यतु । अनृत्यत् । लिट्लकारे द्वित्वम् । पूर्वस्य रः । 'उपधाया लघोः' । ननर्त । कित्वान्न गुणः । ननृततुः ननृतुः । ननर्तिथ । अन्यानि सुगमानि । नृत्यात् । 'सिसता०' अनेनेट् प्रत्ययो भवति । 'गुणः' अनेन गुणो भवति । नर्तिता । अन्यानि सुगमानि । नर्तिष्यति । षत्वं भवति । अनर्तिष्यत् ॥

सूत्रम्—'नृतत्रद०' ॥ नृतत्रद्छृद्चृतकृतां धातूनां असेः सस्य इड् वा वक्तव्यः । अनेनास्य से परे वा इड् भवति । 'उपधाया लघोः' अनेन गुणो भवति । 'राद्यपो द्विः' । नर्त्स्यति । अनर्त्स्यत् । रूपाणि सुगमानि सन्ति । लुङ्लकारे अनृत् सि दिप् इति जाते । 'सिसता०' । सेः । 'इट ईटि' । 'गुणः' । अनर्तीत् अनर्तिष्टाम् । अनर्तिषुः । अन्यानि सुगमानि ॥

**जॄइर् वयोहानौ । ऋत इर् 'य्वोर्विहसे' जीर्यति । जीर्येत् । जीर्यतु । अजीर्यत् । जजार । गुणः जजरतुः जजरुः । जीर्यात् । 'ईटो ग्रहाम्' । जरीता-जरिता । जरिष्यति-जरीष्यति । अजरिष्यत्-अजरीष्यत् । 'इरितो वा' अजरत् अजारीत् ॥**

जॄ इर् वयोहानौ । इर् इत् 'इरितो वा' इति सूत्रस्य विशेषणार्थः । 'दिवादेर्यः' । जॄ य तिप् इति जाते । 'ऋत इर्' अनेन ऋकारस्य इर् । 'य्वोर्विहसे' अनेन दीर्घः । जीर्यति । जीर्यतः । 'अदे' । जीर्यन्ति । जीर्येत् । जीर्यतु जीर्यतात् जीर्यताम् । 'अदे' । जीर्यन्तु । जीर्य । अन्यानि सुकराणि । 'दिबादावट्' अजीर्यत् अजीर्यताम् अजीर्यन् । लिट्लकारे । द्वित्वम् । 'स्स्वरादिः' । 'रः' । 'धातोर्नामिनः' । अनेन वृद्धिः । जजार । 'ऋसंयोगात्०' । अनेनाकित्त्वाद्गुणो भवति । 'गुणः' । जजरतुः जजरुः । जजरिथ । जॄ यात् इति स्थिते । 'ऋत इर्' । अनेनेर् । 'य्वोर्विहसे' । अनेन दीर्घः । जीर्यात् । जॄ ता इति जाते । 'सिसता०' । अनेनेट् । गुणो भवति । जरिता । 'ईटो ग्रहाम्' । अनेन वा दीर्घः । जरीता । एवमन्येषामपि लकाराणां रूपाणि ज्ञेयानि । अस्य धातोः 'इरितो वा' अनेन ङप्रत्ययो भवति । 'दृशादेः' अनेन गुणः । अजरत् अजरताम् अजरन् । ङप्रत्ययाभावे सि प्रत्ययो भवति । सेर्णित्त्वात् वृद्धिः । अन्यत् साधनं तु पूर्ववत् । 'दिबादावट्' । अजारीत् अजारिष्टाम् अजारिषुः । अन्यानि सुगमानि ॥

**शो तनूकरणे ॥ योः ॥ यप्रत्यये परे धातोरोकारस्य लोपो भवति ॥ श्यति । श्येत् । श्यतु । अश्यत् । शशौ । शायात् । शाता । शास्यति । अशास्यत् । वा सिलोपः । अशात् अशासीत् ॥**

शो तनूकरणे । तिबादयो भवन्ति । 'दिवादेर्यः' । शो य तिप् इति जाते ॥ सूत्रम्—'योः' ॥ य् ओः । यप्रत्यये परे सति धातोरोकारस्य लोपो भवति । अनेन ओकारस्य लोपः । 'स्वरहीनं०' । श्यति श्यतः । 'अदे' । श्यन्ति । श्येत् श्येताम् श्येयुः । श्यतु श्यतात् श्यताम् श्यन्तु । अश्यत् अश्यताम् अश्यन् । सर्वाणि रूपाणि सुगमानि । लिट्लकारे । 'संध्यक्षराणां०' । 'द्विश्च' । 'आतो णप् डौ' । शशौ । 'आतोऽनपि' अनेनान्यत्राकारस्य लोपो भवति । शशतुः शशुः । 'अन्त्वतः' । शशिथ । शशाथ । 'संध्यक्षराणां०' । शायात् । शाता । अन्यानि सुगमानि । लुङ्लकारे । अशासि दिप् इति जाते । 'शाच्छासा०' । अनेन वा सेर्लोपः । 'दिबादावट्' । अशात् अशाताम् अशुः । इत्यादीनि । सेर्लोपाभावपक्षे 'आदन्तानाम्' अनेनेट्सकौ । अशासीत् अशासिष्टाम् अशासिषुः । द्वयो रूपयोः षत्वं भवति ॥

**छो छेदने । छ्यति छ्येत् । छ्यतु । अछ्यत् । चच्छौ । छायात् । छाता । छास्यति । अच्छास्यत् । अच्छात् अच्छासीत् ॥**

छो छेदने । प्रत्ययादयश्च पूर्ववत् भवन्ति । 'योः' अनेन यकारे परे ओकारस्य लोपः । छ्यति छ्येत् । छ्यतु । 'दिवादावट्' । अच्छ्यत् । चतुर्णां लकाराणां रूपाणि सुगमानि सन्ति । लिट्लकारे छो णप् इति स्थिते । 'संध्यक्ष०' । द्वित्वम् । 'ह्रस्वः' । 'आतो णप् डौ' । 'झपानाम्०' । चच्छौ । 'आतोऽनपि' । अनेनान्यत्राकारलोपः । चच्छतुः चच्छुः । चच्छिथ चच्छाथ । 'संध्यक्षराणां०' । छायात् छायास्ताम् छायासुः । छाता । अन्यानि सुगमानि । लुङ्लकारे 'शाच्छासा०' अनेन वा सेर्लोपो भवति । तदा । अच्छात् अच्छाता अच्छुः । इत्यादीनि । यदा सेर्लोपो न भवति तदा 'आदन्तानां०' अनेनेट्-सकौ भवतः । 'दिवादावट्' । अच्छासीत् अच्छासिष्टाम् । षत्वम् । ष्टुत्वम् । अच्छासिषुः ॥

**षोऽन्तकर्मणि । स्यति । स्येत् । स्यतु । अस्यत् । ससौ । सेयात् । साता । सास्यति । असास्यत् असात् असासीत् ॥**

षो अन्तकर्मणि । 'आदेः ष्णः स्नः' । 'योः' । स्यति । लिट् । ससौ । लुङ् । वा सिलोपः । असात् । असासीत् ॥

**दो अवखण्डने । द्यति । द्येत् । द्यतु । अद्यत् । ददौ । देयात् । दाता । दास्यति । अदास्यत् । अदात् ॥**

दो अवखण्डने । तिबादयः 'दिवादेर्यः' । 'योः' । द्यति । द्यतः । 'अदे' द्यन्ति । द्येत् । द्यतु द्यतात् द्यताम् । 'अदे' अनेन अकारस्य लोपः द्यन्तु । द्य । अन्यानि सुगमानि । अद्यत् अद्यताम् अद्यन् । अद्यः । लिट्लकारे दो णप् इति जाते । 'संध्यक्षराणां०' । द्वि-त्वम् । ह्रस्वः । 'आतो णप् डौ' । अनेन आकारस्य लोपो भवति । ददौ । 'आतोऽनपि' । ददतुः ददुः । ददिथ ददाथ । इत्यादीनि । 'संध्यक्षराणाम्०' । दायात् इति जाते । 'दादेरे' । अनेन आकारस्य एकारः । देयात् । दाता । लुङ्लकारे 'दादेः पे' अनेन सेर्लोपो भवति । अदात् अदाताम् अदुः । इत्यादीनि ॥

**राध साध संसिद्धौ । राध्यति । राध्येत् । राध्यतु । अराध्यत् । रराध ॥ राधतेर्हिंसायां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वा ॥ रेधतुः-रराधतुः । राध्यात् । राद्धा । रात्स्यति । अरात्स्यत् अरात्सीत् अराद्धाम् ॥**

राध् साध् संसिद्धौ । तिबादयः । 'दिवादेर्यः' । 'स्वरहीनम्' । राध्यति राध्यतः राध्यन्ति । राध्येत् राध्येताम् राध्येयुः । राध्यतु राध्यतात् राध्यताम् । 'अदे०' राध्यन्तु । अराध्यत् अराध्यताम् अराध्यन् । लिट्लकारे । राध् णप् इति जाते । 'द्विश्च' । 'ह्रस्वः' । रराध ॥ सूत्रम्—'राधतेः०' ॥ राधतेर्धातोर्हिंसायां किति णादौ परे सेटि थपि परे च एत्वपूर्वलोपौ भवतः । अनेनास्य धातोर्वा एत्वपूर्वलोपौ भवतः । रेधतुः । रराधतुः । इत्यादीनि रूपाणि भवन्ति इति ज्ञातव्यम् । थपि रराधिथ रराद्ध रेधिथ । राध्यात् राध्यास्ताम् राध्यासुः । राध् ता इति जाते । 'तथोर्धः' अनेन तकारस्य धकारः 'झबे जबाः' । राद्धा राद्धारौ

राद्धारः । राध् स्यप् तिप् इति जाते । 'खसे चपा झसानाम्' । अनेन धस्य तः । रात्स्यति । 'दिवादावट्' । अरात्स्यत् । लुङ्लकारे अराध् सि ईट् दिप् इति जाते 'खसे०' 'स्वरहीनम्०' 'वावसाने' अरात्सीत् । 'झसा' अनेन सेर्लोपो भवति । अराद्धाम् अरात्सुः । इत्यादीनि रूपाणि ज्ञातव्यानि । साध् धातोरपि रूपाणि राध्धातुवत् ज्ञातव्यानि । अस्यैत्त्वपूर्वलोपौ न भवतः । यप्रत्ययः । साध्यति । लिट्लकारे द्वित्वादिकं सर्वं भवति । ससाध ससाधतुः ससाधुः । ससाधिथ । 'तथोर्धः' । अनेन थकारस्य धत्वम् । 'झबे जबाः' । ससाद्ध । इत्यादीनि रूपाणि भवन्ति ॥

**इषु सर्पणे । इष्यति । इष्येत् । इष्यतु । ऐष्यत् । इयेष । इष्यात् । एषिता । एषिष्यति । ऐशिष्यत् । ऐषीत् ॥**

इषु सर्पणे । तिबादयो भवन्ति । 'दिवादेर्यः' । अनेन यप्रत्ययो भवति । इष्यति इष्यतः इष्यन्ति । इत्यादीनि । इष्येत् इष्येताम् इष्येयुः । इष्यतु इष्यताल् इष्यताम् । 'अदे' इष्यन्तु । स्वरादित्वात् द्वावडागमौ । 'अइए' । 'एऐऐ' । ऐष्यत् ऐष्यताम् ऐष्यन् । लिट्लकारे । 'द्विश्च०' । 'सस्वरादिः' । 'उपधायाः' । अनेन गुणः । असवर्णे । इयेष । 'सवर्णे०' । ईषतुः ईषुः । 'गुणः' । इयेषिथ । इत्यादीनि । इष्यात् । 'उपधाया लघोः' अनेन गुणो भवति । 'सिसता०' अनेनेट् । एषिता एषितारौ एषितारः । अन्येषां रूपाणि सुगमानि । लुङ्लकारे द्वाविटौ भवतः । 'इट ईटि' । अनेन सेर्लोपो भवति । द्वावडागमौ भवतः । ऐषीत् ऐषिष्टाम् ऐषिषुः । इत्यादीनि भवन्ति ॥

**व्यध् ताडने । ग्रहां क्ङिति च । विध्यति । विध्येत् । विध्यतु । अविध्यत् । विव्याध । व्यद्धा । व्यत्स्यति । अव्यत्स्यत् । अव्यात्सीत् अव्याद्धाम् अव्यात्सुः ॥**

व्यध् ताडने । तिबादयः । 'दिवादेर्यः' । अनेन यप्रत्ययो भवति । 'ग्रहां क्ङिति च' । अनेन संप्रसारणं भवति । यकारस्य सस्वरस्य इकारः । विध्यति विध्यतः । 'अदे' विध्यन्ति इत्यादीनि । विध्येत् । विध्यतु । अविध्यत् अविध्यताम् अविध्यन् । व्यध् णप् इति स्थिते । 'द्विश्च' । 'सस्वरादिः' । व्य व्यध् णप् इति जाते । 'णबादौ पूर्वस्य' अनेन संप्रसारणम् । पूर्वस्य । 'अत उपधायाः' । विव्याध । व्य व्यध् अतुस् इति जाते । 'णादौ पूर्वस्य' । 'ग्रहां क्ङिति च' । विविधतुः विविधुः । विव्यधिथ । 'अन्त्वतः' 'तथोर्धः' । 'झबे जबाः' । विव्यद्ध । संप्रसारणम् । विध्यात् विध्यास्ताम् विध्यासुः । 'तथोर्धः' । 'झबे जबाः' । व्यद्धा व्यद्धारौ व्यद्धारः । 'खसे चपा०' । व्यत्स्यति । अव्यत्स्यत् । लुङ्लकारे । अ व्यध सि दिप् इति जाते । सेः । अनेन इट् । 'खसे चपा झसानाम्' । सेर्णित्त्वात् वृद्धिः । अव्यात्सीत् । 'झसात्०' । अनेन सेर्लोपो भवति । 'तथोर्धः' । अव्याद्धाम् अव्यात्सुः । अव्यात्सीः अव्याद्धम् अव्याद्ध । अव्यात्सम् अव्यात्स्व अव्यात्स्म ॥

**पुष् पुष्टौ । पुष्यति । पुष्येत् । पुष्यतु । अपुष्यत् । पुपोष । पुष्यात् । पोष्टा । पोक्ष्यति अपोक्ष्यत् । अपुषत् ॥**

पुष् पुष्टौ । तिबादयः । 'दिवादेर्यः' । पुष्यति । अन्यानि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य 'उपधाया लघोः' अनेन गुणः । पुपोष पुपुषतुः पुपुषुः । पुपोषिथ । पुष्यात् । 'उपधायाः' । ष्टुत्वम् । पोष्टा । पोष् स्यप् तिप् इति जाते । 'षढोः कः से' 'किलात्०' । 'कष०' । पोक्ष्यति । अपोक्ष्यत् । लुङ्लकारे 'लित्पुषादेर्ङः' ङित्त्वात् गुणाभावः । 'दिवादावट्' । अपुषत् अपुषताम् अपुषन् ॥

**श्लिष् आलिङ्गने । श्लिष्यति । श्लिष्येत् । श्लिष्यतु । अश्लिष्यत् । शिश्लेष । श्लिष्यात् । श्लेष्टा । श्लेक्ष्यति । अश्लेक्ष्यत् । हशषान्तात्सक् ॥ श्लिषेरालिङ्गने सक् ॥ ङापवादः । अश्लिक्षत्कन्यां चैत्रः । अनालिङ्गने समश्लिषत् जतु काष्ठम् ॥**

श्लिष् आलिङ्गने । तिबादयः । 'दिवादेर्यः' । श्लिष्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । शिश्लेष शिश्लिषतुः शिश्लिषुः । शिश्लेषिथ । इत्यादीनि । श्लिष्यात् । श्लिष् ता इति स्थिते । 'गुणः' । ष्टुत्वम् । श्लेष्टा । श्लिष् स्यप् तिप् इति जाते 'गुणः' । 'षढोः०' । कत्वम् । 'कष०' । श्लेक्ष्यति । अश्लेक्ष्यत् अश्लेक्ष्यताम् । अश्लेक्ष्यन् । लुङ्लकारे । 'हशषान्तात्सक्' । अनेन सक्प्रत्ययः । 'दिवादावट्' । 'षढोः कः से' । 'किलात्०' । 'कष०' । अश्लिक्ष्यत् । अश्लिक्षताम् अश्लिक्षन् ॥ सूत्रम्—'श्लिषेः०' ॥ श्लिषेर्धातोरालिङ्गनेऽर्थे सक्प्रत्ययो भवति अनालिङ्गने 'लित्पुषादेर्ङः' अनेन ङप्रत्ययः । ङित्त्वात् गुणाभावः । 'दिवादावट्' । अश्लिषत् अश्लिषताम् अश्लिषन् । आलिङ्गने अश्लिक्षत् कन्यां चैत्रः इत्युदाहरणम् । अनालिङ्गने तु अश्लिषत् जतु काष्ठम् इत्युदाहरणम् ॥

**तृप् प्रीणने । तृप्यति । तृप्येत् । तृप्यतु । अतृप्यत् । ततर्प । तृप्यात् । रधादित्वादिड्विकल्पेन । तर्पिता-त्रप्ता तर्प्ता । रारो झसे दृशाम् । तर्पिष्यति त्रप्स्यति तर्प्स्यति । अतर्पिष्यत्-अत्रप्स्यत्-अतर्प्स्यत् ॥ स्पृशमृशकृशतृषां सिर्वा वक्तव्यः ॥ रधादित्वादिट् । अतर्पीत् अताप्सीत् । पुषादित्वात् ङः । अतृपत् ॥**

तृप् प्रीणने । तिबादयः । 'दिवादेर्यः' । तृप्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे 'द्विश्च' पूर्वस्य 'हसादिः०' 'रः' 'उपधाया लघोः' ततर्प ततृपतुः ततृपुः । ततर्पिथ । इत्यादीनि । तृप्यात् । अस्य धातो रधादित्वात् इड् विकल्पेन भवति । 'गुणः' । तर्पिता तर्पितारौ तर्पितारः । इडभावे । 'गुणः' । त् अर् प् ता । इति जाते । 'रा रो झसे दृशाम्' । अनेन अरो रो वा भवति । त्रप्ता । तर्पिता । तर्पिष्यति । तर्पिष्यतः । तर्पिष्यन्ति । इडभावे गुणः । 'रारो झसे०' । त्रप्स्यति । विकल्पेन तर्प्स्यति । रूपाणि सुगमानि । अतर्पीत् । अत्रप्स्यत् । अतर्प्स्यत् । रूपाणि सुगमानि । लुङ्लकारे ॥ सूत्रम्—'स्पृश०' ॥ अतृप् सि दिप् इति जाते 'सिसता०' । 'सेः' । 'इट ईटि' । 'गुणः' । 'वावसाने' । अतर्पीत् अतर्पिष्टाम् अतर्पिषुः । इडभावपक्षे । 'उपधाया लघोः' । 'सेः' । 'रारो झसे०' । 'अत उपधायाः' । अत्राप्सीत् अत्राप्ताम् अत्राप्सुः । शेषाणि सुगमानि । अताप्सीत्

अतार्प्ताम् अतार्प्सुः । पुषादित्वात् अस्य धातोर्ङप्रत्ययो भवति । ङित्त्वात् गुणाभावः । अतृपत् अतृपताम् अतृपन् । अन्यानि सुगमानि ॥

**एवं दृप् हर्षविमोहनयोः । दृप्यति ॥**

एवं दृप् हर्षविमोहनयोः । तिबादयः । 'दिवादेर्यः' । दृप्यति । अयं धातुः तृप्यतिवत् ॥

**मुह वैचित्ये । मुह्यति । मुमोह । मुह्यात् । द्रुहादीनां घत्वढत्वे वा । मोढा मोग्धा मोहिता । रधादित्वाद्वेट् । मोक्ष्यति-मोहिष्यति । अमोक्ष्यत् अमोहिष्यत् । पुषादित्वात् ङः । अमुहत् अमोहीत् अमोक्षीत् अमुक्षत् ॥**

मुह् वैचित्ये । पूर्ववत् तिबादयः । 'दिवादेर्यः' । मुह्यति मुह्यतः मुह्यन्ति । मुह्येत मुह्येताम् मुह्येयुः । मुह्यतु मुह्यतात् मुह्यताम् मुह्यन्तु । अमुह्यत् अमुह्यताम् अमुह्यन् । मुह् णप् इति स्थिते । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । मुमोह मुमुहतुः मुमुहुः । 'गुणः' । मुमोहिथ । इत्यादीनि । मुह्यात् । मुह् ता इति स्थिते । मुहादीनां घत्वढत्वे वा । अनेन वा हस्य ढः । 'उपधाया लघोः' । 'तथोर्धः' । ष्टुत्वम् । 'ढि ढो लोपः' । मोढा मोढारौ मोढारः । घत्वे कृते सति । मुह् ता इति जाते । 'उपधाया लघोः' । 'तथोर्धः' । 'झबे जबाः' । मोग्धा मोग्धारौ मोग्धारः । रधादित्वाद्वा इड् भवति । 'गुणः' । मोहिता मुह् स्यप् तिप् इति जाते । 'उपधाया लघोः' । 'षढोः कः से' । 'किलात्०' । 'कषसंयोगे०' । मोक्ष्यति । इटि कृते सति मोहिष्यति । अमोक्ष्यत् अमोहिष्यत् । लुङ्लकारे—अमोहीत् अमोहिष्टाम् अमोहिषुः । इडभावपक्षे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अमौक्षीत् अमौढाम् अमौक्षुः । 'हशषान्तात्०' । कित्वात् गुणाभावः । 'षढोः कः से' । 'किलात्०' । 'कष०' । अमुक्षत् अमुक्षताम् अमुक्षन् । पुषादित्वात् ङप्रत्ययो भवति । अस्य ङित्वात् गुणाभावः । 'दिवादावट्' अमुहत् अमुहताम् अमुहन् ॥

**णश् अदर्शने । नश्यति । ननाश । फणादित्वादेत्वपूर्वलोपौ । नेशतुः नेशुः । नश्यात् ॥ मस्जिनशोर्झसे नुम् वक्तव्यः ॥ छशषराजादेः षः । नंष्टा ॥ नशेः षान्तस्य ॥ नशेः षान्तस्य णत्वं न स्यात् ॥ प्रनंष्टा-नशिता । नंक्ष्यति-नशिष्यति । अनशिष्यत्-अनंक्ष्यत् । पुषादित्वात् ङः ॥ ङे नशेरत एत्वं वा वाच्यम् ॥ अनेशत्-अनशत् ॥**

णश् अदर्शने । 'आदेः ष्णः स्नः' । अनेन णकारस्य नकारः । तिबादयः । 'दिवादेर्यः' । नश्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'हसादि०' । 'अत उपधायाः' ननाश । 'लोपः चपां०' । अनेनैत्वपूर्वलोपौ भवतः । नेशतुः नेशुः । नेशिथ । 'अस्वतः' । 'छशष०' । ष्टुत्वम् । ननंष्ठ । इत्यादीनि । नश्यात् । नश् ता इति स्थिते । 'छशष०' ॥ सूत्रम्—'मस्जिनशोः०' ॥ मस्जिनशोर्धात्वोर्झसे परे नुम् वक्तव्यः । अनेन नुम् । 'मिदन्त्यात्०' । 'नश्चापदान्ते' । ष्टुत्वम् । नंष्टा नंष्टारौ नंष्टारः । प्रनंष्टा । इति जाते । 'उपसर्गे०' । अनेन णकारे प्राप्ते ॥ सूत्रम्—'नशेः षान्तस्य' ॥ षान्तस्य नशेर्धातोर्णत्वं न भवति । अनेन तन्निषेधः । प्रनंष्टा । रधादित्वाद् वेट् । नशिता । नश्

स्यप् तिप् इति जाते । 'छशष०' । 'मस्जि०' । कत्वम् । षत्वम् । 'कष०' । नंक्ष्यति । इटि कृते सति । षत्वम् । नशिष्यति । 'दिबादावट्' । अनंक्ष्यत् । अनशिष्यत् । लुङ्लकारे पुषादित्वाद् ङप्रत्ययो भवति ॥ सूत्रम्—'ङे नशे०' ॥ ङप्रत्यये परे नशेर्धातोरत एत्वं वा वाच्यम् । अनेन अकारस्य एकारः । अनेशत् ॥ वाग्रहणात्—अनशत् अनशताम् अनशन् । इत्यादीनि ॥

**शमु दमु उपशमे ॥ शमां दीर्घः ॥ शमादीनां दीर्घो भवति ये परे अबादौ विषये च । शाम्यति । शाम्येत् । शाम्यतु । अशाम्यत् । शशाम शेमतुः शेमुः । शम्यात् । शमिता । शमिष्यति । अशमिष्यत् । लित्पुषादेर्ङः । अशमत् । अशमीदिति केचित् । 'दमु श्रमु तमु भ्रमु क्षमु क्रमु मदू' एते शमादयः । रूपं तद्वत् ॥**

शमु दमु उपशमे । तिबादयः । 'दिबादे०' ॥ सूत्रम्—'शमाम्०' ॥ शमां दीर्घः । शमादीनां धातूनां यप्रत्यये परे अबादौ विषये दीर्घो भवति । अनेन दीर्घः । शाम्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वम् । पूर्वस्य । 'अत उपधायाः' । शशाम । 'शशाम वृष्टयापि विना दवाग्निः' इत्युदाहरणम् । 'लोपः पचां०' । शेमतुः शेमुः । शेमिथ शशन्थ । इत्यादीनि । शम्यात् । 'सिसता०' । शमिता । षत्वम् । शमिष्यति । 'दिबादावट्' । अशमिष्यत् । 'लित्पुषादेर्ङः' । अशमत् अशमताम् अशमन् । इत्यादीनि । केचिदाचार्या अस्य अशमीत् इति रूपमिच्छन्ति । साधनं तु पूर्ववत् ॥

दमु धातोरपि रूपाणि शमुधातुवत् ॥ शमु दमु श्रमु तमु भ्रमु क्षमु क्रमु मदू एते शमादयो ज्ञातव्याः तेषां रूपाणि पूर्वधातुवत् न कश्चित् विशेषः ॥

**ञिमिदा स्नेहने । आञी इतौ ॥ मिदेर्ये गुणो वक्तव्यः ॥ मेद्यति । मेद्येत् । मेद्यतु । अमेद्यत् । मिमेद मिमिदतुः मिमिदुः । मिद्यात् । मेदिता । मेदिष्यति । अमेदिष्यत् । अमिदत् ॥**

ञिमिदा स्नेहने । आञी इतौ । तिबादयः । 'बादेर्यः' । मिद् य तिप् इति जाते ॥ सूत्रम्—'मिदेः०' ॥ मिदेर्धातोर्यप्रत्यये परे गुणो भवति । मेद्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वम् । पूर्वस्य । 'उपधाया लघोः' । मिमेद मिमिदतुः मिमिदुः । मिमेदिथ । इत्यादीनि रूपाणि भवन्ति । मिद्यात् । 'उपधाया लघोः' । मेदिता । अन्यानि सुगमानि । लुङ्लकारे 'लित्पुषादेर्ङः' । 'दिबादावट्' । अमिदत् अमिदताम् अमिदन् इत्यादीनि रूपाणि भवन्ति ॥

**असु क्षेपणे । अस्यति । आस । असिता । असिष्यति ॥ अस्यतेर्ङे थुग्वक्तव्यः ॥ आस्थत् ॥ इति दिवादिषु परस्मैपदिनः ॥**

असु क्षेपणे । तिबादयः । 'दिवादेर्यः' । अस्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वम् । 'सस्वरादिर्द्विर०' 'अत उप०' । 'सवर्णे०' । आस आसतुः आसुः । आसिथ । इत्यादीनि । अस्यात् । 'सिसता०' । असिता । अन्यानि सुगमानि । अन्येषामपि

लुङ्लकारे । 'लिपुषादेर्ङः' । द्वावडागमौ । आस् ङ दिप् इति जाते ॥ सूत्रम्—'अस्यतेः०' ॥ अस्यतेर्धातोर्ङप्रत्यये परे थुग् वक्तव्यः । उकार उच्चारणार्थः । ककारः कित्त्वादन्त्यार्थः । आस्थत् आस्थताम् आस्थन् । इत्यादीनि । इति परस्मैपदिनः समाप्तिमगमन् ॥

---

## दिवादिष्वात्मनेपदिनः ॥ ११ ॥

**अथात्मनेपदिनः ॥ जनी प्रादुर्भावे । ईकारेत् ॥ जा जनीज्ञोः ॥ जनी प्रादुर्भावे । ज्ञाऽवबोधने । अनयोर्जादेशो भवति चतुर्षु परेषु ॥ जायते । जायेत् । जायताम् । अजायत । गमां स्वरे । श्चुत्वम् । जज्ञोर्ज्ञः । जज्ञे । जनिषीष्ट । जनिता । जनिष्यते । अजनिष्यत अजनिष्ट ॥ पदादेस्तनि कर्तर्यपि सेरिण् वक्तव्यः दीपादिभ्यो वा ॥ 'पद् दीप् जन् बुध् पूरि तायि प्यायि एते पदादयः ॥ लोपः ॥ इण्संयोगे तनो लोपो भवति ॥ जनिवध्योर्न वृद्धिः । अजनि अजनिषाताम् ॥**

अथात्मनेपदिनः कथ्यन्ते ॥ जनी प्रादुर्भावे । ईकार इत् । तआदयः प्रत्ययाः सर्वत्र भवन्ति । 'दिवादेर्यः' जन् य तिप् इति जाते ॥ सूत्रम्—'जा जनीज्ञोः' ॥ जा जनीज्ञोः । ज्ञा अवबोधने । जनी प्रादुर्भावे । अनयोर्धात्वोर्जा इत्यादेशो भवति चतुर्षु लकारेषु परेषु । अनेन जा इत्यादेशः । जायते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वम् । 'सस्वरादिः' 'ह्रस्वः' । 'गमां स्वरे' अनेनोपधाया लोपो भवति । श्चुत्वम् । जज्ञोर्ज्ञः । जज्ञे जज्ञाते जज्ञिरे । इत्यादीनि । 'सिसता०' । षत्वम् । जनिषीष्ट । जनिता । लुङ्लकारे । 'भूते सिः' । 'सिसता०' । षत्वम् । ष्टुत्वम् । अजनिष्ट ॥ सूत्रम्—'पदादेः–' ॥ पदादेर्धातोस्तनि परे सति कर्तरि अपि सेरिण् वक्तव्यः ॥ दीपादिभ्यो धातुभ्यो वा भवति । पद् दीप् बुध् पूरि तायि प्यायि एते पदादयो ज्ञातव्याः ॥ सूत्रम्—'लोपः' ॥ इण् संयोगे सति तन्प्रत्ययस्य लोपो भवति । णित्त्वात् वृद्धौ प्राप्तायाम् । 'जनिवध्योः' । अनेन वृद्धेर्निषेधः । अजनि अजनिषाताम् । 'आतोन्तो' । अजनिषत इत्यादीनि ॥

**दीपी दीप्तौ । दीप्यते दीप्येते । दीप्यताम् । अदीप्यत । दिदीपे । दीपिषीष्ट । दीपिता । दीपिष्यते । अदीपिष्यत । अदीपिष्ट । अदीपि ॥**

दीपी दीप्तौ । ईकार इत् । 'दिवादेर्यः' दीप्यते । चतुर्णां सुगमानि । लिट्लकारे । द्वित्वम् । पूर्वस्य ह्रस्वः । दिदीपे दिदीपाते दिदीपिरे । इत्यादीनि । 'सिसता०' । दीपिषीष्ट । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । 'भूते सिः' 'सिसता०' । षत्वम् । ष्टुत्वम् । 'दिवादावद्' अदीपिष्ट । 'पदादेः' अनेन सेरिण् वा भवति । यदा सेरिण् तदा लोपः । अदीपि अदीपिषाताम् । 'अतोन्तो०' । अदीपिषत । इत्यादीनि ॥

**पूरी आप्यायने । पूर्यते । पूर्येत । पूर्यताम् । अपूर्यत । पुपूरे । पूरिषीष्ट । पूरिता । पूरिष्यते । अपूरिष्यत । अपूरि । अपूरिष्ट ॥**

पूरी आप्यायने । ईकार इत् । तआदयः । 'दिवादेर्यः' । पूर्यते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' 'पूर्वस्य' 'ह्रस्वः' । पुपूरे पुपूराते पुपूरिरे । 'सिसता०' षत्वम् । पूरिषीष्ट । अन्येषां सुगमानि । लुङ्लकारे वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् । अपूरि । अपूरिष्ट अपूरिषाताम् अपूरिषत । ष्टुत्वम् । अपूरिष्ठाः । इत्यादीनि ॥

**पद् गतौ । पद्यते । पद्येत । पद्यताम् । अपद्यत । पेदे । पत्सीष्ट । पत्ता । पत्स्यते । अपत्स्यत । अपादि अपत्साताम् अपत्सत ॥**

पद् गतौ । तआदयः । 'दिवादेर्यः' । पद्यते । इत्यादीनि । लिट्लकारे । द्वित्वम् । पूर्वस्य । 'लोपः पचाम्०' । पेदे पेदाते पेदिरे । पद् सीष्ट इति जाते । 'खसे०' पत्सीष्ट । पत्ता । इत्यादीनि । लुङ्लकारे । अ पद् सि दिप् इति जाते । 'पदादेः०' अनेन सेरिण् । णित्त्वाद् वृद्धिः । लोपः । अपादि अपत्साताम् अपत्सत । इत्यादीनि ॥

**बुध अवगमने । बुध्यते । बुध्येत । बुध्यताम् । अबुध्यत । बुबुधे । आदिजबानाम् । सिस्योः । खसे चपा झसानाम् । भुत्सीष्ट । बोद्धा । भोत्स्यते । अबुद्ध अभुत्साताम् अभुत्सत । अबोधि ॥**

बुध अवगमने । तआदयः । 'दिवादेर्यः' । बुध्यते । अन्येषां सुगमानि । लिट्लकारे । द्वित्वम् । पूर्वस्य । बुबुधे बुबुधाते बुबुधिरे । इत्यादीनि । बुध् सीष्ट इति स्थिते । 'आदिजबानाम्०' । 'सिस्योः' अनेन गुणाभावः । 'खसे चपा०' । भुत्सीष्ट । 'उपधायाः' । 'तथोर्धः' बोद्धा बोद्धारौ बोद्धारः । 'आदिजबानम्०' । भोत्स्यते । अभोत्स्यत । लुङ्लकारे । 'पदादेः' 'गुणः' 'लोपः' । अबोधि । अबुद्ध अभुत्साताम् अभुत्सत । इत्यादीनि ॥

**तायङ् पालनसन्तत्योः । तायते । तताये । तायिषीष्ट । तायिता । तायिष्यते । अतायिष्यत अतायिष्ट । अतायि ॥**

तायङ् पालनसंततयोः । ङकार आत्मनेपदार्थः । तआदयः । 'अप् कर्तरि' अनेन अप्प्रत्ययो भवति । भ्वादित्वात् । तायते । लिट्लकारे । द्वित्वम् । 'पूर्वस्य' ह्रस्वः । तताये तताया ते ततायिरे । इत्यादीनि भवन्ति । 'सिसता०' अनेनेट् । षत्वम् । तायिषीष्ट । तायिता । लुङ्लकारे वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् । अतायिष्ट । अतायि अतायिषाताम् अतायिषत । इत्यादीनि रूपाणि भवन्ति ॥

**ओप्यायिङ् वृद्धौ । प्यायते । पप्याये । प्यायिषीष्ट । प्यायिता । प्यायिष्यते । अप्यायिष्यत । अप्यायिष्ट । अप्यायि अप्यायिषाताम् । इमौ द्वौ भ्वादिकौ ॥ इति दिवादिष्वात्मनेपदिनः ॥ ११ ॥**

ओप्यायिङ् वृद्धौ । ङकार आत्मनेपदार्थः । ओकारेकारौ इतौ स्तः । तआदयः । 'अप् कर्तरि' प्यायते । अन्येषां लकाराणां रूपाणि सुगमानि । तस्माद् व्याख्यानं न कृतम् । लिट्लकारे । 'द्विश्च' 'पूर्वस्य' 'ह्रस्वः' । पप्याये पप्यायाते पप्यायिरे । इत्यादीनि । 'सिसता०' अनेनेट् । प्यायिषीष्ट । प्यायिता । लुङ्लकारे वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् ।

अप्यायिष्ट । अप्यायि अप्यायिषाताम् अप्यायिषत । अप्यायिष्ठाः अप्यायिषाथाम् अप्यायिध्वम् । अप्यायिषि अप्यायिष्वहि अप्यायिष्महि । इमौ द्वौ धातू भ्वादिकौ । इत्यात्मनेपदिनः कथिताः ॥

## दिवादिषूभयपदिनः १२

अथोभयपदिनः ॥ णह बन्धने । नह्यति नह्यते । नह्येत् नह्येत । नह्यतु नह्यताम् । अनह्यत् अनह्यत । ननाह नेहतुः नेहुः । नेहिथ-ननद्ध नेहे । नह्यात् । नत्सीष्ट । नहो धः । नद्धा । नत्स्यति-नत्स्यते । अनत्स्यत्-अनत्स्यत । अनात्सीत् अनाद्धाम् अनात्सुः । अनद्ध अनत्साताम् अनत्सत ॥ इति दिवादिषूभयपदिनः ॥ १२ ॥ इति यविकरणा दिवादयो धातवः ॥

अथोभयपदिनः कथ्यन्ते । णह बन्धने । अकार उभयपदार्थः । 'आदेः ष्णः स्नः' । अनेन णकारस्य नकारः । तिबादयस्तआदयश्च प्रत्यया भवन्ति । 'दिवादेर्यः' । अनेन यप्रत्ययः । नह्यति नह्यते । चतुर्णां लकाराणां रूपाणि सुगमानि । अतः पिष्टपेषणं न कृतम् । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'अत उपधायाः' । ननाह । 'लोपः पचाम्०' । अनेनैत्वपूर्वलोपौ । नेहतुः । नेहुः । नेहिथ । 'अत्त्वतो०' । ननह् थप् इति जाते । 'नहो धः' 'तथोर्धः' । 'झबे जबाः' । ननद्ध । नेहे नेहाते नेहिरे । नह्यात् । नह् सीष्ट इति स्थिते । 'नहो धः' । 'खसे चपा०' । नत्सीष्ट ॥ नह ता । 'नहो धः' । 'तथोर्धः' । 'झबे जबाः' । नद्धा । 'नहो धः' 'खसे०' । नत्स्यति नत्स्यते । इत्यादीनि । लुङ्लकारे । 'अत उपाधायाः' । अनात्सीत् । 'झसात्' अनेन सेर्लोपो भवति । अनाद्धाम् अनात्सुः । इत्यादीनि । आत्मनेपदे । अनद्ध अनत्साताम् । अनत्सत । इत्यादीनि । इत्युभयपदिनः समाप्ताः । इति यविकरणा दिवादयो धातवः कथिताः ॥

## स्वादिषूभयपदिनः १३

अथ स्वादयः ॥ तत्रादावुभयपदिनः । षुञ् अभिषवे । ञ उभयपदार्थः । आदेः ष्णः स्नः ॥ स्वादेर्नुः ॥ स्वादेर्गणान्नुः प्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः ॥ नूपः ॥ विकरणस्य नुप्रत्ययस्य उप्प्रत्ययस्य च गुणो भवति पिति परे ॥ सुनोति सुनुतः । नुधातोः । सुन्वन्ति । सुनोषि सुनुथः सुनुथ । सुनोमि ॥ ओर्वमोर्वा लोपः ॥ असंयोगादुत्तरस्य प्रत्ययसंबन्धिन उकारस्य वा लोपो भवति वमोः परयोः । सुनुवः-सुन्वः । सुनुमः-सुन्मः । सुनुते सुन्वाते सुन्वते । सुनुयात् सुन्वीत । सुनोतु-सुनुताद्वा सुनुताम् सुन्वन्तु ॥ ओर्वा हेः ॥ प्रत्ययसंबन्धिन उकारादुत्तरस्य हेर्लुग्भवति ॥ वाग्रहणात्संयोगान्न । तेन तक्ष्णुहि त्वक्ष्णुहीत्यत्र न । सुनु सुनुतात् सुनुतम् सुनुत । असुनोत् असुनुत । सुषाव सुषुवतुः । सुषविथ सुषोथ । सुषुवे सूयात् ।

**सोषीष्ट । सोता २। सोष्यति सोष्यते । असोष्यत् असोष्यत ॥ स्तुसुधूञ्भ्यां पे सेरिड्वा वक्तव्यः ॥ असावीत् असौषीत् । दुसुस्तुनुधातूनामिड्वेति केचित् । असविष्ट असोष्ट ॥**

अथ स्वादयो धातवः कथ्यन्ते । तत्रादौ उभयपदिनः सन्ति । षुञ् अभिषवे । ञकार उभयपदार्थः । 'आदेः ष्णः स्नः' । तिबादयस्तआदयश्च प्रत्ययाः सर्वत्र भवन्ति इति ज्ञातव्यम् ॥ सूत्रम्—'स्वादेर्नुः' ॥ स्वादेः नुः द्विपदं सूत्रम् । स्वादेर्गणात् चतुर्षु तिबादिषु परेषु नुप्रत्ययो भवति । सु नु तिप् इति जाते ॥ सूत्रम्—'नूपः' ॥ नुश्च उप् च नूप् तस्य नूपः । स्वादेरुत्पन्नस्य नुप्रत्ययस्य तनादेरुत्पन्नस्य उप्प्रत्ययस्य पिति प्रत्यये परे गुणो भवति । अनेन गुणः । सुनोति सुनुतः । 'नुधातोः' । सुन्वन्ति । षत्वम् । सुनोषि सुनुथः सुनुथ । 'नूपः' अनेन गुणः । सुनोमि । सुनु वस् इति जाते ॥ सूत्रम्—'ओर्वमोर्वा लोपः' ॥ ओः वमोः वा अव्ययम् । लोपः । चतुःपदं सूत्रम् । असंयोगादुत्तरस्य प्रत्ययसंबन्धिन उकारस्य वमोः परयोः सतोर्लोपो भवति । अनेन उकारस्य वा लोपः । सुनुवः सुन्वः । सुनुमः सुन्मः । सुनुते सुन्वाते । 'आतोन्तो०' सुन्वते । षत्वम् । सुनुषे सुन्वाथे सुनुध्वे । सुन्वे । 'ओर्वमोर्वा लोपः०' । सुनुवहे सुन्वहे । सुनुमहे सुन्महे । सुनुयात् सुनुयाताम् सुनुयुः । 'नु धातोः' । सुन्वीत सुन्वीयाताम् सुन्वीरन् । अन्यानि सुगमानि । लोट्लकारे । 'नूपः' । अनेन पिति प्रत्यये परे गुणः । सुनोतु । 'तुह्योः' । सुनुतात् सुनुताम् सुन्वन्तु । सुनु हि इति स्थिते ॥ सूत्रम्—'ओर्वाहेः' ॥ ओः वा अव्ययम् । हेः ॥ प्रत्ययसंबन्धिन उकारादुत्तरस्य हिप्रत्ययस्य वा लुग् भवति । अस्मिन् सूत्रे वाग्रहणात् संयोगात् न लुग् भवति । तेन तक्ष्णुहि त्वक्ष्णुहि इत्यत्र न । सुनु सुनुतात् सुनुतम् सुनुत । 'नूपः' । सुनवानि सुनवाव सुनवाम । सुनुताम् सुन्वाताम् सुन्वताम् । सुनुष्व सुन्वाथाम् सुनुध्वम् । सुनवै सुनवावहै सुनवामहै । 'दिवादावट्' । 'नूपः' । असुनोत् असुनुताम् असुन्वन् । असुनोः असुनुतम् असुनुत । असुनवम् असुनुव । 'ओर्वमोः' । असुन्व । असुनुम असुन्म । असुनुत असुन्वाताम् । 'आतोन्तो' । असुन्वत । असुनुथाः असुन्वाथाम् असुनुध्वम् । असुन्वि असुनुवहि असुन्वहि । असुनुमहि असुन्महि । लिट्लकारे । 'द्विश्च०' । 'सस्वरादिः' । 'किलात्०' । 'धातोर्नामिनः' । सुषाव । 'नुधातोः' । 'नानष्योर्वः' । सुषुवतुः सुषुवुः । 'अत्वतः' । गुणः । सुषविथ सुषोथ । आत्मनेपदे । सुषुवे सुषुवाते सुषुविरे । 'ये' । सूयात् । गुणः । षत्वम् । सोषीष्ट । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । असु सि दिप् इति जाते ॥ सूत्रम्—'स्तुसुधूञ्भ्यां०' ॥ स्तुसुधूञ्भ्यां धातूनां परस्मैपदे सेः इड् वा वक्तव्यः । सेर्णित्त्वात् 'धातोर्नामिनः' अनेन वृद्धिः । असावीत् असाविष्टाम् असाविषुः । इडभावे । 'अनिटो०' । असौषीत् असौष्टाम् असौषुः । इत्यादीनि । आत्मनेपदे । दुसुस्तुनुधातूनां इड् वा भवति इति केचिदाचार्या वदन्ति । अनेनात्मनेपदेऽपि सेरिट् । गुणः । असविष्ट असविषाताम् असविषत । इडभावे । असोष्ट असोषाताम् असोषत ॥

**चिञ् चयने । चिनोति चिनुते । चिनुयात् चिन्वीत । चिनोतु चिनुताम् । अचिनोत् अचिनुत ॥ चिनोतेः सणादौ किर्त्वं वा वाच्यम् ॥ चिकाय**

**चिक्यतुः चिक्युः । चिचाय चिक्ये-चिच्ये । चीयात् चेषीष्ट । चेता २ । चेष्यति चेष्यते । अचेष्यत्-अचेष्यत । अचैषीत् अचेष्ट ॥**

चिञ् चयने । 'स्वादेर्नुः' । 'नूपः' । चिनोति चिनुतः चिन्वन्ति । चिनुते चिन्वाते चिन्वते । चिनुयात् । चिन्वीत । चिनोतु चिनुतात् चिनुताम् चिन्वन्तु । 'ओर्वा हेः' । चिनु । अन्यानि सुगमानि । चिनुताम् । अचिनोत् । अचिनुत । अन्यानि रूपाणि सुगमानि । लिट्लकारे । चि णप् इति स्थिते ॥ सूत्रम्—'चिनोतेः०' ॥ चिनोतेर्धातोः सप्रत्यये णादौ च परे कित्वं वा वाच्यम् । अनेन चकारस्य ककारः । द्वित्वम् । 'सस्वरादिः' । 'कुहोश्चुः' । 'धातोर्नामिनः' । चिकाय । 'नुधातोः' । चिक्यतुः चिक्युः । चिकयिथ चिकेथ । चिचाय चिच्यतुः चिच्युः । आत्मनेपदे कित्वे कृते सति । चिक्ये चिक्याते चिक्यिरे । कित्वाभावे । चिच्ये । रूपाणि सुगमानि । 'ये' । चीयात् । गुणः षत्वम् । चेषीष्ट । चेता चेता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे 'अनिटो नामिवतः' अचैषीत् अचैष्टाम् अचैषुः । आत्मनेपदे गुणः । अचेष्ट अचेषाताम् अचेषत ॥

**स्तृञ् आच्छादने । स्तृणोति स्तृणुते । तस्तार । गुणोर्तिसंयोगाद्योः । तस्तरतुः तस्तरुः । तस्तर्थ । तस्तरे ॥ स्तर्यात् ॥ संयोगादि ऋदन्तवृङ्वृञ्भ्यां स्सिस्योरात्मनेपदे इड्वा वक्तव्यः ॥ स्तरिषीष्ट । उः । स्तृषीष्ट । स्तर्ता २ स्तरिष्यति-स्तरिष्यते । अस्तरिष्यत् अस्तरिष्यत । अस्तार्षीत् अस्तरिष्ट अस्तृत ॥**

स्तृञ् आच्छादने । 'स्वादेर्नुः' । 'ष्रनोणोऽनन्ते' । 'नूपः' । स्तृणोति स्तृणुते । चतुर्णां लकाराणां रूपाणि सुगमानि । स्तृ णप् इति जाते । 'द्विश्च' । 'सस्वरादि०' । 'शसात् खपाः' 'धातोर्नामिनः' । तस्तार । 'गुणोर्ति०' । अनेन गुणः । तस्तरतुः तस्तरुः । ऋदन्तस्य गुणः । तस्तर्थ । आत्मनेपदे । तस्तरे तस्तराते तस्तरिरे । इत्यादीनि । 'गुणोऽर्ति०' । अनेन यादादौ गुणो भवति । स्तर्यात् । अन्यानि सुगमानि । 'उः' अनेन गुणनिषेधः । 'किलात्०' । अनेन षत्वम् । स्तृषीष्ट । 'संयोगादेः' । अनेन अस्य वेट् सीष्टादौ । गुणः । स्तरिषीष्ट । स्तर्ता । स्तर्ता । 'हनृतः स्यपः' । स्तरिष्यति स्तरिष्यते । अन्यानि सुगमानि । लुङ्लकारे वृद्धिः । अस्तार्षीत् । आत्मनेपदे ॥ 'संयोगादि०' अनेन वेट् । अस्तरिष्ट । इडभावे । अस्तृत । 'लोपो०' । अनेन सेर्लोपः । अस्तृषाताम् अस्तृषत । इत्यादीनि ॥

**वृञ् वरणे । वृणोति वृणुते । ववार वव्रतुः वव्रुः । वृणोतेस्थपो नित्यमिट् । ववरिथ वव्रथुः वव्र ववार-ववर ववृव ववृम । वव्रे ववृढ्वे । व्रियात् वरिषीष्ट । ईटो ग्रहाम् । वरीषीष्ट । वरिषीष्ट । वरिता वरीता २ । वरिष्यति वरीष्यति । वरिष्यते वरीष्यते । अवरिष्यत् । अवरीष्यत् । अवरिष्यत अवरीष्यत । अवारीत् अवरिष्ट अवृत ॥**

वृञ् वरणे । ञकार उभयपदार्थः । 'स्वादेर्नुः' । 'ष्रनोणोनन्ते' । 'नूपः' वृणोति वृणुते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । 'धातोर्नामिनः' । ववार । 'ऋरम्' । वव्रतुः वव्रुः । ववर् थप् इति जाते ॥ सूत्रम्—'वृणोतेः०। वृणोतेर्धातोः थपो नित्यं इट्

भवति । ववरिथ । क्रादित्वान्नेट् । ववृव । इत्यादीनि । वव्रे वव्राते वव्रिरे । 'यादादौ' । व्रियात् । संयोगादेः' । वृषीष्ट । 'ईटो ग्रहाम्' । अनेन इकारस्य ईकारः । वरिषीष्ट वरीषीष्ट । इत्यादीनि । वरिता वरीता । इत्यादीनि । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । वृद्धिः । अवारीत् अवारिष्टाम् अवारिषुः । आत्मनेपदे गुणः । अवरिष्ट अवरीष्ट । इत्यादीनि रूपाणि भवन्ति । तेषां साधनमपि सुगमम् ॥

**धूञ् कम्पने । धूनोति धूनुते । धूनुयात् धून्वीत । धूनोतु धूनुताम् । अधूनोत् अधूनुत । दुधाव दुधुवे । धूयात् धविषीष्ट-धोषीष्ट ॥ स्वरतिसूतिसूयतिधूञूदितो वा ॥ धविता धोता । धविष्यति धोष्यति । अधविष्यत् अधोष्यत् । अधावीत् । अधविष्ट अधोष्ट ॥ इति स्वादिषूभयपदिनः १३**

धूञ् कम्पने । ञकार उभयपदार्थः । पूर्ववत्प्रत्यया भवन्ति । 'स्वादेर्नुः' । 'नूपः' । अनेन चतुर्षु पिति गुणो भवति । धूनोति । आत्मनेपदे । धूनुते । चतुर्णां पूर्ववद्रूपाणि । लिट्लकारे द्वित्वादिकं सर्वं भवति । 'धातोर्नामिनः' । 'झपानां०' अनेन धस्य दः । ह्रस्वः । दुधाव दुधुवतुः दुधुवुः । दुधविथ । इत्यादीनि । दुधुवे दुधुवाते दुधुविरे । धूयात् ॥ 'स्वरति०' । अनेनास्य वेट् । गुणः । धविषीष्ट । इडभावे धोषीष्ट । अन्यानि रूपाणि सुगमानि । धविता धोता । अन्येषां रूपाणि सुगमानि । सर्वत्रेड्विकल्पः । लुङ्लकारे । अधावीत् अधाविष्टाम् अधाविषुः । साधनं सुगमम् । इडभावे । 'अनिटो०' । अधौषीत् अधौष्टाम् अधौषुः । आत्मनेपदे । अधविष्ट अधोष्ट । इत्यादीनि रूपाणि भवन्ति । एतादृशानि रूपाणि शतशः साधितानि । अतो व्याख्यानं न कृतम् । इत्युभयपदिनः कथिताः ॥

---

## स्वादिषु परस्मैपदिनः १४

**अथ परस्मैपदिनः ॥ हि गतौ वृद्धौ च । हिनोति ॥ द्विरुक्तस्य हिनोतेः कुत्वं वाच्यम् ॥ जिघाय । हीयात् । हेता । हेष्यति । अहेष्यत् । अहैषीत् ॥**

अथाधुना परस्मैपदिनः कथ्यन्ते । हि गतौ वृद्धौ च । तिबादयो भवन्ति । 'स्वादेर्नुः' 'नूपः' । हिनोति हिनुतः हिन्वन्ति । इत्यादीनि रूपाणि भवन्ति । लिट्लकारे । द्वित्वादिकम् । सूत्रम् 'द्विरुक्तस्य०' ॥ द्विरुक्तस्य हिनोतेर्धातोः कुत्वं वाच्यम् । अनेन हस्य घः 'धातोर्नामिनः' । 'झपानाम्०' । जिघाय जिघ्यतुः जिघ्युः । जिघयिथ जिघेथ । इत्यादीनि । 'ये' हीयात् । गुणः । हेता । हेष्यति । अहेष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अहैषीत् अहैष्टाम् अहैषुः । इत्यादीनि ॥

**शक्लृ शक्तौ । शक्नोति । शशाक । लोपः पचां किल्ये चास्य । शेकतुः शेकुः । शक्यात् । शक्ता । शक्ष्यति । अशक्ष्यत् । अशकत् ॥**

शक्लृ शक्तौ लृकारो लृदित्कार्यार्थः । तिबादयः । 'स्वादेर्नुः' । 'नूपः' । शक्नोति शक्नुतः । 'नुधातोः' । शक्नुवन्ति । लोट्लकारे मध्यमपुरुषस्यैकवचने । शक्नुहि । अन्यानि सुगमानि ।

लिट्लकारे द्वित्वादिकं सर्वं भवति । 'अत उपधायाः' शशाक । 'लोपः पचाम्०' । शेकतुः शेकुः । अन्यानि सुगमानि । शक्यात् । शक्ता । 'किलात्०' । 'कषसंयोगे' । शक्ष्यति । अशक्ष्यत् रूपाणि । सुगमानि । लुङ्लकारे । 'लित्पुषादेः०' । अनेन ङप्रत्ययो भवति । अशकत् अशकताम् अशकन् । इत्यादीनि भवन्ति ॥

**धिवि प्रीतौ । 'इदित' इति नुम् ॥ धिन्विकृण्व्योर्नो लोपो वाच्यः ॥ चतुर्षु ॥ यवयोर्वसे हकारे च लोपः ॥ धिनोति । धिनुयात् । धिनोतु । अधिनोत् । दिधिन्व । धिन्व्यात् । धिन्विता । धिन्विष्यति । धिन्विष्यत् । अधिन्वीत् ॥**

धिवि प्रीतौ । इकार इत् । 'इदितो नुम्०' । तिबादयः । 'स्वादेर्नुः'। 'धिन् व् नु तिप्' इति जाते ॥ सूत्रम्—'धिन्विकृण्व्योः०' ॥ अनयोर्नकारस्य लोपो वाच्यः चतुर्षु परेषु । अनेन नकारस्य लोपः । सूत्रम् 'यवयोः०' । यकारवकारयोर्वसे हकारे च लोपो भवति । 'नूपः' । धिनोति धिनुतः धिन्वन्ति । इत्यादीनि । लिट्लकारे । द्वित्वम् । 'पूर्वस्य' 'झपानाम्०' । दिधिन्व दिधिन्वतुः दिधिन्वुः । दिधिन्विथ । इत्यादीनि भवन्ति । 'सिसता०' अनेनेट् । धिन्विता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे द्वाविटौ । अन्यत्साधनं तु पूर्ववत् । अधिन्वीत् अधिन्विष्टाम् अधिन्विषुः । इत्यादीनि ।

**कृवि हिंसायाम् । कृणोति । चकृण्व । धिनोतिवत् ॥**

कृवि हिंसायाम् । सर्वसाधनं तु पूर्ववत् । णत्वम् । कृणोति । अयं धातुर्धिनोतिवत् ज्ञातव्यः ॥

**श्रु श्रवणे ॥ श्रुवः शृ ॥ श्रुवः शृ भवति चतुर्षु परेषु ॥ शृणोति । शुश्राव शुश्रोथ । श्रूयात् । श्रोता । श्रोष्यति । अश्रोष्यत् । अश्रौषीत् ॥ इति स्वादिषु परस्मैपदिनः ॥ १४ ॥**

श्रु श्रवणे । तिबादयः । 'स्वादेर्नुः' ॥ सूत्रम्—'श्रुवः शृ ॥ सांकेतिकम् । द्विपदं सूत्रम् । श्रुवो धातोः शृ इत्यादेशो भवति। चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकं पूर्वस्य । 'धातोर्नामिनः' । अनेन वृद्धिः । शुश्राव शुश्रुवतुः शुश्रुवुः । इत्यादीनि भवन्ति । 'ये' श्रूयात् । 'गुणः' । श्रोता श्रोष्यति । अत्र षत्वं भवति । अश्रोष्यत् । रूपाणि सुगमानि । लुङ्लकारे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अन्यत्साधनं तु सुगमम् । अश्रौषीत् अश्रौष्टाम् । अश्रौषुः । इत्यादीनि रूपाणि भवन्ति । इति परस्मैपदिनः समाप्ताः ॥

---

## स्वादिषु आत्मनेपदिनः १५

**॥ अथात्मनेपदिनः ॥ अशूङ् व्याप्तौ । ऊङावितौ । अश्नुते अश्नुवीत । अश्नुताम् । आश्नुत । नुगशाम् । आभ्वोर्णादौ । आनशे । ऊदितो वा । अशिषीष्ट । अक्षीष्ट । अशिता-अष्टा । अशिष्यते-अक्ष्यते । आशिष्यत-आक्ष्यत । आशिष्ट-**

**आष्ट आक्षाताम् आक्षत ॥ इति स्वादिष्वात्मनेपदिनः ॥ १५ ॥ इति नुविकरणाः स्वादयः ॥**

अथात्मनेपदिनः कथ्यन्ते ॥ अशूङ् व्याप्तौ । ऊङावितौ स्तः । तिबादयः । 'स्वादेर्नुः' । अश्नुते अश्नुवाते । 'आतोन्तो०' । अश्नुवते । इत्यादीनि । अश्नुवीत अश्नुवीयाताम् अश्नुवीरन् । अश्नुताम् अश्नुवाताम् अश्नुवताम् । स्वरादित्वाद् द्वावडागमौ भवतः । आश्नुत । अन्यानि सुगमानि । लिट्लकारे द्वित्वादिकं सर्वम् । 'नुगशां०' । 'आभ्वोर्णादौ' । आनशे आनशाते आनशिरे । इत्यादीनि । 'ऊदितो वा' । अनेनास्य धातोरिड्विकल्पो भवति । अशिषीष्ट । इडभावे । 'छशष०' । अनेन षत्वम् । 'षढोः कः से' । षत्वम् । 'कषसंयोगे०' । अक्षीष्ट । रूपाणि सुगमानि । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । द्वावडागमौ । स्वरादित्वात् । आशिष्ट आशिषाताम् आशिषत । इडभावे । 'झसात्०' । 'छशष०' । ष्टुत्वम् । आष्ट आक्षाताम् आक्षत । इत्यादीनि । इत्यात्मनेपदिनः समाप्तिमगमन् । इति नुविकरणाः स्वादयो धातवः कथिताः ॥

---

## रुधादिषूभयपदिनः १६

**अथ रुधादयः ॥ तत्रादावुभयपदिनः । रुधिरावरणे । इरित् ॥ रुधादेर्नम् ॥ रुधादेर्गणान्नम् प्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः । मकारः स्थाननियमार्थः । णत्वम् । तथोर्धः । रुणद्धि । नमसोऽस्य ॥ हसात् झसस्य सवर्णे झसे लोपो वाच्यः ॥ रुन्धः । रुन्धन्ति । रुणत्सि रुन्धः रुन्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । रुन्धे रुन्धाते रुन्धते । रुन्ध्यात् । रुन्धीत । रुणद्धु । रुन्धाम् । अरुणत् अरुणद् । अरुन्ध । रुरोध रुरुधतुः रुरुधुः । रुरोधिथ । रुरुधे रुरुधाते । रुध्यात् रुत्सीष्ट । रोद्धा २ । रोत्स्यति रोत्स्यते । अरोत्स्यत् अरोत्स्यत । अनिटो नामिवतः । अरौत्सीत् । सिस्रोः । अरुद्ध अरुत्साताम् अरुत्सत । इरितो वा । अरुधत् ॥**

अथ रुधादयो धातवः कथ्यन्ते ॥ तत्रादावुभयपदिनो धातवः सन्ति । रुधिर् आवरणे । इरित् । उभयपदित्वात् तिबादयस्तआदयश्च प्रत्यया भवन्ति । सूत्रम्—'रुधादेर्नम्' ॥ रुध् आदिर्यस्मात् स रुधादिः तस्य रुधादेः नम् । रुधादेर्गणान्नम् प्रत्ययो भवति चतुर्षु लकारेषु परेषु । अपोऽपवादः । प्रत्यये मकारः स्थाननियमार्थः । 'ष्रनों णो नन्ते' । अनेन णत्वं च । 'तथोर्धः' । अनेन तकारस्य धकारः । 'झबे जबाः' । रुणद्धि । रुध् तस् इति जाते । 'नमसोऽस्य' । अनेन अकारस्य लोपः । 'तथोर्धः' ॥ 'हसात्०' अनेन धकारस्य लोपो भवति । 'नश्चा०' । रुन्धः रुन्धन्ति । 'खसे०' । रुणत्सि रुन्धः रुन्ध । अन्यानि मूले सन्ति । रुन्धे रुन्धाते रुन्धते । इत्यादीनि रूपाणि भवन्ति । रुन्ध्यात् रुन्ध्याताम् रुन्ध्युः । सुगमानि । रुन्धीत रुन्धीयाताम् रुन्धीरन् । रुणद्धु—रुन्धात् रुन्धाम् रुन्धन्तु । 'झसाद्धिर्हेः' । 'हसात्' । रुन्धि रुन्धात् रुन्धम् रुन्ध । रुणधानि रुणधाव रुणधाम । रुन्धाम्

रुन्धाताम् रुन्धताम् । इत्यादीनि । अरुणत् अरुन्धाम् अरुन्धम् । अरुणः अरुन्ध अरुन्धाताम् अरुन्धत । अरुन्धाः अरुन्धाथाम् अरुन्ध्वम् । अरुणधम् अरुन्ध्व अरुन्ध्म । इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति तानि यथासंभवं साध्यानि । लिट्लकारे द्वित्वादिकं सर्वं भवति । 'उपधाया लघोः' । रुरोध रुरुधतुः रुरुधुः । रुरोधिथ । इत्यादीनि । आत्मनेपदे रुरुधे रुरुधाते रुरुधिरे । अन्यानि सुगमानि । रुध्यात् । रुत्सीष्ट । 'तथोर्धः' । गुणः । रोद्धा रोद्धा । 'खसे०' । रोत्स्यति रोत्स्यते । लुङ्लकारे । 'अनिटः०' । अनेन वृद्धिः । 'खसे०' । अरौत्सीत् अरौद्धाम् अरौत्सुः । इत्यादीनि । आत्मनेपदे । 'झसात्०' अनेन सेर्लोपो भवति । अरुद्ध अरुत्साताम् अरुत्सत । इत्यादीनि रूपाणि सुगमानि । अस्य धातोरिरितो वा । अनेन ङप्रत्ययो भवति । इरित्वात् । ङित्वात् गुणाभावः । अरुधत अरुधताम् अरुधन् । सुगमानि ॥

उच्छृदिर् दीप्तिदेवनयोः । उइराविती । छृणत्ति छृन्तः छृन्दन्ति । छृन्ते । छृन्द्यात् । छृन्दीत । छृणत्तु छृन्ताम् । अच्छृणत् अच्छृणद् ॥ दः सः ॥ दकारस्य वा सकारो भवति सिपि विषये ॥ अच्छृणः अच्छृदत् अच्छृन्तम् अच्छृन्त । चच्छर्द चच्छृदे । छृद्यात् । छृत्सीष्ट छर्दिषि । छर्दिता २ । छर्दिष्यति छर्त्स्यति । छर्दिष्यते छर्त्स्यते । अच्छर्दिष्यत् अच्छर्त्स्यत् । अच्छर्दिष्यत-अच्छर्त्स्यत । इरितो वा । अच्छृदत् अच्छर्दीत् अच्छर्दिष्ट ॥

उच्छृदिर् दीप्तिदेवनयोः । उइराविती । पूर्ववत् प्रत्ययाः । 'रुधादेर्नम्' । अनेन चतुर्षु नम्प्रत्ययो भवति । छृणत्ति । अत्र 'खसे चपा झसानाम्' । अनेन दस्य तः । 'नश्चापदान्ते झसे' । अनेन नस्यानुस्वारो भवति । छृन्तः छृन्दन्ति । इत्यादीनि रूपाणि पूर्वसदृशानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । छृन्ते छृन्दाते छृन्दते । चतुर्णां लकाराणां रूपाणि पूर्वसदृशानि । लिट्लकारे द्वित्वादिकं सर्वं भवति । पूर्वस्य रः । 'उपधायाः' । अनेन गुणः । 'झपानाम्०' । चच्छर्द चच्छृदतुः चच्छृदुः । चच्छर्दिथ । आत्मनेपदे । चच्छृदे चछृदाते चच्छृदिरे । इत्यादीनि रूपाणि भवन्ति । छृद्यात् । 'सिस्योः०' । अनेन गुणनिषेधः 'खसे०' छर्त्सीष्ट । नृत् तृद् छृद् अनेन वक्ष्यमाणेन वेट् । 'उपधाया लघोः' । अनेन गुणः । छर्दिता । अन्येषां रूपाणि सुगमानि । छर्दिष्यति । 'नृतृतृद्०' । अनेन वा इट् । 'खसे०' । छर्त्स्यति । इत्यादीनि । लुङ् । द्वाविटौ सेर्लोपः । गुणः । अडागमः । अच्छर्दीत् अच्छर्दिष्टाम् अच्छर्दिषुः । अन्यानि सुगमानि । आत्मनेपदे साधनं पूर्ववत् । अच्छर्दिष्ट अच्छर्दिषाताम् अच्छर्दिषत । इत्यादीनि । अस्य धातोरिरितो वा । अनेन ङप्रत्ययो भवति । ङित्वाद्गुणाभावः । अच्छृदत् अच्छृदताम् अच्छृदन् । अच्छृदः अच्छृदतम् अच्छृदत । अच्छदम् अच्छृदाव अच्छृदाम । साधनमेतादृशं शतशः कृतम् ॥

उतृदिर् हिंसानादरयोः । तृणत्ति तृन्तः तृन्दन्ति । तृन्ते । तृन्द्यात् । तृन्दीत् । तृणत्तु तृन्ताम् । अतृणत् अतृन्त । ततर्द । ततृदे । तृद्यात् । तृत्सीष्ट तर्दिषीष्ट । तर्दिष्यति-तर्त्स्यति । तर्दिष्यते तर्त्स्यते । अतर्दिष्यत्-अतर्त्स्यत् ।

**अतर्दिष्यत-अतर्त्स्यत । अतृदत् अतर्दीत् ॥ नृततृदच्छृदचृदकृद्भ्योऽसेः सादेरिड्वा ॥ अतर्दिष्ट ॥ इति रुधादिषूभयपदिनः ॥ १६ ॥**

उतृदिर् हिंसानादरयोः । उइराविती । पूर्ववत् प्रत्यया भवन्ति । 'रुधादेर्नम्' अनेन चतुर्षु नम्प्रत्ययो भवति । णत्वम् । तृणत्ति । अस्मिन्रूपे 'खसे०' अनेन दस्य तः ङिति प्रत्यये परे । 'नमसोऽस्य' अनेन नमोऽकारस्य लोपो भवति । 'नश्चा०' अनेन झसे परे नकारस्यानुस्वारो भवति । 'ह्रसात्०' अनेन वा तकारस्य लोपो भवति । छृंत्तः । छृन्तः । एतादृशमपि रूपं स्यात् । तृन्दन्ति । तृन्ते तृन्दाते तृन्दते । इत्यादीनि चतुर्णां रूपाणि सुगमानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । लिट्लकारे 'द्विश्च' पूर्वस्य रः । 'उपधाया लघोः' अनेन गुणः । ततर्द । कित्त्वात् गुणाभावः । किति णबादौ । अन्यत्साधनं पूर्ववत् । ततृदतुः ततृदुः । गुणो भवति । थपि । ततर्दिथ । इत्यादीनि । आत्मनेपदे साधनं पूर्ववत् । ततृदे ततृदाते ततृदिरे । अन्यानि सुगमानि । तृद्यात् । 'खसे०' । 'नृतृतृद्०' अनेन वा इड्निषेधः । 'सिस्योः०' अनेन गुणनिषेधः । तृत्सीष्ट । इटि कृते गुणो भवति । तर्दिषीष्ट । अन्यानि रूपाणि सुगमानि । अन्यानि रूपाण्यन्येषां लकाराणां मूलात् ज्ञेयानि । सिवर्जितसादिप्रत्यये इड्विकल्पः । लुङ्लकारे 'सिसता०' 'से०' आभ्यां द्वाविटौ । सेर्लोपो भवति । 'उपधायाः' अनेन गुणः । 'दिबादावट्' । 'वावसाने' । अतर्दीत् अतर्दिष्टाम् अतर्दिषुः । 'इरितो वा' अनेन वा ङप्रत्ययो भवति । ङित्त्वाद्गुणाभावः । अतृदत् । आत्मनेपदे । 'सिसता०' अनेनेट् । गुणः । षत्वम् । ष्टुत्वम् । 'राद्यपो द्विः' अनेन द्वित्वम् । अतर्दिष्ट अतर्दिषाताम् अतर्दिषत । इत्युभयपदिनः समाप्ताः ॥

---

## रुधादिषु परस्मैपदिनः १७

**अथ परस्मैपदिनः ॥ शिष्लृ विशेषणे । शिनष्टि शिंष्टः शिंषन्ति । शिंष्यात् । शिनष्टु । अशिनट् । शिशेष । शिष्यात् । शेष्टा । शेक्ष्यति । अशेक्ष्यत् । अशिषत् ॥**

अथ परस्मैपदिनः कथ्यन्ते । तिबादयः प्रत्यया भवन्ति । 'रुधादेर्नम्' अनेन नम्प्रत्ययो भवति । शिष्लृ विशेषणे । लृकारो लृत्कार्यार्थः । पूर्ववत्सर्वं कार्यं भवति । शिनष् तिप् इति जाते । ष्टुत्वम् । शिनष्टि । 'नश्चापदान्ते झसे' । शिंष्टः शिंषन्ति । 'षढोः कः से' । षत्वम् । शिनक्षि शिंष्ठः शिंष्ट । शिनष्मि शिंष्वः शिंष्मः । शिंष्यात् शिंष्याताम् शिंष्युः । शिनष्टु शिंष्टात् शिंष्टाम् शिंषन्तु । 'झसाद्धिर्हेः' । ष्टुत्वम् । 'षो डः' शिण्ढि । अन्यानि सुगमानि । लङ्लकारे 'षो डः' अनेन षकारस्य डकारः । 'वावसाने' । 'दिबादावट्' । अशिनट्–अशिनड् अशिंष्टाम् अशिंषन् । अन्यानि सुगमानि । लिट्लकारे । द्वित्वं पूर्वस्य । 'उपधाया लघोः' । शिशेष शिशिषतुः शिशिषुः । शिशेषिथ । अन्यानि सुगमानि । शिष्यात् । 'उपधाया लघोः' । ष्टुत्वम् । शेष्टा । गुणः । 'षढोः कः से' । 'कषसंयोगे क्षः' । शेक्ष्यति । 'दिबादाट्' । अशेक्ष्यत् । लुङ्लकारे । 'लित्पुषादेर्ङः' अनेन ङप्रत्ययः । ङित्त्वाद्गुणाभावः । 'दिबादावट्' । अशिषत् अशिषताम् अशिषन् ॥

**हिसि हिंसायाम् । इदित इति नुम् ॥ नमः ॥ नमः प्रत्ययात्परस्य नस्य लोपो भवति ॥ हिनस्ति हिंस्तः हिंसन्ति । हिंस्यात् । हिनस्तु । धौ सलोपो वा । सस्य द इति केचित् । हिन्धि हिन्द्धि । अहिनत् अहिनद् ॥ दिपि सस्य दः सिपि वा ॥ अहिनत् अहिनः । जिहिंस । हिंस्यात् । हिंसिता । हिंसिष्यति । अहिंसिष्यत् । अहिंसीत् ॥**

हिसि हिंसायाम् । तिबादयः । 'इदितो नुम्०' । पश्चात् । 'रुधादेर्नम्' । अनेन नम्प्रत्ययो भवति । हिनस् तिप् इति जाते ॥ सूत्रम्—'नमः' ॥ नमः एकपदं सूत्रम् । नमः प्रत्ययात्परस्य नकारस्य लोपो भवति । अनेन नकारस्य लोपः । 'स्वरहीनं०' । हिनस्ति । 'नमसोऽस्य' । 'नश्चापदान्ते' अनेन नमो नकारस्यानुस्वारः । हिंस्तः हिंसन्ति । अनेनैव प्रकारेणान्यानि रूपाणि साध्यानि । हिंस्यात् । हिनस्तु हिंस्तात् हिंस्ताम् हिंसन्तु । 'झसाद्धिर्हेः' । तदा हिंस् धि इति जाते । सूत्रम् । धौ ॥ धौ परे सति सकारस्य लोपो भवति । वा सकारस्य दकारो भवति । यदा सकारस्य लोपः तदा हिंधि । यदा सकारस्य दकारस्तदा हिंद्धि । अन्यानि सुगमानि । लङ्लकारे । 'दिबादावट्' । अहिंस् दिप् इति जाते ॥ सूत्रम्—'दिपि सस्य दः०'॥ अनेन सकारस्य दकारः । 'दिस्योर्हसात्' । 'वावसाने'। अहिनत् अहिनद् अहिंस्ताम् अहिंसन् । अहिनत् अहिनः अहिंस्तम् अहिंस्त । अहिनसम् अहिंस्व अहिंस्म । लिट्लकारे द्वित्वादिकम् । 'कुहोश्चुः' । जिहिंस जिहिंसतुः जिहिंसुः । हिंस्यात् । हिंसिता । 'सिसता०' अनेन इडागमो भवति । हिंसिष्यति । 'दिबादावट्' । अहिंसिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'दिबादावट्' । अहिंसीत् अहिंसिष्टाम् अहिंसिषुः । इत्यादीनि ॥

**भञ्जो आमर्दने । ओ इत् । भनक्ति भङ्क्तः । बभञ्ज । भज्यात् । भङ्क्ता । भङ्क्ष्यति । अभङ्क्ष्यत् ॥**

भञ्जो आमर्दने । ओकार इत् । तिबादयः । 'रुधादेर्नम्' । भनज् तिप् इति जाते । 'नमः' । 'चोः कुः' । 'खसे चपा०' । भनक्ति । 'नमसोऽस्य' अनेन ञ्नित्यकारस्य लोपः । 'नश्चापदान्ते०' । भङ्क्तः भञ्जन्ति । 'किलात्' । 'कषः' । भनक्षि । भञ्ज्यात् भञ्ज्याताम् भञ्ज्युः । भनक्तु भङ्क्तात् भङ्क्ताम् भञ्जन्तु । भङ्ग्धि भङ्क्तात् भङ्क्तम् भङ्क्त । भनजानि भनजाव भनजाम । 'चोः कुः' । 'दिस्योर्हसात्' । 'दिबादावट्' । 'वावसाने' । अभनक् अभनग् अभङ्क्ताम् अभञ्जन् । अभनक् अभनग् अभङ्क्तम् अभङ्क्त । अभनजम् अभञ्ज्व अभञ्ज्म । लिट्लकारे द्वित्वादिकं । 'झपानाम्' । बभञ्ज बभञ्जतु बभञ्जुः । बभञ्जिथ । 'अस्वतः' । 'चोः कुः' । 'खसे चपा०'। बभङ्क्थ । इत्यादीनि । भज्यात् । अत्र 'नोलोपः' अनेन नकारस्य लोपः । भञ्ज् ता इति जाते । 'चोः कुः' । 'खसेचपा०' । भङ्क्ता भङ्क्तारौ भङ्क्तारः । भञ्ज् स्यप् तिप् इति जाते । 'चोः कुः' । 'खसे०' । 'किलात्०' । 'कष०' । भङ्क्ष्यति । 'दिबादावट्' । अभङ्क्ष्यत् । लुङ् लकारे । 'भूते सिः' सेः । 'दिबादावट्' । अभञ्ज सि ईट् दिप् इति जाते ॥

**सावनिटो नित्यं वृद्धिः ॥ अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे । अभाङ्क्षीत् अभाङ्क्ताम् अभाङ्क्षुः ॥**

सूत्रम् 'सावनिटो नित्यं वृद्धिः'॥ सौ अनिटः नित्यं वृद्धिः । अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे । सुगममिदं सूत्रम् । 'चोः कुः । 'खसे०' । 'किलात्०' । 'कष०' अभाङ्क्षीत् । 'झसात्०' । अभाङ्क्ताम् अभाङ्क्षुः । अन्यानि सुगमानि ।

**अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अञ्ज्यात् अनुक्तु । आनक्-आनग् । आनञ्ज । अज्यात् । अञ्जिता । अङ्क्ता । अञ्जिष्यति अङ्क्ष्यति । आञ्जिष्यत् आङ्क्ष्यत् ॥ अञ्जेः सौ नित्यमिड्वाच्यः ॥ आञ्जीत् । इति रुधादिषु परस्मैपदिनः ॥ १७ ॥**

अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । ऊकार इड्विकल्पार्थः । तिबादयः । 'रुधादेर्नम्' । 'चोः कुः' । 'खसे०' । अनक्ति । 'नमसोऽस्य' । अङ्क्तः । अञ्जन्ति । अञ्ज्यात् अञ्ज्याताम् अञ्ज्युः । अनुक्तु अङ्क्तात् अङ्क्ताम् अञ्जन्तु । अङ्ग्धि । 'दिबादावट्' । 'स्वरादेः परः' । 'सवर्णे दीर्घः' । 'चोः कुः' । 'दिस्योर्हसात्' । 'वावसाने' । आनक् आनग् । 'नमः' । आङ्क्ताम् । 'नश्चापदान्ते' आञ्जन् । अन्यानि सुगमानि । लिट्लकारे । द्वित्वादिकम् । 'नुगशां०' । 'आभ्वोर्णादौ' । आनञ्ज आनञ्जतुः आनञ्जुः । आनञ्जिथ । अज्यात् । 'ऊदितो वा' । अनेन सूत्रेण इड्विकल्पो भवति । अञ्जिता । इडभावे । 'चोः कुः । खसे०' । अङ्क्ता । अञ्जिष्यति । इडभावे । कुत्वम् । 'खसे०' षत्वम् । 'कष०' । अङ्क्ष्यति । 'दिबादावट्' । आञ्जिष्यत् । इडभावे । आङ्क्ष्यत् । लुङ्लकारे । इड्विकल्पे प्राप्ते । सूत्रम् 'अञ्जेः०' ॥ अञ्जेर्धातोः सौ नित्यं इड् वाच्यः । अन्यत् साधनं तु पूर्ववत् । आञ्जीत् आञ्जिष्टाम् आञ्जिषुः । इत्यादीनि । इति परस्मैपदिनः कथिताः ॥ १७ ॥

---

## रुधाधिष्वात्मनेपदिनः १८

**अथात्मनेपदिनः ॥ ञिइन्धी दीप्तौ । ञिई इतौ । इन्धे । इन्धीत् । इन्धाम् । ऐन्ध इन्धाञ्चक्रे । इन्धिषीष्ट । इन्धिता । इन्धिष्यते । ऐन्धिष्यत । ऐन्धिष्ट ॥ इति रुधादिष्वात्मनेपदिनः ॥ १८ ॥ इति नम्विकरणा रुधादयः ॥**

अथात्मनेपदिनः कथ्यन्ते । ञिइन्धी दीप्तौ । ञिई इतौ । तआदयः । 'रुधादेर्नम्' । 'नमः' । 'तथोर्धः' । 'नमसोऽस्य' । 'नश्चापदान्ते' । 'हसात्' । इन्धे इन्धाते इन्धते । इन्धीत इन्धीयाताम् इन्धीरन् । इन्धाम् इन्धाताम् इन्धताम् । 'दिबादावट्' । 'स्वरादेः परः' । 'अइए' । 'एऐऐ' । अन्यत् साधनं तु पूर्ववत् । ऐन्ध ऐन्धाताम् ऐन्धत । ऐन्धाः ऐन्धाथाम् ऐन्ध्वम् । 'कासादिप्रत्ययादाम्' अनेनाम् । अन्यत्साधनं तु पूर्ववत् । इन्धांचक्रे । इन्धामास । इन्धांबभूव । रूपाणि सुगमानि । 'सिसता०' अनेनेट् । इन्धिषीष्ट । इन्धिता । इन्धिष्यते । द्वावडागमौ । 'अइए' । 'एऐऐ' । ऐन्धिष्यत । लुङ्लकारे । ऐन्धिष्ट ऐन्धिषाताम् ऐन्धिषत । इत्यात्मनेपदिनः समाप्तिमगमन् । इति नम्विकरणा रुधादयो धातवः कथिताः ॥ १८ ॥

---

## तनादिषूभयपदिनः १९

**अथ तनादयः ॥ सर्वे उभयपदिनः । तनु विस्तारे ॥ तनादेरुप् ॥ तनादेर्गणादुप् प्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः । नूपः । तनोति तनुते । तनुयात् तन्वीत । तनोतु तनुताम् । अतनोत् अतनुत । ततान तेनतुः तेनुः । तेने । तन्यात् तनिषीष्ट । तनिता २ । तनिष्यति तनिष्यते । अतनिष्यत् अतनिष्यत । अतानीत् अतनीत् । अतनिष्ट ॥ तनादेरकरोतेस्तन्थासोर्वा सिलोपो वाच्यः ॥ लोपस्त्वनुदात्ततनाम् । अतत । अतथाः अतनिष्ठाः ॥**

अथ तनादयो धातवः कथ्यते । तनादयः सर्वे उभयपदिनः सन्ति । तनु विस्तारे तिबादयः तआदयश्च प्रत्यया भवन्ति । सूत्रम् 'तनादेरुप्' ॥ तनादेः उप् । तनादेर्गणाच्चतुर्षु लकारेषु परेषु उप्प्रत्ययो भवति । अपोऽपवादः । अनेन उप् । तेनु तिप् इति जाते । 'नूपः' अनेन गुणः । तनोति तनुतः । 'नुधातोः' तन्वन्ति । तनोषि तनुथः तनुथ । तनोमि । ओर्वमोर्वा लोपः । तनुवः तन्वः । तनुमः तन्मः । तनुते तन्वाते । 'आतोन्तोदनतः' । तन्वते । इत्यादीनि । तनुयात् । 'नुधातोः' । तन्वीत । तनोतु । हौ परे 'ओर्वाहेः' तनु । तनुताम् तन्वाताम् तन्वताम् । तनुष्व । अन्यानि सुगमानि । 'दिबादावट्' । अतनोत् अतनुताम् अतन्वन् । आत्मनेपदे । अतनुत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे । 'द्विश्च' । 'पूर्वस्य' । 'अत उपधायाः' । ततान । 'लोपः पचाम्०' । तेनतुः तेनुः । 'अस्त्वतः' । तेनिथ ततन्थ । इत्यादीनि । आत्मनेपदे । तेने तेनाते तेनिरे । अन्यानि सुगमानि । तन्यात् । 'सिसता०' । षत्वम् । तनिषीष्ट । तनिता । लुङ्लकारे । 'णित्पे' । अनेन णित्त्वात् वृद्धिः । अन्यत्साधनं सुगमम् । अतानीत् अतानिष्टाम् अतानिषुः । आत्मनेपदे । अतनिष्ट ॥ सूत्रम्—'तनादेः०' ॥ अकरोतेस्तनादेस्तन्थासोः परयोः सेर्लोपो वाच्यः । अनेन वा सेर्लोपः । लोपस्त्वनुदात्त०' । अनेन नकारस्य लोपः । अतत अतनिषाताम् अतनिषत । सेर्लोपः । नकारस्य लोपः । अतथाः अतनिष्ठाः । अन्यानि सुगमानि ॥

**क्षणु क्षिणु हिंसायाम् । क्षणोति क्षणुते । क्षणुयात् क्षण्वीत । क्षणोतु क्षणुताम् । अक्षणोत् । अक्षणुत । चक्षाण चक्षणे । क्षण्यात् । क्षणिषीष्ट । क्षणिता २ । क्षणिष्यति क्षणिष्यते । अक्षणिष्यत् अक्षणिष्यत । ह्यन्तक्षण इति न वृद्धिः । अक्षणीत् अक्षणिष्ट-अक्षत अक्षथाः-अक्षणिष्ठाः ॥**

क्षणु क्षिणु हिंसायाम् । पूर्ववत् प्रत्यया भवन्ति । 'तनोदरुप्' । 'नूपः' णत्वम् । क्षणोति क्षणुतः क्षण्वन्ति । क्षणुते । क्षणुयात् । क्षण्वीत । क्षणोतु । क्षणुताम् अक्षणोत् । अक्षणुत । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'कुहोश्चुः' । 'अत उपधायाः' । चक्षाण चक्षणतुः चक्षणुः । चक्षणे चक्षणाते चक्षणिरे । क्षण्यात् । 'सिसता०' । षत्वम् । क्षणिषीष्ट । क्षणिता । क्षणिता । अन्येषां मूलात् ज्ञेयानि । लुङ्लकारे द्वाविटौ । सेर्णित्त्वात् । 'अत उपधायाः' । अनेन वृद्धौ प्राप्तायाम् । 'ह्यन्तक्षण०' अनेन तन्निषेधः । अक्षणीत् । अन्यानि सुगमानि ।

आत्मनेपदे । अक्षणिष्ट । 'तनादेः' अनेन वा सेर्लोपः । 'लोपस्त्वनुदात्त०' । अक्षत अक्षणिषाताम् अक्षणिषत । अक्षणिष्ठाः । वा सेर्लोपः । अक्षथाः । इत्यादीनि ॥

**तनादेरुपधाया गुणो वा पिति ॥ क्षिणोति क्षेणोति । अक्षेणीत् अक्षित-अक्षेणिष्ट ॥**

क्षिणुधातो रूपाणि कथ्यन्ते । प्रत्ययादयः पूर्ववत् । 'तनादेरुप्' ॥ सूत्रम्—'तनादेः०'॥ तनादेर्धातोरुपधाया गुणो वा भवति पिति प्रत्यये परे । क्षिणोति । क्षेणोति । क्षिणुते । क्षिणुयात् । क्षिण्वीत । क्षिणोतु । क्षेणोतु । क्षिणुताम् । अक्षिणोत् । अक्षेणोत् । अक्षिणुत । अन्यानि रूपाणि सुगमानि । लिट्लकारे । 'उपधाया लघोः' । चिक्षेण चिक्षिणतुः चिक्षिणुः । चिक्षिणे चिक्षिणाते चिक्षिणिरे । इत्यादीनि । क्षिण्यात् । 'सिसता०' । क्षेणिषीष्ट । क्षेणिता क्षेणिता । लुङ्लकारे अक्षेणीत् । आत्मनेपदे । अक्षेणिष्ट । अक्षेत । इत्यादीनि ॥

**षणु दाने । सेने । सायात् सन्यात् । असात्-असनिष्ट । असाथाः-असनिष्ठाः ॥**

षणु दाने । पूर्ववत् प्रत्ययाः । 'तनादेरुप्' । 'आदेः ष्णः स्नः' । 'नूपः' । सनोति । सनुतः । सनुते । सनुयात् । सन्वीत । सनोतु । हौ परे । सनु । सनुताम् । असनोत् । असनुत । रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । वृद्धिः । ससान । 'लोपः पचां०' । सेनतुः सेनुः । सेने सेनाते सेनिरे । सन् यात् इति स्थिते । 'जनखनसनां०' । अनेन वा आकारो भवति । सायात् सन्यात् । 'सिसता०' । सनिषीष्ट । सनिता । सनिता । लुङ्लकारे । असानीत् । असनिष्ट । असत । असनिष्ठाः । असथाः । इत्यादीनि ॥

**डुकृञ् करणे । डुञावितौ । गुणः । नूपः । करोति ॥ ङित्यदुः ॥ करोतेरकारस्य उकारो भवति ङिति विभक्तौ परतः ॥ कुरुतः कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि ॥ कुरछुरोर्न दीर्घः ॥ कृञो नित्यं वमोरुलोपो वाच्यः ॥ कुर्वः कुर्मः । कुरुते ॥ कृञो ये ॥ कृञ उत्तरस्य उप्प्रत्ययस्य लोपो भवति ये परे ॥ कुर्यात् कुर्वीत । करोतु करवाणि कुरुताम् करवै । अकरोत् अकुरुत । चकार चक्रतुः चक्रुः । चकर्थ चक्रे । क्रियात् कृषीष्ट । कर्ता । करिष्यति । अकरिष्यत् । अकार्षीत् । अकृत अकृषाताम् अकृषत ॥ संपर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट् । संस्करोति ॥ अड्द्वित्वव्यवधानेऽपि सुट् स्यात् ॥ समस्करोत् सञ्चस्कार ॥ ससुट् कृञो णादौ नित्यमिड्वाच्यः ॥ सञ्चस्करिथ । एवमुपस्कुरुते ॥**

डुकृञ् करणे । डुञावितौ । 'तनादेरुप्' । 'गुणः' । 'नूपः' । करोति । कृ उप् तस् इति जाते । गुणः ॥ सूत्रम्—'ङित्यदुः'॥ ङिति अत् उः । करोतेर्धातोरकारस्य उकारो भवति ङिति विभक्तौ परतः । कुरुतः कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि । कुरुवस् इति जाते । 'ओर्वमोर्वा' अनेन लोपविकल्पे प्राप्ते सूत्रम्—'कृञः०'॥ कृञो धातोर्नित्यं वकारम-

कार्योरुकारस्य लोपो वाच्यः । अनेन नित्यं लोपः । 'य्वोर्विहसे' अनेन दीर्घे प्राप्ते । सूत्रम् कुर्छुरोः०'॥ कुर्छुरोः दीर्घो न भवति । अनेन करोतेः दीर्घाभावः । कुर्वः कुर्मः । कुरु यात् । इति जाते ॥ सूत्रम्—'कृञो ये' ॥ कृञः । कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति । अनेन उकारस्य लोपः । कुर्यात् कुर्वीत । करोतु कुरुतात् कुरुताम् कुर्वन्तु । 'ओर्वाहेः०' । कुरु । णत्वम् । करवाणि । कुरुताम् कुर्वाताम् कुर्वताम् ॥ करवै । अकरोत् । अकुरुत । रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । 'रः' 'कुहोश्चुः' । 'धातोर्नामिनः' । चकार । चकरम् । चक्रतुः चक्रुः । क्रादित्वान्नेट् । चकर्थ । चक्रे चक्राते चक्रिरे । 'ऋतोरिङ्' । क्रियात् षत्वम् । कृषीष्ट । गुणः । कर्ता । कर्ता । 'हनृतः स्यपः' । गुणः । करिष्यति । करिष्यते । 'दिबादावट्' अकरिष्यत् अकरिष्यत । लुङ्लकारे । 'धातोर्नामिनः' अनेन वृद्धिः । अकार्षीत् अकार्ष्टाम् अकार्षुः । 'तनादेः०' । अकृत अकृषाताम् अकृषत ॥ सूत्रम्—'संपर्युपेभ्यः' ॥ संपर्युपेभ्यः उपसर्गेभ्यः करोतेर्धातोर्भूषणेऽर्थे सुड् भवति । संस्करोति । इत्यादीनि । सूत्रम् 'अड्द्वित्व०' ॥ अड्द्वित्वव्यवधाने सत्यपि सुट् स्यात् । समस्करोत् । संचस्कार ट्टित्वादादौ भवति सुट् ॥ सूत्रम्—'ससुट्कृञः०' ॥ सुटा सह वर्तमानः ससुट् चासौ कृञ् च ससुट्कृञ् तस्य ससुट्कृञः । ससुट्करोतेर्धातोर्णादौ परे सति नित्यमिड् वाच्यः । संचस्करिथ । एवमुपस्कुरुते ॥

**मनु अवबोधने । मनुते मेने । मन्ता ॥**

मनु अवबोधने । पूर्ववत् प्रत्यया भवन्ति । 'तनादेरुप्' । अयं धातुरात्मनेपदी । मनुते मन्वाते मन्वते । मन्वीत । मनुताम् । 'दिबादावट्' । अमनुत । रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । 'लोपः पचाम्०' । मेने मेनाते मेनिरे । इत्यादीनि । 'नश्चापदान्ते०' । मंसीष्ट । मन्ता । मंस्यते । 'दिबादावट्' । अमंस्यत । लुङ्लकारे । अमंस्त अमंसाताम् अमंसत इत्यादीनि ॥

**वनु याचने । परस्मैपद्ययमित्येके । वनुते ॥ इति तनाद्युभयपदिनः ॥ १९ ॥**
**इत्युब्विकारणास्तनादयः ॥**

वनु याचने । अयमप्यात्मनेपदी । तआदयः प्रत्यया भवन्ति । 'तनादेरुप्' । वनुते वन्वीत । वनुताम् । अवनुत लिट्लकारे । वादित्वान्नेत्वपूर्वलोपौ भवतः । ववने ववनाते ववनिरे । वंसीष्ठ । वन्ता । वंस्यते । अवंस्यत । लुङ्लकारे । अवंस्त अवंसाताम् अवंसत । सर्वत्र 'नश्चापदान्ते झसे' अनेन अनुस्वारः । अयं धातुः परस्मैपदी इति एके आचार्या वदन्ति । तन्मते वनोति । इत्यादीनि रूपाणि भवन्ति । इत्युब्विकरणास्तनादयो धातवः कथिताः ॥ १९ ॥

---

## तुदादिषूभयपदिनः २०

**अथ तुदादयः ॥ तत्रादावुभयपदिनः ॥ तुद व्यथने । अकार उभयपदार्थः ॥ तुदादेरः ॥ तुदादेर्गणादप्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः ॥ ङित्त्वान्न गुणः । तुदति तुदते । तुदेत् । तुदेत । तुदतु तुदताम् । अतुदत्**

**अतुदत । तुतोद तुतुदे । तुद्यात् । तुत्सीष्ट । तोत्ता तोत्स्यति तोत्स्यते । अतोत्स्यत् अतोत्स्यत । अतौत्सीत् अतौत्ताम् अतौत्सुः । अतुत्त अतुत्साताम् अतुत्सत ॥**

अथ तुदादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । तुद व्यथने । अकार उभयपदार्थः । तिबादयस्तआदयश्च प्रत्यया भवन्ति । सूत्रम्—'तुदादेरः'॥ तुदादेः अः । तुदादेर्गणात् अः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । ङित्त्वान्न गुणः । तुदति । आत्मनेपदे । तुदते । रूपाणि सुगमानि । तुदेत् तुदेत । तुदतु तुदताम् । अतुदत् अतुदत । रूपाणि भूधातुवत् । किंतु गुणाभावः । लिट्लकारे द्वित्वादिकम् । 'उपधाया लघोः' अनेन गुणो भवति । तुतोद तुतुदतुः तुतुदुः । तुतोदिथ । इत्यादीनि । आत्मनेपदे । तुतुदे । तुद्यात् । 'खसे०' । तुत्सीष्ट । अन्येषां मूलतो ज्ञेयानि । लुङ्लकारे । 'अनिटो नामिवतः' । अनेन वृद्धिः । अतौत्सीत् । 'झसात्०' । अनेन सेर्लोपः । अतौत्ताम् अतौत्सुः । इत्यादीनि । आत्मनेपदे । 'झसात्०' अनेन झसे परे सेर्लोपः । 'सिस्योः०' । अनेन गुणनिषेधः । अतुत्त अतुत्साताम् अतुत्सत । इत्यादीनि भवन्ति ॥

**भ्रस्जो पाके ॥ ओ इत् ॥ अन्यत्र सो जः ॥ झसपरत्वाभावे सस्य जो भवति ॥ ग्रहां क्ङिति च ॥ अप्रत्ययो ङिद्वत् ॥ भृज्जति भृज्जते । बभ्रज्ज । ऋसंयोगात् इति किन्त्वाभावान्न संप्रसारणम् । बभ्रज्जतुः बभ्रज्जुः । बभ्रज्जिथ-बभ्रष्ठ बभ्रज्जे ॥ भृज्जतेः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः ॥ बभर्ज बभर्जे । भृज्ज्यात् भर्ज्यात् । भ्रक्षीष्ट-भर्क्षीष्ट । भ्रष्ट-भर्ष्टा । भ्रक्ष्यति-भर्क्ष्यति । अभ्रक्ष्यत्-अभर्क्ष्यत् । अभ्राक्षीत्-अभार्क्षीत् । अभ्रष्ट-अभर्ष्ट ॥**

भ्रस्जो पाके । ओकार इत् । तिबादयो भवन्ति । 'तुदादेरः' । अनेन अप्रत्ययो भवति ॥ सूत्रम्—'अन्यत्र सो जः'॥ अन्यत्र सः जः । झसपरत्वाभावे सति सकारस्य जकारो भवति । अनेन सस्य जकारः । सूत्रम्—'अप्र०'॥ अप्रत्ययो ङिद्वद् ज्ञातव्यः । ङित्त्वात्संप्रसारणम् । 'ग्रहां क्ङिति च' । अनेन भवति । भृज्जति भृज्जते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । किन्त्वाभावात् संप्रसारणं न भवति । बभ्रज्जतुः बभ्रज्जुः । बभ्रज्जिथ बभ्रष्ठ । आत्मनेपदे । बभ्रज्जे बभ्रज्जाते बभ्रज्जिरे । इत्यादीनि ॥ 'भृज्जतेः०' । भृज्जतेर्धातोः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः । सुगममिदं सूत्रम् । मिदन्त्यात्स्वरात्परो भवति । तत्पक्षे । बभर्ज बभर्जतुः बभर्जुः । आत्मनेपदे । बभर्जे । इत्यादीनि । 'अन्यत्र सो जः' संप्रसारणम् । भृज्ज्यात् । 'भृज्जतेः' । भर्ज्यात् । भ्रस्ज् सीष्ट इति स्थिते । 'स्कोरा-द्योश्च' । अनेन सस्य लोपः । 'चोः कुः' । 'खसे०' । षत्वम् । 'कषसंयोगे०' । भ्रक्षीष्ट । 'भृज्जतेः०' । तदा । भर्क्षीष्ट । अन्येषां मूलाद्द्य ज्ञातव्यानि सर्वाणि रूपाणि अनेनैव प्रकारेण सिध्यन्ति । लुङ्लकारे । 'अनिटो नामिवतः' अनेन वृद्धिः । अन्यत्साधनं तु पूर्ववत् । अभ्राक्षीत् । 'झसात्' । अनेन सेर्लोपो भवति । अभ्राष्टाम् अभ्राक्षुः । रमागमे कृते ।

अभार्क्षीत् । आत्मनेपदे 'स्कोराद्योश्च' । 'छशष०' । अनेन षकारः । अभ्रष्ट अभ्रक्षाताम् अभ्रक्षत । रमागमे कृते । अभर्ष्ट । इत्यादीनि रूपाणि भवन्ति ॥

## दिश अतिसर्जने । दिक्षीष्ट । अदिक्षत् अदिक्षत ॥

दिश अतिसर्जने । अकार उभयपदार्थः । पूर्ववत्प्रत्यया भवन्ति । 'तुदादेरः' । दिशति दिशते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'उपधाया लघोः' अनेन गुणः । दिदेश दिदिशे । अन्यानि रूपाणि सुगमानि । दिश्यात् । दिश् सीष्ट इति स्थिते । 'छशष०' । 'षढोः०' । षत्वम् । 'कषसंयोगे क्षः' दिक्षीष्ट । षत्वम् । ष्टुत्वम् । देष्टा । अत्र गुणो भवति । देष्टा । देक्ष्यति देक्ष्यते । अदेक्ष्यत् अदेक्ष्यत । 'हशषान्तात्०' अनेन लुङि सक् । अन्यत्साधनं तु पूर्ववत् । अदिक्षत् । आत्मनेपदे । अदिक्षत अदिक्षाताम् अदिक्षत । इत्यादीनि भवन्ति ॥

## क्षिप प्रेरणे ॥ क्षिप्सीष्ट । अक्षिप्त ॥

क्षिप प्रेरणे । प्रत्ययादयः पूर्ववत् । क्षिपति क्षिपते । लिट्लकारे द्वित्वादिकम् । 'गुणः' । चिक्षेप चिक्षिपे । क्षिप्यात् । क्षिप्सीष्ट । क्षेप्ता क्षेप्ता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे 'अनिटः' । अनेन वृद्धिः । अक्षैप्सीत् । 'झसात्०' । अक्षैप्ताम् । आत्मनेपदे । अक्षिप्त । इत्यादीनि रूपाणि ॥

## कृष् विलेखने । कृक्षीष्ट क्रष्टा-कर्ष्टा । अकार्क्षीत् अक्राक्षीत् । अकृक्षत-अकृष्ट अकृक्षाताम् अकृक्षत ॥

कृष् विलेखने । 'तुदादेरः' । कृषति कृषते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । 'रः' । 'कुहोश्चुः' । 'उपधाया लघोः' चकर्ष चकृषतुः चकृषुः । 'अस्त्वतः' । चकर्षिथ चकर्ष्ठ । चकृषे चकृषाते चकृषिरे । इत्यादीनि । कृष्यात् । कृष् सीष्ट इति स्थिते । 'सिस्योः०' अनेन गुणनिषेधः । 'षढोः०' । षत्वम् । 'कषसंयोगे क्षः' । कृक्षीष्ट । गुणः । ष्टुत्वम् । कर्ष्टा । 'रारो झसे' । अनेन अरो रकारो वा भवति । क्रष्टा कर्ष्टा । कर्क्ष्यति क्रक्ष्यति । अन्येषां रूपाणां सिद्धिरनेनैव प्रकारेण । लुङ्लकारे । 'अनिटः०' । अनेन वृद्धिः । अन्यत्साधनं तु पूर्वसदृशमस्ति । अकार्क्षीत् अकार्ष्टाम् । अत्र 'झसात्' । अनेन सेर्लोपो भवति । अकार्क्षुः 'रारो झसे०' । अक्राक्षीत् । आत्मनेपदे । 'सिस्योः०' । अनेन गुणनिषेधः । 'झसात्०' । अनेन झसे परे सेर्लोपः । अकृष्ट अकृक्षाताम् 'आतोन्तो०' । अकृक्षत । 'हशषान्तात्०' । अकृक्षत् । आत्मनेपदे । अकृक्षत । अकृक्षाताम् । 'आतोन्तो०' । अकृक्षत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥

## मिल संगमने । मिमिले । अमेलिष्ट ॥

मिल संगमने । अकारः । 'तुदादेरः' । मिलति मिलते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । 'उपधाया लघोः' । मिमेल मिमिलतुः मिमिलुः । मिमेलिथ । इत्यादीनि । मिमिले । मिल्यात् । 'उपधाया लघोः' । मेलिषीष्ट । अत्र षत्वं च भवति । मेलिता मेलिता । मेलिष्यते मेलिष्यति । अमेलिष्यत् । अमेलिष्यत । लुङ्लकारे ।

द्वाविटौ । 'इट ईटि' अनेन सेर्लोपो भवति । 'दिबादावट्' । अमेलीत् अमेलिष्टाम् अमेलिषुः । आत्मनेपदे । अमेलिष्ट अमेलिषाताम् अमेलिषत । इत्यादीनि ॥

**मुच्लृ मोक्षणे ॥ मुचादेर्मुम् ॥ मुचादीनां मुमागमो भवति अप्रत्यये परे ॥ मुञ्चति मुञ्चते । मुमोच मुमुचे । मुच्यात् । सिस्योः । अनेन गुणाभावः । चोः कुः । मुक्षीष्ट । मोक्ता २ । मोक्ष्यति मोक्ष्यते । अमोक्ष्यत् अमोक्ष्यत । अमुचत्-अमुक्त ॥**

मुच्लृ मोक्षणे । लकारो लित्कार्यार्थः । 'तुदादेरः' ॥ सूत्रम्—'मुचादेर्मुम्' ॥ मुचादेः मुम् । मुचादीनां धातूनां मुमागमो भवत्यप्रत्यये परे । मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादयो धातवो ज्ञातव्याः । 'मिदन्त्या०' मुञ्चति मुञ्चते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च०' । पूर्वस्य । 'उपधाया लघोः' । मुमोच मुमुचतुः मुमुचुः । 'अत्त्वतः' (?) । मुमोचिथ । 'चोः कुः' मुमोक्थ (?) ॥ मुमुचे । मुच्यात् । 'चोः कुः' षत्वम् । 'कषसं०' । 'सिस्योः' अनेन गुणनिषेधः । मुक्षीष्ट । 'गुणः' । 'चोः कुः' । मोक्ता मोक्ता । मोक्ष्यति मोक्ष्यते । अमोक्ष्यत् अमोक्ष्यत । 'लित्पुषादेर्ङः' अनेन लुङि ङप्रत्ययो भवति । ङित्त्वाद्गुणाभावः । अमुचत् । आत्मनेपदे । 'झसात्' अनेन सेर्लोपो भवति झसे परे । अमुक्त अमुक्षाताम् अमुक्षत ॥

**लुप्लृ छेदने । लुम्पति । लुप्सीष्ट अलुपत् ॥**
**विद्लृ लाभे । विन्दति । अवेदिष्ट । अनिडयमित्येके । वेत्ता ॥**

लुप्लृ छेदने 'तुदादेरः' । 'मुचादेर्मुम्' । लुम्पति लुम्पते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । लुलोप लुलुपे । लुप्यात् । 'सिस्योः' अनेन गुणनिषेधः । लुप्सीष्ट । लोप्ता लोप्ता । लोप्स्यति लोप्स्यते । अलोप्स्यत् अलोप्स्यत । 'लित्पुषादेर्ङः' । अलुपत् । आत्मनेपदे । 'झसात्' । अलुप्त अलुप्साताम् अलुप्सत । इत्यादीनि ॥

**लिप् उपदेहे । 'मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद्' एते मुचादयः ॥**
**लिम्पति । लिलेप । अलिपत् अलिपत ॥**
**लिपिसिचिह्वयतीनामात्मनेपदे सेर्ङो वा वाच्यः ॥ अलिप्त ॥**

सूत्रम्—'लिपिसिचिह्वयतीनाम्०' ॥ एषां धातूनामात्मनेपदे सेर्ङो वा वाच्यः । अनेनात्मनेपदेऽपि सेर्ङः । अलिपत अलिपेताम् अलिपन्त । इत्यादीनि ॥

**षिच्लृ क्षरणे । सिञ्चति । सिषेच । सिच्यात् । सिक्षीष्ट । सेक्ता सेक्ता । सेक्ष्यति । असिचत् असिचत असिक्त ॥ इति तुदादिषूभयपदिनः ॥ २० ॥**

षिच्लृ क्षरणे । 'तुदादेरः' । 'मुचादेर्मुम्' । 'आदेः ष्णः स्नः' । सिञ्चति सिञ्चते । अन्येषां सुगमानि । लिट्लकारे द्वित्वादिकम् । षत्वम् । 'गुणः' । सिषेच सिषिचतुः सिषिचुः । सिषेचिथ । 'अत्त्वतः' । 'चोः कुः' । सिषेक्थ (?) । सिषिचे । सिच्यात् । 'चोः कुः' । षत्वम् । 'कष०' 'सिस्योः' अनेन गुणनिषेधः । सिक्षीष्ट । 'गुणः' । 'चोः कुः' ।

सेक्ता सेक्ता । सेक्ष्यति सेक्ष्यते । असेक्ष्यत् असेक्ष्यत । 'लित्पुषादेर्ङः' । असिचत् । 'लिपिसिचि०' । असिचत असिचेताम् असिचन्त । ङेरभावपक्षे । 'झसात्०' । 'चोः कुः' । असिक्त असिक्षाताम् असिक्षत । इत्यादीनि । इत्युभयपदिनो धातवः कथिताः ॥ २० ॥

---

## तुदादिषु परस्मैपदिनः २१

**अथ परस्मैपदिनः । कृती छेदने । कृन्तति । चकर्त । कृत्यात् । कर्तिता । कर्तिष्यति । अकर्तिष्यत् अकर्तीत् ॥**

अथ परस्मैपदिनो धातवः कथ्यन्ते । तिबादयः सर्वत्र भवन्ति । 'तुदादेरः' । अयमपि चतुर्षु भवति । कृती छेदने । ईकार इत् । 'मुचादेर्मुम्' । कृन्तति कृन्तते । चतुर्णां सुगमानि रूपाणि । लिट्लकारे । 'द्विश्च' । 'रः' । 'उपधाया लघोः' । 'कुहोश्चुः' । चकर्त चकृततुः चकृतुः । चकृत । कृत्यात् । 'सिसता०' । 'गुणः' । कर्तिता । कर्तिष्यति । अकर्तिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'उपधाया लघोः' । अकर्तीत् अकर्तिष्टाम् अकर्तिषुः ॥

**लुभ विमोहने । लोभिता लोब्धा । अलोभीत् ॥**

लुभ विमोहने । 'तुदादेरः' । लुभति । लुभेत् । लुभतु । अलुभत् । लिट्लकारे । द्वित्वादिकम् । 'उपधाया लघोः' । लुलोभ । लुलुभतुः लुलुभुः । लुभ्यात् । 'इषुसह०' । लोभिता । इडभावे गुणः । 'तथोर्धः' । 'झबे जबाः' । लोब्धा लोब्धारौ लोब्धारः । लोभिष्यति । अलोभिष्यत् । लुङ्लकारे । द्वाविटौ । 'उपधाया लघोः' । अलोभीत् अलोभिष्टाम् अलोभिषुः ॥

**चृती हिंसाग्रन्थनयोः । चर्तिष्यति चर्त्स्यति । अचर्तीत् ॥**

चृती हिंसाग्रन्थनयोः । ईकार इत् । 'तुदादेरः' । चृतति । चृतेत् । चृततु । अचृतत् । लिट्लकारे । 'द्विश्च०' । पूर्वस्य रः । 'उपधाया लघोः' । चचर्त चचृततुः चचृतुः । चृत्यात् । 'सिसता०' । 'गुणः' । चर्तिता । 'नृतृतृद्०' । अनेन स्यपि वा इट् । चर्तिष्यति चर्त्स्यति । अचर्तिष्यत् । लुङ्लकारे द्वाविटौ । अचर्तीत् अचर्तिष्टाम् अचर्तिषुः ॥

**विध विधाने । वेधिता ॥**

विध विधाने । 'तुदादेरः' । विधति । चतुर्णां सुगमानि । लिट्लकारे । द्वित्वादिकम् । गुणः । विवेध विविधतुः विविधुः । विध्यात् । 'सिसता०' । 'गुणः' । वेधिता । वेधिष्यति । अवेधिष्यत् । लुङ्लकारे द्वाविटौ । गुणः । सेर्लोपः । अवेधीत् अवेधिष्टाम् अवेधिषुः । इत्यादीनि ॥

**कुट कौटिल्ये ॥ कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत् ॥ चुकोट चुकुटिथ । कुटिता । अकुटीत् ॥**

कुट कौटिल्ये । अकार इत् । 'तुदादेरः' । कुटति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'कुहोश्चुः' । 'उपधाया लघोः' । चुकोट चुकुटतुः चुकुटुः । चुकुट् इट् थप् इति जाते । 'उपधाया लघोः' । अनेन गुणे प्राप्ते ॥ सूत्रम्—'कुटादेः०' ॥

कुटादेर्धातोर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत् । ङित्त्वाद्गुणाभावः । चुकुटिथ । कुट्यात् । 'कुटादेः' अनेन ङित्त्वाद्गुणो न भवति । कुटिता कुटिष्यति । अकुटिष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । गुणाभावः । अकुटीत् अकुटिष्टाम् अकुटिषुः । इत्यादीनि ॥

**त्रुट छेदने । त्रुट्यति त्रुटति ॥**

त्रुट छेदने । 'क्रमुभ्रमु०' । अनेनास्य धातोर्वा यः प्रत्ययो भवति । 'तुदादेरः' त्रुट्यति । अप्रत्यये कृते सति । त्रुटति । एवं चतुर्णां रूपाणि । लिट्लकारे । तुत्रोट तुत्रुटतुः तुत्रुटुः । तुत्रुटिथ । त्रुट्यात् । त्रुटिता । कुटादित्वाद्गुणो न भवति । त्रुटिष्यति । अत्रुटिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'दिबादावट्' । अत्रुटीत् । अत्रुटिष्टाम् अत्रुटिषुः । इत्यादीनि रूपाणि भवन्ति ॥

**ओव्रश्चू छेदने । ओऊ इतौ । ग्रहां क्ङिति च । वृश्चति । वव्रश्च वव्रश्चतुः वव्रश्चुः । वव्रश्चिथ वव्रष्ठ । वृश्च्यात् । ऊदितो वा । व्रश्चिता व्रष्टा । स्कोराद्योश्च । व्रश्चिष्यति व्रक्ष्यति । अव्रक्षीत् अव्राक्षीत् अव्राष्टाम् ॥**

ओव्रश्चू छेदने । ओकारोकारावितौ । 'तुदादेरः' । 'ग्रहां क्ङिति च' । अनेन संप्रसारणं भवति । वृश्चति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । 'पूर्वस्य' । वव्रश्च । संप्रसारणम् । वव्रश्चतुः वव्रश्चुः । वव्रश्चिथ । 'ऊदितो वा' । संयोगान्तस्य लोपः । अनेन चकारस्य लोपः 'छशष०' । ष्टुत्वम् । वव्रष्ठ । इत्यादीनि । संप्रसारणम् । वृश्च्यात् । 'सिसता०' । व्रश्चिता । 'ऊदितो वा०' अनेन वा इट् । 'संयोगान्तस्य लोपः' । षत्वम् । ष्टुत्वम् । व्रष्टा । व्रश्चिष्यति । इडभावे । 'स्कोराद्योश्च' । 'चोः कुः' । षत्वम् । 'कषसंयोगे०' । व्रक्ष्यति । अव्रश्चिष्यत् । अव्रक्ष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'दिबादावट्' । अव्रश्चीत् अव्रश्चिष्टाम् अव्रश्चिषुः । इडभावे । 'स्कोरा०' । 'चोः कुः' । 'अनिटो नामिवतः' अनेन वृद्धिः । अव्राक्षीत् । 'झसात्' । अनेन सेर्लोपः । अन्यत्साधनं पूर्ववत् । अव्राष्टाम् अव्राक्षुः ॥

**कॄ विक्षेपे ॥ ॠत इर् । किरति । चकार चकरतुः । कीर्यात् । करिता । ईटो ग्रहाम् । करीता । करीष्यति-करिष्यति । अकरिष्यत्-अकरिष्यत । अकारीत् ॥ उपात्किरतेश्छेदेऽर्थे सुड् वाच्यः ॥ हिंसायां प्रतेश्च ॥ उपस्किरति । उपचस्कार । प्रतिस्किरति ॥**

कॄ विक्षेपे । 'तुदादेः' । ॠत इर् । अनेन ॠकारस्य इर् भवति । किरति । किरेत् । किरतु । अकिरत् । लिट्लकारे । 'द्विश्च' । 'रः' । 'कुहोश्चुः' । 'धातोर्नामिनः' । चकार । 'ॠसंयोगात्' अनेन कित्त्वान्न गुणाभावः । चकरतुः चकरुः । चकरिथ । 'ॠत इर्' । 'य्वोर्विहसे' । कीर्यात् । 'सिसता०' । 'गुणः' । करिता । 'ईटो ग्रहाम्' अनेन वा दीर्घः । करीता । अन्येषां रूपाणि मूलाज्ज्ञेयानि । लुङ्लकारे । 'णित्पे' अनेन सेर्णित्त्वात् वृद्धिः । 'धातोर्नामिनः' । अकारीत् । 'वृद्धिहेतौ' अनेन दीर्घाभावः । अकारिष्टाम् अकारिषुः । इत्यादीनि ॥ सूत्रम्—'उपात्०' ॥ उपोपसर्गपूर्वात् किरतेर्धातोः छेदनेऽर्थे सुड्

वाच्यः ॥ सूत्रम्—'हिंसायाम्०' ॥ किरतेर्धातोर्हिंसायामर्थे प्रतिपूर्वाच्च सुड् वाच्यः । उपस्किरति । उपचस्कार । हिंसायाम् । प्रतिस्किरति ॥

**गॄ निगरणे । गिरति ॥ गिरते रस्य वा लः स्वरे वाच्यः ॥ गिलति । जगार-जगाल जगरतुः जगलतुः जगरुः-जगलुः । अगारीत्-अगालीत् ॥**

गॄ निगरणे । 'ॠत इर्' अनेनेर् । 'तुदादेरः' गिरति ॥ सूत्रम्—'गिरतेः०' ॥ गिरतेर्धातोरकारस्य लकारः स्वरे परे वाच्यः । अनेन रकारस्य लकारः । गिलति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे 'द्विश्च' 'रः' 'कुहोश्चुः' 'धातोर्नामिनः' अनेन वृद्धिः । जगार । जगाल । 'ॠसंयोगात्' अनेनाकित्त्वाद्गुणो भवति । जगरतुः । जगलतुः इत्यादीनि । 'ॠत इर्' । 'य्वोर्विहंसे' । गीर्यात् । गरिता गलिता । अन्यानि सुगमानि । लुङ्लकारे । द्वाविटौ । 'धातोर्नामिनः' अनेन वृद्धिः । अगारीत् अगारिष्टाम् अगारिषुः । लत्वे कृते सति । अगालीत् अगालिष्टाम् अगालिषुः । इत्यादीनि ॥

**स्पृश स्पर्शने । स्पृशति । पस्पर्श । स्पृश्यात् । स्प्रष्टा स्पर्ष्टा । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्रक्ष्यत्-अस्पर्क्ष्यत् अस्प्राक्षीत् । 'रो वा' अस्पार्क्षीत् ॥ कृषादीनां वा सिर्वक्तव्यः ॥ तत्पक्षे । हशषान्तात्सक् । अस्पृक्षत् ॥**

स्पृश् स्पर्शने । तिबादायः । 'तुदादेरः' । स्पृशति । लिट्लकारे । 'द्विश्च' । 'रः' । 'पूर्वस्य हसादिः' । 'उपधाया लघोः' । पस्पर्श पस्पृशतुः पस्पृशुः । इत्यादीनि । स्पृश्यात् । स्पृश ता इति स्थिते । 'छशष०' । अनेन षकारः । 'उपधाया लघोः' अनेन गुणः । 'रारो झसे०' अनेन अरो रकारः । 'कृषादीनां०' । अनेन विकल्पः । ष्टुत्वम् । स्प्रष्टा स्पर्ष्टा । 'षढोः कः से' । स्प्रक्ष्यति स्पर्क्ष्यति । अस्प्रक्ष्यत् । अस्पर्क्ष्यत् । लुङ्लकारे । 'अनिटो नामिवतः' अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अस्पार्क्षीत् । 'झसात्०' । अनेन सेर्लोपः । अस्पार्ष्टाम् अस्पार्क्षुः । अरो रकारे कृते । अस्प्राक्षीत् अस्प्राष्टाम् अस्प्राक्षुः । इत्यादीनि । 'कृषादीनां०' अनेन 'भूते सिः' । अनेन विहितः सिः प्रत्ययो वा भवति ॥ सूत्रम्—'कृषादीनां०' ॥ अनेन कृषादीनां धातूनां सर्वत्र सेर्विकल्पः । तदा 'हशषान्तात्' । अनेन सक् । अन्यत्साधनं सुगमम् । अस्पृक्षत् अस्पृक्षताम् अस्पृक्षन् । इत्यादीनि ॥

**प्रच्छ ज्ञीप्सायाम् । संप्रसारणम् । पृच्छति । पप्रच्छ पप्रच्छतुः । पप्रच्छिथ-पप्रष्ठ । पृच्छ्यात् । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥**

प्रच्छ ज्ञीप्सायाम् । 'तुदादेरः' । 'ग्रहां क्ङिति च' अनेन संप्रसारणम् । पृच्छति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । पप्रच्छ । संप्रसारणम् । पप्रच्छतुः पप्रच्छुः । पप्रच्छिथ । 'अत्त्वतः' । षत्वम् । ष्टुत्वम् । पप्रष्ठ । इत्यादीनि । संप्रसारणं । पृच्छयात् । षत्वम् । ष्टुत्वम् । प्रष्टा । 'षढोः कः से' । 'क्लिात्०' । 'कष०' । प्रक्ष्यति । अप्रक्ष्यत् । लुङ्लकारे । 'अत उपधायाः' । अनेन वृद्धिः । अन्यत् साधनं सुगमम् । अप्राक्षीत् । 'छशष०' । ष्टुत्वम् । अप्राष्टाम् अप्राक्षुः । इत्यादीनि ॥

**सृज विसर्गे । सृजति । ससर्ज ससृजतुः ससृजुः । ससर्जिथ-सस्रष्ठ । सृज्यात् । रारो झसे दृशाम् । स्रष्टा । स्रक्ष्यति । अस्राक्षीत् ॥**

सृज विसर्गे । 'तुदादेरः' । सृजति । चतुर्णां सुगमानि । लिट्लकारे । 'द्विश्च' । रः । 'उपधाया लघोः' । ससर्ज ससृजतुः ससृजुः । 'अत्वतः' । ससर्जिथ । ससृज् थप् इति जाते । 'उपधाया लघोः' । 'रारो झसे०' । ष्टुत्वम् । सस्रष्ठ । सृज्यात् । 'रारो झसे०' । षत्वम् । ष्टुत्वम् । स्रष्टा । 'षढोः कः से' । षत्वम् । 'कषसंयोगे०' । स्रक्ष्यति । अस्रक्ष्यत् । 'अनिटो नामिवतः' । अस्राक्षीत् अस्राष्टाम् अस्राक्षुः ॥

**टुमस्जो शुद्धौ । टुओ इतौ । अन्यत्र सो जः । मज्जति । ममज्ज । मङ्क्ता । मस्जिनशोर्झसे नुम् । मङ्क्ष्यति । अमाङ्क्षीत् अमाङ्क्ताम् अमाङ्क्षुः ॥**

टुमस्जो शुद्धौ । टुकारौकरौ इतौ । 'तुदादेरः' । 'अन्यत्र सोजः' । अनेन सकारस्य जकारः । मज्जति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'अन्यत्र सोजः' । ममज्ज ममज्जतुः ममज्जुः । इत्यादीनि । मस्ज् ता इति स्थिते । 'स्कोराद्योश्च' । अनेन सकारस्य लोपः । 'चोः कुः' । 'खसे चपा०' । 'मस्जिनशोः०' अनेन नुम् । 'नश्चापदान्ते' । मङ्क्ता मङ्क्तारौ मङ्क्तारः । मङ्क्ष्यति । अमङ्क्ष्यत् । 'अत उपधायाः' । अमाङ्क्षीत् । 'झसात्' अनेन सेर्लोपः । अमाङ्क्तम् अमाङ्क्षुः । इत्यादीनि ॥

**विश् प्रवेशने । वेष्टा । अविक्षत् ॥**

विश् प्रवेशने । 'तुदादेरः' । विशति । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'हसा०' । गुणः । विवेश विविशतुः विविशुः । विवेशिथ । 'अत्वतः' (?) । षत्वम् । ष्टुत्वम् । गुणः । विवेष्ठ (?) । विश्यात् । 'गुणः' । षत्वम् ष्टुत्वम् । वेष्टा । षत्वम् । 'षढोः कः से' । 'किलात्०' । 'कष०' । 'गुणः' । वेक्ष्यति । अवेक्ष्यत् । 'हशषान्तात्' अनेन सन् । अन्यत्साधनं सुगमम् । अविक्षत् अविक्षताम् अविक्षन् ॥

**मृष् आमर्शने । अम्राक्षीत् अमार्क्षीत् अमृक्षत् ॥**

मृश् आमर्शने । 'तुदादेरः' । मृशति । लिट् द्वित्वादिकम् । 'रः' । 'गुणः' । ममर्श ममृशतुः ममृशुः । मर्मर्शिथ । 'अत्वतः' । ममर्ष्ठ (?) । मृश्यात् । गुणः । ष्टुत्वम् । 'रारो' । म्रष्टा । 'षढोः कः से' । म्रक्ष्यति । अम्रक्ष्यत् । 'अनिटो नामिवतः' । अम्राक्षीत् अम्राष्टाम् । अम्राक्षुः । 'कृषादीनां०' । अनेन सेर्विकल्पः । तत्पक्षे । 'हशषान्तात्' । अमृक्षत् अमृक्षताम् अमृक्षन् ॥

**विच्छ गतौ । आयः । विच्छायति । विच्छायाञ्चकार-विविच्छ । विच्छाय्यात्-विच्छ्यात् । विच्छायिता-विच्छिता । अविच्छायीत् ॥**

विच्छ गतौ । 'आयः' अनेन आयः प्रत्ययः । 'तुदादेरः' । 'अदे' । विच्छायति । लिट् । विच्छायांचकार । अत्र । 'कासादि०' अनेनाम् । 'अनपि वा' इति उक्तत्वात् अनपि वा भवति । तत्पक्षे विविच्छ विविच्छतुः विविच्छुः । विच्छाय्यात् । अत्र 'यतः' अनेन अकारस्य लोपः । आयाभावे । विच्छ्यात् । 'सिसता०' । विच्छायिता विच्छिता । विच्छायिष्यति विच्छिष्यति । अविच्छायिष्यत् अविच्छिष्यत् । लुङ्लकारे । द्वाविटौ । अविच्छायीत् अविच्छीत् ॥

**इषु इच्छायाम् । गमां छः । इच्छति । इच्छेत् । इयेष । एषिता । एष्टा ॥**

इषु इच्छायाम् । 'तुदादेरः' । 'गमेश्छः' । इच्छति । लिट् । 'द्विश्च' । 'गुणः' । असवर्णे । इयेष । 'सवर्णे' । ईषतुः ईषुः । इत्यादीनि । इष्यात् । 'इषु सह०' । गुणः । एषिता । ष्टुत्वम् । एष्टा । एषिष्यति । 'स्वरादेः' ऐषिष्यत् । लुङ् । ऐषीत् ॥

**छुप स्पर्शे । छोप्ता अच्छौप्सीत् ॥**

छुप स्पर्शे । 'तुदादेरः' । छुपति । चतुर्णां रूपाणि सुगमानि । लिट् । 'द्विश्च' 'गुणः' । 'झपानाम्०' । चुच्छोप । छुप्यात् । गुणः । छोप्ता । छोप्स्यति । अच्छोप्स्यत् । 'अनिटो नामिवतः' । अच्छौप्सीत् । 'झसात्०' । अच्छौप्ताम् अच्छौप्सुः ॥

**लिश गतौ । लेष्टा । अलिक्षत ॥**

लिश् गतौ । 'तुदादेरः' । लिशति । लिट् । लिलेश लिलिशतुः लिलिशुः । लिलेशिथ । 'अत्वत०' । लिलेष्ठ । लिश्यात् । 'गुणः' । षत्वम् लेष्टा । 'षढोः कः से' । लेक्ष्यति । अलेक्ष्यत् 'हशषान्तात्' । 'छशष०' । 'षढोः कः से' । षत्वम् । 'कष०' । अलिक्षत् अलिक्षताम् अलिक्षन् ॥

**खिद परिघाते । खिन्दति । खेत्ता । अखैत्सीत् ॥**

खिद परिघाते । 'तुदादेरः' अनेनाप्रत्ययो भवति । 'मुचादेर्मुम्' अनेन मुमागमो भवति । 'नश्चापदान्ते झसे' अनेनानुस्वारः । खिन्दति । खिन्देत् । खिन्दतु । 'दिबादावट्' अखिन्दत् । रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' अनेन गुणः । चिखेद चिखिदतुः चिखिदुः । इत्यादीनि । खिद्यात् 'खसे०' । 'गुणः' । खेत्ता । खेत्स्यति । अखेत्स्यत् । 'अनिटो नामिवतः' अनेन वृद्धिः । अखैत्सीत् । 'झसात्०' अनेन सेर्लोपः । 'तथोर्धः' । अखैद्धाम् अखैत्सुः । इत्यादीनि ॥

**पिश अवयवे । पिंशति पेशिता ॥ इति तुदादिषु परस्मैपदिनः ॥ २१ ॥**

पिश अवयवे । 'तुदादेरः' । 'मुचादेर्मुम्' । पिंशति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । पिपेश पिपिशतुः पिपिशुः । पिपेशिथ । पिश्यात् । 'सिसता०' । 'उपधाया लघोः' । पेशिता । षत्वम् । पेशिष्यति । 'दिबादावट्' । अपेशिष्यत् । लुङ्लकारे द्वाविटौ । अन्यत्साधनं तु पूर्वसदृशम् । अपेशीत् अपेशिष्टाम् अपेशिषुः । इत्यादीनि । इति परस्मैपदिनो धातवः कथिताः ॥ २१ ॥

---

## तुदादिष्वात्मनेपदिनः २२

**अथात्मनेपदिनः ॥ मृङ् प्राणत्यागे ॥ अयकि ॥ ऋकारस्य रिङादेशो भवति अकारे प्रत्यये यकि च परे ॥ तुधातोः । म्रियते ॥ सपरोक्षयोस्तादौ म्रियतेः परस्मैपदं वाच्यम् ॥ ममार मम्रतुः । मृषीष्ट । मर्ता । मरिष्यति । अमरिष्यत् । लोपो ह्रस्वाज्झसे । अमृषाताम् अमृषत ॥**

अथात्मनेपदिनः कथ्यन्ते । मृङ् प्राणत्यागे । ङकारः आत्मनेपदार्थः 'तुदादेरः'। सूत्रम्— 'अयकि' ॥ अश्च यक् च अयक् तस्मिन् अयकि । ऋकारस्य । 'तुदादेरः' अनेन सूत्रेण विहिते अकारे परे च यक् प्रत्यये परे रिङादेशो भवति । अत्र ङकारव्यवधानात् 'ये' अनेन दीर्घो न भवति । अनुबन्धः प्रत्यक्षवत् इति न्यायात् 'नुधातोः' अनेनेय् भवति । म्रियते । 'आदाथई' । 'अइए' म्रियेते म्रियन्ते । म्रियेत । म्रियताम् । अम्रियत ॥ सूत्रम्—'सपरोक्षयोः०'॥सपरोक्षयोस्तादौ स्यपि परतो म्रियतेर्धातोः परस्मैपदं वाच्यम् । तदा णबादयः प्रत्यया भवन्ति । 'द्विश्च' । 'रः' । 'धातोर्नामिनः' ममार । 'ऋरम्' । मम्रतुः मम्रुः । ममर्थ । इत्यादीनि । 'उः' अनेन गुणनिषेधः । षत्वम् । मृषीष्ट । गुणः । मर्ता । 'हनृतः स्यपः' । मरिष्यति । अमरिष्यत् । लुङ्लकारे । 'लोपो ह्रस्वाज्झसे' अनेन सेर्लोपः । अमृत अमृषाताम् अमृषत ॥

**दृङ् आदरे । द्रियते । दद्रे । दृषीष्ट दर्ता । हनृतः स्यपः । दरिष्यते । अदरिष्यत । अदृत ॥**

दृङ् आदरे । ङकार आत्मनेपदार्थः । 'तुदादेरः' । अयकि । 'नु धातोः' । द्रियते द्रियेत । द्रियताम् । अद्रियत । लिट्लकारे । 'द्विश्च' 'रः' 'ऋरम्' । दद्रे दद्राते दद्रिरे । दृषीष्ट । 'गुणः' । दर्ता । 'हनृतः०' । दरिष्यति । अदरिष्यत् । लुङ्लकारे 'लोपो ह्रस्वाज्झसे' अनेन सेर्लोपः । अदृत अदृषाताम् अदृषत । इत्यादीनि ॥

**धृङ् अवस्थाने । ध्रियते तद्वत् ॥**

धृङ् अवस्थाने । ङकार आत्मनेपदार्थः । 'तुदादेरः' । अयकि । 'नुधातोः' । अनेन इय् भवति । ध्रियते । ध्रियेत । ध्रियताम् । अध्रियत । लिट्लकारे । 'द्विश्च' । 'रः' । 'झपानाम्०' । 'ऋरम्' । दध्रे दध्राते दध्रिरे । उः । धृषीष्ट । अत्र षत्वं भवति । 'गुणः' धर्ता । 'हनृतः' अनेनेट् । धरिष्यते । अधरिष्यत । लुङ्लकारे । सेर्लोपः । अधृत अधृषाताम् अधृषत ॥

**पृङ् व्यापारे । व्याप्रियते । व्यापरिष्यते । व्यापृत व्यापृषाताम् ॥**

पृङ् व्यापारे । ङकारः अन्यत्साधनं तु पूर्वसदृशम् । व्यापूर्वोऽयं धातुः । व्याप्रियते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकम् । व्यापप्रे । अन्येषां रूपाणि पूर्वसदृशानि । लुङ्लकारे । सेर्लोपः । व्यापृत व्यापृषाताम् व्यापृषत । इत्यादीनि ॥

**ओविजी भयचलनयोः । विजते । विजेत । विजताम् । अविजत । विविजे । विजिता ॥ विजेः पर इट् किद्वक्तव्यः ॥ ततो नोपधागुणः । विजिष्यते । अविजिष्यत । अविजिष्ट ॥**

ओविजी भयचलनयोः । ईकारौकारावितौ स्तः । 'तुदादेरः' । विजते । लिट्लकारे । द्वित्वादिकम् । विविजे विविजाते विविजिरे । विज् इट् ता इति जाते । तत्र गुणे प्राप्ते ॥ सूत्रम्—'विजेः०' ॥ विजेः धातोः पर इट् किद्वक्तव्यः । अनेन गुणनिषेधः । विजिता । षत्वम् । विजिष्यते । अविजिष्यत् । लुङ्लकारे ष्टुत्वम् । अविजिष्ट अविजिषाताम् अविजिषत ॥

**ओलस्जी व्रीडायाम् । अन्यत्र सो जः । लज्जते । ललजे । अलज्जिष्ट ॥ इति तुदादिष्वात्मनेपदिनः ॥ २२ ॥ इति अविकरणास्तुदादयः ॥**

ओलस्जी व्रीडायाम् । द्वावितौ । 'तुदादेरः' । 'अन्यत्र 'सोजः' अनेन सकारस्य जकारः । लज्जते । चतुर्णां लकाराणां सुगमानि । लिट्लकारे । द्वित्वादिकम् । ललज्जे इत्यादीनि । लज्जिषीष्ट । लज्जिता । लज्जिष्यते । अलज्जिषत । अलज्जिष्ट अलज्जिषाताम् अलज्जिषत । इत्यादीनि । इत्यात्मनेपदिनः कथिताः ॥ २२ ॥ इति अविकरणास्तुदादयो धातवः कथिताः ॥

---

## क्र्यादिषूभयपदिनः २३

**अथ क्र्यादयः ॥ तत्रादावुभयपदिनः ॥ डुक्रीञ् द्रव्यविनिमये ॥ ना क्र्यादेः ॥ क्र्यादेर्गणान्नाप्रत्ययो भवति चतुर्षु परेषु ॥ अपोऽपवादः ॥ णत्वम् । क्रीणाति ॥ ईहसे ॥ ना इत्यस्याकारस्य ईकारो भवति ङिति हसे परे ॥ क्रीणीतः ॥ नातः ॥ ना इत्यस्याकारस्य लोपो भवति ङितिस्वरे परे ॥ क्रीणन्ति । क्रीणासि क्रीणीथः क्रीणीथ । क्रीणामि क्रीणीवः क्रीणीमः । क्रीणीते । क्रीणीयात् । क्रीणीत । क्रीणातु क्रीणीताम् । अक्रीणात् अक्रीणीत । चिक्राय॰ चिक्रियतुः चिक्रियुः । चिक्रयिथ चिक्रेथ । चिक्रिये । क्रीयात् । क्रेषीष्ट । क्रेता २ । क्रेष्यति क्रेष्यते । अक्रेष्यत् अक्रेष्यत । अक्रेषीत् । अक्रेष्ट ॥**

अथ क्र्यादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । डुक्रीञ् द्रव्यविनिमये द्रव्यपरावर्तने वस्तूनां मौल्येन ग्रहणे इत्यर्थः । डुकारञकारावनुबन्धौ । डुकारो 'ड्वितस्त्रिमक्' इति कार्यार्थः । ञकारानुबन्धत्वादुभयपदी । तिबादयः प्रत्ययाः । क्री तिप् इति स्थिते । सूत्रम्—'ना क्र्यादेः' ॥ ना सांके॰ क्र्यादेः । क्र्यादेर्गणात् ना प्रत्ययो भवति चतुर्षु तिबादिषु परेषु । अनेन नाप्रत्ययः । णत्वम् । क्रीणाति । क्री ना तस् इति जाते ॥ सूत्रम्—'ईहसे' ई सांकेतिकम् । हसे । ना इति प्रत्ययसंबन्धिन आकारस्य ङिति हसे प्रत्यये परे ईकारो भवति । अनेन सर्वत्र ङिति हसे आकारस्य ईकारः कार्यः । 'ष्रर्नोणोऽनन्ते' । अनेन णत्वम् । क्रीणीतः । क्री ना अन्ति इति स्थिते ॥ सूत्रम्—'नातः' ॥ ना सांके॰ । आतः द्विपदं सूत्रम् । क्र्यादेरुत्पन्नस्य ना इति प्रत्ययसंबन्धिन आकारस्य ङिति स्वरे लोपो भवति । अनेन ङिति स्वरे सर्वत्र आकारस्य लोपः कार्यः । क्रीणन्ति । क्रीणासि । पित्त्वादीकारो न । अन्यानि मूले सन्ति । आत्मनेपदे क्रीणीते क्रीणाते क्रीणते । 'आतोऽन्तो॰' । अनेन अन्तः अत् । अन्यानि सुगमानि यथासंभवं साध्यानि । यादादावीकारः सर्वत्र । क्रीणीयात् क्रीणीयाताम् क्रीणीयुः । इत्यादीनि । 'नातः' अनेन आकारस्य लोप ई तादौ भवति । क्रीणीत क्रीणीयाताम् क्रीणीरन् । इत्यादीनि । लोट्लकारेऽपि साधनं सदृशम् । क्रीणातु । तातङि ङित्त्वादीकारः । क्रीणीतात् क्रीणीताम् । 'नातः' ।

अनेनाकारस्य लोपः । क्रीणन्तु । हौ परे आकारस्येकारः । क्रीणीहि । आनिवादौ 'सवर्णे' क्रीणानि क्रीणाव क्रीणाम । इत्यादीनि । आत्मनेपदे । क्रीणीताम् क्रीणाताम् क्रीणताम् । षत्वं भवति । क्रीणीष्व । इत्यादीनि । 'दिबादावट्' । अक्रीणात् अक्रीणीताम् अक्रीणन् । अक्रीणाः । असिपि 'सवर्णे दीर्घः' । अक्रीणाम् । आत्मनेपदे । अक्रीणीत । 'नातः' । अक्रीणीताम् अक्रीणत । इत्यादीनि रूपाणि ज्ञातव्यानि । सर्वेषां रूपाणां द्वाभ्यां सूत्राभ्यां प्रायः सिद्धिर्भवति । लिट्लकारे 'द्विश्च' 'सस्वरादिः' 'ह्रस्वः' 'कुहोश्चुः' 'धातोर्नामिनः' अनेन वृद्धिः । चिक्राय । 'नु धातोः' अनेन इय् । चिक्रियतुः चिक्रियुः । 'अत्वतः' (?) । 'गुणः' । चिक्रयिथ । चिक्रेथ चिक्रियथुः चिक्रिय । इत्यादीनि रूपाणि भवन्ति । चिक्रिये चिक्रियाते चिक्रियिरे । क्रीयात् । 'गुणः' । षत्वम् । क्रेषीष्ट । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । 'अनिटो नामिवतः' । षत्वम् । 'दिबादावट्' अक्रैषीत् अक्रैष्टाम् अक्रैषुः । आत्मनेपदे । 'गुणः' । षत्वम् । ष्टुत्वम् । 'दिबादावट्' । अक्रेष्ट अक्रेषाताम् अक्रेषत । इत्यादीनि भवन्ति ॥

**प्रीञ् तर्पणे कान्तौ च । पिप्रिये ॥ मीञ् हिंसायाम् । मीनाति ॥ मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि च आत्वं वाच्यम् ॥ ममौ मिम्यतुः मिम्युः । ममिथ-ममाथ । मासीष्ट । माता । अमासीत्-अमेष्ट ॥ स्कुञ् आप्रवणे ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो नुर्नाश्च । स्कुनोति स्कुनाति । अस्कुनीत् । चुस्कुविषे । अस्कौषीत् अस्कोष्ट ॥ स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु रोधने । स्तभ्नोति-स्तभ्नाति । स्तुभ्नोति-स्तुभ्नाति । स्कभ्नोति-स्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति । स्तभान । स्तुभान । स्कभान । स्कुभान । जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च्लेरङ् वा ॥ अस्तभत् ॥ अस्तम्भीत् ॥**

प्रीञ् तर्पणे कान्तौ च । तिबादयो भवन्ति । 'ना क्र्यादेः' अनेन चतुर्षु ना प्रत्ययः । णत्वम् । प्रीणाति । 'ईहसे' । प्रीणीतः । 'नातः' प्रीणन्ति । रूपाणि पूर्ववत् । प्रीणीते । प्रीणीयात् । प्रीणीत । प्रीणातु । प्रीणीताम् । अप्रीणात् । अप्रीणीत । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'ह्रस्वः' । 'धातोर्नामिनः' । पिप्राय पिप्रियतुः पिप्रियुः । 'अत्वतः०' । पिप्रयिथ । पिप्रेथ । इत्यादीनि । पिप्रिये पिप्रियाते पिप्रियिरे । प्रीयात् । 'गुणः' । प्रेषीष्ट । अत्र षत्वं भवति । प्रेता प्रेता । षत्वम् । प्रेष्यति प्रेष्यते । अप्रेष्यत् अप्रेष्यत । 'अनिटो नामिवतः' । अप्रैषीत् । आत्मनेपदे गुणः । अप्रेष्ट अप्रेषाताम् अप्रेषत । इत्यादीनि रूपाणि ज्ञातव्यानि ॥

**पूञ् पवने ॥ प्वादेर्ह्रस्वः ॥ प्वादीनां ह्रस्वो भवति चतुर्षु परेषु ॥ पुनाति पुनीते । पुनीयात् पुनीत । पुनातु पुनीताम् । अपुनात् अपुनीत । पुपाव पुपुवे । पूयात् पविषीष्ट । पविता २ । पविष्यति पविष्यते । अपविष्यत् अपविष्यत । अपावीत् । अपविष्ट ॥**

पूञ् पवने । तिबादयः । 'ना क्र्यादेः' ॥ सूत्रम्—'प्वादेर्ह्रस्वः' ॥ प्वादेः ह्रस्वः । प्वादीनां धातूनां ह्रस्वो भवति चतुर्षु परेषु । अनेन ह्रस्वः । पुनाति पुनीते । अन्यानि पूर्वसदृशानि । लिट्लकारे । 'द्विश्च' । 'सस्वरादिः' । 'ह्रस्वः' । 'धातोर्नामिनः' । पुपाव । 'नु धातोः' । पुपुवतुः पुपुवुः । पुपविथ । आत्मनेपदे । पुपुवे पुपुवाते पुपुविरे । पूयात् । 'सिसता' अनेन इट् । गुणः । षत्वम् । पविषीष्ट । अन्येषां मूलतो ज्ञातव्यानि । लुङ्लकारे । 'धातोर्नामिनः' अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अपावीत् अपाविष्टाम् अपाविषुः । आत्मनेपदे तु गुणः । षत्वम् । ष्टुत्वम् । अपविष्ट अपविषाताम् अपविषत । इत्यादीनि भवन्ति ॥

**कॄञ् हिंसायाम् । कृणाति कृणीते । चकार चकरे । कीर्यात् करिषीष्ट । अकारीत् ॥**

कॄञ् हिंसायाम् । ञकार उभयपदार्थः । तिबादयः प्रत्यया भवन्ति । 'ना क्र्यादेः' अनेन नाप्रत्ययो भवति । 'प्वादेर्ह्रस्वः' । णत्वम् । कृणाति । 'ईहसे' । कृणीतः । 'नातः' अनेन अकारस्य ङिति स्वरे लोपः । कृणन्ति । आत्मनेपदे । कृणीते कृणाते कृणते । कृणीयात् । कृणीत । कृणातु । कृणीताम् । अकृणात् । अकृणीत । लिट्लकारे द्वित्वादिकम् । 'रः' । 'कुहोश्चुः' । 'धातोर्ना०' । चकार चकतुः चक्रुः । चकरिथ । चक्रे चक्राते चक्रिरे । 'यादादौ । 'प्वोर्विंहसे' । कीर्यात् । 'सिसता०' । गुणः । षत्वम् । करिषीष्ट । करिता । करीता । षत्वम् । 'गुणः' । इट् करिष्यति करिष्यते । अकरिष्यत । रूपाणि सुगमानि सन्ति अतो न लिखितानि । लुङ्लकारे । सेर्णित्त्वात् । 'धातोर्नामिनः' अनेन वृद्धिः । अकारीत अकारिष्टाम् अकारिषुः । आत्मनेपदे । 'गुणः' । षत्वम् । ष्टुत्वम् । अकरिष्ट अकरिषाताम् अकरिषत । इत्यादीनि भवन्ति ॥

**धूञ् कम्पने । धुनाति धुनीते दुधाव अधविष्ट अधोष्ट ।**

धूञ् कम्पने । ञकारः । तिबादयः । 'प्वादेर्ह्रस्वः' । 'ना क्र्यादेः' । धुनाति धुनीते । चतुर्णां लकाराणां रूपाणि सुगमानि । तेषां साधनमपि पूर्वसदृशमस्ति । लिट्लकारे द्वित्वादिकम् । 'ह्रस्वः' । 'झपानाम्०' । 'धातोर्ना०' । दुधाव । 'नु धातोः' । 'नानप्योर्वः' । अनेनो भवति । दुधुवतुः दुधुवुः । दुधविथ । दुधुवे दुधुवाते दुधुविरे । इत्यादीनि । धूयात् । 'स्वरति०' अनेनास्य धातोरिड्विकल्पः । गुणः षत्वम् । धविषीष्ट । इडभावे । गुणः । षत्वम् । धोषीष्ट । धविता २ । धोता २ । धविष्यति । इडभावे धोष्यति । धविष्यते धोष्यते । अधविष्यत् । अधोष्यत् । अधविष्यत । अधोष्यत । लुङ्लकारे । 'स्तुसुधूञां' अनेन सेरिट् । वृद्धिः । अधावीत् अधाविष्टाम् अधाविषुः । आत्मनेपदे । अधविष्ट अधविषाताम् अधविषत । इडभावे । 'गुणः' । षत्वम् । ष्टुत्वम् । अधोष्ट अधोषाताम् अधोषत ॥

**ग्रह उपादाने । ग्रहां क्ङिति च । गृह्णाति गृह्णीतः । गृह्णीते । गृह्णीयात् गृह्णीयाताम् । गृह्णातु-गृह्णीतात् गृह्णीताम् गृह्णन्तु ॥ हसाद्वान हौ ॥ हसान्ता-**

**त्क्र्यादेर्गणादानप्रत्ययो भवति हौ परे ॥ नाप्रत्ययाभावः । गृहाण । अगृह्णात् । जग्राह । जगृहे । गृह्यात् । ईटो ग्रहाम् इति ईः । ग्रहीषीष्ट ग्रहीता ग्रहीष्यति । अग्रहीष्यत् अग्रहीष्यत । अग्रहीत् अग्रहीष्ट । इति क्र्यादिषूभयपदिनः ॥ २३ ॥**

ग्रह उपादाने । उपादानं ग्रहणम् । तिबादयः । 'ना क्र्यादेः' । 'ग्रहां क्ङिति च' अनेन संप्रसारणम् । णत्वम् । गृह्णाति गृह्णीतः गृह्णन्ति । गृह्णीते । गृह्णीयात् । गृह्णीत । गृह्णातु गृह्णीतात् गृह्णीताम् गृह्णन्तु । गृह हि इति स्थिते ॥ सूत्रम्—'हसादान हौ' ॥ हसात् आनः हौ । हसान्तात् क्र्यादेर्गणात् आनः प्रत्ययो भवति हिप्रत्यये परे । नाप्रत्ययाभावो भवति । 'अतः' अनेन हेर्लुक् । संप्रसारणम् । गृहाण । अन्यानि सुगमानि । गृह्णीताम् । अगृह्णात् । अगृह्णीत । लिड्लकारे । 'द्विश्च' । संप्रसारणम् । 'रः' । 'कुहोश्चुः' । 'अत उपधायाः' । जग्राह जगृहतुः जगृहुः । जगृहे जगृहाते जगृहिरे । संप्रसारणम् । गृह्यात् । ग्रह सीष्ट इति स्थिते । 'सिसता—' । 'ईटो ग्रहां०' अनेन दीर्घः । ग्रहीषीष्ट । ग्रहीता २ । ग्रहीष्यति । ग्रहीष्यते । अग्रहीष्यत् अग्रहीष्यत । एतेषां रूपाणि सुगमानि । लुङ्लकारे । 'अत उपधायाः' अनेन वृद्धिः । अन्यत् साधनं सुगमम् । अग्रहीत् अग्रहिष्टाम् अग्रहिषुः । 'वृद्धिहेतौ' अनेन अत्र दीर्घाभावः । आत्मनेपदे । अग्रहीष्ट अग्रहीषाताम् अग्रहीषत । इत्यादीनि । इत्युभयपदिनः ॥

---

## क्र्यादिषु परस्मैपदिनः २४

**अथ परस्मैपदिनः । पुष् पुष्टौ । पुष्णाति । पुष्णीयात् । पुष्णातु पुष्णीताम् पुष्णन्तु । पुषाण । अपुष्णात् । पुपोष । पुष्यात् । पोषिता । पोषिष्यति । अपोषिष्यत् । अपोषीत् ॥**

अथ परस्मैपदिनो धातवः कथ्यन्ते । पुष् पुष्टौ तिबादयः । 'ना क्र्यादेः' । इति णत्वम् । अन्यत्र साधनं तु पूर्वसदृशम् । पुष्णाति । चतुर्णां रूपाणि सुगमानि । हौ परे । पुषाण । अन्यानि सुगमानि । लिड्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । पुपोष पुपुषतुः पुपुषुः । 'क्र्यादेर्णादेः' । 'गुणः' । पुपोषिथ । पुष्यात् । 'सिसता०' । 'उपधाया लघोः' । पोषिता । षत्वम् । पोषिष्यति । 'दिबादावट्' । अपोषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'गुणः' । अपोषीत् अपोषिष्टाम् अपोषिषुः इत्यादीनि ॥

**मुष स्तेये । मुष्णाति । मुमोष मुष्यात् । मोषिता मोषिष्यति । अमोषिष्यत् । अमोषीत् ॥**

मुष स्तेये । तिबादयः । 'ना क्र्यादेः' । णत्वम् । मुष्णाति । मुष्णीयात् । मुष्णातु । हौ परे । मुषाण । अमुष्णात् । रूपाणि सुगमानि । लिड्लकारे । 'द्विश्च' । पूर्वस्य । 'उपधाया लघोः' । मुमोष मुमुषतुः मुमुषुः । 'गुणः' । मुमोषिथ । मुष्यात् । 'सिसता०' । गुणः । मोषिता । षत्वम् । मोषिष्यति । अमोषिष्यत् । लुङ्लकारे । द्वाविटौ । गुणः । सेर्लोपः । अमोषीत् अमोषिष्टाम् अमोषिषुः ॥

**शॄ हिंसायाम् । शृणाति । शशार शशरतुः शशरुः । शीर्यात् । शरिता । शरिष्यति । अशरिष्यत् अशारीत् ॥**

शॄ हिंसायाम् । तिबादयः 'ना क्र्यादेः' । 'प्वादेर्ह्रस्वः । णत्वम् । शृणाति । शृणीयात् । शृणातु । अशृणात् । लिट्लकारे । 'द्विश्च' । 'रः' । 'धातोर्नामिनः' । शशार । 'ऋसंयोगात्०' अनेनाकित्त्वात् गुणः । शशरतुः शशरुः । शशरिथ । शर् इर् । 'य्वोर्विहसे' शीर्यात् । 'सिसता०' । 'गुणः' । शरिता । षत्वम् । शरिष्यति अशरिष्यत् । 'धातोर्नामिनः' । अशारीत् अशारिष्टाम् अशारिषुः ॥

**ज्या वयोहानौ । ग्रहादित्वात्संप्रसारणम् । जिनाति । जिनीयात् । जिज्यौ जिज्यतुः जिज्युः । जिज्यिथ-जिज्याथ । जीयात् । ज्याता । ज्यास्यति । अज्यास्यत् । अज्यासीत् ॥**

ज्या वयोहानौ । तिबादयः 'ना क्र्यादेः' । 'ग्रहां क्ङिति च' अनेन संप्रसारणम् । दीर्घस्वरत्वात् दीर्घः । जीनाति जीनीतः जीनन्ति । जीनीयात् । जीनातु । जीनीहि । अजीनात् अजीनीताम् अजीनन् । लिट्कारे । 'द्विश्च' णबादौ पूर्वस्य ह्रस्वः । 'आतो णप् डौ' । जिज्यौ जिज्यतुः जिज्युः । जिज्यिथ जिज्याथ । संप्रसारणम् । जीयात् । ज्याता । ज्यास्यति । अज्यास्यत् । 'आदन्तानाम्' अनेनेट्सकौ । अज्यासीत् अज्यासिष्टाम् अज्यासिषुः ॥

**ज्ञा अवबोधने । जा जनीज्ञोः । जानाति । जज्ञौ । ज्ञायात् ज्ञेयात् । ज्ञाता । अज्ञासीत् ॥**

ज्ञा अवबोधने । तिबादयः । पूर्ववत् । 'ना क्र्यादेः' अनेन चतुर्षु नाप्रत्ययो भवति । 'जाजनीज्ञोः' अनेन सूत्रेण जा इत्यादेशः । जानाति । 'ई हसे' जानीतः । 'नातः' जानन्ति । इत्यादीनि रूपाणि भवन्ति तानि पूर्वसदृशानि । जानीयात् । जानातु । हौ परे सति । 'ई हसे' अनेन ईकारः । जानीहि । अजानात् । लिट्लकारे । 'द्विश्च' । पूर्वस्य ह्रस्वः । 'आतो णप् डौ' । डित्त्वात् टिलोपः । जज्ञौ । 'आतोऽनपि' जज्ञतुः जज्ञुः । 'अत्त्वतः' । 'आतोऽनपि' अनेन आकारस्य लोपो भवति । जज्ञिथ जज्ञाथ । 'संयोगादेः' । ज्ञायात् ज्ञेयात् । ज्ञाता । ज्ञास्यति । 'दिबादावट्' । अज्ञास्यत् । 'आदन्तानां०' अनेन इट्सकौ भवतः । अन्यत्साधनं सुगमम् । अज्ञासीत् अज्ञासिष्टाम् अज्ञासिषुः । इत्यादीनि ॥

**ली श्लेषणे । लीनाति ॥ लीलीङोरात्वं वा ॥ ललौ । लिलाय लिल्यतुः । लाता-लेता । अलासीत् । अलैषीत् ॥**

ली श्लेषणे । तिबादयः । 'ना क्र्यादेः' । लीनाति । लीनीयात् । लीनातु । 'दिबादावट्' । अलीनात् । चतुर्णां रूपाणि सुगमानि । लकाराणां सूत्रम् । 'लीलीङोः' लीलीङोर्धात्वोर्गुणवृद्धिविषये आत्वं वा भवति । 'षष्ठी' अनेनान्तस्य भवति । आत्वपक्षे । ललौ । आत्वाभावपक्षे द्वित्वादिकम् । 'धातोर्नामिनः' अनेन वृद्धिः । लिलाय लिल्यतुः । 'नुधातोः' अनेन यत्वम् । लिल्युः । 'अत्वतः' । ललिथ ललाथ । लिलयिथ लिलेथ ।

इत्यादीनि । लीयात् आत्वे कृते । लाता । आत्वाभावे गुणः । लेता । लास्यति लेष्यति । अलास्यत् अलेष्यत् 'आदन्तानां' अनेनात्वपक्षे इट्सकौ । अलासीत् अलासिष्टाम् अलासिषुः । आत्वाभावपक्षे । 'अनिटो नामिवतः' अनेन वृद्धिः । अलैषीत् अलैष्टाम् अलैषुः ॥

**बन्ध बन्धने । बध्नाति बबन्ध । भन्त्स्यति । अभान्त्सीत् ॥**

बन्ध बन्धने । तिबादयः । 'नाक्र्यादेः' । 'नो लोपः' अनेन नकारस्य लोपः । बध्नाति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । बबन्ध बबन्धतुः बबन्धुः । बबन्धिथ । 'अत्त्वतः' । 'तथोर्धः' 'झबे जबाः' । 'नोलोपः' । बध्यात् । बबन्ध । इत्यादीनि । बद्धा 'आदिजबानाम्' अनेन बस्य भः । 'खसे चपा०' भन्त्स्यति 'दिबादावट्' । अभन्त्स्यत् । लुङ्लकारे । 'अत उपधायाः' अनेन वृद्धिः । अभान्त्सीत् । 'प्रत्ययलोपे०' । अस्यामित्यत्वान्न भकारः । 'झसात्' अनेन सेर्लोपो भवति । 'तथोर्धः' अबान्द्धाम् अभान्त्सुः इत्यादीनि ॥

**मन्थ विलोडने । मथ्नाति ॥**

मन्थ विलोडने । 'ना क्र्यादेः' । नोलोपः । मथ्नाति । चतुर्णां सुगमानि । लिट्लकारे । ममन्थ ममन्थतुः ममन्थुः । ममन्थिथ । अन्येषां लकाराणां भ्वादिगणोक्तमन्थधातुवत् रूपाणि ।

**कुष् निष्कर्षे । कुष्णाति । कुषाण । चुकोष । कुष्यात् । कोषिता । अकोषीत् ।**

कुष निष्कर्षे । 'ना क्र्यादेः' । णत्वम् । कुष्णाति कुष्णीतः कुष्णन्ति । इत्यादीनि चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकम् । 'कुहोश्चुः' । 'उपधाया लघोः' चुकोष चुकुषतुः चुकुषुः । चुकोषिथ । कुष्यात् । 'सिसता०' । गुणः । कोषिता । षत्वम् । कोषिष्यति । 'दिबादावट्' । अकोषिष्यत् । लुङ्लकारे । द्वाविटौ सेर्लोपः । 'गुणः' । अकोषीत् अकोषिष्टाम् अकोषिषुः ॥

**अश् भोजने । अश्नाति अश्नीयात् । अश्नातु अश्नीतात् अश्नीताम् । अश्नन्तु । अशान । आश । अशिता । आशीत् । इति क्र्यादिषु परस्मैपदिनः ॥ २४ ॥**

अश् भोजने । तिबादयः । 'ना क्र्यादेः' । अश्नाति । चतुर्णां लकाराणां रूपाणि सुगमानि । हौ परे 'हसादान हौ' । 'अतः' । अशान । लुङ्लकारे । 'स्वरादेः' अनेन द्वितीयोऽडागमः । 'सवर्णे' आश्नत् । लिट्लकारे । द्वित्वादिकम् । 'अत उपधायाः' । 'सवर्णे' । आश आशतुः आशुः । आशिथ । अश्यात् । 'सिसता०' । अशिता । षत्वम् । अशिष्यति । 'दिबादावट्' । 'स्वरादेः' आशिष्यत् । आशीत् आशिष्टाम् आशिषुः इत्यादीनि । इति परस्मैपदिनो धातवः कथिताः ॥

---

## क्र्यादिष्वात्मनेपदिनः २५

**अथात्मनेपदिनः । वृङ् संभक्तौ । वृणीते । वृणीत । वृणीताम् । अवृणीत । वव्रे । वरिषीष्ट-वरीषीष्ट ॥ संयोगादिऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड्वा वाच्यः ॥ वृषीष्ट । उः । अवरिष्ट-अवरीष्ट अवृत । इत्यादि ॥ इति क्र्यादिष्वात्मनेपदिनः ॥ २५ ॥ इति नाविकरणाः क्र्यादयः ॥**

अथात्मनेपदिनः कथ्यन्ते । वृङ् संभक्तौ । ङकार आत्मनेपदार्थः । तआदयः प्रत्यया भवन्ति 'ना क्र्यादेः' । 'ई हसे' । णत्वम् । वृणीते । 'नातः' वृणाते वृणते । वृणीत । वृणीताम् । अवृणीत । रूपाणि सुगमानि । तेषां कार्यमपि सदृशम् । लिट्लकारे । 'द्विश्च' । 'रः' । 'ऋरम्' । वव्रे वव्राते वव्रिरे । क्र्यादित्वान्नेट् । वव्रृषे । इत्यादीनि । वृसीष्ट इति स्थिते । 'सिसता०' । 'गुणः' । वरिषीष्ट । 'ईटो ग्रहां०' । वरीषीष्ट । 'संयोगादि०' अनेन सीष्टादौ वेट् । 'उः' अनेन गुणनिषेधः । वृषीष्ट । वरिता वरीता । वरिष्यते । वरीष्यते । अवरिष्यत अवरीष्यत । लुङ्लकारे । अवरिष्ट अवरिषाताम् अवरिषत । दीर्घे कृते अवरीष्ट अवरीषताम् अवरीषत । इडभावपक्षे । 'लोपो ह्रस्वाज्झसे' अनेन झसे परे सेर्लोपः । अवृत अवृषाताम् अवृषत । अवृथाः । इत्यादीनि रूपाणि भवन्ति । इत्यात्मनेपदिनः कथिताः । इति नाविकरणाः क्र्यादयो धातवः ॥

---

## चुरादिगणः २६

**अथ चुरादयः ॥ चुर स्तेये ॥ चुरादेः ॥ चुरादेर्गणात्स्वार्थे ञिः प्रत्ययो भवति ॥ उपधाया गुणः ॥ स धातुः । अप्गुणायः । चोरयति । चोरयेत् चोरयतु । अचोरयत् । चोरयाञ्चकार । चोरयाम्बभूव । चोरयामास । चोरयाञ्चक्रे । ञेः । चोर्यात् । चोरयिता । चोरयिष्यति । अचोरयिष्यत् । ञेरङ् द्विश्च । अङि लघौ ह्रस्व उपधायाः । लघोर्दीर्घः । अचूचुरत् ॥**

अथ चुरादयो धातवः कथ्यन्ते । चुर स्तेये । सूत्रम्—'चुरादेः' ॥ चुरादेर्धातुगणात् धातुपाठोक्तात् स्वार्थे मूलार्थे एव प्रेरणाद्यर्थं विनैव ञिप्रत्ययो भवति । यथा भ्वादीनां अबादिविकरणं तथा चुरादीनां ञिविकरणमित्यर्थः । अनेन ञिप्रत्ययो भवति । तत्र वृद्धेः प्राप्तौ सूत्राभावे । 'उपधाया लघोः' अनेन गुणो भवति । चोरि इति स्थिते । 'स धातुः' । अनेन धातुसंज्ञा । धातुत्वात् तिबादयः । 'अप्कर्तरि' । अनेन अप्प्रत्ययः । 'गुणः' । 'ए अय्' 'स्वरहीनम्०' । चोरयति चोरयतः चोरयन्ति । इत्यादीनि रूपाणि भवन्ति तानि सुगमानि । चोरयेत् । चोरयतु । 'दिबादावट्' । अचोरयत् । लिट्लकारे । 'कांसादिप्रत्ययादाम्' अनेन आम् । गुणः । अन्यत् साधनं सुगमम् । चोरयांचकार । चोरयामास । चोरयांबभूव । इत्यादीनि रूपाणि भवन्ति । ञित्त्वादुभयपदी । चोरयते । चोरयांचक्रे । चोरियात् इति जाते 'ञेः' अनेन ञेर्लोपः । चोर्यात् । 'सिसता' अनेनेट् । चोरयिता । चोरयिष्यति । 'दिबादावट्' । अचोरयिष्यत् । चुर ञि दिप् इति जाते । 'ञेरङ्द्विश्च' । अनेन सिविषये अङ्प्रत्ययो भवति च धातोर्द्वित्वम् । पूर्वस्य चुचुर् ञि अङ् दिप् इति जाते । 'ञेः' अनेन ञेर्लोपो भवति । चुचुर अङ् दिप् इति जाते 'लघोर्दीर्घः' अनेन पूर्वस्य दीर्घः । 'दिबादावट्' । 'स्वर०' । 'वावसाने' । अचूचुरत् अचूचुरताम् अचूचुरन् । इत्यादीनि भवन्ति रूपाणि । अथवा चोरि इति सिद्धस्यैव अङ् प्रत्यये कृते 'ञेः' अनेन ञेर्लोपे कृते निमित्ताभावे इति वचनात् चो इत्यस्य चुः । ततो द्वित्वम् । एवमपि साधना भवति । 'अचूचुरच्चन्द्रमसोऽभिरामतां' इति भावः ॥

**चिती संज्ञाने । चेतयति । अचीचितत् ॥**

चिती संज्ञाने । ईकार इत् । 'चुरादेः' । 'उपधाया लघोः' । 'सधातुः' तिबादयः । 'अप् कर्तरि' । 'गुणः' । णअप् । चेतयति । चेतयेत् । चेतयतु । अचेतयत् । 'कासादि०' अनेन सर्वत्र णबादौ आम्प्रत्ययो भवति । चेतयांचकार । चेतयामास । चेतयांबभूव । 'ञेः' अनेन ञेर्लोपः । चेत्यात् । 'सिसता०' । 'गुणः' । चेतयिता । चेतयिष्यति । अचेतयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ ह्रस्वः' । 'लघोर्दीर्घः' । 'दिबादावट्' । अचीचितत् अचीचितताम् अचीचितन् । इत्यादीनि ॥

**चिति स्मृत्याम् । इदितो नुम् । चिन्तयति । लघोरभावान्न दीर्घः । अचिचिन्तत् । चुरादेर्ञिर्वेति केचित् । चिन्तन्ति ।**

चिति स्मृत्याम् 'चुरादेः' अनेन ञिप्रत्ययो भवति । 'इदितो नुम्' । अन्यत्साधनं पूर्वसदृशं वर्तते । चिन्तयति । लिट्लकारे आम्प्रत्ययो भवति । अन्यानि रूपाणि पूर्वधातुवत् । लुङ्लकारे । 'ञेरङ् द्विश्च' । अनेनाङ्प्रत्ययो भवति । लघोरभावात् पूर्वस्य दीर्घो न भवति । 'दिबादावट्' अचिचिन्तत् अचिचिन्तताम् अचिचिन्तन् । इत्यादीनि ॥ चुरादेर्धातोर्गणात् ञिः प्रत्ययो वा भवति इति केचिदाचार्या वदन्ति । तन्मते । चिन्तति चिन्ततः चिन्तन्ति । इत्यादीनि रूपाणि स्युः ॥

**पीड अवगाहने । पीडयति ॥ भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो ङपरे ञौ ॥ अपीपिडत् अपिपीडत् । प्रथ प्रख्याने । प्रथयति ॥ स्मृदृत्वरप्रथम्रदस्तॄस्पशां पूर्वस्यातोऽदङ्परे ञौ ॥ इत्वापवादः । अपप्रथत् ॥**

पीड अवगाहने । अवगाहनं प्रवेशः । चुरादेः लघ्वभावात् 'उपधाया लघोः' अनेन गुणो न भवति । अप् । गुणः । पीडयति । लिट्लकारे । 'कासादि०' अनेनाम् । पीडयांचकार । 'ञेः' । पीड्यात् । 'सिसता०' गुणः । पीडयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' अनेन अङ्प्रत्ययः धातोर्द्वित्वं च । पूर्वस्य । 'दिबादावट्' । ह्रस्वः । अपिपीड् ञि अङ् दिप् इति जाते॥ सूत्रम्—'भ्राज०' ॥ 'भ्राजभासभाषदीपजीवमीलपीडामेतेषां धातूनामुपधाया वा ह्रस्वो भवति अङ् परे । अनेन वोपधाया ह्रस्वः । 'ञेः' अनेन ञेर्लोपः । 'लघोर्दीर्घः' अनेन पूर्वस्य दीर्घः । अपीपिडत् अपीपिडताम् अपीपिडन् । इत्यादीनि । यदोपधाया ह्रस्वो न भवति तदा । अपिपीडत् अपिपीडताम् अपिपीडन् । प्रथ प्रख्याने । 'चुरादेः' । प्रथयति । लिट्लकारे । आम्प्रत्ययः । प्रथयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । पूर्वस्य । अप प्रथ ञि अङ् दिप् इति जाते 'अङि लघौ' अनेनोपधाया ह्रस्वः । अकारस्येकारे प्राप्ते ॥ सूत्रम्—'स्मृदृत्वर०'॥ स्मृदृत्वरप्रथम्रदस्तॄस्पृशां धातूनां पूर्वस्य अकारस्य अकार एव भवति इत्यपवादः । अनेन पूर्वस्य अकारस्य इकारो न भवति । 'ञेः' अनेन ञेर्लोपः । अपप्रथत् अपप्रथताम् अपप्रथन् । इत्यादीनि ॥

**पृथ प्रक्षेपे ॥ उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः ॥ इररारामपवादः । अपीपृथत् अपपर्थत् ।**

पृथ् प्रक्षेपे। 'चुरादेः'। 'उपधाया लघोः'। अन्यत्तु पूर्ववत्। पर्थयति। लुङ्लकारे। 'ञेरङ् द्विश्च'। 'अङि लघौ' 'लघोर्दीर्घः'। 'ञेः'। अपीपृथ् अङ् दिप् इति जाते॥ 'उपधायाः०' उपधाया ऋवर्णस्य ऋकारो वा वक्तव्यः इररारामपवादः। अनेन ऋकारस्य ऋकार एव। अपीपृथत् अपीपृथताम् अपीपृथन्। यदा ऋकारो न भवति तदा ञौ परे गुणः। अपपर्थत् अपपर्थताम् अपपर्थन्॥

**ज्ञप ज्ञानज्ञापनयोर्मित्॥ मितां ह्रस्वः॥ मितां धातूनां ह्रस्वो भवति ञौ परे॥ ज्ञपयति।**

ज्ञप ज्ञानज्ञापनयोः। 'चुरादेः'। 'अत उपधायाः'। ज्ञाप् ञि इति जाते॥ सूत्रम्—'मितां ह्रस्वः'॥ मितां ह्रस्वः मितां धातूनां ह्रस्वो भवति ञौ परे। मितो धातवो धातुपाठादवगन्तव्याः। अनेन ह्रस्वः। अन्यत्सुगमम्। ज्ञपयति। लिट्लकारे। आम्प्रत्ययः। ज्ञपयांचकार। लुङ्लकारे। 'ञेरङ् द्विश्च'। पूर्वस्य ह्रस्वः। 'ञेः'। अङि अजिज्ञपत् अजिज्ञपताम् अजिज्ञपन्॥

**चिञ् चयने। मित्॥ चिस्फुरोर्ञौवात्वं वा॥ रातो ञौ पुक्॥ ऋ गतावित्यस्याकारस्य च पुगागमो भवति ञौ परे॥ चपयति-चययति॥**

चिञ् चयने। अयं धातुर्मित्। 'चुरादेः'। अनेन ञिः। सूत्रम्—'चिस्फुरोः०'॥ चिस्फुरोर्धात्वोर्ञिप्रत्यये परे आत्वं वा भवति। 'षष्ठी' अनेनायमादेशोऽन्त्यस्य। चा ञि इति जाते॥ सूत्रम्—'रातो ञौ पुक्'॥ रातः ञौ पुक्। ऋ गतौ इत्यस्य धातोराकारान्तस्य च धातोर्ञिप्रत्यये परे पुगागमो भवति। अनेन पुक्। कित्त्वादन्ते। 'मितां ह्रस्वः' अनेन ह्रस्वः। 'स धातुः' तिबादयः। 'अप्कर्तरि'। 'गुणः'। चपयति। चपयेत्। चपयतु। अचपयत्। लिट्लकारे। 'कासादिप्रत्ययादाम्'। अनेनाऽऽम्। अन्यत्साधनं सुगमम्। चपयांचकार। चापयामास। चपयाम्बभूव। 'ञेः'। चप्यात्। 'सिसता०'। चपयिता। चपयिष्यति। अचपयिष्यत्। लुङ्लकारे। चप् ञि दिप् इति जाते। 'ञेरङ् द्विश्च'। पूर्वस्य। 'अङि लघौ'। 'लघोर्दीर्घः'। अचीचपत् अचीचपताम् अचीचपन्। आत्वाभावपक्षे। 'धातोर्नामिनः' अनेन वृद्धिः। 'मितां ह्रस्वः' 'सधातुः'। अप्। चययति। लिट्लकारे। आम्प्रत्ययः। चययांचकार। 'ञेः'। चय्यात्। लुङ्लकारे। चप् ञि दिप् इति जाते। 'ञेरङ् द्विश्च' 'ञेः'। 'अङि लघौ'। 'लघोर्दीर्घः'। अचीचयत् अचीचयताम्। अचीचयन्॥

**अर्च पूजायाम्॥ अर्चयति॥ स्वरादेः परः॥ स्वरादेर्धातोः परोऽवयवोऽद्विरुक्तः स स्वरो द्विर्भवति॥ नदराः संयोगादयो न द्विः। इति रेफस्य न द्वित्वम्। आर्चिचत्।**

अर्च पूजायाम्। 'चुरादेः'। अन्यत्साधनं तु पूर्ववत्। अर्चयति। लिट्लकारे। अर्चयांचकार। आशीर्यादादौ। 'ञेः'। अर्च्यात्। लुङ्लकारे। अर्चि दिप् इति जाते। 'ञेरङ्

द्विश्च' ॥ 'स्वरादेः परः' 'नदराः' अनेन रकारस्य द्वित्वनिषेधः । 'ञेः' । 'दिबादावट्' । 'स्वरादेः' । आर्चिचत् आर्चिचताम् आर्चिचन् ॥

**कृत संशब्दे ॥ धातोरुपधाया ऋकारस्य ईकारादेशो वाच्यो ञिप्रत्यये परे ॥ कीर्तयति । अचिकीर्तत् ।**

कृत संशब्दे । 'चुरादेः' । सूत्रम्—'धातोः०' धातोरुपधाया ऋकारस्य ञिप्रत्यये परे ईकारादेशो वाच्यः । 'य्वोर्विहसे' अनेन दीर्घः । कीर्तयति । लिट् । कीर्तयाञ्चकार । लुङ् 'ञेरङ्' 'द्विश्च' 'ह्रस्वः' 'कुहोश्चुः' 'दिबादावट्' अचिकीर्तत् अचिकीर्तताम् अचिकीर्तन् ॥

**गण संख्याने । अकारान्तः । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । गणयति ॥ अल्लोपिनो नाङ्कार्यम् ॥ अजगणत् । कथगणयोरङ्कार्यं चेति केचित् । अजीगणत् ।**

गण संख्याने । अयमकारान्तः । 'चुरादेः' 'यतः' अनेनाकारस्य लोपः । तत्र 'अत उपधायाः' अनेन सूत्रेण वृद्धेः प्राप्तौ सत्यां 'यदादेशस्तद्वद्भवति' इति न्यायेन वृद्धिर्न भवति उपधायामकाराभावत् । गणयति । चतुर्णां सुगमानि । लिट् । गणयांचकार । लुङ् 'ञेरङ् द्विश्च' 'पूर्वस्य०' 'कुहोश्चुः' ॥ सूत्रम् 'अल्लोपिनः०' अल्लोपिनो धातोरङ्कार्यं न भवति । 'अङि लघौ' 'लघोर्दीर्घः' आभ्यां सूत्राभ्यामुक्तं कार्यं न भवति इत्यर्थः । अजगणत् अजगणताम् अजगणन् ॥ कथगणयोर्धात्वोरङ्कार्यं वा भवतीति केचिदाचार्या वदन्ति तन्मते—अजीगणत् अजीगणताम् अजीगणन् ॥

**कथ वाक्यप्रबन्धे । कथयति । अचकथत् अचीकथत् ।**

कथ वाक्यप्रबन्धे । अयमप्यकारान्तः । 'चुरादेः' । कथयति । कथयांचकार । कथ्यात् । 'अल्लोपिनः' अनेनाङ्कार्यं न भवति । 'कुहोश्चुः' । अचकथत् अचकथताम् अचकथन् । वा भवतीत्युक्तत्वात् अङ्कार्यं भवति । साधनं तु पूर्ववत् । अचीकथत् अचीकथताम् अचीकथन् ॥

**ऊन परिहाणे । ऊनयति ॥ ञिनिमित्तस्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् ॥ स्वरादेः परः । औननत् ॥**

ऊन परिहाणे । 'चुरादेः' । अकारान्तोऽयम् । ऊनयति । ऊनयेत् । ऊनयतु । 'स्वरादेः' अनेनास्य धातोर्द्वितीयोऽडागमो भवति । औनयत् । लिट्लकारे । 'कासादि०' अनेनाम् । ऊनयांचकार । 'ञेः' । ऊन्यात् । 'सिसता०' । ऊनयिता । ऊनयिष्यति । औनयिष्यत् । लुङ्लकारे । ऊनयि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । अनेन ङप्रत्ययो धातोर्द्वित्वं च भवति । 'स्वरादेः परः' अनेन नकारस्य द्वित्वम् । 'ञेः' 'यतः' दिबादावट्' 'स्वरादेः परः' औननत् औननताम् औननन् । इत्यादीनि रूपाणि भवन्ति ॥

**अर्थङ् याचने । अर्थयते । आर्तथत ॥**

अर्थङ् याचने। ङकार आत्मनेपदार्थः। अकारान्तोऽयं धातुः। 'चुरादेः'। अन्यत्साधनं पूर्ववत्। अर्थयते। अर्थयेत। अर्थयताम्। 'स्वरादेः' अनेन द्वितीयोऽडागमो भवति। आर्थयत। लिट्लकारे। 'कासादि०' अनेनाम्। अर्थयांचक्रे। 'आम्प्रत्ययः' अनेन अर्थयामास। अर्थयांबभूव। इत्यादीनि रूपाणि। 'सिसता०'। अर्थयिषीष्ट। लुङ्लकारे अङ्प्रत्ययः। धातोर्द्वित्वम्। 'स्वरादेः परः' अनेन यकारस्य द्वित्वं भवति। 'झपानां०' अनेन थकारस्य तकारः। 'ञेः' 'यतः' 'स्वरादेः०' अनेन द्वितीयोऽडागमः। आर्तथत आर्तथेताम् आर्तथन्त। इत्यादीनि॥

**संग्रामङ् युद्धे। अससंग्रामत॥**

संग्रामङ् युद्धे। ङकार आत्मनेपदार्थः। अकारान्तोऽयम्। 'चुरादेः' 'यतः' अन्यत्साधनं पूर्ववत्। संग्रामयते। संग्रामयेत। संग्रामयताम्। असंग्रामयत। 'कासादि०'। संग्रामयांचक्रे। 'सिसता०'। संग्रामयिषीष्ट। संग्रामयिता। लुङ्लकारे 'सस्वरादिः०' अनेन सकारस्य द्वित्वम्। अन्यत्। अससंग्रामत असंसंग्रामेताम् असंसंग्रामत। इत्यादीनि भवन्ति॥

**अन्ध दृष्ट्युपघाते। आन्दधत्॥**

अन्ध दृष्ट्युपघाते। अकारान्तोऽयम्। 'चुरादेः'। 'यतः'। 'स धातुः'। तिबादयः। अकादयः। अन्धयति। अन्धयेत्। अन्धयतु। 'स्वरादेः'। अनेन द्वितीयोऽडागमो भवति। आंधयत्। लिट्लकारे। आम्प्रत्ययो भवति। अन्धयांचकार। 'ञेः'। अन्ध्यात्। 'सिसता०'। अन्धयिता। अन्धयिष्यति। आन्धयिष्यत्। लुङ्लकारे। अङ्प्रत्ययः। धकारस्य द्वित्वम्। 'झपानाम्०' 'ञेः' 'यतः' 'स्वरादेः' आन्दधत् आन्दधताम् आन्दधन्। इत्यादीनि॥

**अङ्क अङ्ग पदे लक्षणे च। आञ्चकत्॥ इति चुरादिगणः॥ २६॥**

अङ्क अङ्ग पदे लक्षणे च। अकारान्तौ। 'चुरादेः०' 'यतः'। अङ्कयति। अङ्गयति। इत्यादीनि रूपाणि सुगमानि। लिट्लकारे। आम्प्रत्ययो भवति। अङ्कयांचकार। लुङ्लकारे अङ्प्रत्ययः। 'स्वरादेः परः' अनेन ककारस्य द्वित्वम्। 'कुहोश्चुः' 'ञेः' 'यतः' 'स्वरादेः' आञ्चकत् आञ्चकताम् आञ्चकन्। इत्यादीनि। इति चुरादयो धातवः कथिताः॥

---

## ञ्यन्तप्रक्रिया २७

**॥ अथ ञ्यन्ताः॥ धातोः प्रेरणे॥ प्रयोजकव्यापारेऽर्थे धातोर्ञिः प्रत्ययो भवति॥ कुर्वन्तं प्रेरयति यः स प्रयोजकः। कारयति कारयते। अचीकरत्॥**

अथ ञ्यन्ता धातवः कथ्यन्ते। सूत्रम् 'धातोः प्रेरणे' धातोः, प्रेरणे, द्विपदं सूत्रम्। भ्वादेर्धातोः प्रेरणेऽर्थे कारितेऽर्थे ञिः प्रत्ययो भवति। प्रेरणेऽर्थे इति कोऽर्थः। प्रयोजकव्यापारे। प्रयोजक इति कोऽर्थः। कुर्वन्तं पुरुषं यः कारयति 'एतत्कार्यं त्वं कुरु' इति

प्रवर्त्तयति स प्रयोजक इत्युच्यते । तस्य व्यापारः प्रयोज्यद्वारेण रूपेण क्रियासंबन्धस्तस्मिन् ञिः प्रत्ययो भवति । कुर्वन्तं प्रेरयति यः सः प्रयोजकः । एकः करोति तं कुर्वन्तं अन्यः प्रेरयति इत्यस्मिन्नर्थे कृते धातोर्ञिः प्रत्ययः । कृ ञि इति जाते ञकारो वृद्ध्यर्थः । उभयपदार्थश्च । 'धातोर्नामिनः' अनेन वृद्धिः । 'स धातुः' अनेनास्मिन्प्रकरणे धातुसंज्ञा सर्वत्र भवति । तिबादयः । 'अप् कर्तरि' गुणः । 'ए अय्' कारयति । ञित्त्वादयमुभयपदी । कारयते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे 'कासादिप्रत्ययादाम्' । अनेनाम्प्रत्ययो भवति । अन्यत्साधनं सुगमम् । कारयाञ्चकार । करयाञ्चक्रे । कारयामास । कारयाम्बभूव । इत्यादीनि । 'ञेः' । कार्यात् । 'सिसता०' षत्वम् कारयिषीष्ट । कारयिता २ । अन्येषां सुगमानि । लुङ्लकारे । कार् ञि दिप् इति जाते । 'ञेरङ् द्विश्च' अनेनाङ् धातोर्द्वित्वं च ह्रस्वः । 'कुहोश्चुः' 'अङि लघौ' 'लघोर्दीर्घः' 'दिबादावट्' । अचीकरत् अचीकरताम् अचीकरन् । आत्मनेपदे । अचीकरत अचीकरेताम् अचीकरन्त । इत्यादीनि भवन्ति । ञ्यन्ता धातवः सर्वे उभयपदिनः । ञित्त्वात् ॥

**पाचयति । अपीपचत् ॥**

डुपचष् पाके । पचन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' अनेन ञिः प्रत्ययः । 'अत उपधायाः' । 'स धातुः' । तिबादयः । 'अप् कर्तरि' । गुणः 'ए अय्' पाचयति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । आम्प्रत्ययः । पाचयाञ्चकार । 'ञेः' । पाच्यात् । 'सिसता०' । पाचयिता । षत्वम् । पाचियिष्यति । 'दिबादावट्' । अपाचयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' । अन्यत्साधनं सुगमम् । अपीपचत् अपीपचताम् अपीपचन् । इत्यादीनि ॥

**भवन्तं प्रेरयति भावयति । भावयते । भावयांबभूव ॥ अङ्सयोः ॥ अङ्सयोः पूर्वस्योकारस्येत्वं पवर्गयवरलजकारेष्ववर्णपरेषु परतः ॥ द्विर्निमित्तेऽचि ॥ द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये ॥ अबीभवत् ॥**

भू सत्तायाम् । भवन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' । 'धातोर्नामिनः' । अन्यत्साधनं सुगमम् । भावयति । भावयते । भावयाञ्चकार । भाव्यात् । 'सिसता०' । भावयिता । लुङ्लकारे । भू भू ञि अङ् दिप् इति जाते । 'धातोर्नामिनः' अनेन वृद्धिः । ह्रस्वः । 'झपानाम्०' । 'अङ्सयोः' अङ्सयोः परयोः पूर्वस्य उकारस्य इत्वं भवति । अवर्णपरेषु पवर्गयवरलजकारेषु परतः । अनेन उकारस्य इत्वम् । 'अङि लघौ' । 'लघोर्दीर्घः' अबीभवत् अबीभवताम् अबीभवन् । इत्यादीनि ॥

**मूङ् मोहने । मावयति । अमीमवत् ॥**

मूङ् मोहने । मवन्तं प्रेरयति । धातोः प्रेरणे । अन्यत्पूर्ववत् । मावयति । लिट्लकारे । 'कासादि०' । अनेनाम् । मावयांचकार । 'ञेः' माव्यात् । 'सिसता०' । मावयिता । लुङ्लकारे साधनं पूर्वसदृशम् । अमीमवत् । अमीमवताम् । अमीमवन् । इत्यादीनि ॥

**यु मिश्रणे । अयीयवत् ॥**

यु मिश्रणे । एकः यौति तमन्यः प्रेरयतीति विग्रहे । 'धातोः प्रेरणे' यावति । लिट्लकारे । 'कासादि०' अनेनाम् । यावयाञ्चकार । 'ञेः' । याव्यात् । यावयिता । लुङ्लकारे । अङ्प्रत्ययः । द्वित्वादिकम् । 'अङ्सयोः' अनेन इत्वम् । अयीयवत् अयीयवताम् अयीयवन् ॥

**रु शब्दे । अरीरवत् ॥**

रु शब्दे । 'धातोः प्रेरणे' अन्यत्पूर्ववत् ज्ञेयम् । रावयति । लिट्लकारे । रावयाञ्चकार । 'ञेः' राव्यात् । रावयिता । लुङ्लकारे । अङ्प्रत्ययः द्वित्वादिकम् । अन्यत्पूर्ववत् कार्यं भवति । अरीरवत् अरीरवताम् अरीरवन् । इत्यादीनि ॥

**लूञ् छेदने । अलीलवत् ॥**

लूञ् छेदने । 'धातोः प्रेरणे' एकः लुनाति तमन्यः प्रेरयति । लावयति । लावयेत् । लावयतु । अलावयत् । लावयाञ्चकार । लाव्यात् । 'सिसता०' । लावयिता । लावयिष्यति । अलावयिष्यत् । लुङ्लकारे । अलीलवत् अलीलवताम् अलीलवन् ॥

**जु गतौ । अजीजवत् ॥**

जु गतौ । 'धातोः प्रेरणे' । जावयति । लिट्लकारे जावयाञ्चकार । जाव्यात् । [ लिट्लकारे साधनं सुगमम् ? । ] अजीजवत् अजीजवताम् अजीजवन् । इत्यादीनि रूपाणि भवन्ति । एषां धातूनां लुङ्लकारे द्वित्वनिमित्ते स्वरे स्वरादेशो न भवति । तस्मात्पूर्वं द्वित्वं भवति । पश्चाद्वृद्धिः ॥

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम् ॥ अङ्सयोः पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे ॥ असिस्रवत्-असुस्रवत् ॥**

स्रु स्रवे । एकः स्रवति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । अन्यत् सुगमम् । स्रावयति । लिट्लकारे । आम् प्रत्ययः । स्रावयाञ्चकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । पूर्वस्य । 'ञेः' अनेन ञेर्लोपो भवति । असुस्रव् अङ् दिप् इति जाते । 'अङि लघौ' ॥ सूत्रम्—'स्रवति०' स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां धातूनां अङ्सयोः परयोः पूर्वस्य इत्वं वा भवति अवर्णपरे धात्वक्षरे परे । अनेन पूर्वस्य इकारः । असिस्रवत् असिस्रवताम् असिस्रवन् । इत्वाभावपक्षे—असुस्रवत् असुस्रवताम् असुस्रवन् ॥

**अशिश्रवत्-अशुश्रवत् ॥**

श्रु श्रवणे । शृण्वन्तं प्रेरयति । 'धातोः प्रेरणे' 'धातोर्नामिनः' । श्रावयिति । श्रावयेत् श्रावयतु । अश्रावयत् । लिट् । 'कासादि०' अनेनाम् । श्रावयाञ्चकार । 'ञेः' श्राव्यात् । 'सिसता०' । श्रावयिता । श्रावयिष्यति । अश्रावयिष्यत् । लुङ् । 'ञेरङ् द्विश्च' । 'पूर्वस्य हसादिः' । 'धातोर्नामिनः' । 'ञेः' । 'अङि लघौ' 'स्रवतिशृणोति०' अनेन पूर्वस्येत्वम् । अशिश्रवत् अशिश्रवताम् अशिश्रवन् । इत्वाभावपक्षे साधनं पूर्वसदृशम् । अशुश्रवत अशुश्रवताम् अशुश्रवन् ॥

**अदिद्रवत्-अदुद्रवत् ॥**

द्रु गतौ । 'धातोः प्रेरणे' । द्रावयति । चतुर्णां सुगमानि । लिट् । द्रावयांचकार । लुङ्लकारे । 'स्रवति०' । अनेन पूर्वस्य वा इत्वम् । अदिद्रवत् अदिद्रवताम् अदिद्रवन् । इत्वाभावपक्षे अदुद्रवत् अदुद्रवताम् अदुद्रवन् ॥

**हनो घत् ॥ हन्तेर्घदादेशो भवति ञिणति णपूवर्जिते परतः ॥ घातयति । अजीघतत् ॥**

हन् हिंसागत्योः । घ्नन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' हन् ञि इति जाते । 'हनो घत्' हनः घत् । द्विपदम् । हन्तेर्धातोर्घदादेशो भवति णपूवर्जिते ञिणति प्रत्यये परतः । अनेन घदादेशः । 'अत उपधायाः' । 'स धातुः' । घातयति । घातयेत् । घातयतु । अघातयत् । लिट् । 'कासादि०' । घातयांचकार । 'ञेः' । घात्यात् । 'सिसता०' । घातयिता । घातयिष्यति । अघातयिष्यत् । लुङ्लकारे । घात् ञि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । 'कुहोश्चुः' 'झपानाम्०' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'दिबादावट्' । अजीघतत् अजीघतताम् अजीघतन् । इत्यादीनि ॥

**शद्लृ शातने ॥ शदेः शत् ॥ शदेः शतादेशो भवति अगतौ ञौ परे ॥ शातयति । गतौ तु शादयति । अशीशतत् ॥**

शद्लृ शातने शदन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' ॥ 'शदेः शत्' । शदेर्धातोः शतादेशो भवति अगतौ ञौ परे । 'अत उपधायाः' । शातयति । लिट् । शातयांचकार । लुङि साधनं तु पूर्ववत् । अशीशतत् अशीशतताम् अशीशतन् । गतौ तु । शादयति । अशीशदत् ॥

**रातो ञौ पुक् च ॥ डुदाञ् दाने । दापयति । अदीदपत् ॥**

डुदाञ् दाने । ददतं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' । 'रातो ञौ पुक् च' अनेन पुगागमः । दापयति । लिट् । दापयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । ह्रस्वः । 'अङि लघौ' । 'लघोर्दीर्घः' । अदीदपत् ॥

**धापयति अदीधपत् ॥**

डुधाञ् धारणपोषणयोः । दधतं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' । 'रातो ञौ पुक् च' । धापयति । धापयांचकार । लुङ् । 'झपानाम्–' अनेन दस्य धः । अन्यत्पूर्ववत् । अदीधपत् अदीधपताम् अदीधपन् ॥

**पुगन्तस्य गुणो वक्तव्यः ॥ अर्पयति । स्वरादेः परः । आर्पिपत् ।**

ऋ गतौ । ऋच्छन्तं प्रेरयति इति विग्रहे । 'धातोः प्रेरणे' 'ञौ पुक् च' । ऋप् ञि इति जाते सूत्रम् । 'पुगन्तस्य०' पुगन्तस्य धातोर्गुणो वक्तव्यः । अनेन गुणः । अर्पयति । लिट् अर्पयांचकार । 'ञेः' । अर्प्यात् । 'सिसता०' । अर्पयिता । लुङ्लकारे । अर्पि दिप् इति

स्थिते । 'ञेरङ् द्विश्च' । 'स्वरादेः परः' । 'नदराः' अनेन रकारस्य द्वित्वं न भवति । 'ञेः' 'दिबादावट्' 'स्वरादेः' 'सवर्णे०' आर्पिपत् आर्पिपताम् आर्पिपन् ॥

**ष्ठा गतिनिवृत्तौ । स्थापयति ॥ तिष्ठतेरुपधाया इकारो वक्तव्योऽङि परे ॥ ततो द्वित्वम् । अतिष्ठिपत् ॥**

ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' । 'धातोः प्रेरणे' । तिष्ठन्तं प्रेरयति इति विग्रहे ञिः प्रत्ययः । 'रातो ञौ पुक् च' । स्थापयति । स्थापयांचकार । 'ञेः' । स्थाप्यात् । 'सिसता०' । स्थापयिता । स्थापयिष्यति । अस्थापयिष्यत् । लुङ्लकारे । स्थाप् ञि दिप् इति स्थिते । 'ञेरङ् द्विश्च' । 'ञेः' ॥ सूत्रम्—'तिष्ठतेः' तिष्ठतेर्धातोरुपधाया इकारो वक्तव्यः अङि परे । ततः द्वित्वं भवति । 'झसात् खपाः' । अतिष्ठिपत् अतिष्ठिपताम् अतिष्ठिपन् । अतिष्ठिपः अतिष्ठिपतम् अतिष्ठिपत इत्यादीनि ॥

**पादेर्युक् ॥ पाशाछासाह्वेञ्व्येञां युगागमो भवति ञौ परे ॥ पाययति ॥ पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ ॥ अपीप्यत् ॥**

पा पाने । पिबन्तं प्रेरयति इति विग्रहे 'धातोः प्रेरणे' अनेन ञिप्रत्ययः । पा ञि इति जाते । सूत्रम्—'पादेर्युक्' पादेः युक् ॥ पाशाछासाह्वेञ्व्येञामेतेषां धातूनां युगागमो भवति ञिप्रत्यये परे । पुकोऽपवादः । पाय् ञि इति जाते । 'स धातुः' अन्यत्साधनं पूर्ववत् । पाययति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । पाययांचकार । 'ञेः' । पाय्यात् । 'सिसता०' । पाययिता । पाययिष्यति । अपाययिष्यत् । अपापाय् ञि अङ् दिप् । 'ञेः' अनेन ञेर्लोपो भवति ॥ सूत्रम्—'पिबतेः०' । पिबतेर्धातोरङि पूर्वस्य ईकारोपधालोपौ वक्तव्यौ । सुगममिदं सूत्रम् । अनेन पूर्वस्य ईकारो भवति उपधालोपश्च । अपीप्यत् अपीप्यताम् अपीप्यन् । इत्यादीनि ॥

**शो तनूकरणे । सन्ध्यक्षराणामा । शाययति । अशीशयत् ॥**

शो तनूकरणे । 'सन्ध्यक्षराणामा०' । श्यन्तं प्रेरयति । 'पादेर्युक्' । अन्यत्साधनं सुगमम् । शाययति । लिट्लकारे । शाययाञ्चकार । 'ञेः' । शाय्यात् । 'सिसता०' । शाययिता । शाययिष्यति । अशाययिष्यत् । शाय् ञि दिप् इति जाते । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'दिबादावट्' । अशीशयत् अशीशयताम् अशीशयन् ॥

**छो छेदने । अचीछयत् ॥**

छो छेदने । 'सन्ध्यक्षराणामा०' । एकः छ्यति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'पादेर्युक्' । अनेन युगागमो भवति । छाययति । छाययांचकार । 'ञेः' । छाय्यात् । 'सिसता०' । छाययिता । छाययिष्यति । अच्छाययिष्यत् । लुङ्लकारे । 'झपानाम्०' । अनेन छकारस्य चकारः । अन्यत्साधनं सुगमम् । अचीच्छयत् अचीच्छयताम् अचीच्छयन् ॥

**षोऽन्तकर्मणि । साययति । असीषयत् ॥**

षो अन्तकर्मणि । 'आदेः ष्णः स्नः' । 'सन्ध्यक्षराणामा' । एकः स्यति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'पादेर्युक्' । साययति । साययांचकार । 'ञेः' । साय्यात् । 'सिसता०' । साययिता । साययिष्यति । असाययिष्यत् । लुङ्लकारेऽपि पूर्ववत् साधनम् । असीषयत् असीषयताम् असीषयन् । इत्यादीनि ॥

**ह्वेञ् स्पर्धायाम् ॥ ह्वयतेरङि संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये ॥ अजुहावत् अजूहवत् अजूहवताम् ॥**

ह्वेञ् स्पर्धायाम् । एको ह्वयति तमन्यः प्रेरयति । 'सन्ध्यक्ष०' । 'धातोः प्रेरणे' । 'पादेर्युक्' । ह्वाययति । ह्वाययांचकार । लुङ्लकारे ॥ सूत्रम्—'ह्वयतेः०' ह्वयतेर्धातोरङि परे सति संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेर्धातोरङि क्रमाद्गुणवृद्धी वाच्ये । 'कुहोश्चुः' । अनेन हस्य जः । अजुहावत् अजुहावताम् अजुहावन् । गुणे कृते सति । अजुहवत् अजुहवताम् अजुहवन् ॥

**व्येञ् संवरणे । व्याययति । अविव्ययत् ॥**

व्येञ् संवरणे । 'सन्ध्यक्षराणामा०' । 'पादेर्युक्' । एको व्ययति तमन्यः प्रेरयति व्याययति । व्याययाञ्चकार । लुङ्लकारे । व्याय् ञि दिप् इति जाते । 'ञेरङ् द्विश्च' । 'ञेः' । 'पूर्वस्य०' । 'अङि लघौ' । अवीव्ययत् अवीव्ययताम् अवीव्ययन् ॥

**वेञ् तन्तुसंताने । वाययति अवीवयत् ॥**

वेञ् तन्तुसंताने । एको वयति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'सन्ध्यक्ष०' । 'पादेर्युक्' । वाययति । लिट्लकारे । 'कासादि०' अनेनाम्प्रत्ययो भवति । वाययांचकार । 'ञेः' । वाय्यात् । 'सिसता०' । वाययिता । वाययिष्यति । अवाययिष्यत् । लुङ्लकारे पूर्वोक्तैरेव सूत्रै रूपाणां सिद्धिः । अवीवयत् अवीवयताम् अवीवयन् ।

**पातेर्ञौ लुग्वक्तव्यः ॥ युकोऽपवादः । पालयति । अपीपलत् ॥**

पा रक्षणे । 'धातोः प्रेरणे' ॥ सूत्रम्—'पातेः०' । पातेर्धातोर्ञिप्रत्यये परे लुगागमो वक्तव्यः । युकोऽपवादः । पालयति । लिट् । पालयांचकार । लुङ् । अपीपलत् अपीपलताम् । अपीपलन् ॥

**रभ राभस्ये । रभसो वेगहर्षयोः ॥ रभलभोः स्वरे णाद्यपो विना नुम्वाच्यः ॥ रम्भयति । अररम्भत् ॥**

रभ राभस्ये वेगहर्षार्थयोः । सूत्रम्—'रभलभोः०' । रभलभोर्णाद्यपौ विना स्वरे परे नुम् वाच्यः । 'नश्चापदान्ते' । 'धातोः प्रेरणे' । रम्भयति । लिट्लकारे रम्भयांचकार । 'ञेः' । रम्भ्यात् । 'सिसता०' रम्भयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । अनेनाङ्प्रत्ययः । धातोर्द्वित्वम् । अङ्कार्यं न स्यात् । अररम्भत् अररम्भताम् अररम्भन् । इत्यादीनि ॥

**डुलभष् प्राप्तौ । लम्भयति । अललम्भत् ॥**

डुलभष् प्राप्तौ । डुकारषकारावितौ । 'धातोः प्रेरणे' । 'रभलभोः' । अनेन नुम् । अन्यत्साधनं पूर्ववत् । लम्भयति । लिट्लकारे । लम्भयांचकार । 'सिसता' । लम्भयिता । लुङ्लकारे । अललम्भत् । अललम्भताम् अललम्भन् ॥

**प्रीञ् तर्पणे ॥ प्रीञ्धूञोर्नुक् ॥ अनयोर्नुगागमो भवति णौ परे ॥ प्रीणयति । अपिप्रिणत् ॥**

प्रीञ् तर्पणे । 'धातोः प्रेरणे' । एकः प्रीणाति । तमन्यः प्रेरयति ॥ सूत्रम्—'प्रीञ्धूञोर्नुक्' प्रीञ् च धूञ् च प्रीञ्धूञौ तयोः प्रीञ्धूञोः नुक् अनयोः प्रीञ्धूञोर्धात्वोर्नुगागमो भवति । ञिप्रत्यये परे णत्वं भवति । प्रीणयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'पूर्वस्य ह्रस्वः' । 'अङि लघौ' । अनेनोपधाया ह्रस्वः । अपिप्रिणत् अपिप्रिणताम् अपिप्रिणन् ॥

**धूञ् कम्पने । धूनयति । अदुधूनत् ॥**

धूञ् कम्पने । 'धातोः प्रेरणे' । 'प्रीञ्धूञोर्नुक्' । धूनयति । धूनयांचकार । धून्यात् । धूनयिता । लुङ्लकारे । 'ञेरङ्' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'झपानाम्०' । अदूधुनत् अदूधुनताम् । अदूधुनन् ॥

**स्मिङ् ईषद्धसने ॥ स्मयतेरात्वं णौ वाच्यम् ॥ विस्मापयते । असिष्मपत । आति किम् । विस्माययति । असिष्मयत् ॥**

स्मिङ् ईषद्धसने । एकः स्मयति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । सूत्रम्—'स्मयतेः०' स्मयतेर्धातोरात्वं वा भवति ञिप्रत्यये परे । अनेनात्वं वा । स्मापयते । अत्र 'रातो णौ पुक्' । अनेन पुक् । स्मापयांचकार । लुङ्लकारे । पूर्वस्येकारः । षत्वम् । असिष्मपत असिष्मपेताम् असिष्मपन्त । आत्वाभावपक्षे वृद्धिः । 'ऐआय्' । विस्माययति । विस्माययाञ्चकार । लुङ्लकारे । असिष्मयत् असिष्मयताम् असिष्मयन् । साधनं सुगमम् ॥

**रुहेर्णौ पो वा वाच्यः ॥ रुह बीजजन्मनि प्रादुर्भावे च । रोहयति । रोपयति । अरूरुहत्-अरूरुपत् ॥**

रुह बीजजन्मनि प्रादुर्भावे च । 'धातोः प्रेरणे' । सूत्रम्—'रुहेः' रुहेर्धातोर्ञिप्रत्यये परे पो वा वाच्यः । 'षष्ठी' अनेनान्त्यस्यैव । 'उपधायाः' अनेन गुणः । रोपयति । रोपयाञ्चकार । लुङ्लकारे अङ्कार्यं भवति । अरूरुपत् अरूरुपताम् अरूरुपन् । पत्वाभावपक्षे । रोहयति । रोहयाञ्चकार । अङ्कार्यं सर्वं भवति । अरूरुहत् अरूरुहताम् अरूरुहन् ॥

**कृपू सामर्थ्ये । कृपो रो लः । कल्पयति ॥ उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः ॥ इररारामपवादः । अचीक्लृपत्-अचकल्पत् ॥**

कृपू सामर्थ्ये । 'धातोः प्रेरणे' । गुणो भवति । 'कृपो रो लः' अनेन रकारस्य लः । कल्पयति । कल्पयांचकार । 'ञेः' कल्प्यात् । 'सिसता–' । कल्पयिता ॥ 'उपधाया ऋवर्णस्य०' । अचीक्लृपत् । विकल्पेन । अचकल्पत् । अत्राङ्कार्यं न भवति अचकल्पताम् अचकल्पन् ॥

---

१ पाणिनीयानां तु प्रयोजकात्स्मये आत्मनेपदम् आत्वं च भवति ॥ अन्यत्र नेति विकल्पः फलति ।

वृतु वर्तने । वर्तयति । अवीवृतत्-अववर्तत् ॥

वृतुङ् वर्तने । 'धातोः प्रेरणे' । 'उपधाया लघोः' । वर्तयति । वर्तयांचकार । 'उपधाया ऋवर्णस्य०' । अनेन वा ऋकारस्य ऋकारः । यदा ऋकारस्तदा अङ्कार्यं भवति । अवीवृतत् अवीवृतताम् अवीवृतन् । ऋकाराभावपक्षे अङ्कार्यं न भवति । सूत्रप्रास्यभावात् । अववर्तत् अववर्तताम् अववर्तन् ॥

मृजूष् शुद्धौ । मार्जयति । अमीमृजत् अममार्जत् ॥

मृजूष् शुद्धौ । 'धातोः प्रेरणे' । 'मृजेः' अनेन वृद्धिः । मार्जयति । लिट्लकारे । 'कासादि०' अनेनाम् । मार्जयांचकार । अन्येषां सुगमानि । लुङ्लकारे । 'उपधायाः' । अन्यत्साधनं सुगमम् । अमीमृजत् अमीमृजताम् अमीमृजन् । 'मृजेः' अनेन वृद्धिः । अममार्जत् अममार्जताम् अममार्जन् ॥

इङादेर्णौ पुक् च ॥ इङ्क्रीजीनामात्वं भवति णौ परे ह्रीव्लीरीक्नूयीक्ष्मायीनां पुगागमो भवति णौ परे ॥ इङ् अध्ययने । अध्यापयति । अध्यापिपत् ॥ अङ्परे णौ इङो गाङ् वा वक्तव्यः ॥ अध्यजीगपत् ॥

इङ् अध्ययने । 'धातोः प्रेरणे' ॥ सूत्रम्—'इङादेर्णौ पुक् च' ॥ इङादेः णौ पुक् च । इङ्क्रीजीनां धातूनां णिप्रत्यये परे आत्वं भवति पुक् च भवति । ह्रीव्लीरीक्नूयीक्ष्मायीनां धातूनां णिप्रत्यये पुगागमो भवति । एकोऽधीते तमन्यः प्रेरयति । 'इ यं स्वरे' । अध्यापयति । अध्यापयांचकार । लुङ्लकारे । 'अङि लघौ' अनेन पूर्वस्येकारः । अध्यापिपत् अध्यापिपताम् अध्यापिपन् ॥ 'अङ्परे०' अङ्परे णिप्रत्यये परे इङो धातोर्गाङ् वा वाच्यः । अनेन गा इत्यादेशः । पुगागमः । ततो द्वित्वम् । 'कुहोश्चुः' । 'अङि लघौ' । 'लघोर्दीर्घः' । अध्यजीगपत् अध्यजीगपताम् अध्यजीगपन् ॥

डुक्रीञ् द्रव्यविनिमये । क्रापयति अचिक्रपत् ॥

डुक्रीञ् द्रव्यविनिमये । एकः क्रीणाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' 'इङादेर्णौ पुक्' अनेनात्वपुकौ । क्रापयति । लिट् । आम्प्रत्ययः । क्रापयांचकार । 'णेः' । क्राप्यात् । 'सिसता०' । क्रापयिता । क्रापयिष्यति । अक्रापयिष्यत् । लुङ्लकारे । 'णेरङ् द्विश्च' । 'अङि लघौ' । अचिक्रपत् अचिक्रपताम् अचिक्रपन् ॥

जि जये । जापयति । अजीजिपत् ॥

जि जये । एको जयति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । आत्वपुकौ । जापयति । लिट्लकारे । जापयांचकार । 'णेः' । जाप्यात् । 'सिसता०' । जापयिता । जापयिष्यति । अजापयिष्यत् । लुङ्लकारे । 'णेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । अजीजपत् अजीजपताम् अजीजपन् ॥

ह्री लज्जायाम् । ह्रेपयति । अजीह्रिपत् ॥

ह्री लज्जायाम् । एको जिह्रेति । तमन्यः प्रेरयति । 'धातोः प्रेरणे' । पुग् भवति । गुणः ।

ह्रेपयति । ह्रेपयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'कुहोश्चुः' । अजिह्रिपत् अजिह्रिपताम् अजिह्रिपन् ॥

**ब्ली वरणे । ब्लेपयति । अबीब्लिपत् ॥**

ब्ली वरणे । 'धातोः प्रेरणे' । पुक् । गुणः । अन्यत्सर्वं पूर्ववत् । ब्लेपयति । ब्लेपयांचकार । 'ञेः' । ब्लेप्यात् । 'सिसता०' । ब्लेपयिता । ब्लेपयिष्यति । अब्लेपयिष्यत् । लुङ्लकारे । 'ञेरङ्द्विश्च' । 'अङि लघौ' । अबिब्लित् अबिब्लिपताम् अबिब्लिपन् ॥

**रीङ् क्षरणे । रेपयति । अरीरिपत् ॥**

रीङ् क्षरणे । 'धातोः प्रेरणे' । पुक् । गुणः । रेपयति । रपेयांचकार । 'ञेः' । रेप्यात् । रेपयिता । लुङ्लकारे । पूर्ववत् साधना । अरीरिपत् अरीरिपताम् अरीरिपन् ॥

**क्नूयी दुर्गन्धे ॥ यवयोर्वसे हकारे च लोपो वक्तव्यः ॥ क्नोपयति । अचुक्नुपत् ॥**

क्नूयी दुर्गन्धे । ईकार इत् । 'धातोः प्रेरणे' । 'ञौ परे' पुगागमः ॥

'यवयोः०' अनेन यकारस्य लोपः । गुणः । क्नोपयति । क्नोपयांचकार । 'ञेः' । क्नोप्यात् । 'सिसता०' । क्नोपयिता । क्नोपयिष्यत् । क्नोपयिष्यति । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'कुहोश्चुः' । अचुक्नुपत् अचुक्नुपताम् अचुक्नुपन् ॥

**क्ष्मायी विधूनने । एकः क्ष्मायति तमन्यः प्रेरयति क्ष्मापयति अचिक्ष्मपत् ॥**

क्ष्मायी विधूनने । 'धातोः प्रेरणे' । पुगागमः । 'यवयोः' । अनेन यकारस्य लोपः । क्ष्मापयति । क्ष्मापयांचकार । क्ष्माप्यात् । 'सिसता०' । क्ष्मापयिता । क्ष्मापयिष्यति । अक्ष्मापयिष्यत् लुङ्लकारे । 'ञेरङ् द्विश्च' पूर्वस्य । 'अङि लघौ' । 'कुहोश्चुः' । अचिक्ष्मपत् अचिक्ष्मपताम् अचिक्ष्मपन् ॥

**लीङ् श्लेषणे ॥ लीयतेर्ञावात्वं वा ॥ विलापयति व्यलीलपत् ॥ [लीलोः पुग् वक्तव्यः ॥ विलेपयति व्यलीलिपत् ॥] लीलोर्ञौ क्रमान्नुग्लुकौ वा ॥ विलीनयति । व्यलीलिनत् ॥**

लीङ् श्लेषणे । एको लिनाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' ॥ सूत्रम्—'लीयतेः०'॥ लीयतेर्धातोर्ञौ परे आत्वं वा भवति । 'रातो ञौ पुक् च' । विपूर्वोऽयम् । विलापयति । विलापयांचकार । विलाप्यात् । 'सिसता०' । विलापयिता । लुङ्लकारे । व्यलीलपत् व्यलीलपताम् व्यलीलपन् [ सूत्रम्[1]—'लीलोः०' ॥ ली ला एतयोर्धात्वोः पुग् वक्तव्यः । तदा विलेपयति । विलेपयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । व्यलीलिपत् व्यलीलिपताम् व्यलीलिपन् ॥ ] सूत्रम्—'लीलोः०' ॥ ली ला एतयोर्धात्वोः क्रमात् नुग्लुकौ वा भवतः । तदा विलीनयति । विलीनयांचकार । विलीन्यात् । 'सिसता०' । विलीनयिता । विलीनयिष्यति । लुङ्लकारे । पूर्वसूत्रैरेतद्रूपाणां सिद्धिः । व्यलीलिनत् व्यलीलिनताम् व्यलीलिनन् ॥

**ला ग्रहणे । लापयति । अलीलपत् ॥ लालयति । अलीललत् अलीललताम् ॥**

१-२ पाणिनीयानां त्वेतन्न संमतम् ।

ला ग्रहणे । एको लाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । पुक् । लापयति । लापयांचकार । लाप्यात् । लापयिता । लापयिष्यति । अलापयिष्यत् । लुङ्लकारे । अलीलपत् अलीलपताम् अलीलपन् ॥ लुगागमे कृते सति । लालयति । लालयांचकार । लाल्यात् । 'सिसता०' । लालयिष्यति । लुङ्लकारे 'ञेरङ् द्विश्च' । 'अङि लघौ' 'लघोर्दीर्घः' । अलीललत् अलीललताम् अलीललन् ॥

**न रितः ॥ ऋकारेतोऽनेकस्वरस्य शासश्चङि उक्तं कार्यं न भवति ॥ ढौकृ गतौ । ढौकयति अडुढौकत् ॥**

ढौकृ गतौ । ऋकार इत् । एको ढौकति तमन्यः प्रेरयति । 'धातोः प्रेरणे' ढौकयति । चतुर्णी सुगमानि । ढौकयांचकार । 'ञेः' । ढौक्यात् । 'सिसता०' । ढौकयिता । ढौकयिष्यति । अढौकयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' ॥ सूत्रम्—'न रितः' ॥ न ऋ इत् यस्यासौ रित् तस्य रितः ऋकारानुबन्धस्य अनेकस्वरस्य च शासो धातोरङि प्रत्यये परे 'अङि लघौ' 'लघोर्दीर्घः' इति द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । ह्रस्वः । 'झपानाम्०' अडुढौकत् अडुढौकताम् अडुढौकन् इत्यादीनि ॥

**टुयाचृ याञ्चायाम् । याचयति । अययाचत् ॥**

टुयाचृ याञ्चायाम् । ऋकार इत् । 'धातोः प्रेरणे' । याचयति । याचयांचकार । 'ञेः' याच्यात् । 'सिसता०' । याचयिता । याचयिष्यति । अयाचयिष्यत् । लुङ्लकारे । 'न रितः' अन्यत्सुगमम् । साधनं पूर्ववत् । अययाचत् अययाचताम् अययाचन् ॥

**शासु अनुशिष्टौ । शासयति । अशशासत् ॥**

शासु अनुशिष्टौ । एकः शास्ति तमन्यः प्रेरयति । 'धातोः प्रेरणे' शासयति । शासयांचकार । शासयिता । लुङ् । 'न रितः' । अशशासत् अशशासताम् अशशासन् ॥

**दरिद्रा दुर्गतौ । दरिद्रयति । अददरिद्रत् अददरिद्रताम् ॥**

दरिद्रा दुर्गतौ । एको दरिद्राति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । 'णप् वुण्'—अनेन आकारस्य लोपः—दरिद्रयति । लिट्लकारे । 'कासादि०' दरिद्रयांचकार । 'ञेः'—दरिद्र्यात् । 'सिसता०–' दरिद्रयिता । दरिद्रयिष्यति । अदरिद्रयिष्यत् । लुङ्लकारे—'न रितः' 'सस्वरादिः' । अददरिद्रत् अददरिद्रताम् अददरिद्रन् ॥

**दुष वैकृत्ये ॥ दुषेर्ञौ वा दीर्घो वक्तव्यः ॥ दूषयति दोषयति । अदूदुषत् ॥**

दुष वैकृत्ये । 'धातोः प्रेरणे' ॥ सूत्रम्—'दुषेः०' ॥ दुषेर्धातोर्ञिप्रत्यये परे वा दीर्घः । दूषयति । दूषयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' 'अङि लघौ' 'लघोर्दीर्घः' । अदूदुषत् अदूदुषताम् अदूदुषन् । दीर्घाभावपक्षे दोषयति । दोषयांचकार । 'ञेः' । दोष्यात् । 'सिसता०–' दोषयिता । दोषयिष्यति । अदोषयिष्यत् । लुङ्लकारे—पूर्वसूत्रैरेव सिद्धिः । अदूदुषत् अदूदुषताम् अदूदुषन् ॥

**घट चेष्टायाम् ॥ मितां ह्रस्वः ॥ धातुपाठे मित इत्येवं पठितानां धातूनां ह्रस्वो भवति ञौ परे । घटयति । अजीघटत् ॥**

घट चेष्टायाम् । 'धातोः प्रेरणे' । 'अत उपधायाः' । 'मितां ह्रस्वः' अनेन ह्रस्वः । घटयति । लिट्लकारे 'कासादि०' । अनेनाम् । घटयांचकार । 'ञेः' । घट्यात् । 'सिसता०' । घटयिता । घटयिष्यति । अघटयिष्यत् । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । 'ज्ञपानाम्०' । अजीघटत् । अजीघटताम् । अजीघटन् ॥

**व्यथ दुःखभयचलनयोः । व्यथयति । अवीव्यथत् ॥ एवं पञ्चपञ्चाशतो रूपम् ॥**

व्यथ दुःखभयचलनयोः । एको व्यथति तमन्यः प्रेरयति 'धातोः प्रेरणे' । 'अत उपधायाः' । 'मितां ह्रस्वः' अनेन ह्रस्वो भवति । अन्यत्सुगमम् । व्यथयति । लिट्लकारे आम्प्रत्ययो भवति । व्यथयांचकार । 'ञेः' व्यथ्यात् । 'सिसता०'—व्यथयिता । व्यथयिष्यति । अव्यथयिष्यत् । लुङ्लकारे—'ञेरङ्द्विश्च' । 'पूर्वस्य'—'अङि लघौ' । अवीव्यथत् अवीव्यथताम् अवीव्यथन् ॥

**जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ॥ एतेऽपि मितः ॥ जनयति । अजीजनत् ॥**

जनी प्रादुर्भावे । एको जायते तमन्यः प्रेरयति । 'धातोः प्रेरणे' । वृद्धिः । 'मितां ह्रस्वः' । जनयति । लिट्लकारे—'कासादि०' । जनयांचकार । 'ञेः'—जन्यात् । 'सिसता०' जनयिता । जनयिष्यति । अजनयिष्यत् । लुङ्लकारे—'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । अजीजनत् अजीजनताम् अजीजनन् । इत्यादीनि ॥

**जॄष् वयोहानौ । ष् इत् । जरयति । अजीजरत् ॥**

जॄष् वयोहानौ । ष् इत् । 'धातोः प्रेरणे' । एको जॄणाति तम्० । 'धातोर्नामिनः' अनेन वृद्धिः । 'मितां ह्रस्वः' । अन्यत्सुगमम् । जरयति । जरयांचकार । 'ञेः'—जर्यात् । 'सिसता०' जरयिता । जरयिष्यति । अजरयिष्यत् । लुङ्लकारे—त्रिसूत्रैः कार्यसिद्धिः । अजीजरत् अजीजरताम् अजीजरन् ॥

**क्नसु ह्वरणदीप्त्योः । क्नसयति । अचिक्नसत् ॥**

क्नसु ह्वरणदीप्त्योः । 'धातोः प्रेरणे' । वृद्धिः । 'मितां ह्रस्वः' । क्नसयति । क्नसयांचकार । 'ञेः' । क्नस्यात् । 'सिसता०'— क्नसयिता । क्नसयिष्यति । अक्नसयिष्यत् । लुङ्लकारे—'ञेरङ् द्विश्च' । 'अङि लघौ' । अचिक्नसत् अचिक्नसताम् अचिक्नसन् ॥

**रञ्ज रागे ॥ रञ्जेर्ञौ मृगरमणेऽर्थे नलोपो वाच्यः ॥ रजयति मृगान् । अरीरजत् ॥**

रञ्ज रागे । एको रज्यतितम्० । 'धातोः प्रेरणे' ॥ सूत्रम्—'रञ्जेर्ञौ' रञ्जेर्धातोर्मृगरमणेऽर्थे नकारस्य लोपो वाच्यः । अनेन सूत्रेण नकारस्य लोपो भवति । 'अत उपधायाः' । 'मितां ह्रस्वः' । रजयति । रजयांचकार । 'ञेः'—रज्यात् । 'सिसता०' । रजयिता । रजयिष्यति । अरजयिष्यत् । लुङ्लकारे—त्रिसूत्रैः कार्यसिद्धिः प्रायः । अरीरजत् अरीरजताम् अरीरजन् । मृगरमणाभावेऽर्थे नकारस्य लोपो न भवति । रञ्जयति । रञ्जयांचकार । अररञ्जत् अररञ्जताम् अररञ्जन् ॥

**शम दम उपशमने । शमयति । अशीशमत् । दमयति अदीदमत् ॥**

शम् दम् उपशमे । एकः शाम्यति तम्० । 'धातोः प्रेरणे' । 'मितां ह्रस्वः' । शमयति । शमयांचकार । 'ञेः' । शम्यात् । 'सिसता०' । शमयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । 'लघोर्दीर्घः' । अशीशमत् अशीशमताम् अशीशमन् ॥ दमयति । दमयांचकार । अदीदमत् अदीदमताम् अदीदमन् । एतेषां रूपाणां पूर्वोक्तैरेव सूत्रैः सिद्धिः ॥

**जानातेर्ञौ वा ह्रस्वः ॥ ज्ञाऽवबोधने । एकः जानाति तमन्यः प्रेरयतीति ज्ञपयति । अजिज्ञपत् ॥**

ज्ञा अवबोधने । 'धातोः प्रेरणे' । एको जानाति तमन्यः प्रेरयति ॥ 'जानातेः०' । जानातेर्धातोर्ञिप्रत्यये परे वा ह्रस्वो भवति । ज्ञपयति । अत्र प्रथमं पुकं कृत्वा पश्चात् ह्रस्वो भवति ॥ ह्रस्वाभावपक्षे । ज्ञापयति । ज्ञपयांचकार । ज्ञापयांचकार । लुङ्लकारे । तु । अजिज्ञपत् । त्रिसूत्रैः । अजिज्ञपताम् अजिज्ञपन् ॥

**ज्वलग्लास्नाश्च वा मितः ॥ ज्वल दीप्तौ । ज्वलयति ज्वालयति । अजिज्वलत् ॥**

ज्वल दीप्तौ । 'धातोः प्रेरणे' । एको ज्वलति तम्० । 'अत उपधायाः' ॥ सूत्रम्—'ज्वलग्लास्नाः०' ॥ ज्वलग्लास्ना एते धातवो वा मितो भवन्ति । 'मितां ह्रस्वः' । ज्वलयति । मित्त्वाभावे । ज्वालयति । ज्वलयांचकार । ज्वालयांचकार । 'ञेः' । ज्वल्यात् । ज्वाल्यात् । 'सिसता०' । ज्वलयिता । ज्वालयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । अजिज्वलत् अजिज्वलताम् अजिज्वलन् ॥

**ग्लै हर्षक्षये । ग्लपयति ग्लापयति । अजिग्लपत् ॥**

ग्लै हर्षक्षये । 'धातोः प्रेरणे' । 'संध्यक्षराणामा०' । 'रातो ञौ पुक् च' । 'ज्वल०' । अनेन वा मित्त्वम् । ग्लापयति । ग्लपयति । ग्लापयांचकार । ग्लपयांचकार । 'ञेः' । ग्लाप्यात् । ग्लप्यात् । 'सिसता०' । ग्लापयिता । ग्लपयिता । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अङि लघौ' । अजिग्लपत् अजिग्लपताम् अजिग्लपन् । इत्यादीनि ॥

**ष्णा शौचे । आदेः ष्णः स्नः । स्नापयति । स्नपयति । असिस्नपत् ॥**

ष्णा शौचे । एकः स्नाति तमन्यः प्रेरयति । 'धातोः प्रेरणे' । वा मित्त्वम् । 'रातो ञौ पुक् च' स्नपयति स्नापयति । लिट्लकारे । 'कासादि०' । स्नपयांचकार । स्नापयांचकार । लुङ्लकारे । 'पूर्वस्य' । 'अङि लघौ । असिस्नपत् असिस्नपताम् असिस्नपन् ॥

**ओस्फायी वृद्धौ ॥ स्फायो वकारः स्यात् ञौ परे । स्फावयति । अपिस्फवत् ॥**

ओस्फायी वृद्धौ । ओकारेकाराविती । 'धातोः प्रेरणे' ॥ सूत्रम्—'स्फायः०' ॥ स्फायो धातोर्वकारः स्यात् ञिप्रत्यये परे । 'षष्ठी' अनेनान्त्यस्यैव भवति । स्फावयति । लिट्लकारे—'कासादि०'—अनेनाम्प्रत्ययो भवति । स्फावयांचकार । 'ञेः'—'स्फाव्यात्' । 'सिसता०' ।

स्फावयिता। स्फावयिष्यति । अस्फावयिष्यत्। लुङ्लकारः। 'ञेरङ् द्विश्च' 'असात्०' 'झपानाम्०'। 'अङि लघौ'। अपिस्फवत् अपिस्फवताम्। अपिस्फवन्॥

**भियो ञौ वा षुगात्वे वाच्ये॥ भीषयति भापयति भाययति अबीभिषत् अबीभपत् अबीभयत्॥**

ञिभी भये। ञिकार इत्। एको बिभेति तम्०। 'धातोः प्रेरणे'॥ सूत्रम्—'भियः०'॥ भियो धातोर्ञिप्रत्यये परे षुगात्वे क्रमाद्भवतः। भीषयति । भीषयांचकार । लुङ्लकारे—'ञेरङ् द्विश्च'। 'झपानाम्०' । 'अङि लघौ' 'लघोर्दीर्घः'। अबीभिषत् अबीभिषताम् अबीभिषन्। आत्वे कृते। 'रातो ञौ पुक् च' भापयति। भापयांचकार। भाप्यात्। भापयिता। भापयिष्यति। लुङ्लकारे त्रिसूत्रैः पूर्वोक्तैरेव रूपसिद्धिः । अबीभपत् अबीभपताम् अबीभपन्। सूत्रे वाग्रहणं कृत्वा भाययति इति रूपमिच्छन्ति। भाययांचकार। लङ्लकारे पूर्वोक्तैरेव सूत्रैः सिद्धिः। अबीभयत् अबीभयताम् अबीभयन्॥

**व्यापारमात्रे ञिर्वक्तव्यः स च डित्॥ हलं गृह्णातीति हलयति॥**

**इति ञ्यन्तप्रक्रिया॥ २७॥**

सूत्रम्—'व्यापारमात्रे ञिप्रत्ययो वक्तव्यः स च डित्'॥ हलं गृह्णाति इति। अत्रानेन ञिः प्रत्ययो भवति। डित्त्वाट्टिलोपः। हलयति। लिट्लकारे—हलयांचकार। 'ञेः'। हल्यात् 'सिसता०'। हलयिता। हलयिष्यति। अहलयिष्यत्। लुङ्लकारे—'ञेरङ्द्विश्च'। 'अल्लोपिनः०' अनेनास्याङ्कार्यं न भवति। 'कुहोश्चुः'। अजहलत् अजहलताम् अजहलन्। इत्यादीनि रूपाणि भवन्ति। इति ञ्यन्तप्रक्रिया समाप्ता॥

---

## सप्रक्रिया २८

**अथ सप्रक्रिया निरूप्यते॥ इच्छायामात्मनः सः॥ धातोरिच्छायामर्थे सः प्रत्ययो भवति सा चेत्स्वसम्बन्धिनी, द्विश्च॥ भवितुमिच्छति॥ वुः से॥ उश्च आश्च वृ तस्मात् वुः । उवर्णान्तादृवर्णान्ताच्च ग्रहगुहोश्च से परे इट् न भवति॥ नानिटि से॥ इड्वर्जिते सप्रत्यये परे गुणो न भवति। स धातुः। धातुत्वादप्तिबादि। अदे॥ बुभूषति॥**

अथ सप्रक्रिया निरूप्यते ॥ सूत्रम् 'इच्छायामात्मनः सः' इच्छायां आत्मनः सः धातोरर्थसंबन्धिन्यामिच्छायां वाच्यमानायां इच्छारूपेऽर्थे वाच्ये सति सः प्रत्ययो भवति। सा चेच्छा स्वसंबन्धिनी चेत्, धातोर्द्वित्वं च भवति। भवितुमिच्छति इति विग्रहे अनेन सूत्रेण सः प्रत्ययः द्वित्वं च भवति। 'ह्रस्वः'। 'झपानाम्'। षत्वम्। नन्वत्र 'सिसता०' अनेनेट् कथं न क्रियते तत्राह॥ सूत्रम्—'वुः से'॥ उश्च ऋ च वृ तस्मात् वुः से अयं समासो बालबोधनार्थं दर्शितः। उवर्णान्तात् ऋवर्णान्तात् 'ग्रह उपादाने' 'गुहू संवरणे' इत्येताभ्यां परस्य स प्रत्ययस्य इडागमो न भवति। इति इडागमनिषेधः॥ नन्वत्र गुणः न क्रियते तत्राह॥ सूत्रम्—'नानिटि से'॥ अस्य सूत्रस्य व्याख्यानं कृतमस्ति । अनेन

गुणनिषेधः । बुभूष इति जाते । 'स धातुः' अनेन धातुत्वम् । धातुत्वात्तिबादयो भवन्ति । 'अप् कर्तरि' । 'अदे' बुभूषति । बुभूषेत् । बुभूषतु । अबुभूषत् । लिट्लकारे । 'कासादि०' अनेनाम् । बुभूषांचकार । 'यादादौ' । 'यतः' अनेन आकारस्य लोपः । बुभूष्यात् । 'सिसता०' । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्या साधना पूर्ववत् । अबुभूषीत् अबुभूषिष्टाम् अबुभूषिषुः ॥

**तॄ प्लवनतरणयोः ॥ नाम्यन्तात्परस्य सस्य कित्वं वाच्यम् ॥ ॠत इर् । तरितुमिच्छति तितीर्षति । अतितीर्षीत् ॥**

तॄ प्लवनतरणयोः । तरितुमिच्छतीति विग्रहे । 'इच्छायामात्मनः सः' अनेन सः प्रत्ययः धातोर्द्वित्वं च ॥ सूत्रम्—'नाम्यन्तात्०' ॥ नाम्यन्ताद्धातोः परस्य सस्य कित्वं वाच्यम् । 'ॠत इर्' अनेन इर् । पश्चाद्द्वित्वम् । 'य्वोर्विहसे' । षत्वम् । 'स धातुः' । तितीर्षति । लिट्लकारे । तितीर्षांचकार । 'सिसता०' । तितीर्षिता । लुङ् । अतितीर्षीत् अतितीर्षिष्टाम् अतितीर्षिषुः । इत्यादीनि ॥

**डुकृञ् करणे । कर्तुमिच्छति चिकीर्षति ॥ से दीर्घः ॥ से परे पूर्वस्य दीर्घो भवति ॥**

डुकृञ् करणे । स प्रत्ययः । 'नाम्यन्तात्०' । 'ॠत इर्' ततः द्वित्वम् । 'कुहोश्चुः' । 'य्वोर्विहसे' । 'नैकस्वरात्' । अनेन इण्निषेधः । चिकीर्षति । चिकीर्षांचकार । अचिकीर्षीत् अचिकीर्षिष्टाम् अचिकीर्षिषुः । ॠत इति तपरकरणात् ॠकारस्यैव इर् क्रियते ॥ [ स विधिः[1] सार्वत्रिको न । तेन ह्रस्वस्यापि ॠवर्णस्य इर् भवति ॥ ]

**चिञ् चयने ॥ चिनोतेः सणादौ कत्वं वा वाच्यम् ॥ चिकीषति चिचीषति ॥**

चिञ् चयने 'इच्छायाम्०' सूत्रम्—'चिनोतेः०' ॥ चिनोतेर्धातोः सप्रत्यये णादौ कत्वं वा वाच्यम्—अनेन चस्य कः । ततो द्वित्वम् । सूत्रम् 'से दीर्घः' सप्रत्यये परे पूर्वस्य दीर्घो भवति । 'नैकस्वरात्' षत्वम् । 'स धातुः' । चिकीषति । चिकीषांचकार । अचिकीष्यात् ॥ कत्वाभावे । से दीर्घः । अन्यत्साधनं तु पूर्ववत् । चिचीषति । चिचीषांचकार । अचिचीषीत् ॥

**जि जये । सपरोक्षयोर्जेर्गिः । जेतुमिच्छति जिगीषति ॥**

जि जये । 'इच्छायाम्' । 'सपरोक्षयोर्जेर्गिः' । अनेन जस्य गः ततः द्वित्वम् । 'कुहोश्चुः' । 'से दीर्घः' । षत्वम् । 'नैकस्वरात्०' अनेन सूत्रेण सर्वेषां एकस्वराणां धातूनां सप्रत्यये परे इड् न भवति इति ज्ञातव्यम् । जिगीषति । जिगीषांचकार । 'सिसता०' । जिगीषिता । अजिगीषीत् ॥

**यु मिश्रणे । युयूषति ॥**

यु मिश्रणे । 'इच्छायाम्०' । यवितुमिच्छति इति विग्रहे । सप्रत्ययः । धातोर्द्वित्वम् ।

---

[1] पूर्वं दीर्घे कृते इर् सिद्ध एवेति व्यर्थ एवायं ग्रन्थः ।

'से दीर्घः' । युयूषति । युयूषांचकार । 'यतः' । युयूष्यात् । 'सिसता' । युयूषिता । युयूषिष्यति । अयुयूषिष्यत् । अयुयूषीत् अयुयूषिष्टाम् अयुयूषिषुः ॥

डुपचष् पाके । यः से । पक्तुमिच्छति । पिपक्षति ॥

डुपचष् पाके । पक्तुमिच्छति इति विग्रहे । 'इच्छायाम्०' । द्वित्वं 'पूर्वस्य' । 'यः से' । 'चोः कुः' । 'किलात्०' । 'कषसंयोगे०' । 'स धातुः' । पिपक्षति । पिपक्षांचकार । 'यतः' । पिपक्ष्यात् । 'सिसता०' । पिपक्षिता । पिपक्षिष्यति । 'दिवादावट्' । अपिपक्षिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपक्षीत् अपिपक्षिष्टाम् अपिपक्षिषुः । इत्यादीनि भवन्ति ॥

पातुमिच्छति पिपासति ॥

पा पाने । पातुमिच्छति इति विग्रहे । 'इच्छायाम्०' । अनेन सप्रत्ययः धातोर्द्वित्वं च भवति । 'ह्रस्वः' । 'यः से' । पिपासति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम्प्रत्ययो भवति । पिपासांचकार । 'यतः' । पिपास्यात् । 'सिसता' । पिपासिता । पिपासिष्यति । अपिपासिष्यत् अपिपासीत् । अपिपासिष्टाम् अपिपासिषुः । एतेषां साधनं तु पूर्ववत् ॥

**गौणः प्रकृत्यर्थोऽन्यत्र सात् ॥ प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थः प्रधानीभूतः । अत्र सप्रत्यये तु वैपरीत्यं प्रकृत्यर्थः प्रधानीभूतः । तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन संबन्धो न त्विच्छया ॥**

ननु देवदत्तः काष्ठेन पिपक्षति । पक्तुमिच्छति इत्यत्र काष्ठेनेति साधनस्य किं पाकेन संबन्धः किं वा इच्छायाम् इत्याशङ्कायामाह—'गौणः प्रकृत्यर्थोऽन्यत्र सात्' ॥ सप्रत्ययादन्यत्र स्थाने अन्येषु प्रत्ययेषु प्रकृत्यर्थो धात्वर्थो गौणोऽमुख्यः । प्रत्ययार्थो मुख्यः । सप्रत्यये तु धातोरर्थो मुख्यः । अतोऽत्र काष्ठेन पिपक्षति इत्यत्र काष्ठेन साधनभूतेन यः पाकलक्षणो धात्वर्थस्तमिच्छति इत्यर्थः । अन्यथा पाकं काष्ठेन इच्छति इति स्यात् । अत्र इषुधातोरिच्छार्थस्य गौणत्वम् अतोऽत्र काष्ठस्य इच्छां प्रति साधनत्वाभावः । किंतु पाकलक्षणं प्रकृत्यर्थं प्रति साधनत्वम् ॥

मृङ् प्राणत्यागे । मर्तुमिच्छति मुमूर्षति । पोरुर् ॥

मृङ् प्राणत्यागे । मर्तुमिच्छति । 'इच्छायाम्' । 'पोरुर्' । ततो द्वित्वम् । पूर्वस्य । 'य्वोर्विहसे' । मुमूर्षति । मुमूर्षांचकार । 'यतः' । मुमूर्ष्यात् । 'सिसता०' । मुमूर्षिता । मुमूर्षिष्यति । अमुमूर्षिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपो भवति । अमुमूर्षीत् अमुमूर्षिष्टाम् अमुमूर्षिषुः इत्यादि ॥

पॄ पालनपूरणयोः । पुपूर्षति ॥

पॄ पालनपूरणयोः । पूरितुमिच्छति इति विग्रहे । 'इच्छायाम्०' । 'पोरुर्' । 'य्वोर्विहसे' । षत्वम् । विभक्तिकार्यं प्राग्वत् । पुपूर्षति । पुपूर्षांचकार । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । अपुपूर्षीत् अपुपूर्षिष्टाम् । अपुपूर्षिषुः । इत्यादीनि ॥

**वृङ् इत्यस्य उर्वाच्यः ॥ वृङ् वरणे । वरितुमिच्छति वुवूर्षति ॥**

वृङ् वरणे । वरितुमिच्छति । 'इच्छायाम्०' ॥ 'वृङ्०' वृङो धातोः सप्रत्यये परे उर वाच्यः । षष्ठी । अन्यत्साधनं पूर्वसदृशम् । वुवूर्षति । वुवूर्षांचकार । लुङ्लकारे । अवुवूर्षीत् अवुवूर्षिष्टाम् अवुवूर्षिषुः ॥

**रुद्विद्मुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः ॥ रुदिर् अश्रुविमोचने । रुरुदिषति ॥**

रुदिर् अश्रुविमोचने । 'इच्छायाम्०' ॥ सूत्रम्—'रुद् विद्' रुद विद मुष ग्रहि स्वपि प्रच्छ एभ्यो धातुभ्यो सः कित् वाच्यः । द्वित्वम् । 'सिसता०' । षत्वम् । रुदितुमिच्छति । रुरुदिषति । लिट्लकारे । 'कासादि०' । रुरुदिषांचकार । 'यतः' । रुरुदिष्यात् । 'सिसता०' । रुरुदिषिता । रुरुदिषिष्यति । अरुरुदिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अरुरुदिषीत् अरुरुदिषिष्टाम् अरुरुदिषिषुः । इत्यादीनि ॥

**विद ज्ञाने । विविदिषति ॥**

विद ज्ञाने । वेदितुमिच्छति । इच्छायां सप्रत्ययः । द्वित्वम् । 'सिसता०' । षत्वम् विविदिषति । विविदिषांचकार । लुङ्लकारे । अविविदिषीत् ॥

**मुष स्तेये मुमुषिषति ॥**

मुष स्तेये । मोषितुमिच्छति । 'इच्छायाम्०' । साधनं पूर्ववत् । मुमुषिषति । मुमुषिषांचकार । अमुमुषिषीत् । अन्यानि सुगमानि ॥

**ग्रह उपादाने । हो ढः । आदिजबानाम् । षढोः कः से । षत्वम् । क्षः । ग्रहीतुमिच्छति जिघृक्षति ॥**

ग्रह उपादाने । ग्रहीतुमिच्छति । 'इच्छायाम्०' । अनेन सप्रत्ययः । ततः 'ग्रहां क्ङिति च' । ततो द्वित्वम् । 'रः' 'कुहोश्चुः' 'झपानाम्०' 'यः से' । 'हो ढः' । 'आदिजबानाम्०' । 'षढोः कः से' । षत्वम् । 'कषसंयोगे०' । जिघृक्षति । जिघृक्षांचकार । लुङ्लकारे । अजिघृक्षीत् अजिघृक्षिष्टाम् ॥

**सुषुप्सति ॥**

ञिष्वप् शये । 'इच्छायाम्०' । संप्रसारणम् । ततो द्वित्वम् । षत्वम् । स्वप्तुमिच्छति । सुषुप्सति । लिट्लकारे । सुषुप्सांचकार । लुङ्लकारे । असुषुप्सीत् असुषुप्सिष्टाम् असुषुप्सिषुः ॥

**प्रच्छ ज्ञीप्सायाम् ॥ कॄगॄधृदृप्रच्छस्मिङञ्ज्वशूङर्तीनां सस्येड् वक्तव्यः ॥ पिपृच्छिषति ॥**

प्रच्छ ज्ञीप्सायाम् । 'इच्छा' 'कॄगॄधृदृप्रच्छस्मिङ्' संप्रसारणम् । 'यः से' षत्वम् । पिपृच्छिषति । लिट्लकारे । पिपृच्छिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपृच्छिषीत् । अन्यानि सुगमानि ॥

करितुमिच्छति चिकरिषति ।

कॄ विक्षेपे । करितुमिच्छति । 'इच्छायाम्०' । 'रः' 'गुणः' । इट् । षत्वम् । 'कुहोश्चुः' 'यः से' । चिकरिषति । चिकरिषांचकार । अचिकरिषीत् ॥

जिगरिषति । जिगलिषति ।

गॄ निगरणे । गरितुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'रः' । 'कुहोश्चुः' । 'यः सेः' । इट् । गुणः । षत्वम् । जिगरिषति । जिगरिषांचकार । 'यतः' । जिगरिष्यात् । 'सिसता०' । जिगरिषिता । अजिगरिषिष्यत् । लुङ्लकारे द्वाविटौ । सेर्लोपः । अजिगरिषीत् अजिगरिषिष्टाम् अजिगरिषिषुः । 'गिरतेः' अनेन रस्य लः । जिगलिषति ॥

दिदरिषति ।

दॄ विदारणे । दरितुमिच्छति । 'इच्छायाम्०' । सः प्रत्ययः । धातोर्द्वित्वम् । 'रः' । 'यः से' । 'गुणः' । इट् । षत्वम् । दिदरिषति । दिदरिषांचकार । 'यतः' । दिदरिष्यात् । 'सिसता०' दिदरिषिता । लुङ्लकारे । साधनं पूर्ववत् । अदिदरिषीत् । अन्यानि सुगमानि ॥

दिधरिषति ।

धृ धारणे । धर्तुमिच्छति । 'इच्छायाम्०' । अन्यत्सर्वं पूर्ववत् । 'झपानाम्०' । अनेन धस्य दः । दिधरिषति । दिधरिषांचकार । लुङ्लकारे । अदिधरिषीत् ॥

सिस्मयिषति ।

स्मिङ् ईषद्धसने । स्मयितुमिच्छति । 'सः' । द्वित्वम् । पूर्वस्य गुणः । सिस्मयिषति । सिस्मयिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । 'दिबादावट्' । असिस्मयिषीत् असिस्मयिषिष्टाम् असिस्मयिषिषुः । इत्यादीनि ।

स्वरादेः परः । अञ्जिजिषति ।

अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अञ्जितुमिच्छति । 'इच्छायाम्०' । 'कॄ गॄ' अनेनेट् । पश्चात् । 'स्वरादेः परः' । जस्य द्वित्वम् । षत्वम् । अञ्जिजिषति । चतुर्णां सुगमानि । 'कासादि०' अञ्जिजिषांचकार । 'यतः' । अजिजिष्यात् । 'सिसता०' । अञ्जिजिषिता । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्यत्सुगमम् । 'स्वरादेः' । अनेन द्वितीयोऽडागमो भवति । 'सवर्णे' । आञ्जिजिषीत् । अन्यानि सुगमानि ॥

अशिशिषते ।

अशूङ् व्याप्तौ । अशितुमिच्छति । 'इच्छायाम्०' । 'स्वरादेः परः' । अशिशिषति । 'कासादि०' अनेनाम् । अशिशिषांचकार । 'यतः' । अशिशिष्यात् । 'सिसता०' । अशिशिषिता । अशिशिषिष्यति । 'स्वरादेः' । आशिशिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । आशिशिषीत् ॥

अरिरिषति ।

अर्तुमिच्छति । 'इच्छायाम्' इट् 'स्वरादेः परः' ईरशब्दस्य द्वित्वम् । षत्वम् अरिरिषति । चतुर्णां सुगमानि । 'कासादि०' अनेनाम् अरिरिषांचकार । 'यतः' । अरिरिष्यात् ।

'सिसता०' अरिरिषिता । अरिरिषिष्यति । 'स्वरादेः' अरिरिषिष्यत् । लुङ्लकारे । द्वाविटौ सेर्लोपः आरिरिषीत् ॥

**अद भक्षणे । 'सिसयोः०' इति घसादेशः । 'सस्तोऽनपि' । अत्तुमिच्छति जिघत्सति ॥**

अद भक्षणे । अत्तुमिच्छति । 'इच्छायाम्०' । अनेनास्य सप्रत्ययः । 'सिसयोः०' । अनेन घसादेशः । ततो द्वित्वम् । 'कुहोश्चुः' । 'झपानाम्०' । 'यः से' । 'सस्तोऽनपि' । अनेन सकारस्य तकारः । जिघत्सति । लिट्लकारे । जिघत्सांचकार । 'यतः' । जिघत्स्यात् । 'सिसता०' । जिघत्सिता । जिघत्सिष्यति । अजिघत्सिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिघत्सीत् अजिघत्सिष्टाम् अजिघत्सिषुः ॥

**हन्तीङोः सो णित् ॥ हन्तीङोर्धात्वोः सो णिद्भवति ॥ हन हिंसागत्योः । द्वित्वम् । पूर्वस्य । हसादिः शेषः । कुहोश्चुः । झपानां जबचपाः । यः से । हनो घ्ने । अत उपधायाः । नश्चापदान्ते झसे । स धातुः । अप् । अदे । हन्तुमिच्छति जिघांसति ॥**

हन हिंसागत्योः ॥ 'हन्तीङोः सो णित्' । हन्तीङोः स णित् । हन्तीङोर्धात्वोः स प्रत्ययो णित् भवति । णित्त्वात् वृद्धिः । अन्यत्साधनं मूले लिखितम् । हन्तुमिच्छति जिघांसति । लिट्लकारे । जिघांसांचकार । लुङ्लकारे । द्वाविटौ सेर्लोपः । अजिघांसीत् । इत्यादीनि ॥

**इङः से गम् वाच्यः ॥ अध्येतुमिच्छति अधिजिगांसते ॥**

इङ् अध्ययने । अध्येतुमिच्छति । 'इच्छायाम्०' ॥ 'इङः०' इङो धातोः सप्रत्यये परे गम् वाच्यः । अन्यत्साधनं तु पूर्ववत् । अधिजिगांसते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अधिजिगांसांचक्रे । 'सिसता०' । अधिजिगांसिषीष्ट । अधिजिगांसिता । अधिजिगांसिष्यते । 'दिबादावट्' अध्यजिगांसिष्यत् । लुङ्लकारे । अध्यजिगांसिष्ट । इत्यादीनि ॥

**गमेः से इड्वाच्यः ॥ गन्तुमिच्छति जिगमिषति ॥**

गम्लृ । गन्तुमिच्छति । 'इच्छायाम्०' ॥ 'गमेः०' गमेर्धातोः सप्रत्यये इड् वाच्यः । अनेनास्येट् । द्वित्वादिकं तु पूर्ववत् कार्यम् । षत्वम् । जिगमिषति । लिट्लकारे । 'कासादि०' । जिगमिषांचकार । 'यतः' । जिगमिष्यात् । 'सिसता०' । जिगमिषिता । जिगमिषिष्यते । अजिगमिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिगमिषीत् इत्यादीनि भवन्ति ॥

**इस्से ॥ अपित्दाधारभूलभशकपद्पत्मिमीमापाङ्मेङ्हिंसार्थराधां स्वरस्य से परे इसादेशो भवति पूर्वस्य च लोपः ॥ दित्सति ।**

दा दाने । दातुमिच्छति 'इच्छायाम्०' । अनेन सप्रत्ययः । धातोर्द्वित्वं च ॥ 'इस्से'

इस् से । अपित् दा धा रभ् लभ् शक् पद् पत् मि मी मा माङ् मेङ् हिंसार्थराधां धातूनां स्वरस्य सप्रत्यये परे इसादेशो भवति । पूर्वस्य च लोपो भवति । अनेनेस् । पूर्वस्य लोपः । 'सस्तोनपि' अनेन सस्य तः । दित्सति । चतुर्णा रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । दित्सांचकार । 'यतः' । दित्स्यात् । 'सिसता०' । दित्सिता । दित्सिष्यति । अदित्सिष्यात् । अदित्सीत् । इत्यादीनि ॥

**धित्सति ।**

डुधाञ् धारणपोषणयोः । धातुमिच्छतीति । 'इच्छायाम्०' । 'इस्से' । धित्सति । धित्सांचकार । लुङ्लकारे । अधित्सीत् । अधित्सिष्टाम् । अधित्सिषुः ॥

**स्कोराद्योश्च । खसे चपा । रिप्सति ।**

रभ् राभस्ये । रब्धुमिच्छति । 'इच्छायाम्०' । 'इस्से' । 'खसे०' । 'स्कोराद्योश्च ।' रिप्सति । रिप्सांचकार । लुङ् । अरिप्सीत् ॥

**लिप्सति ।**

डुलभष् प्राप्तौ । लब्धुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'इस्से' । 'स्कोराद्योश्च' । 'खसे०' । लिप्सति । लिट्लकारे ॥ 'कासादि०' । लिप्सांचकार । 'यतः' । लिप्स्यात् । 'सिसता० । लिप्सिता । लुङ्लकारे । द्वाविटौ । अलिप्सीत् अलिप्सिष्टाम् अलिप्सिषुः । इत्यादीनि ।

**शिक्षते ।**

शक्लृ शक्तौ । शक्तुमिच्छति । 'इच्छायाम्' । 'इस्से' । षत्वम् । 'कषसंयोगे क्षः' । शिक्षते । लिट्लकारे । शिक्षांचकार । 'यतः' । शिक्ष्यात् । 'सिसता०' शिक्षिता । लुङ्लकारे । साधनं सुगमम् । अशिक्षीत् । इत्यादीनि ॥

**पित्सते ॥**

पत्लृ पतने । पतितुमिच्छति । 'इच्छायाम्०' । 'इस्से' । पित्सति । पित्सांचकार । लुङ्लकारे । अपित्सीत् ॥ 'पतः०' पत्लृ पतने इत्यस्य धातोर्वा इट् भवति । 'यः से' । अनेन पूर्वस्याकारस्येकारः । इट्पक्षे इसपूर्वलोपौ न भवतः । पिपतिषति । लिट्लकारे । पिपतिषांचकार । लुङ्लकारे । साधनं पूर्ववत् । अपिपतिषीत् ।

**पतो वेट् ॥ पित्सति पिपतिषति । इट्पक्षे इसपूर्वलोपौ न भवतः ॥**

पद गतौ । पत्तुमिच्छति । 'इच्छायाम्०' । 'इस्से' । पित्सते । पित्सांचक्रे । लुङ्लकारे । अपित्सिष्ट । इत्यादीनि ।

**मीञ् हिंसायाम् । डुमिञ् प्रक्षेपे । मित्सति ।**

मीञ् हिंसायाम् । डुमिञ् प्रक्षेपे । अनयोर्धात्वोः सप्रत्यये कृते । 'इस्से' 'सस्तोनपि' अनेन सकारस्य तकारः । मित्सति । लिट्लकारे । मित्सांचकार । लुङ्लकारे साधनं सुगमम् । अमित्सिष्टाम् ।

**माङ् माने । मेङ् शोधने । मित्सते ।**

माङ् माने । मेङ् शोधने । अनयोर्धात्वोः सप्रत्यये कृते । 'इस्से' । मित्सते । मित्सांचक्रे । 'सिसता०' । अनेनेट् । मित्सिषीष्ट । लुङ्लकारे । अमित्सिष्ट । इत्यादीनि ।

**राध संसिद्धौ । रित्सति ॥**

राध संसिद्धौ । राद्धुमिच्छति । 'इच्छायाम्०' । 'इस्से' । अनेनेत्पूर्वलोपौ भवतः । 'स्कोराद्योश्च' । 'खसे' । रित्सति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् । रित्सांचकार । लुङ्लकारे । 'दिबादावट्' । अरित्सीत् । इत्यादीनि ॥

**आप्नोतेरीः ॥ आप्नोतेराकारस्येकारो भवति से परे पूर्वस्य च लोपः ॥**

**आप्लृ व्याप्तौ । ईप्सते ॥**

आप्लृ व्याप्तौ आप्तुमिच्छति । 'इच्छायाम्०' । 'स्वरादेः' ॥ 'आप्नोतेरीः' आप्नोतेः ईः । आप्नोतेर्धातोराकारस्य ईकारो भवति सप्रत्यये परे । पूर्वस्य च लोपो भवति । ईप्सते । लिट्लकारे । 'कासादि०' ईप्सांचक्रे । लुङ्लकारे । 'दिबादावट्' । 'स्वरादेः परः' । 'अइए' । 'एऐऐ' । ऐप्सिष्ट । ऐप्सिषाताम् । ऐप्सिषत ॥

**अशेरनायो वा ॥ अशेरिच्छायां संस्थाने वा अनायप्रत्ययो भवति ॥**

**अशनायति । अशिशिषति ॥**

अश भोजने । अशितुमिच्छति । 'इच्छायाम्०' ॥ 'अशेरनायो वा' अशेः अनायः वा अव्ययम् । अशेर्धातोरिच्छायां सकारस्य स्थाने वा अनायः प्रत्ययो भवति । तदा धातोर्द्वित्वं न भवति । अशनायति । अशनायांचकार । लुङ् । अशनायीत् । इत्यादीनि । यदा अनायः प्रत्ययो न भवति तदा इट् । 'स्वरादेः परः' । षत्वम् । अशिशिषति । लिट्लकारे । अशिशिषांचकार । लुङ्लकारे । 'स्वरादेः' । आशिशिषीत् । इत्यादीनि ॥

**पततनदरिद्राभ्यः से वा इड्वाच्यः ॥ तितनिषति ॥ तितंसति ॥ तनेः से वा दीर्घः ॥ तितांसति ॥**

तनु विस्तारे । तनितुमिच्छति । 'इच्छायाम्०' । अनेन सप्रत्ययो धातोर्द्वित्वं च । 'सिसता०' । 'यः से' षत्वम् । तितनिषति । तितनिषांचकार । अतितनिषीत् ॥ सूत्रम्— 'पततनदरिद्राभ्यः०' ॥ पत तन दरिद्रा एभ्यो धातुभ्यः सप्रत्यये वा इड् वाच्यः । तदा । 'नश्चापदान्ते' । तिसंसति । लिट्लकारे । तितंसांचकार । 'यतः' । तितंस्यात् । 'सिसता०' । तितंसिता । लुङ्लकारे । अतितंसीत् ॥ 'तनेः०' । तनेर्धातोः सप्रत्यये वा दीर्घो भवति । अनेन दीर्घः । तितांसति । तितांसांचकार । 'यतः' । तितांस्यात् । लुङ्लकारे । अतितांसीत् । इत्यादीनि ।

**दिदरिद्रिषति दिदरिद्रासति ॥**

दरिद्रा दुर्गतौ । दरिद्रातुमिच्छति । 'इच्छायाम्०' । द्वित्वम् । 'यः से' । 'सिसता०' । णप् । अनेनाकारस्य लोपः । षत्वम् । दिदरिद्रिषति । 'पतः०' । अनेनास्येड्विकल्पः । दिदरिद्रासति । लिट्लकारे । 'कासादि०' । दिदरिद्रासांचकार । 'यतः' । दिदरिद्रास्यात् । 'सिसता०' । दिदरिद्रासिता । लुङ्लकारे । अदिदरिद्रासीत् । इत्यादीनि ॥

वेडिस्से दीर्घता च ॥ दम्भिज्ञप्योर्धात्वोर्वा इड् भवति सप्रत्यये परे ॥ यदा नेट् तदा किम् । अनयोर्दम्भिज्ञप्योर्धात्वोः सानुस्वारस्य स्वरस्य इस् भवति इकारस्य दीर्घता दम्भेरिकारस्य वा दीर्घता । चकारात्पूर्वस्य लोपः ॥ दम्भ दम्भने । आत्मनः दम्भितुमिच्छति दिदम्भिषति । द्वित्वम् । इस् । आदिजबानाम् । खसे चपा झसानाम् । स्कोराद्योश्च वा दीर्घता । धीप्सति-धिप्सति ।

दम्भ दम्भने । आत्मनो दम्भितुमिच्छति ॥ सूत्रम्—'वेडिस्से०' ॥ वा इट् इस् से दीर्घता च अव्ययम् । अस्य सूत्रस्य व्याख्यानं मूल एव कृतम् । साधने यानि सूत्राणि तानि मूले उक्तानि । दीर्घता वा भवति । धीप्सति । धिप्सति । यदा इट् तदा दिदम्भिषति । अस्य साधनं तु सुगमम् । लिट्लकारे । दिदम्भिषांचकार । धीप्सांचकार । धिप्सांचकार । लुङ् । अदिदम्भिषीत् । अधीप्सीत् । अधिप्सीत् । इत्यादीनि रूपाणि सुगमानि ।

ज्ञाऽवबोधने । इच्छायामात्मनः सः । द्विश्च । ह्रस्वः । पूर्वस्य हसादिः शेषः । यः से । वा इट् । गुणः । ए अय् । स्वरहीनम् । षत्वम् । स धातुः । तिप् । अप् । अदे । आत्मनः ज्ञापयितुमिच्छतीति जिज्ञापयिषति । पक्षे । जिज्ञापि स इति स्थिते । सस्य इस् तस्य दीर्घता । पूर्वस्य लोपः । ञेः । स्कोराद्योश्च ज्ञीप्सति ।

ज्ञा अवबोधने । आत्मनः ज्ञापयितुमिच्छति । अस्य ण्यन्तात् सः । सूत्राणि मूले लिखितानि । जिज्ञापयिषति । लिट्लकारे । 'कासादि०' । 'जिज्ञापयिषांचकार । लुङ्लकारे । अजिज्ञापयिषीत् । यदा इड् न भवति तदापि अस्य साधनं मूले उक्तम् । ज्ञीप्स्यति । लिट्लकारे । ज्ञीप्सांचकार । 'सिसता०' । ज्ञीप्सिता । लुङ् । अज्ञीप्सीत् ।

ज्ञप ज्ञानज्ञापनयोः । जिज्ञापयिषति । मितां ह्रस्वः । जिज्ञपयिषति ज्ञीप्सति ॥ इति सप्रक्रिया ॥ २८ ॥

ज्ञप ज्ञानज्ञापनयोः । 'इच्छायाम्०' । 'ण्यन्तानाम्०' । अन्यत्साधनं तु मूलतो ज्ञेयम् । जिज्ञपयिषति । लिट्लकारे । जिज्ञपयिषांचकार । लुङ् । अजिज्ञपयिषीत् । यदा इड् न भवति तदा ज्ञीप्सति । लिट्लकारे । 'कासादि०' । ज्ञीप्सांचकार । लुङ् । अज्ञीप्सीत् अज्ञीप्सिष्टाम् अज्ञीप्सिषुः । इत्यादीनि रूपाणि भवन्ति । सुगमत्वात्सर्वाणि न लिखितानि । इति सप्रक्रिया समाप्ता ॥

---

## यङ्प्रक्रिया २९

॥ अथ यङ्प्रक्रिया निरूप्यते ॥ अतिशये हसादेर्यङ् द्विश्च ॥ हसादेरेकस्वराद्धातोरतिशयेऽर्थे यङ् प्रत्ययो भवति तस्मिन्सति धातोर्द्वित्वम् ॥ यङि ॥ यङि सति लुकि च पूर्वस्य नामिनो गुणो भवति ॥ स धातुः ।

**ङित्वादात्मनेपदम् । अप् । अतिशयेन भवतीति । बोभूयते । बोभूयेत । बोभूयताम् । अबोभूयत । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट ॥**

अथ यङ्प्रक्रिया कथ्यते । सूत्रम्—'अतिशये हसादेर्यङ् द्विश्च' ॥ अतिशये हसादेः हस् प्रत्याहार आदिर्यस्य स हसादिः तस्मात् हसादेः । यङ् च अव्ययम् । द्विः हस्प्रत्याहारादेर्धातोरतिशयेऽर्थे यङ्प्रत्ययो भवति । कचिदेकस्वराद्धातोरपि न दृश्यते । तेन जागृ चकास् इत्यादिभ्यो नैकस्वरेभ्यो यङ्प्रत्ययो न भवति । अतिशयेन भवति इति विग्रहे अत्र भूधातोरेकस्वरत्वात् । हसादित्वात् यङ्प्रत्ययो भवति । ततो द्वित्वम् । ङकार आत्मनेपदार्थः । भू भू य इति जाते ॥ 'यङि' । यङि सति लुकि च सति पूर्वस्य द्विरुक्तसंबन्धिनो नामिनो गुणो भवति । अनेन गुणः । 'झपानाम्०' । 'स धातुः' । अनेनास्मिन् प्रकरणे सर्वत्र धातुसंज्ञा कार्या । धातुत्वात् तआदयः प्रत्यया भवन्ति । 'अप् कर्तरि' । 'अदे' । बोभूयते बोभूयेते बोभूयन्ते । इत्यादीनि । बोभूयेत बोभूयेताम् बोभूयेरन् । लोट् बोभूयताम् बोभूयेताम् बोभूयन्ताम् । अबोभूयत अबोभूयेताम् अबोभूयन्त । लिट् 'कासादि०' । अनेन सूत्रेण सर्वत्राम्प्रत्ययो भवति । अन्यत्साधनं सुगमम् । बोभूयांचक्रे बोभूयांचक्राते बोभूयांचक्रिरे । 'सिसता०' । 'यतः' षत्वम् । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । 'दिबादावट्' । अबोभूयिष्यत । लुङ्लकारे । 'भूते सिः' । ईट् । षत्वम् । ष्टुत्वम् । अबोभूयिष्ट अबोभूयिषाताम् अबोभूयिषत । इत्यादीनि ॥



**बोभुज्यते ॥ अनपि च हसात् ॥ हसादुत्तरस्य यङो लुग्भवति अनपि विषये ॥ धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये ॥ बोभुजांचक्रे ॥**

भुज पालनाभ्यवहारयोः । अतिशयेन भुनक्ति इति विग्रहे यङ् । द्वित्वम् । 'झपानाम्०' । यङि अनेनास्य पूर्वस्य गुणः । बोभुज्यते । बोभुज्येत । बोभुज्यताम् । गुणः । अबोभुज्यत । रूपाणि । सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् प्रत्ययः ॥ सूत्रम्—'अनपि च हसात्' ॥ अनपि च अव्ययम् । हसात् । हसादुत्तरस्य यङ्प्रत्ययस्य लुग् भवति अनपि विषये । अनेन यङो लुक् । अत्र गुणे प्राप्ते ॥ 'धात्वंश०' । धात्वंशलोपनिमित्ते आर्धधातुके परे सति तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये । अनेन गुणाभावः । बोभुजांचक्रे । 'सिसता०' । षत्वम् । बोभुजिषीष्ट । बोभुजिता । बोभुजिष्यते । 'दिबादावट्' । अबोभुजिष्यत । लुङ्लकारे । 'भूते सिः' । इट् । षत्वम् । ष्टुत्वम् । अबोभुजिष्ट अबोभुजिषाताम् अबोभुजिषत । इत्यादीनि ॥

**मुह वैचित्ये । मोमुह्यते ॥**

मुह वैचित्ये । 'अतिशये०' । द्वित्वम् । 'गुणः' । 'स धातुः' । मोमुह्यते । चतुर्णां सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् । 'अनपि च हसात्' अनेन यङो लोपः । मोमुहांचक्रे । 'सिसता०' । मोमुहिषीष्ट । मोमुहिता । मोमुहिष्यते । अमोमुहिष्यत । अमोमुहिष्ट । रूपाणि सुगमानि ॥

लिह आस्वादने। लेलिह्यते॥

लिह् आस्वादने। 'अतिशये०'। अनेन यङ्। अतिशयेन लेढि। लेलिह्यते। लिट्। 'अनपि च हसात्'। लेलिह्यांचक्रे। 'सिसता०' लेलिहिषीष्ट। लुङ्। अलेलिहिष्ट। रूपाणि सुगमानि॥

हु दानादनयोः। जोहूयते॥

हु दानादनयोः। अतिशयेन जुहोति। यङ्। द्वित्वम्। 'कुहोश्चुः'। 'गुणः'। जोहूयते। लिट्। जोहूयांचक्रे। 'सिसता०'। जोहूयिषीष्ट। लुङ्। अजोहूयिष्ट। रूपाणि सुगमानि॥

विद ज्ञाने। वेविद्यते॥

विद ज्ञाने। अतिशयेन वेत्तीति। 'अतिशये०'। अनेन यङ्। अन्यत्साधनं तु पूर्ववत्। वेविद्यते। लिट्। वेविदांचक्रे। लुङ्। अवेविदिष्ट॥

आतः॥ यङि लुकि च सति पूर्वस्य अकारस्य आकारो भवति अकिति। पापच्यते।

पच्लृ पचने। पठ व्यक्तायां वाचि। अनयोर्यङ्॥ सूत्रम्—'आतः'॥ आ अतः। यङि लुकि च पूर्वस्य अकारस्य अकारो भवति अयकि। पापच्यते। अपापचिष्ट।

पठ व्यक्तायां वाचि। पापठ्यते॥

पापठ्यते। अपापठिष्ट। रूपाणि सुगमानि॥

सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः॥ सोसूच्यते।

सूत्रम्—'सूचिसूत्रि०'॥ सूचि सूत्रि मूत्रि अटि अर्ति अश् ऊर्णोति एभ्यो धातुभ्यो यङ्प्रत्ययो वाच्यः। एषामप्राप्तत्वात्सूत्रमिदम्। साधनं तु सुगमम्। सोसूच्यते। लिट्। सोसूचांचक्रे। लुङ्। असोसूचिष्ट।

सोसूत्र्यते।

सोसूत्र्यते। लिट्। सोसूत्रांचक्रे। लुङ्। असोसूत्रिष्ट।

मोमूत्र्यते॥

मोमूत्र्यते। लिट्। 'कासादि०'। 'अनपि च हसात्'। मोमूत्रांचक्रे। लुङ्। अमोमूत्रिष्ट।

गत्यर्थात्कौटिल्य एव यङ्। स्वरादेः परः। अट गतौ। यङ्सहितस्य द्वित्वम्। अट्य ट्य इति स्थिते। 'पूर्वस्य' हसादिः शेषः। आतः। इति पूर्वस्यात्वम्। कुटिलं अटतीति अटाट्यते। अटाटांचक्रे। अटाटिषीष्ट॥

अट गतौ। गत्यर्थाद्धातोः कौटिल्येऽर्थे यङ्। 'स्वरादेः परः'। यङ्सहितस्य द्वित्वम्। अट्य ट्य इति स्थिते। 'पूर्वस्य०'। 'आतः'। कुटिलं अटति। अटाट्यते। लिट्। अटाटांचक्रे। लुङ्। अटाटिषीष्ट।

**व्रज गतौ। कुटिलं व्रजतीति वाव्रज्यते ॥**

कोपि व्रजति। यङ्। 'आतः' साधनं सुगमम्। वाव्रज्यते। लिट्। वाव्रजांचक्रे। लुङ्। अवाव्रजिष्ट।

**अश भोजने। अशाश्यते ॥**

अश भोजने। अतिशयेन अश्नातीति। यङ्। द्वित्वम्। 'आतः'। अशाश्यते। लुङ्। अशाशिष्ट।

**ऊर्णुञ् आच्छादने। ऊर्णोनूयते। स्वरात्पराः संयोगादयो नदरा द्विर्न ॥**

ऊर्णुञ् आच्छादने। अतिशयेन ऊर्णोतीति। यङ्। 'स्वरादेः'। 'नदराः'। 'गुणः'। 'ये'। ऊर्णोनूयते। लिट्। ऊर्णोनूयां क्रे। लुङ्। और्णोनूयिष्ट। अत्र 'स्वरादेः' अनेन द्वितीयोऽडागमः ॥

**गुणोर्तिसंयोगाद्योः ॥ यकारपरस्य रेफस्य द्वित्वं वाच्यम् ॥ अरार्यते ॥**

ऋ गतौ। 'अतिशये०'। इयर्ति। यङ् 'गुणोर्ति०' अनेन गुणः॥ 'यकारसहितरेफस्य द्वित्वम्०'। 'पूर्वस्य'। 'आतः'। अरार्यते। लिट्। अरारांचक्रे। लुङ्। 'स्वरादेः'। आरारिष्ट।

**लुपसदचरजपजभदहदशगॄभ्यो धात्वर्थगर्हायामेव यङ् ॥ गर्हितं लुम्पतीति लोलुप्यते।**

सूत्रम्—'लुप०'॥ लुप सद चर जप जभ दह दश गॄ एभ्यो धात्वर्थगर्हायामेव यङ्प्रत्ययो भवति। गर्हितं लुम्पति लोलुप्यते। साधनं सुगमम्। लिट्। लोलुपांचक्रे। लुङ्। अलोलुपिष्ट।

**सासद्यते ॥**

षद्लृ विशरणगत्यवसादनेषु। सत्वम्। 'आतः'। सासद्यते। लिट्। सासदांचक्रे। लुङ्। असासदिष्ट ॥

**ञमजपां नुक् ॥ ञमान्तस्य जपादीनां च पूर्वस्य नुगागमो भवति यङि लुकि च सति ॥ 'जप् जभ् दह् दंश् भञ्ज् पश्' एते जपादयः ॥ जञ्जप्यते।**

सूत्रम्—'ञमजपां नुक्'॥ ञमजपाम् नुक्। ञमान्तस्य धातोश्च जपादीनां धातूनां पूर्वस्य नुगागमो भवति यङि लुकि च सति। अनेन नुक्। उकार उच्चारणार्थः। ककारः कित्कार्यार्थः। 'कुहोश्चुः'। 'नश्चापदान्ते०'। जंगम्यते अझसेपि अनुस्वारो भवति नकारस्य आदेशिना अनुस्वारादेशवता नुगागमेन नकारेण आदेशो निर्दिश्यते। जंगमांचक्रे। अजंगमिष्ट।

**बम्भ्रम्यते ॥**

भ्रमु चलने। अतिशयेन भ्राम्यति यङ्प्रत्ययः। द्वित्वम्। 'पूर्वस्य०'। 'झपानाम्०'। 'ञमजपाम्'। बंभ्रम्यते। लिट्। बंभ्रमांचक्रे। लुङ्। अबंभ्रमिष्ट।

**अझसेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। यंयम्यते।**

यम उपरमे। अतिशयेन यच्छतीति। यङ्। द्वित्वम्। 'पूर्वस्य०'। 'ञमजपाम्'। अझसेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। अस्य व्याख्यानं पूर्वं कृतम्। अनेन अझसेपि नकारस्य अनुस्वारः। यंयम्यते। यंयमांचक्रे। अयंयमिष्ट।

**कण शब्दे। चङ्कण्यते।**

कण शब्दे। अतिशयेन कणतीति। यङ्। द्वित्वम्। 'पूर्वस्य०' 'कुहोश्चुः'। 'ञमजपाम्'। 'नश्चा०'। चंकण्यते। चंकणांचक्रे। अचंकणिष्ट।

**तन्तन्यते।**

तनु विस्तारे। अतिशयेन तनोति। साधनं तु पूर्ववत्। तन्तन्यते। तन्तनांचक्रे। अन्ततनिष्ट।

**जप मानसे च। गर्हितं जपतीति जञ्जप्यते।**

जप मानसे च। गर्हितं जपति। साधनं पूर्ववत्। जञ्जप्यते। जञ्जपांचक्रे। अजञ्जपिष्ट।

**जभ गात्रविनामे। गर्हितं जभतीति जञ्जभ्यते।**

जभ गात्रविनामे। गर्हितं जभति। द्वित्वादिकं पूर्ववत् कार्यम्। जञ्जभ्यते। जञ्जभांचक्रे। अजञ्जभिष्ट।

**दह भस्मीकरणे। दन्दह्यते।**

दह् भस्मीकरणे। गर्हितं दहति। यङ्। द्वित्वादिकम्। दन्दह्यते। दन्दहांचक्रे। अदन्दहिष्ट।

**नो लोपः। दन्दश्यते।**

दंश् दहने। गर्हितं दशति। यङ्। नोलोपः। द्वित्वम्। 'ञमजपां नुक्'। दन्दश्यते। दन्दशांचक्रे।

**बम्भज्यते।**

भञ्जो आमर्दने। अतिशयेन भनक्ति। यङ्। नोलोपः। द्वित्वम्। 'ञमजपाम्'। 'झपानाम्०'। बम्भज्यते। बम्भजांचक्रे। अबम्भजिष्ट।

**पश्यतीति पम्पश्यते। पश् बाधनग्रन्थनयोः॥**

अतिशयेन पश्यति। यङ्। द्वित्वम्। 'ञमजपाम्०' पश बाधनग्रन्थनयोः। पम्पश्यते। पम्पशांचक्रे। अपम्पशिष्ट॥

**चरफलोरुच्चास्य॥ अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य अकारस्य उकारः। चञ्चूर्यते।**

चर गतिभक्षणयोः। गर्हितं चरति। यङ्। द्वित्वम्॥ 'चरफलोरुच्चास्य'॥ चरफलोः उत् च अव्ययम् अस्य। अनयोर्धात्वोर्यङि लुकि च पूर्वस्य नुगागमो भवति अनेन नुक्। पूर्वात्परस्य अकारस्य उकारः। 'नश्चापदान्ते०'। 'य्वोर्विहसे'। चञ्चूर्यते। चञ्चूरांचक्रे। अचञ्चूरिष्ट।

**फल निष्पत्तौ । पम्फल्यते ॥**

फल निष्पत्तौ । अतिशयेन फलति । यङ् । द्वित्वम् । 'चरफलोः' । 'झपानां०' । पम्फल्यते । पम्फलांचक्रे । अम्पफलिष्ट ॥

**वलयान्तस्य वा नुक् ॥ मव स्थौल्ये । मम्मव्यते मामव्यते ॥ चल कम्पने । चञ्चल्यते-चाचल्यते ॥ दयङ् दाने । दन्दय्यते दादय्यते ॥**

सूत्रम्—'वलयान्तस्य०' ॥ वलयान्तस्य धातोर्वा नुम् भवति । तत्पक्षे । 'आतः' । मव स्थौल्ये । यङ् । द्वित्वादिकम् । मम्मव्यते । मम्मवांचक्रे । अमम्मविष्ट । नुगभावे । मामव्यते । मामवांचक्रे । अमामविष्ट ॥ चल कम्पने । अतिशयेन चलति । यङ् । द्वित्वादिकम् । 'वमजपाम्' । चञ्चल्यते । चञ्चलांचक्रे । अचञ्चलिष्ट । नुगभावे । 'आतः' । चाचल्यते । चाचलांचक्रे । अचाचलिष्ट ॥ दयङ् दाने । यङ् । द्वित्वादिकम् । 'वमजपाम्' । दन्दय्यते । दन्दयांचक्रे । अदन्दयिष्ट । नुगभावे । दादय्यते । दादयांचक्रे । अदादयिष्ट ॥

**रीगृदुपधस्य ॥ ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति ॥ कित्त्वादाकाराभावः ॥ नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः ॥ अत्र णत्वाभावो वाच्यः ॥ वृतु वर्तने । वरीवृत्यते ॥ ग्रह उपादाने । जरीगृह्यते ॥**

नृती गात्रविक्षेपे । अतिशयेन नृत्यति । यङ् । द्वित्वम् । 'रः' ॥ सूत्रम्—'रीगृदुपधस्य' रीक् ऋदुपधस्य । ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । कित्त्वादाकाराभावः । नरीनृत्यते । अत्र णत्वाभावो वाच्यः । नरीनृतांचक्रे । अनरीनृतिष्ट ॥ वृतुङ् वर्तने अतिशयेन वर्तते । यङ् । द्वित्वादिकम् । 'रः' । रीगृदुपधस्य । वरीवृत्यते । वरीवृतांचक्रे । अवरीवृतिष्ट ॥ ग्रह उपादाने । यङ् । संप्रसारणम् । द्वित्वादिकम् । 'रीगृदुपधस्य' । जरीगृह्यते । जरीगृहांचक्रे । अजरीगृहिष्ट ॥

**ऋत्वतो रीग्वाच्यः ॥ ओव्रश्चू छेदने । वरीवृश्च्यते ॥ प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते ॥ कृपू सामर्थ्ये । कृपो रो लः । ऋल । चरीक्लृप्यते ॥ वशेर्यङि न संप्रसारणम् ॥ वावश्यते ॥**

ओव्रश्चू छेदने । अतिशयेन वृश्चति । यङ् । संप्रसारणम् ॥ सूत्रम्—'ऋत्वतो रीग् वाच्यः' ॥ ऋत्वतो धातो रीगागमो वाच्यः । अनेनास्य रीक् । वरीवृश्च्यते । वरीवृश्चांचक्रे । अवरीवृश्चिष्ट ॥ प्रच्छ ज्ञीप्सायाम् । यङ् । संप्रसारणम् । ततो द्वित्वम् । 'रः' रीक् । परीपृच्छ्यते । परीपृच्छांचक्रे । अपरीपृच्छिष्ट ॥ कृपू सामर्थ्ये । अतिशयेन कल्पति । यङ् । द्वित्वम् । 'रः' । 'कुहोश्चुः' । रीक् । 'कृपो रो लः' । चरीक्लृप्यते । चरीक्लृपांचक्रे । अचरीक्लृपिष्ट ॥ वश् कान्तौ । कान्तिरिच्छा । यङ् । सूत्रम्—'वशेः०' ॥ वशेर्धातोर्यङि संप्रसारणं न भवति । द्वित्वम् । 'पूर्वस्य०' । 'आतः' वावश्यते । वावशांचक्रे । अवावशिष्ट ॥

**पदस्रंसुध्वंसुभ्रंसुदंशुकसस्वश्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः ॥ पनीपद्यते । नो लोपः । स्रंसु ध्वंसु अधः-**

यम उपरमे । अतिशयेन यच्छतीति । यङ् । द्वित्वम् । 'पूर्वस्य०' । 'ञमजपाम्' । अझसेऽप्यनुस्वारः । आदेशिना आदेशो निर्दिश्यते । अस्य व्याख्यानं पूर्वं कृतम् । अनेन अझसेपि नकारस्य अनुस्वारः । यंयम्यते । यंयमांचक्रे । अयंयमिष्ट ।

**कण शब्दे । चङ्कण्यते ।**

कण शब्दे । अतिशयेन कणतीति । यङ् । द्वित्वम् । 'पूर्वस्य०' 'कुहोश्चुः' । 'ञमजपाम्' । 'नश्चा०' । चंकण्यते । चंकणांचक्रे । अचंकणिष्ट ।

**तन्तन्यते ।**

तनु विस्तारे । अतिशयेन तनोति । साधनं तु पूर्ववत् । तन्तन्यते । तन्तनांचक्रे । अन्ततनिष्ट ।

**जप मानसे च । गर्हितं जपतीति जञ्जप्यते ।**

जप मानसे च । गर्हितं जपति । साधनं पूर्ववत् । जञ्जप्यते । जञ्जपांचक्रे । अजञ्जपिष्ट ।

**जभ गात्रविनामे । गर्हितं जभतीति जञ्जभ्यते ।**

जभ गात्रविनामे । गर्हितं जभति । द्वित्वादिकं पूर्ववत् कार्यम् । जञ्जभ्यते । जञ्जभांचक्रे । अजञ्जभिष्ट ।

**दह भस्मीकरणे । दन्दह्यते ।**

दह् भस्मीकरणे । गर्हितं दहति । यङ् । द्वित्वादिकम् । दन्दह्यते । दन्दहांचक्रे । अदन्दहिष्ट ।

**नो लोपः । दन्दश्यते ।**

दंश् दहने । गर्हितं दशति । यङ् । नोलोपः । द्वित्वम् । 'ञमजपां नुक्' । दन्दश्यते । दन्दशांचक्रे ।

**बम्भज्यते ।**

भञ्जो आमर्दने । अतिशयेन भनक्ति । यङ् । नोलोपः । द्वित्वम् । 'ञमजपाम्' । 'झपानाम्०' । बम्भज्यते । बम्भजांचक्रे । अबम्भजिष्ट ।

**पश्यतीति पम्पश्यते । पश् बाधनग्रन्थनयोः ॥**

अतिशयेन पश्यति । यङ् । द्वित्वम् । 'ञमजपाम्०' पश बाधनग्रन्थनयोः । पम्पश्यते । पम्पशांचक्रे । अपम्पशिष्ट ॥

**चरफलोरुच्चास्य ॥ अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य अकारस्य उकारः । चञ्चूर्यते ।**

चर गतिभक्षणयोः । गर्हितं चरति । यङ् । द्वित्वम् ॥ 'चरफलोरुच्चास्य' ॥ चरफलोः उत् च अव्ययम् अस्य । अनयोर्धात्वोर्यङि लुकि च पूर्वस्य नुगागमो भवति अनेन नुक् । पूर्वात्परस्य अकारस्य उकारः । 'नश्चापदान्ते०' । 'य्वोर्विहसे' । चञ्चूर्यते । चञ्चूरांचक्रे । अचञ्चूरिष्ट ।

**फल निष्पत्तौ । पम्फुल्यते ॥**

फल निष्पत्तौ । अतिशयेन फलति । यङ् । द्वित्वम् । 'चरफलोः' । 'झपानां०' । पम्फुल्यते । पम्फुलांचक्रे । अम्पफलिष्ट ॥

**वलयान्तस्य वा नुक् ॥ मव स्थौल्ये । मम्मव्यते मामव्यते ॥ चल कम्पने । चञ्चल्यते-चाचल्यते ॥ दयङ् दाने । दन्दय्यते दादय्यते ॥**

सूत्रम्—'वलयान्तस्य०' ॥ वलयान्तस्य धातोर्वा नुम् भवति । तत्पक्षे । 'आतः' । मव स्थौल्ये । यङ् । द्वित्वादिकम् । मम्मव्यते । मम्मवांचक्रे । अमम्मविष्ट । नुगभावे । मामव्यते । मामवांचक्रे । अमामविष्ट ॥ चल कम्पने । अतिशयेन चलति । यङ् । द्वित्वादिकम् । 'यमजपाम्' । चञ्चल्यते । चञ्चलांचक्रे । अचञ्चलिष्ट । नुगभावे । 'आतः' । चाचल्यते । चाचलांचक्रे । अचाचलिष्ट ॥ दयङ् दाने । यङ् । द्वित्वादिकम् । 'यमजपाम्' । दन्दय्यते । दन्दयांचक्रे । अदन्दयिष्ट । नुगभावे । दादय्यते । दादयांचक्रे । अदादयिष्ट ॥

**रीगृदुपधस्य ॥ ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति ॥ कित्वादाकाराभावः ॥ नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः ॥ अत्र णत्वाभावो वाच्यः ॥ वृतु वर्तने । वरीवृत्यते ॥ ग्रह उपादाने । जरीगृह्यते ॥**

नृती गात्रविक्षेपे । अतिशयेन नृत्यति । यङ् । द्वित्वम् । 'रः' ॥ सूत्रम्—'रीगृदुपधस्य' रीक् ऋदुपधस्य । ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । कित्वादाकाराभावः । नरीनृत्यते । अत्र णत्वाभावो वाच्यः । नरीनृतांचक्रे । अनरीनृतिष्ट ॥ वृतुङ् वर्तने अतिशयेन वर्तते । यङ् । द्वित्वादिकम् । 'रः' । रीगृदुपधस्य । वरीवृत्यते । वरीवृतांचक्रे । अवरीवृतिष्ट ॥ ग्रह उपादाने । यङ् । संप्रसारणम् । द्वित्वादिकम् । 'रीगृदुपधस्य' । जरीगृह्यते । जरीगृहांचक्रे । अजरीगृहिष्ट ॥

**ऋत्वतो रीग्वाच्यः ॥ ओव्रश्चू छेदने । वरीवृश्च्यते ॥ प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते ॥ कृपू सामर्थ्ये । कृपो रो लः । ऋऌ । चरीक्लृप्यते ॥ वशेर्यङि न संप्रसारणम् ॥ वावश्यते ॥**

ओव्रश्चू छेदने । अतिशयेन वृश्चति । यङ् । संप्रसारणम् ॥ सूत्रम्—'ऋत्वतो रीग् वाच्यः' ॥ ऋत्वतो धातो रीगागमो वाच्यः । अनेनास्य रीक् । वरीवृश्च्यते । वरीवृश्चांचक्रे । अवरीवृश्चिष्ट ॥ प्रच्छ ज्ञीप्सायाम् । यङ् । संप्रसारणम् । ततो द्वित्वम् । 'रः' रीक् । परीपृच्छ्यते । परीपृच्छांचक्रे । अपरीपृच्छिष्ट ॥ कृपू सामर्थ्ये । अतिशयेन कल्पति । यङ् । द्वित्वम् । 'रः' । 'कुहोश्चुः' । रीक् । 'कृपो रो लः' । चरीक्लृप्यते । चरीक्लृपांचक्रे । अचरीक्लृपिष्ट ॥ वश् कान्तौ । कान्तिरिच्छा । यङ् । सूत्रम्—'वशेः०' ॥ वशेर्धातोर्यङि संप्रसारणं न भवति । द्वित्वम् । 'पूर्वस्य०' । 'आतः' वावश्यते । वावशांचक्रे । अवावशिष्ट ॥

**पदस्रंसुध्वंसुभ्रंसुदंशुकसवञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः ॥ पनीपद्यते । नो लोपः । स्रंसु ध्वंसु अधः-**

**पतने । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते ॥ वञ्चु वञ्चने । वनीवच्यते । दनीदश्यते । चनीकस्यते । पनीपत्यते । चनीस्कद्यते ॥**

सूत्रम्—'पद०' ॥ अनेन नीगागमः । अतिशयेन पद्यते । यङ् । द्वित्वम् । नीगागमः । कित्वादाकाराभावः । पनीपद्यते । पनीपदांचक्रे । अपनीपदिष्ट ॥ स्रंसु ध्वंसु अधःपतने । यङ् । नोलोपः । द्वित्वम् । पूर्वस्य नीगागमः । सनीस्रस्यते । सनीस्रसांचक्रे । असनीस्रसिष्ट । 'झपानाम्०' । अनेन धस्य दः । अन्यत्तु पूर्ववत् । दनीध्वस्यते । दनीध्वसांचक्रे । अदनीध्वसिष्ट ॥ भ्रंसुधातोर्यङ् । द्वित्वम् । 'पूर्वस्य' । 'झपानाम्०' । 'पद' अनेन नीगागमः । 'नोलोपः' । बनीभ्रस्यते । चतुर्णां सुगमानि । लिट् । 'कासादि०' । 'अनपि च हसात्' । बनीभ्रसांचक्रे । 'सिसता०' । बनीभ्रसिषीष्ट । बनीभ्रसिता । लुङ्लकारे 'भूते सिः' । इट् । षत्वम् । ष्टुत्वम् । अबनीभ्रसिष्ट ॥ वञ्चु वञ्चने । अतिशयेन वञ्चति यङ् । द्वित्वम् । पूर्वस्य नीगागमः । वनीवच्यते । 'नो लोपः' इति सूत्रेण नकारलोपः । लिट्लकारे । 'कासादि०' । वनीवचांचक्रे । लुङ्लकारे । साधनं तु पूर्ववत् । अवनीवचिष्ट । इत्यादीनि भवन्ति ॥ दंश दशने । अतिशयेन दशति । यङ् । अन्यत्साधनं पूर्ववत् । नीगागमः । 'नोलोपः' । दनीदश्यते । लिट् । 'कासादि०' । दनीदशांचक्रे । लुङ् । अदनीदशिष्ट ॥ स्कन्दिर् गतिशोषणयोः । अतिशयेन स्कन्दति । नीगागमः । 'नोलोपः' । 'कुहोश्चुः' । चनीस्कद्यते । लिट् । चनीस्कदांचक्रे । लुङ् । अचनीस्कदिष्ट ॥ कस गतौ । अतिशयेन कसति । यङ् । दित्वादिकम् । नीगागमः । 'कुहोश्चुः' । चनीकस्यते । लिट्लकारे । 'कासादि०' अनेनाम् । 'अनपि च०' । चनीकसांचक्रे । लुङ् । अचनीकसिष्ट ॥ पत्लृ पतने । अतिशयेन पतति । यङ् । अन्यत्सुगमम् । नीगागमः । पनीपत्यते । लिट् । 'कासादि०' पनीपतांचक्रे । लुङ्लकारे । अपनीपतिष्ट ॥

**ऋतो रिः ॥ ऋकारस्य रिरादेशो भवति यङि सति ॥ ततो द्वित्वम् । ये । चेक्रीयते । चेक्रीयांचक्रे ॥ जेह्रीयते ॥**

डुकृञ् करणे । अतिशयेन करोति । 'अतिशये०' । अनेन यङ् ॥ सूत्रम्—'ऋतो रिः' ॥ ऋतः रिः ऋकारान्तस्य धातोः रि इत्यादेशो भवति यङि सति । 'ये' अनेन दीर्घः । ततो द्वित्वम् । ह्रस्वः । 'पूर्वस्य०' । 'कुहोश्चुः' । यङि । अनेन गुणः । चेक्रीयते । चतुर्णां सुगमानि । लिट् । 'कासादि०' । चेक्रीयांचक्रे । लुङ्लकारे । अचेक्रीयिष्ट । इत्यादीनि ॥ हृञ् हरणे । अतिशयेन हरति । यङ् । द्वित्वादिकम् । पूर्वम् । 'ऋतो रिः' । अन्यत्सुगमम् । जेह्रीयते लिट्लकारे । 'कासादि०' । जेह्रीयांचक्रे । लुङ्लकारे । अजेह्रीयिष्ट । इत्यादीनि ।

**दादेरिः ॥ अपिदाधामाङोहाक्पिबसोस्थानामिकारो भवति किति ङिति हसे परे । देदीयते । देदीयांचक्रे ॥ ये । देधीयते । मेमीयते । जेगीयते । जेहीयते । पेपीयते । सेषीयते । सेष्ठीयते ॥**

दा दाने । अतिशयेन ददाति । 'अतिशये०' अनेन यङ् ॥ सूत्रम्—'दादेरिः' ॥ दादेः इः अपिदा धा मा गा हाक् पिब सो स्थानाम् एतेषां धातूनां इकारो भवति किति ङिति हसे

परे । षष्ठी० अनेन अन्तस्य भवति । ततो 'ये' अनेन दीर्घः । ततो द्वित्वम् । ह्रस्वः । 'गुणः' । अन्यत्साधनं सुगमम् । देदीयते । लिट् । 'कासादि०' । देदीयांचक्रे । लुङ्लकारे । अदेदीयिष्ट । इत्यादीनि भवन्ति ॥ डुधाञ् धारणपोषणयोः । अतिशयेन दधाति । यङ् । 'दादेरिः' । अन्यत्सुगमम् । देधीयते । लिट्लकारे । 'कासादि०' । देधीयांचक्रे । लुङ्लकारे । अदेधीयिष्ट । इत्यादीनि ॥ मा माने । अतिशयेन माति । यङ् । 'दादेरिः' । मेमीयते । लिट् । मेमीयांचक्रे । लुङ् । अमेमीयिष्ट । इत्यादीनि ॥ गाङ् गतौ । अतिशयेन गायति । यङ् । 'दादेरिः' । अन्यत्सुगमम् । जेगीयते । लिट् । जेगीयांचक्रे । लुङ् । अजेगीयिष्ट । इत्यादीनि ॥ पा पाने । अतिशयेन पिबति । 'अतिशये०' । अनेन यङ् । 'दादेरिः' । अन्यत्सुगमम् । पेपीयते । लिट्लकारे । 'कासादि०' । पेपीयांचक्रे । लुङ् । अपेपीयिष्ट । इत्यादीनि ॥ षो अन्तकर्मणि । 'आदेः ष्णः स्नः' । अतिशयेन स्यति । यङ् । 'दादेरिः' । षत्वम् । सेषीयते । लिट् । 'कासादि०' । सेषीयांचक्रे । लुङ्लकारे । असेषीयिष्ट । इत्यादीनि ॥ ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' अतिशयेन तिष्ठति । 'अतिशये' । अनेन यङ् । 'दादेरिः' । गुणः । षत्वम् । तेष्ठीयते । चतुर्णां सुगमानि । लिट्लकारे । 'कासादि०' । अनेनाम् । तेष्ठीयांचक्रे । लुङ्लकारे । अतेष्ठीयिष्ट । इत्यादीनि ॥

**घ्राध्मोरीः ॥ अनयोरीकारो भवति यङि सति ॥ जेघ्रीयते ॥ देध्मीयते ॥**

घ्रा गन्धोपादाने । अतिशयेन जिघ्रति । यङ् ॥ सूत्रम्—'घ्राध्मोरीः' ॥ घ्राध्मो ईः घ्राः ध्मा अनयोर्धात्वोरीकारो भवति यङि सति । 'षष्ठी०' । अनेनान्त्यस्य । ततो द्वित्वम् । 'पूर्वस्य' । 'झपानाम्०' अन्यत्सुगमम् । जेघ्रीयते । लिट्लकारे । 'कासादि०' । जेघ्रीयांचक्रे । लुङ्लकारे । अजेघ्रीयिष्ट । इत्यादीनि ॥ ध्मा शब्दाग्निसंयोगयोः । अतिशयेन धमति । यङ् । 'घ्राध्मोरीः' । अनेनेकारः । द्वित्वम् । 'पूर्वस्य०' अन्यत्सुगमम् । देध्मीयते । देध्मीयांचक्रे । अदेध्मीयिष्ट इत्यादीनि ॥

**हन्तेर्हिंसायां घ्नी वा वाच्यः ॥ जेघ्नीयते ॥ जपजपां नुक् ॥ द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् । जङ्घन्यते ॥**

हन् हिंसागत्योः । अतिशयेन हन्ति । यङ् ॥ सूत्रम्—'हन्तेः०' ॥ हन्तेर्धातोर्हिंसायां वा घ्नी वाच्यः । ततो द्वित्वादिकम् । अन्यत्साधनं सुगमम् । जेघ्नीयते । जेघ्नीयांचक्रे । अजेघ्नीयिष्ट । इत्यादीनि भवन्ति । हिंसाभावे तु । 'द्विरुक्तस्य०' । अनेन कुत्वम् । 'जपजपां०' अनेन नुक् । 'नश्चापदान्ते' जङ्घन्यते लिट् । जङ्घनांचक्रे । लुङ्लकारे । अजङ्घनिष्ट । इत्यादीनि ॥

**चायो यङि की वाच्यः ॥ चायृ सन्तानपालनयोः । चेकीयते ॥**

चायृ संतानपालनयोः ॥ सूत्रम्—'चायः०' ॥ चायो धातोः की वाच्यः यङि परे । अनेन कीः । 'कुहोश्चुः' । गुणः । चेकीयते । लिट्लकारे । 'कासादि०' । चेकीयांचक्रे । 'सिसता०' । चेकीयिषीष्ट । चेकीयिता । चेकीयिष्यते । अचेकीयिष्यत । लुङ्लकारे । अचेकीयिष्ट । इत्यादीनि ॥

**कवतेर्यङि चुत्वाभावो वाच्यः ॥ कु शब्दे । कोकूयते ॥**

कु शब्दे । अतिशयेन कवति । यङ् । द्वित्वम् ॥ सूत्रम्—'कवतेः०' ॥ कवतेर्धातोर्यङि परे चुत्वाभावो वाच्यः । अनेन चुत्वनिषेधः । 'ये' गुणः । कोकूयते । लिट् । 'कासादि०' । कोकूयांचक्रे । लुङ्लकारे । अकोकूयिष्ट । इत्यादीनि ॥

**शीङो यङ् क्ङिति ये वक्तव्यः ॥ शाशय्यते ॥ ढौकृ गतौ । डोढौक्यते ॥ त्रौकृ गतौ । तोत्रौक्यते । इति यङ्प्रक्रिया ॥ २९ ॥**

शीङ् स्वप्ने । अतिशयेन शेते । 'अतिशये०' । अनेन यङ् ॥ सूत्रम्—'शीङोः०' ॥ शीङो धातोरयङ् क्ङिति यप्रत्यये परे वक्तव्यः ङिदन्तस्य । पश्चात् द्वित्वम् । 'आतः' । 'यतः' । शाशय्यते । लिट्लकारे । शाशयांचक्रे । अशाशयिष्ट । इत्यादीनि भवन्ति ॥ ढौकृ गतौ । अतिशयेन ढौकति । यङ् । द्वित्वम् । ह्रस्वः । 'गुणः' । 'झपानाम्' । डोढौक्यते । लिट्लकारे । डोढौकांचक्रे । लुङ्लकारे । अडोढौकिष्ट । इत्यादीनि ॥ त्रौकृ गतौ । अतिशयेन त्रौकति । यङ् । द्वित्वम् । 'पूर्वस्य' ह्रस्वः । 'गुणः' । तोत्रौक्यते । लिट्लकारे । तोत्रौकांचक्रे । लुङ्लकारे । अतोत्रौकिष्ट अतोत्रौकिषाताम् अतोत्रौकिषत । इत्यादीनि भवन्ति । इति यङ्प्रक्रिया समाप्ता ॥

---

## यङ्लुक्प्रक्रिया ३०

**अथ यङ्लुक्प्रक्रिया निरूप्यते ॥ वान्यत्र ॥ लुगनुवर्तते । अन्यत्रेत्यच्प्रत्ययसंयोगं विनापि वा यङो लुग्भवति ॥**

अथ यङ्लुक्प्रक्रिया कथ्यते । सूत्रम्—'वान्यत्र' ॥ द्विपदं सूत्रम् । लुक् एतत् पदं पूर्वसूत्रादनुवर्तते । अनुवृत्तिक्रमस्तु सूत्रपाठाज्ज्ञातव्यः । अन्यत्र अच्प्रत्ययसंयोगं विनापि वातिशयार्थे विहितस्य यङ्प्रत्ययस्य लुग् भवति ॥ अन्यत्र तु—'उक्प्रत्यये परे यङो लुग् भवति । अन्यत्रापि उक्प्रत्ययाभावेपि यङो लुग् भवतीति' व्याख्यातम् । वाग्रहणात् कचित् यङो लोपो न भवति । अनेन यङो लोपः ॥

**लुकि सति पिति त्सि वा ईकारो वक्तव्यः ॥ बोभवीति बोभोति बोभूतः बोभुवति । यङ्लुगन्तं परस्मैपदं ह्वादिवच्च द्रष्टव्यम् । ह्वादित्वादपो लुक् द्वित्वमपि ज्ञातव्यम् । बोभूयात् । बोभवति बोभोतु-बोभूतात् बोभूताम् बोभुवतु । अबोभवीत् अबोभोत् अभोभूताम् । अबोभवुः । बोभवांचकार । बोभूयात् । बोभविता । बोभविष्यति । अबोभविष्यत् । दादेः पे । गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्-अबोभोत् अबोभूताम् अबोभूवुः ॥**

भू सत्तायाम् । अस्य धातोरतिशयार्थे विहितस्य यङो लोपः । यङ्लुगन्तं धातुरूपं परस्मैपदे प्रयोज्यम् । तच्च ह्वादिवत्साध्यम् । ह्वादित्वात् 'ह्वादेर्द्विश्च' अनेन द्वित्वम् । 'अप् कर्तरि' अनेन सूत्रेण विहितस्यापो लुग् भवति । लुकि कृते सति धातोर्द्वित्वं च भवति । अनेन व्याख्यानेनापो लुक् । धातोर्द्वित्वम् । यङि च अनेन गुणः । 'झपानां०' अनेन भस्य बः ॥ सूत्रम्—'लुकि०' ॥ लुकि कृते पिति तकारे सकारे

मकारे च परे वा ईट् वक्तव्यः । अनेन ईट् । 'गुणः' । अनेन गुणो न भवति । 'ओ अव्' । बोभवीति । यदा ईट् न भवति तदा गुणो भवति । बोभोति । बोभूतः । 'नुधातोः' । अनेनोव् । बोभुवति । बोभवीषि बोभोषि बोभूथः बोभूथ । बोभवीमि बोभोमि बोभूवः बोभूमः । बोभूयात् बोभूयाताम् बोभूयुः । बोभवीतु बोभोतु बोभूतात् बोभूताम् बोभुवतु । बोभूहि बोभूतात् बोभूतम् बोभूत । बोभवानि बोभवाव बोभवाम । 'दिबादावट्' । अबोभवीत् अबोभोत् अबोभूताम् । 'अन उस्' । उसि परे गुणः । अबोभवुः । अबोभवीः । अबोभोः अबोभूतम् अबोभूत । अबोभवम् अबोभूव अबोभूम । 'कासादि०' । अनेनाम् । गुणः । बोभवांचकार । बोभवामास । बोभवांबभूव । बोभूयात् । 'सिसता०' । अनेनेट् । गुणः । बोभविता । बोभविष्यति । अबोभविष्यत् । लुङ्लकारे । 'दादेः पे' अनेन सेर्लोपः । गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । इडभावे गुणः । अबोभोत् अबोभूताम् । अन उस् । 'गुणः' । अबोभवुः । अबोभवीः अबोभोः अबोभूतम् अबोभूत । अबोभूवम् अबोभूव अबोभूम ॥

**पापचीति-पापक्ति पापक्तः पापचति । पापच्यात् । पापचीतु-पापक्तु । झसाद्धिर्हेः । पापग्धि । अपापचीत् अपापक् । पापचांचकार । पापच्यात् । पापचिता । पापचिष्यति । अपापचिष्यत् । अपापचीत् ॥**

पच धातोर्यङो लुकि कृते साधनं तु पूर्ववत् । 'आतः' अनेन सूत्रेण पूर्वस्याकारस्याकारः लुकि सति । अनेन वा ईट् । पापचीति । ईडभावे । 'चोः कुः' । पापक्ति । पापक्तः । पापचति । अन्यानि सुगमानि । पापच्यात् । पापचीतु पापक्तु । पापक्तात् पापक्ताम् । पापचतु । हौपरे । 'झसाद्धिर्हेः' । 'चोः कुः' । 'झबे जबाः' । पापग्धि । अन्यानि सुगमानि । अपापचीत् । ईडभावे । 'चोः कुः' । 'दिस्योर्हसात्' । अपापक् अपापक्ताम् अपापचुः । अन्यानि सुगमानि । लिट् । 'कासादि०' । पापचांचकार । पापच्यात् । अनपि धातुः प्रत्ययान्तः सन् सेड् भवति । पापचिता । पापचिष्यति । अपापचिष्यत् । लुङ् । द्वाविटौ । सेर्लोपः । अपापचीत् अपापचिष्टाम् अपापचिषुः । इत्यादीनि ॥

**द्वेः ॥ द्विरुक्तस्य पिति सार्वधातुके स्वरेऽपि नोपधाया गुणः । बोभुजीति-बोभोक्ति । अबोभुजीत्-अबोभोक् ॥**

भुज् पालनाभ्यवहारयोः । यङो लुकि कृते सति । अन्यत् साधनं तु पूर्ववत् । 'उपधाया लघोः' । अनेन गुणे प्राप्ते ॥ सूत्रम्—'द्वेः' ॥ द्विरुक्तस्य धातोः पिति सार्वधातुके स्वरे परेऽपि उपधाया गुणो न भवति । अनेन गुणनिषेधः । बोभुजति । ईडभावे । 'चोः कुः' । 'खसे०' । 'उपधाया लघोः' । बोभोक्ति बोभुक्तः बोभुजति । द्वेः । अनेनात्र अन्तः अत् । अन्यानि सुगमानि । बोभुज्यात् । बोभुजीतु बोभोक्तु । हौ परे । 'हसाद्धिर्हेः' 'चोः कुः' । 'झबे जबाः' । बोभुग्धि । अन्यानि सुगमानि । अबोभुजीत् । ईडभावे । 'चोः कुः' । 'दिस्योर्हसात्' । 'वावसाने' । अबोभोक् अबोभुक्ताम् अबोभुजुः । इत्यादीनि । लिट् । 'कासादि०' । बोभोजांचकार । इत्यादीनि बोभुज्यात् । 'सिसता०' । बोभोजिता । बोभोजिष्यति । अबोभोजिष्यत् । लुङ् । अबोभोजीत् ॥

वावदीति-वावर्त्ति ॥

वद व्यक्तायां वाचि । यङो लुक् । 'आतः' अनेन पूर्वस्याकारः लुकि सति । अनेन ईट् । वावदीति । ईडभावे । 'खसे०' । वावत्ति वावत्तः वावदति । इत्यादीनि । वावद्यात् । वावदीतु वावत्तु । हौ परे 'झसाद्धिर्हेः' वावद्धि । अवावदीत् । ईडभावे । अवावत् अवावत्ताम् अवावदुः । इत्यादीनि । लिट् । 'कासादि०' । वावदांचकार । वावद्यात् । 'सिसता०' । वावदिता । वावदिष्यति । अवावदिष्यत् । लुङ् । द्वाविटौ सेर्लोपः । अवावदीत् अवावदिष्टाम् । अवावदिषुः ॥

जाघटीति । जाघट्टि ॥

घट चेष्टायाम् । यङो लक् । द्वित्वम् । 'कुहोश्चुः' । 'आतः' लुकि सति । अनेन ईट् । जाघटीति । ईडभावे । 'ष्टुभिः ष्टुः' । जाघट्टि जाघट्टः जाघटति । जाघट्यात् । जाघटीतु जाघट्टु । हौ परे । 'झसाद्धिर्हेः' । ष्टुत्वम् । जाघड्ढि । अजाघटीत् । ईडभावे अजाघट् । लिट् । 'कासादि०' जाघटांचकार । जाघट्यात् । जाघटिता । जाघटिष्यति । अजाघटीत् ॥

**ऋकारान्तानामृदुपधानां च यङ्लुकि सति पूर्वस्य रुक्रिक्रीक आगमा वक्तव्याः ॥ रः ॥ डुकृञ् करणे । चर्करीति-चरिकरीति-चरीकरीति चर्कर्ति-चरिकर्ति चरीकर्ति । चर्कृतः-चरिकृतःचरीकृतः । चर्कृति-चरिकृति चरीकृति । अचर्कारीत्-अचरिकारीत् अचरीकारीत् ॥**

डुकृञ् करणे । यङ्लुकि सति द्वित्वम् । 'रः' । 'कुहोश्चुः' सूत्रम्—'ऋकारान्तानां०'॥ किरवादन्ते । रुक् इत्यत्र उकार उच्चारणार्थः । ककारः कित्कार्यार्थः । अतो र इत्यागमः । रिक्रीकौ तु यथास्थितौ । तत्र ककारः कित्कार्यार्थः । लुकि सति अनेन पित्यडागमो वा भवति । रुगागमे कृते ईडागमे कृते । चर्करीति । अत्र गुणो भवति । रिगागमे कृते । चरिकरीति । रीगागमे कृते । चरीकरीति । ईडभावेपि त एवागमा भवन्ति । चर्कर्ति । चरिकर्ति । चरीकर्ति । द्वित्वबहुत्वयोस्तु रुक्रिक्रीगागमेषु कृतेषु सत्सु प्रत्येकं त्रीणि रूपाणि भवन्ति । चर्कृतः चरिकृतः चरीकृतः । अन्त अत् । 'ऋरम्' पूर्वोक्ता आगमा भवन्ति । चर्कृति चरिकृति चरीकृति । एवं प्रथमपुरुषे द्वादश रूपाणि भवन्ति । मध्यमपुरुषेपि द्वादश रूपाणि भवन्ति । चर्करीषि । अत्र षत्वम् । च भवति । चरिकरीषि । चरीकरीषि । ईडभावे । चर्कर्षि चरिकर्षि चरीकर्षि । चर्कृथः चरिकृथः चरीकृथः । चर्कृथ चरिकृथ चरीकृथ । उत्तमपुरुषेऽपि द्वादश । ईड् वा भवति । चर्करीमि चरिकरीमि चरीकरीमि । चर्कृवः चरिकृवः चरीकृवः । चर्कृमः चरिकृमः चरीकृमः । एवं षट्त्रिंशद्रूपाणि वर्तमाने स्युः ॥

विधिसंभावनयोः । एते आगमा भवन्ति । चर्कृयात् चरिकृयात् चरीकृयात् । चर्कृयाताम् चरिकृयाताम् चरीकृयाताम् । चर्कृयुः चरिकृयुः चरीकृयुः । चर्कृयाः चरिकृयाः चरीकृयाः । चर्कृयातम् चरिकृयातम् चरीकृयातम् । चर्कृयात चरिकृयात चरीकृयात । चर्कृयाम् चरिकृयाम् चरीकृयाम् । चर्कृयाव चरिकृयाव चरीकृयाव । चर्कृयाम चरिकृयाम चरीकृयाम ॥

लोट्लकारे—ईडागमे त्रीणि रूपाणि । तदभावे त्रीणि रूपाणि भवन्ति । अन्यत्र यथासंभवम् । चर्करीतु चरिकरीतु चरीकरीतु । ईडभावे चर्कर्तु चरिकर्तु चरीकर्तु । तातङादेशे कृते—चर्कृतात् चरिकृतात् चरीकृतात् । एवं तुपि नव रूपाणि ॥ द्विवचनेऽपि त्रीणि रूपाणि—चर्कृताम् चरिकृताम् चरीकृताम् ॥ बहुवचने त्रीणि रूपाणि । 'द्वेः' अनेन अन्तः अत् । 'ऋ रम्' । चर्क्रतु चरिक्रतु चरीक्रतु ॥ मध्यमपुरुषे—चर्कृहि चरिकृहि चरीकृहि । तातङादेशे—चर्कृतात् चरिकृतात् चरीकृतात् । चर्कृतम् । चरिकृतम् चरीकृतम् । चर्कृत चरिकृत चरीकृत ॥ उत्तमपुरुषे पित्त्वात् गुणः । णत्वम् । चर्कराणि चरिकराणि चरीकराणि । चर्कराव चरिकाव चरीकराव । चर्कराम चरिकराम चरीकराम ॥

एवमाशीःप्रेरणयोः षट्त्रिंशद्रूपाणि । लङ् । त्रिष्विमागमः । 'दिबादावट्' अचर्करीत् अचरिकरीत् अचरीकरीत् । ईडभावे 'दिस्योर्हसात्' 'स्रोर्विसर्गः' अचर्कः अचरिकः । अचरीकः । अचर्कृताम् अचरिकृताम् अचरीकृताम् । 'अन उस्' । 'गुणः' । अचर्करुः अचरिकरुः अचरीकरुः । अचर्करीः अचरिकरीः अचरीकरीः । ईडभावे । 'दिस्योर्हसात्' । 'स्रोर्विसर्गः' । अचरिकः अचरीकः । अचर्कृतम् । अचरिकृतम् । अचरीकृतम् । अचर्कृत अचरिकृत अचरीकृत । अचर्करम् अचरिकरम् अचरीकरम् । अचर्कृव अचरिकृव अचरीकृव । अचर्कृम अचरिकृम अचरीकृम ॥

लिट् । 'कासादि०' । चर्करांचकार चरिकरांचकार चरीकरांचकार । इत्यादीनि । चर्करामास चरिकरामास चरीकरामास । चर्करांबभूव चरिकरांबभूव चरीकरांबभूव । इत्यादीनि रूपाणि भवन्ति ॥

चर्क्रियात् चरिक्रियात् चरीक्रियात् ॥

'सिसता०' अनेन इट् । चर्करिता चरिकरिता चरीकरिता इत्यादीनि ॥ चर्करिष्यति चरिकरिष्यति चरीचरिष्यति ॥ अचर्करिष्यत् अचरिकरिष्यत् अचिरीकरिष्यत् ॥ लुङ् । इट्‌ावीटौ । सेर्लोपः । अचर्कारीत् अचरिकारीत् इत्यादीनि ॥

**वर्वृतीति-वरिवृतीति वरीवृतीति । वर्वर्ति-वरिवर्ति-वरीवर्ति । अवर्वृतीत्-अवरिवृतीत् अवरीवृतीत् ॥**

**रात्सस्य ॥ रेफादुत्तरस्य सस्यैव लोपो नान्यस्य । अवर्वर्त्-अवरिवर्त्-अवरीवर्त् । अवर्वृताम्-अवरिवृताम्-अवरीवृताम् । वर्वर्तांचकार वरिवर्तांचकार वरीवर्तांचकार ॥**

वृतुङ् वर्तने । यङ्लुकि कृते साधनं तु पूर्ववत् । अयं धातुॠदुपधोऽस्ति तस्मात् पूर्वोक्ता आगमा भवन्ति । 'लुकि सति' अनेन ईडागमः । वर्वृतीति वरिवृतीति वरीवृतीति । ईडभावे । वर्वर्ति वरिवर्ति वरीवर्ति । इत्यादीनि ॥ लिङ्—वर्वृत्यात् वरिवृत्यात् वरीवृत्यात् । इत्यादीनि ॥ लोट्—वर्वृतीतु वरिवृतीतु वरीवृतीतु । तातङादेशे—वर्वृतात् वरिवृतात् वरीवृतात् । इत्यादीनि ॥ लङ् । 'द्वेः' अनेन गुणनिषेधः । अवर्वृतीत् । अवरिवृतीत् । अवरीवृतीत् । ईडभावे—'संयोगान्तस्य०' अनेन तकारस्य लोपे प्राप्ते ॥ 'रात्सस्य' अनेन तन्निषेधः । अव-

र्वेत्। अत्र 'दिस्योः०' अनेन लोपः । अवरिवर्त् अवरीवर्त्। अवर्वृताम् अवरिवृताम् अवरीवृताम्। इत्यादीनि ॥ लिट्। 'कासादि०' । वर्वर्ताञ्चकार वरिवर्ताञ्चकार वरीवर्ताञ्चकार। वर्वर्तामास वरिवर्तामास वरीवर्तामास। वर्वर्ताबभूव। वरिवर्ताबभूव। वरीवर्ताबभूव ॥ आशीर्लिङ् वर्वृत्यात् वरिवृत्त्यात् वरीवृत्त्यात् ॥ 'सिसता०' । वर्वर्तिता वरिवर्तिता वरीवर्तिता ॥ वर्वर्तिष्यति वरिवर्तिष्यति वरीवर्तिष्यति ॥ अवर्वर्तिष्यत् अवरिवर्तिष्यत् अवरीवर्तिष्यत् लुङ्। अवर्वर्तीत् अवरिवर्तीत् अवरीवर्तीत् ॥

**वनीवञ्चीति वनीवङ्क्ति। 'नो लोपः' वनीवक्तः वनीवचति ॥**

वञ्चु वञ्चने। यङ्लुकि कृते। पूर्ववत् साधनम् । नीगागमः। 'लुकि सति' अनेन ईट्। वनीवञ्चीति। ईडभावे। 'चोः कुः'। वनीवङ्क्ति। 'नो लोपः'। वनीवक्तः। 'द्वेः' वनीवचति। इत्यादीनि। वनीवच्यात्। वनीवञ्चीतु वनीवङ्क्तु। अवनीवञ्चीत्। अवनीवक् इत्यादीनि ॥ लिट्। वनीवञ्चांचकार। वनीवञ्चामास। वनीवञ्चांबभूव ॥ 'नो लोपः' वनीवच्यात्। 'सिसता०'॥ वनीवञ्चिता ॥ वनीवञ्चिष्यति ॥ अवनीवञ्चिष्यत्। अवनीवञ्चीत् अवनीवञ्चिष्टाम् अवनीवञ्चिषुः।

**जङ्गमीति जङ्गन्ति। लोपस्त्वनुदात्ततनाम्। जङ्गतः। गमां स्वरे। जङ्ग्मति। धातुग्रहणोक्तं यङ्लुकि वेति केचित्। जङ्गमति ॥ जङ्गमीमि ॥ मो नो धातोः ॥ धातोर्मकारस्य नकारो भवति झसे पदान्ते वमयोश्च ॥ जङ्गन्मि जङ्गन्वः जङ्गन्मः ॥**

गम्लृ गतौ। यङ्लुकि कृते द्वित्वादिकं कार्यम्। 'कुहोश्चुः' अनेन गस्य जः। 'जमजपां०' अनेन पूर्वस्य नुक्। 'नश्चा०'। 'लुकि सति' अनेन वेट्। जङ्गमीति। ईडभावे—'नश्चा०' जङ्गन्ति । 'लोपस्त्वनुदात्ततनां' अनेन नकारस्य लोपः । जङ्गतः। 'गमां स्वरे' अनेनोपधालोपः जङ्ग्मति । इत्यादीनि । धातुग्रहणोक्तं यङ्लुकि वा भवति इति केचिदाचार्या वदन्ति। तेन वा नोपधालोपः । जङ्गमति ॥ अन्यानि मूलतो ज्ञेयानि। जङ्गम्यात् ॥ जङ्गमीतु। जङ्गन्तु ॥ अजङ्गमीत्। ईडभावे। 'दिस्योः' ॥ सूत्रम्—'मो नो धातोः'॥ अजङ्गन्। इत्यादीनि रूपाणि सुगमानि अनेनैव प्रकारेण साध्यानि ॥ लिट्लकारे। 'कासादि०' अनेनाम्। जङ्गमांचकार । जङ्गमामास। जङ्गमांबभूव। इत्यादीनि ॥ जङ्गम्यात् ॥ 'सिसता०' जङ्गमिता ॥ जङ्गमिष्यति ॥ अजङ्गमिष्यत्। लुङ्लकारे। अजङ्गमीत् अजङ्गमिष्टाम् अजङ्गमिषुः ॥

**द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् ॥ जङ्घनीति-जङ्घन्ति जङ्घतः जङ्घ्नति ॥**

हन् हिंसागत्योः। यङ्लुकि कृते द्वित्वादिकं सर्वं भवति। 'कुहोश्चुः'। 'झपानाम्०' ॥ 'द्विरुक्तस्य' 'जमजपाम्०'। 'नश्चा०' । 'लुकि सति' जङ्घनीति। ईडभावे—'नश्चा०' जङ्घन्ति। 'लोपस्त्वनु०'। 'गमां स्वरे' जंघ्नति। जङ्घन्यात्। जङ्घनीतु। जङ्घन्तु। इत्यादीनि॥ अजङ्घनीत्। ईडभावे। अजङ्घन् अजङ्घताम् अजंघ्नुः ॥ जङ्घनांचकार। जङ्घनामास। जङ्घनांबभूव ॥ आशिषि वधादेशः वध्यात्। जङ्घनिता। जङ्घनिष्यति। अजङ्घनिष्यत् ॥ वृद्धिनिषेधः। अवधीत्। इत्यादीनि ॥

**जाहेति-जाहाति जाहीतः जाहति ॥ एवं दाधेतीत्यादि । दादेति दादाति दात्तः दादति । दादेतु दादेयात् अदादात् ॥ एवं धेट् । दाधेति दाधाति दाद्धः दाधति । दाधेयात् । अदाधासीत् अदाधात् अदाधत् ॥ धाञ् । दाधेति दाधाति धात्तः । पितोस्तु । दादेति । दादीतः । दादीहि । दादायात् । अदादासीत् । जहातेः पूर्वस्य दीर्घो वेति केचित् ॥ जहाति ॥ इति यङ्लुक्प्रक्रिया ॥ ३० ॥**

ओहाक् त्यागे । यङ्लुकि कृते । द्वित्वादिकम् । 'कुहोश्चुः' । 'ह्रस्वः' । 'झपानाम्०' । 'आतः' । 'लुकि सति' अनेन ईद् । 'अइए' । जाहेति । ईडभावे—जाहाति 'द्वेस्तौ' । अनेनाकारस्य ईकारः । जाहीतः । जाहति । जाहीयात् । जाहेतु । जाहातु । अजाहेत् । अजाहात् । जाहांचकार । जाहायात् । 'सिसता' । जाहिता । जाहिष्यति । अजाहिष्यत् । 'आदन्तानां०' । अजाहासीत् ॥

दा दाने । यङ्लुकि कृते द्वित्वादिकम् । 'ह्रस्वः' 'आतः' 'लुकि सति' दादेति । दादाति । 'दादेः' । दात्तः । दादति । दाद्यात् । दादेतु । अदादेत् । अदादात् । दादांचकार । दादायात् । दादिता । दादिष्यति । अदादिष्यत् । अदादासीत् । 'दादेः पे' । अदादात् ॥ एवम् । दाधेति । दाधाति । दाद्धः । दाधति । लिट् । दाधांचकार । लुङ् । अदाधासीत् । वा सिलोपः । अदाधात् ॥ डुधाञ् धारणपोषणयोः । अस्यापि रूपाणि पूर्ववत् ॥

दैप् शोधने । दादेति । दादाति । दादीतः । दादति । दादीयात् । दादेतु । दादातु । अदादेत् । अदादात् । दादांचकार । दादायात् । लुङ्लकारे । 'आदन्तानाम्' । अदादासीत् ॥

'जहातेर्धातोः पूर्वस्य दीर्घो वा भवति' इति केचिदाचार्या वदन्ति तन्मते जहाति । इत्यादीनि रूपाणि भवन्ति । तेषां सुगमत्वात् व्याख्यानं न कृतम् । इति यङ्लुक्प्रक्रिया समाप्ता ॥

---

## नामधातुप्रक्रिया ३१

**अथ नामधातुप्रक्रिया ॥ नाम्नो य ई चास्य ॥ नाम्न इच्छायामर्थे यः प्रत्ययो भवति तत्सन्नियोगे चाकारस्य ईकारः । आत्मनः पुत्रमिच्छतीति पुत्रीयति । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् इत्यादि ॥**

अथ नामधातुप्रक्रिया । सूत्रम्—'नाम्नो य ई चास्य' ॥ नाम्नः यः ईः च अव्ययम् अस्य । नामशब्दात् इच्छायां वाच्यायां यः प्रत्ययो भवति तस्य सन्नियोगे सति अकारस्य ईकारो भवति । आत्मनः पुत्रमिच्छति इति विग्रहे । अनेन यः प्रत्ययो भवति । 'समासप्रत्यययोः' अनेन विभक्तिलोपः । 'स धातुः' अनेन धातुत्वम् । धातुत्वात् तिबादयः 'अप् कर्तरि' । 'यतः' पूर्वस्य अकारस्य ईकारः । पुत्रीयति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । 'कासादि०' । पुत्रीयांचकार । पुत्रीय्यात् । 'सिसता०' । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् । इत्यादीनि ॥

**यादौ प्रत्यये ओकारौकारयोरवावौ वक्तव्यौ ॥ गां इच्छतीति गव्यति ॥ नावं इच्छतीति नाव्यति ॥ त्वद्यति । युष्मद्यति । अस्मद्यति । [ काम्यश्च ॥ पुत्रं इच्छति पुत्रकाम्यति ॥ ] गव्याञ्चकार ॥ यकारस्यानपि वा लोपो वाच्यः ॥ गवांचकार । गव्यात् । गव्यिता-गविता । अगव्यीत् अगवीत् अगव्यिष्टाम्-अगविष्टाम् अगव्यिषुः-अगविषुः ॥ नाव्यात् नाव्यिता-नाविता । अनाव्यीत्-अनावीत् ॥ धनीयति ॥**

गामिच्छति । 'नाम्नो य ई चास्य' । अनेन यः प्रत्ययः । अन्यत्तु पूर्ववत् कार्यम् । सूत्रम्—'यादौ०' ॥ यादौ प्रत्यये परे ओकारौकारयोः अवावौ वक्तव्यौ । अनेन अव् । गव्यति । लिड्लकारे । 'कासादि०' । गव्यांचकार । सूत्रम्—'यकारस्य०'॥ यकारस्य अनपि विषये वा लोपो वाच्यः । अनेन यकारलोपः । गवांचकार । एवमन्येषामपि ॥ नावमिच्छति । यः प्रत्ययः आव् च भवति । नाव्यति । नाव्यांचकार । नावांचकार । नाव्यात् । नाव्यिता । नाविता । इत्यादीनि । लुङ्लकारे । अनाव्यीत् । अनावीत् । इत्यादीनि भवन्ति ॥ त्वामिच्छति । यः । 'त्वन्मदे०' ॥ अनेन त्वत् । त्वद्यति । लिट् । त्वद्यांचकार । त्वदांचकार यकारस्य लोपे सति यानि रूपाणि भवन्ति तानि सुगमानि । लुङ्लकारे— अत्वद्यीत् अत्वदीत् ॥ मामिच्छति । यः । मत् । मद्यति । मद्यांचकार । मदांचकार । लुङ्लकारे । अमद्यीत् । अमदीत् ॥ युष्मान् इच्छति युष्मद्यति । युष्मद्यांचकार । युष्मदांचकार । लुङ्लकारे । अयुष्मद्यीत् । अयुष्मदीत् । इत्यादीनि ॥ अस्मान् इच्छति अस्मद्यति । लिट् । अस्मद्यांचकार । अस्मदांचकार । 'स्वरादेः' । अनेन द्वितीयोऽडागमः । आस्मद्यीत् । आस्मदीत् । इत्यादीनि ॥ धनमिच्छति इति विग्रहे यः प्रत्ययः । अकारस्य ईकारः । धनीयति । धनीयांचकार । धनीय्यात् । 'सिसता०' । धनीयिता । लुङ्लकारे । अधनीयीत् अधनीयिष्टाम् अधनीयिषुः । इत्यादीनि ॥

**हसात्तद्धितस्य लोपो ये ॥ गार्गीयति ॥ वाच्यति ॥ हसाद्यस्य लोपो वाऽनपि ॥ समिध्यिता समिधिता ॥**

गार्ग्यमिच्छति । यः प्रत्ययः ॥ सूत्रम्—'हसात्०' ॥ हसादुत्तरस्य तद्धितस्य यप्रत्यये लोपो भवति । अनेन यकारस्य लोपः । 'निमित्ताभावे०' अनेन अलोपाभावः । अकारस्य ईकारो भवति । गार्गीयति । चतुर्णां सुगमानि । लिड्लकारे । 'कासादि०' । गार्गीयांचकार । गार्गीय्यात् । 'सिसता०' । गार्गीयिता । गार्गीयिष्यति । अगार्गीयिष्यत् । लुङ्लकारे । अगार्गीयीत् । वाचमिच्छति । यः प्रत्ययः । अन्यत्पूर्ववत् । वाच्यति । वाच्यांचकार । वा यकारलोपः । वाचांचकार । अन्येषां सुगमानि अनेनैव प्रकारेण साध्यानि । लुङ्लकारे । अवाच्यीत् । अवाचीत् ॥ समिधमिच्छति । समिध्यति । समिध्यांचकार । वा

---

१ कोष्ठकान्तर्गतः पाठो न व्याख्यातो व्याख्याकृता । उचितोऽप्ययं "यादौ प्रत्यये—" इत्यतः प्रागेव ॥
२ अयं यलोपविधिः "हसाद्यस्य लोपो वाऽनपि" इत्यस्यैवानुवादभूतः पाणिनीयैरत्र नाङ्गीक्रियते संनिपात विरोधात् । तस्मादत्र यकारविशिष्टान्येव रूपाणि भवन्ति ॥

यलोपः । समिधांचकार । 'सिसता०' समिध्यिता । समिधिता । लुङ्लकारे । असमिध्यीत् । असमिधीत् । इत्यादीनि ॥

**मान्ताव्ययाभ्यां यो न ॥ किमिच्छति । इदमिच्छति । स्वरिच्छति ॥**

सूत्रम्—'मान्ताव्ययाभ्यां०' ॥ मान्तशब्दात् अव्ययात् यः प्रत्ययो न भवति । अतो वाक्यमेव भवति । किमिच्छति । इदमिच्छति स्वरिच्छति । इत्यादीनि ॥

**करणे च ॥ नाम्नः करणेऽर्थे यः प्रत्ययो भवति ॥ कण्डुं करोतीति कण्डूयति । नमस्यति । तपस्यति । वरिवस्यति । गुरून् शुश्रूषत इत्यर्थः ॥**

सूत्रम्—'करणे०' ॥ करणे च अव्ययम् ॥ नाम्नः करणेऽर्थे यः प्रत्ययो भवति । कण्डुं करोति । अनेन यः । 'ये'[1] अनेन पूर्वस्य दीर्घः । अन्यत्साधनं तु पूर्ववत् । कण्डूयति । लिट्लकारे । कण्डूयांचकार । लुङ्लकारे । अकण्डूयीत् ॥ नमः करोति । यः प्रत्ययः । नमस्यति । चतुर्णां सुगमानि । नमस्यांचकार । नमस्यात् । नमस्यिता । लुङ्लकारे । अनमस्यीत् । इत्यादीनि ॥ तपः करोति । यः प्रत्ययः । तपस्यति । तपस्यांचकार । अतपस्यीत् । अतपसीत् । यलोपस्य विकल्पः । वरिवस्शब्दस्य यः प्रत्ययः । अन्यत्साधनं पूर्ववत् । वरिवस्यति । वरिवस्यांचकार । वरिवसांचकार । अवरिवस्यीत् अवरिवसीत् इत्यादीनि भवन्ति । गुरून् शुश्रूषते इत्यर्थः ॥

**क्षीरलवणयोस्तृष्णायां यः सुट् च ॥ क्षीरस्यति । लवणस्यति ॥**

सूत्रम्—'क्षीरलवणयोः'॥क्षीरलवणयोः शब्दयोस्तृष्णायामिच्छायां यः प्रत्ययो भवति । सुट् च भवति प्रत्ययस्य । क्षीरमिच्छति । यः सुट् । अन्यत्तु पूर्ववत् । क्षीरस्यति । क्षीरस्यांचकार । क्षीरसांचकार । लुङ्लकारे । अक्षीरस्यीत् । अक्षीरसीत् । लवणमिच्छति । यः सुट् । लवणस्यति । लवणस्यांचकार । लवणसांचकार । लवणस्यात् 'सिसता०' । लवणस्यिता । लवणसिता । लुङ्लकारे । अलवणस्यीत् । अलवणसीत् । इत्यादीनि ॥

**शब्दादिभ्यो यङ् ॥ ये । शब्दायते । वैरायते । कलहायते । अभ्रायते । मेघायते । कष्टायते ॥**

सूत्रम्—'शब्दादिभ्यः०' ॥ शब्दादिभ्यः शब्देभ्यो यङ्प्रत्ययो भवति । ङकार आत्मनेपदार्थः । अयमपि प्रत्ययः करोत्यर्थे । शब्दं करोति । यङ्प्रत्ययः । ङकारो ङित्कार्यार्थः । 'ये' अनेन पूर्वस्य दीर्घः । शब्दायते । लिट्लकारे । शब्दायांचकार । लुङ्लकारे । अशब्दायिष्ट । इत्यादीनि ॥ कलहं करोति । यङ् । 'ये' कलहायते । कलहायांचक्रे । लुङ्लकारे—अकलहायिष्ट ॥ वैरं करोति । यङ् । 'ये' वैरायते । वैरायांचक्रे । 'सिसता०' । वैरायिता । वैरायिष्यते । अवैरायिष्यत । अवैरायिष्ट । इत्यादीनि ॥ अभ्रं करोति । यङ् । 'ये' अभ्रायते । अभ्रायांचक्रे । 'स्वरादेः' । आभ्रायिष्ट ॥ मेघं करोति । यङ् । 'ये' । मेघायते । मेघायांचक्रे । अमेघायिष्ट ॥ कष्टं करोति । यङ् 'ये' कष्टायते । कष्टायांचक्रे । अकष्टायिष्ट । इत्यादीनि ॥

---

१ पाणिनीयैस्तु 'कण्डू' इति दीर्घ एव पठ्यते ।

**ऊष्मबाष्पाभ्यामुद्वमने यङ् वाच्यः ॥ ऊष्माणमुद्वमति ऊष्मायते । बाष्पायते ॥**

सूत्रम्—'ऊष्मबाष्पाभ्यां०' ॥ ऊष्मबाष्पाभ्यां शब्दाभ्यामुद्वमनेऽर्थे यङ्प्रत्ययो भवति । ऊष्माणमुद्वमति । यङ् । नकारलोपः । 'ये' । ऊष्मायते । ऊष्मायांचक्रे । 'स्वरादेः' । औष्मायिष्ट ॥ बाष्पमुद्वमति । यङ् । 'ये' । बाष्पायते । बाष्पायांचक्रे । अबाष्पायिष्ट । इत्यादीनि भवन्ति । सुगमत्वात्सर्वाणि न लिखितानि ॥

**ञिर्डित्करणे ॥ नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स च डित् ॥ ञकार उभयपदार्थः । घटं करोतीति घटयति । अग्लोपिनो नाङ्कार्यम् । अजघटत् । महान्तं करोति महयति । अममहत् ॥**

सूत्रम्—'ञिर्डित्करणे' ॥ ञिः डित् करणे । नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स प्रत्ययो डित् भवति च । ञकार उभयपदार्थः । डित्त्वाट्टिलोपः । घटं करोति इति विग्रहे—अनेन ञिः प्रत्ययः । टिलोपः । अन्यत्पूर्ववत् । घटयति । घटयते । घटयांचकार । लुङ्लकारे । 'ञेरङ् द्विश्च' । 'अग्लोपिनो नाङ्कार्यं' इति उक्तत्वात् 'अङि लघौ' 'लघोर्दीर्घः' द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । 'ञेः' । 'झपानाम्०' । अजघटत् । महान्तं करोति । ञिः प्रत्ययः । टिलोपः । महयति । महयांचकार । लुङ्लकारे । अममहत् ॥

**ञाविष्ठवत्कार्यम् ॥ पृथ्वादे रः ॥ पृथ्वादेर्ऋकारस्य रो भवति ञौ परे ॥ पृथुं करोति प्रथयति । म्रदयति । द्रढयति । स्थूलं करोति स्थवयति । अङि लघौ ह्रस्व उपधायाः । अतिस्थवत् । दवयति । अदीदवत् । प्रियं करोति प्रापयति । गुरुं करोति गरयति । स्थिरं करोति स्थापयति । ऊढिं करोति ऊढयति । ञेरङ् द्विश्च । ञेः । स्वरादेः परः । अङि पूर्वस्य ढस्य वा जः । औडिढत् औजिढत् ॥**

सूत्रम्—'ञाविष्ठवत्०' ॥ ञिप्रत्यये परे इष्ठवत् कार्यं भवति । सूत्रम्—'पृथ्वादे रः' पृथ्वादेः रः ॥ पृथ्वादेर्ऋकारस्य रकारो भवति । पृथुं करोति । ञिः । टेर्लोपः । रः । प्रथयति । प्रथयांचकार । लुङ् । 'ञेरङ् द्विश्च' । अपप्रथत् ॥ मृदुं करोति । ञिः । टिलोपः । रः । म्रदयति म्रदयांचकार । लुङ् । अमम्रदत् ॥ स्थूलं करोति । ञिः । स्थूलस्य स्थव् । स्थवयति । स्थवयांचकार । लुङ् । 'ञेरङ्' । 'शसात्' । 'अङि लघौ' । अतिस्थवत् ॥ दूरं करोति । ञिः । दूरस्य दव् । दवयति । दवयांचकार । लुङ् सर्वं कार्यं भवति । अदीदवत् ॥ प्रियं करोति । ञिः । प्रियस्य प्रादेशः । 'रातो ञौ पुक् च' । प्रापयति । प्रापयांचकार । लुङ् । अपिप्रपत् अपिप्रपताम् अपिप्रपन् ॥ गुरुं करोति । ञिः । गुरोर्गरादेशः । गरयति । गरयांचकार । अजगरत् । अग्लोप्ययं धातुः ॥ स्थिरं करोति । ञिः । स्थिरस्य स्थादेशः । पुक् । स्थापयति । स्थापयांचकार । लुङ्लकारे । अतिस्थपत् ॥ ऊढिं करोति । ञिः । टिलोपः । ऊढयति । ऊढयांचकार । लुङ् 'ञेरङ्' । 'स्वरादेः परः' । 'ञेः' । स्वरादेः । औडिढत् । अङि पूर्वस्य ढस्य वा जः । औजिढत् ॥

**ऊढं करोतीति ऊढयति ॥ वहः कृतक्तौ कृतसंप्रसारे हो ढस्तथोर्धः ष्टुभिना ढि ढश्च ॥ ऊढिश्च ञिर्डित्करणे स धातुर्ञेरङ् स्वरादेर्द्वेज औजढश्च ॥२०॥ औजढत् ॥**

ऊढं करोति । ञिः । टेर्लोपः । ऊढयति । ऊढयांचकार । लुङ्लकारे । श्लोकक्रमेण साधनं कार्यम् । औजढत् । औजढताम् । औजढन् । इत्यादीनि ॥

**कर्तुर्यङ् ॥ कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति ॥ श्येन इव आचरतीति श्येनायते काकः ॥ पण्डितायते मूर्खः ॥**

सूत्रम्—'कर्तुर्यङ्' ॥ कर्तुः—यङ् ॥ कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति । ङकार आत्मनेपदार्थः । श्येन इव आचरति इति विग्रहे अनेन सूत्रेण यङ् । 'ये' अन्यत्पूर्ववत् । श्येनायते । श्येनायांचक्रे । लुङ्लकारे । अश्येनायिष्ट । काकः श्येनायते ॥ पण्डित इव आचरति । यङ् । 'ये' । पण्डितायते । पण्डितायांचक्रे । लुङ् । अपण्डितायिष्ट ॥

**यङि सलोपो वाच्यः ॥ पयसस्तु विभाषया ॥ अप्सरायते । ओजायते पयायते पयस्यते ॥ सुमनायते ॥**

अप्सरा इव आचरति । यङ् ॥ सूत्रम्—'यङि०' ॥ यङि परे सकारस्य लोपो वाच्यः । द्वितीयपयस्शब्दस्य विकल्पेन भवति । 'ये' । अप्सरायते । अप्सरायांचक्रे । 'स्वरादेः' । आप्सरायिष्ट । ओज इव आचरति । यङ् । सकारलोपः । 'ये' । पयायते । वाग्रहणात् पयस्यते । पयायांचक्रे । पयस्यांचक्रे । यलोपो वा । पयसांचक्रे । अपयायिष्ट । अपयस्यिष्ट । अपयसिष्ट । इत्यादीनि ॥ सुमना इव आचरति । यङ् । सलोपः । 'ये' । अन्यत् पूर्ववत् । सुमनायते । लिट् । 'कासादि०' । सुमनायांचक्रे । लुङ् । असुमनायिष्ट[1] ॥

**नाम्न आचारे क्विब् वाच्यः ॥ कृष्ण इव आचरति कृष्णति । क्विपो लोपः ॥**

सूत्रम्—'नाम्नः०' ॥ पदात् आचारेऽर्थे क्विप् प्रत्ययो वाच्यः । कृष्ण इव । आचरतीति क्विप् प्रत्ययः ॥ 'क्विपो लोपः ।' क्विप्प्रत्ययस्य लोपो भवति । 'स धातुः' । पश्चात् लोपः कार्यः । 'अप्कर्तरि' । कृष्णति । लिट् । 'कासादि०' । कृष्णांचकार । कृष्ण्यात् । 'सिसता०' । कृष्णिता । लुङ् । अकृष्णीत् ॥

**आचार उपमानात् ॥ कर्माधारयोरुपमानात् यः प्रत्ययो भवति आचारेऽर्थे ॥ अकारस्येकारः । पुत्रीयति शिष्यमुपाध्यायः । प्रासादीयति कुट्याम् ॥**

सूत्रम्—'आचार उपमानात्' ॥ आचारे उपमानात् । कर्माधारयोरुपमानात् आचारेऽर्थे यप्रत्ययो भवति । अकारस्य ईकारः । पुत्र इव आचरति । अनेन यः प्रत्ययः । अकारस्य ईकारः । अन्यत्साधनं तु पूर्ववत् । पुत्रीयति शिष्यमुपाध्यायः ॥ प्रासाद इव आचरतीति

---

1 उपसर्गसमानाकारात् पूर्वपदात् परत्रैवाडागम इति 'सुमनायिष्ट' इत्येवं रूपाणि पाणिनीयानां मते भवन्ति ॥

यः प्रत्ययः । अकारस्य ईकारः । प्रासादीयति कुट्यां भिक्षुः । लिट् । प्रासादीयांचकार । लुङ् । अप्रासादीयीत् ॥

**भृशादिभ्योऽभूततद्भावे यङ् वाच्यः ॥ अभृशो भृशो भवतीति भृशायते । श्यामायते । इत्यादि ॥**

सूत्रम्—'भृशादिभ्यः०' ॥ भृशादिभ्यः शब्देभ्योऽभूततद्भावे यङ्प्रत्ययो वाच्यः । अभृशो भृशो भवतीति । यङ् 'ये' भृशायते । लिट् । भृशायांचक्रे । लुङ् अभृशायिष्ट ॥ अश्यामः श्यामो भवतीति यङ् । 'ये' श्यामायते । लिट् श्यामायांचक्रे । लुङ् । अश्यामायिष्ट ॥

**अश्ववृषयोर्मैथुनेच्छायां यः प्रत्ययः सुगागमश्च ॥ अश्वस्यति वडवा । वृषस्यति गौः ॥ सुखादिभ्यो ज्ञापनायां यङ् ॥ सुखं ज्ञापयति सुखायते ॥ इति नामधातुप्रक्रिया ॥ ३१ ॥**

सूत्रम्—'अश्ववृषयोः०'॥ अश्ववृषयोः शब्दयोः मैथुनेच्छायां यः प्रत्ययो भवति । सुगागमश्च भवति । अश्वमात्मन इच्छतीति । यः । सुगागमः । अश्वस्यति । अश्वस्यांचकार । आश्वसीत् । वृषमात्मन इच्छतीति । यः सुक् । वृषस्यति गौः । पुरुष इव आचरतीति । यः सुक् । पुरुषस्यति कामातुरा ॥ सूत्रम्—'सुखादिभ्यः०'॥सुखादिभ्यः शब्देभ्यो ज्ञापनायां यङ्प्रत्ययो भवति । सुखं ज्ञापयतीति । यङ् । 'ये' सुखायते । सुखायांचक्रे । असुखायिष्ट । इत्यादीनि ॥ इति नामधातुप्रक्रिया समाप्ता ॥

---

## आत्मनेपदप्रक्रिया ३२

**अथात्मनेपदव्यवस्था ॥ निविशादेः ॥ नीत्याद्युपसर्गपूर्वकाद्विशादेर्धातोरात्मनेपदं भवति ॥ निविशते ॥**

अथात्मनेपदप्रक्रिया कथ्यते । सूत्रम्—'निविशादेः' ॥ निपूर्वो विश् आदिर्यस्य स निविशादिः तस्मात् निविशादेः । निपूर्वस्य विशादेर्धातोः परस्मैपदिनोऽपि आत्मनेपदं भवति । विश् प्रवेशने । निपूर्वः । अनेन सूत्रेण आत्मनेपदं भवति । ते इत्यादयः प्रत्यया भवन्ति । निविशते । 'तुदादेरः' अनेनात्र अः प्रत्ययो भवति ॥

**विपराभ्यां जेः । विजयते । पराजयते ॥**

सूत्रम्—'विपराभ्याम्०' ॥ विपराभ्यामुपसर्गाभ्यां परस्य जयतेर्धातोरात्मनेपदं भवति । विजयते । पराजयते । इत्युदाहरणम् ॥

**समो गमादिभ्यः ॥ संगच्छते ॥**

सूत्रम्—'समः०' ॥ समुपसर्गात् गमादिभ्यो धातुभ्य आत्मनेपदं भवति । संगच्छते ॥

**गमः परौ सिस्यौ आत्मनेपदे वा कितौ वाच्यौ ॥ लोपस्त्वनुदात्ततनाम् । संगसीष्ट संगंसीष्ट । लोपो ह्रस्वाज्झसे । समगत समगंस्त ॥ ऋच्छ गती-**

न्द्रियप्रलयमूर्तिभावेषु। समृच्छते॥ संपृच्छते॥ स्वृ शब्दोपतापयोः। संस्वरते। संस्वृषीष्ट संस्वरिषीष्ट। समियृते। संशृणुते॥ संवित्ते संविदाते॥ वित्तेरन्तो वा रुट् आति॥ संविद्रते संविदते। संपश्यते। 'गम ऋच्छ पृच्छ स्वृ ऋ श्रु विद दृश' एते गमादयः॥

सूत्रम्—'गमः०'॥ गम्धातोः परौ सिस्यौ वा कितौ वाच्यौ आत्मनेपदे। तस्मादाशिषि नकारस्य लोपो वा भवति। संगसीष्ट। संगंसीष्ट। लुङ्। 'लोपो ह्रस्वाज्झसे'। अनेन सकारस्य वा लोपः। समगत। समगंस्त। इत्यादीनि रूपाणि। आदिशब्दात्। समृच्छते। संपृच्छते। संशृणुते। समियृते। इत्यादीनि। स्वृ शब्दोपतापयोः। संस्वरते। अस्येड्विकल्पः। 'उः' अनेन गुणनिषेधः। संस्वृषीष्ट। संस्वरिषीष्ट॥ संवित्ते। 'अन्तो वा रुट् आत्मनेपदे'। संविद्रते। संविदते। गमादयो मूले उक्ताः॥

आङो दोऽनास्यविहरणे॥ आङ्पूर्वाद्ददातेरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे॥ आदत्ते॥ 'मुखं व्याददाति' अत्र न॥

सूत्रम्—'आङो दोऽनास्यविहरणे'॥ आङः दः अनास्यविहरणे॥ आस्यस्य मुखस्य विहरणं प्रसारणं आस्यविहरणम्। न आस्यविहरणमनास्यविहरणं तस्मिन् अनास्यविहरणे। आङ्पूर्वात् ददातेर्धातोरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे। आदत्ते॥ मुखप्रसारणे तु 'मुखं व्याददाति' अत्रात्मनेपदं न भवति॥

क्रीडोऽनुसंपरिभ्यश्च॥ अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात्॥ क्रीड विहारे शब्दे च। अनुक्रीडते। संक्रीडते। परिक्रीडते॥ शब्दे तु न॥ संक्रीडति चक्रम्॥

सूत्रम्—'क्रीडोऽनुसंपरिभ्यश्च'॥ क्रीडः अनुसंपरिभ्यः। च अव्ययम्। अनुसंपरिभ्य उपसर्गेभ्यः क्रीड विहारे इत्यस्य धातोरात्मनेपदं भवति। क्रीड विहारे शब्दे च। अनुक्रीडते। संक्रीडते। परिक्रीडते। इत्युदाहरणानि। शब्दे तु नात्मनेपदं भवति 'संक्रीडति चक्रम्' अत्र न भवति॥

समवप्रोपविभ्यः स्थः॥ एभ्यस्तिष्ठतेरात्मनेपदं भवति॥ सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। उपतिष्ठते। वितिष्ठते॥

सूत्रम्—'समवप्रोपविभ्यः स्थः'॥ समवप्रोपविभ्यः स्थः॥ सम् अव् प्र उप वि एभ्य उपसर्गेभ्यः ष्ठा गतिनिवृत्तौ इत्यस्य धातोरात्मनेपदं भवति। संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। उपतिष्ठते। वितिष्ठते। इत्युदाहरणानि॥

आङो यमहनः॥ आङ्परयोर्यमहनोरात्मनेपदं भवति॥ आयच्छते। आहते॥ अकर्मकयोरात्माङ्गकर्मकयोर्वा॥ आयच्छते पाणिम्। आहते शिरः। अन्यथा परशिर आयच्छति। शत्रुमाहन्ति॥

सूत्रम्—'आङो यमहनः०'॥ आङः यमहनः॥ आङ्परयोर्यमहनोर्धात्वोरात्मनेपदं

भवति । आयच्छते । आहते ॥ 'अकर्मकयोः०' अकर्मकयोरात्माङ्गकर्मकयोर्यमहनोर्वा आत्मनेपदं भवति । आयच्छते पाणिम् । आहते स्वशिरः । अन्यथा परशिर आयच्छति । शत्रुमाहन्ति ॥

**हन्तेरात्मनेपदे सिः किद्वा वाच्यः ॥ 'लोपस्त्वनु–' आहत ॥ हन्तेः स्याशीर्यादाद्योर्वधादेश आति वा ॥ अवधिष्ट ॥**

सूत्रम्—'हन्ते०' ॥ हन्तेर्धातोरात्मनेपदे सिः किद्वाच्यः । 'लोपस्त्वनु०' अनेन नकारलोपः । आहत । 'हन्तेः स्याशीर्यादाद्योर्वधादेश आत्मनेपदे वा भवति' । अवधिष्ट । इत्यादीनि ॥

**उद्विभ्यां तपः ॥ उद्विभ्यां परस्याकर्मकस्यात्माङ्गकर्मकस्य वा तपतेरात्मनेपदं भवति ॥ उत्तपते । वितपते पाणिम् । अन्यथा महीं वितपत्यर्कः ॥**

सूत्रम्—'उद्विभ्यां तपः' ॥ उद्विभ्यां तपः । उत् वि एताभ्यामुपसर्गाभ्यां तपतेरकर्मकस्य च आत्मनेपदं भवति । उत्तपते वितपते स्वपाणिम् । अन्यथा महीं वितपत्यर्कः । अत्र न भवति ॥

**उदश्चरस्त्यागे ॥ उत्पूर्वाच्चरतेस्त्यागेऽर्थे आत्मनेपदं भवति ॥ धर्ममुच्चरते त्यजतीत्यर्थः ॥ त्यागे किम् । मन्त्रमुच्चरति ॥**

सूत्रम्—'उदश्चरस्त्यागे' ॥ उदः चरः त्यागे । उदुपसर्गपूर्वस्य चरतेर्धातोस्त्यागेऽर्थे आत्मनेपदं भवति । धर्ममुच्चरते त्यजति इत्यर्थः । त्यागाभावे मन्त्रमुच्चरति ॥

**समस्तृतीयायुक्ताच्च ॥ संपूर्वाच्चरतेस्तृतीयान्तेन पदेन युक्तादात्मनेपदं भवति ॥ अश्वेन संचरते ॥**

सूत्रम्—'समस्तृतीयायुक्ताच्च' ॥ समः तृतीयायुक्तात् । संपूर्वाच्चरधातोस्तृतीयान्तोपपदयुक्तात् आत्मनेपदं भवति । चर गतिभक्षणयोः । संपूर्वस्यास्य आत्मनेपदम् । संचरते अश्वेन । अश्वेन इति तृतीयान्तमुपपदम् । अन्यथा संचरति अश्वः । अत्र न भवति ॥

**व्यवपरिभ्यः क्रीञः ॥ एभ्यः क्रीणातेरात्मनेपदं भवति ॥ विक्रीणीते । अवक्रीणीते । परिक्रीणीते ॥**

सूत्रम्—'व्यवपरिभ्यः०' ॥ व्यवपरिभ्यः क्रीञः । द्विपदम् ॥ वि अव परि एभ्य उपसर्गेभ्यः डुक्रीञ्धातोरात्मनेपदं भवति । उदाहरणानि । विक्रीणीते । अवक्रीणीते परिक्रीणीते ॥

**शप उपालम्भे ॥ उपालम्भेऽर्थे शपतेरात्मनेपदं भवति ॥ वाचा शरीरस्पर्शनमुपालम्भः । विप्राय शपते । विप्रशरीरं स्पृशति । शपथं करोतीत्यर्थः ॥ उपालम्भे किम् । दुष्टं शपति । शापं ददातीत्यर्थः ॥**

शप उपालम्भे आक्रोशे च ॥ 'शप उपा०' वाचा शरीरस्पर्शनमुपालम्भः । विष्णोः ( विप्राय ) शपते । शपथं करोति इत्यर्थः । सत्यमेतदिति कथयति ॥ उपालम्भे किम् । दुष्टं शपति । शापं ददाति । अत्रात्मनेपदं न भवति । शत्रुं शपति । आक्रोशति इत्यर्थः ॥

**ज्ञाश्रुस्मृदृशां सान्तानामात् ॥ सप्रत्ययान्तानामेषामात्मनेपदं भवति ॥ यः से । जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥**

सूत्रम्—'ज्ञाश्रुस्मृदृशां सान्तानामात्' ॥ सप्रत्ययान्तानामेतेषां धातूनां आत्मनेपदं भवति । तेषां साधनं तु पूर्वं कृतम् । सः प्रत्ययः । 'यः से' इत्यादि । जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते । इत्यादीन्युदाहरणानि ॥

**अनुपसर्गाज्ज्ञानातेरात्मगामिनि फले आत्मनेपदं वाच्यम् ॥ गां जानीते ॥**

सूत्रम्—'अनुपसर्गात्०' ॥ अनुपसर्गात् जानातेर्धातोरात्मगामिनि क्रियाफले सति आत्मनेपदं वाच्यम् । अनेनात्मनेपदम् । गां जानीत इत्युदाहरणम् ॥

**कर्मव्यतिहारेऽन्यत्रहिंसादेरात् ॥ कर्मव्यतिहारेर्थे वाच्ये हिंसार्थान् गत्यर्थान्पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति ॥ परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते । परस्परं भवतीत्यर्थः । व्यतिस्ते । विवदन्ते वादिनः । अन्यत्रेति किम् । व्यतिघ्नन्ति । व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति । इतरेतरं परस्परं अन्योन्यं वा व्यतिलुनन्ति ॥**

सूत्रम्—'कर्मव्यतिहारेऽन्यत्र हिंसादेरात्' ॥ कर्मव्यतिहारे कर्मणो व्यतिहारः विनिमयः पराभवो वा कर्मव्यतिहारः तस्मिन् कर्मव्यतिहारे । अन्यत्र हिंसादेः आत् । कर्मव्यतिहारेऽर्थे वाच्यमाने सति हिंसार्थान् गत्यर्थान् धातून् पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावेऽपि सर्वेऽभ्यो धातुभ्य आत्मनेपदं भवति । परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते परस्परं भवति इत्यर्थः । अस् भुवि । व्यतिस्ते ॥ विवदन्ते वादिनः । इत्युदाहरणानि ज्ञातव्यानि । अन्यत्रेति किम् । व्यतिघ्नन्ति । व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति । एतेषु आत्मनेपदं न भवति । सूत्रे निषेधात् । इतरेतरं अन्योन्यं परस्परं व्यतिलुनन्ति । इत्यत्रापि आत्मनेपदं न भवति ॥

**भुजो भोजने आत्मनेपदं वाच्यम् ॥ भुङ्क्ते ओदनम् । भुनक्ति महीं नृपः ॥ इत्यात्मनेपदव्यवस्थाप्रक्रिया ॥ ३२ ॥**

सूत्रम्—'भुजो भोजने०' ॥ भुज पालनाभ्यवहारयोः । अस्य भोजनेऽर्थे आत्मनेपदं भवति । उदाहरणम् । देवदत्त ओदनं भुङ्क्ते । भोजनाभावे तु भुनक्ति महीं नृपः । अत्रात्मनेपदं न भवति ॥ इत्यात्मनेपदप्रक्रिया समाप्ता ॥

## भावकर्मप्रक्रिया ३३

**अथ भावकर्मणोर्यकि प्रक्रिया ॥ यक् चतुर्षु ॥ धातोर्भावे कर्मणि च यक् प्रत्ययो भवति चतुर्षु पूर्वोक्तेषु परतः ॥ ककारो गुणप्रतिषेधार्थः ॥ आद् शुवि कर्मणि ॥ अकर्मकेभ्यो शुवि भावे सकर्मकेभ्यश्च कर्मण्यात्मनेपदं भवति ॥ ये कर्मनिरपेक्षां क्रियामाहुस्ते अकर्मकाः भूएधूआस्शीङ्प्रभृतयः । तदुक्तम्—**

**लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।**
**शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥**

अथ भावकर्मणोर्यकि प्रक्रिया कथ्यते । भावश्च कर्म च भावकर्मणी तयोः भावकर्मणोः । बालबोधनार्थमयं समासः । सूत्रम्—'यक् चतुर्षु'॥ यक् चतुर्षु । धातोर्भावे कर्मणि च चतुर्षु पूर्वोक्तेषु तिबादिषु परेषु यक्प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः, अयकि इति सूत्रविशेषणार्थः । अनेन धातोर्यक् । यकि सति पदनियममाह—'आद् शुवि कर्मणि' ॥ आत् शुवि कर्मणि । अकर्मकेभ्यः न विद्यते कर्म येषां ते अकर्मकाः तेभ्यः अकर्मकेभ्यो धातुभ्यो शुवि भावोक्तौ ॥ अकर्मका लज्जासत्ताद्यर्थवाचकाः । तथा सकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति । अयं भावः । भावोक्तौ तृतीयान्तः कर्ता । अकर्मकधातोः आत्मनेपदं भवति । दशानामपि विभक्तीनां प्रथमपुरुषैकवचनम् । कर्मोक्तौ च तृतीयान्तः कर्ता । प्रथमान्तं कर्म । क्रियायाश्चात्मनेपदं भवति । विभक्तिचतुष्टयेऽपि यक्प्रत्ययान्तमेव । कर्मण एकवचने सति क्रियाया एकवचनम् । कर्मणो द्विवचने सति क्रियाया द्विवचनम् । कर्मणो बहुवचने सति क्रियाया बहुवचनं भवति । इति ज्ञातव्यम् ॥

'कर्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि । धातोरुभे पदे स्यातामेतत् कर्त्रुक्तिलक्षणम् ॥
कर्तरि तृतीया यत्र प्रथमा तत्र कर्मणि यक्प्रत्ययान्तं विज्ञेयं धातोश्चात्रात्मनेपदम् ॥
भावे कर्ता तृतीयान्तः कर्म चात्र भवेन्नहि । क्रियायाश्चैकवचनं भवेद्यक्यात्मनेपदम्' ॥

अथाकर्मकाम् धातूनाह—ये कर्मेति । ये धातवः कर्मवाञ्छारहितां क्रियां कथयन्ति ते अकर्मकाः । ते धातवो 'लज्जासत्ता०' अनेन श्लोकेन कथिताः । ततोऽन्येपि ज्ञातव्याः ॥ भावस्तु एक एव ॥ भावलक्षणमाह—'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' ॥

**भावस्यैकत्वादेकवचनमेव भवति प्रथमपुरुषस्य । भूयते भवता । भूयेत । भूयताम् । अभूयत । बभूवे ॥**

ततो भावस्यैकत्वात्प्रथमपुरुषस्य एकवचनमेव भवति ॥ भू सत्तायाम् । ते आदयः प्रत्यया भवन्ति । 'यक् चतुर्षु' । अनेन यक्प्रत्ययो भवति । [ भूयते भूयेते भूयन्ते । इत्यादीनि रूपाणि भवन्ति । भूयेत भूयेयाताम् भूयेरन् । भूयताम् भूयेताम् भूयन्ताम् । 'दिवादावद्' । अभूयत अभूयेताम् अभूयन्त ।] (?) भवता भूयते । इत्युदाहरणम् । लिट्लकारे तु पूर्ववत्साधनं कार्यम् । बभूवे इत्यादीनि रूपाणि भवन्ति ॥

**स्वरान्तानां हन्ग्रहदृशां च भावकर्मणोः सिसतासीस्यपामिट् वा इण्वद्वक्तव्यः ॥ वाशब्दात्सेटां धातूनां नित्यमिट् स विकल्पेन णित् । अनिटां धातूनां विकल्पेन इट् स नित्यं णित् ॥ एवं च हन्दृशोरनिटोर्वा इट् स च नित्यं णित् । ग्रहधातुस्तु सेट् । ततः परो नित्यमिट् स च वा णित् । णित्त्वाद्वृद्धिः । भाविषीष्ट । णित्त्वाभावे । भविषीष्ट । भाविता-भविता । भाविष्यते-भविष्यते । अभाविष्यत अभविष्यत ॥**

सूत्रम्—'स्वरान्तानां'०॥ स्वरान्तानां धातूनां हन्ग्रहदृशां च धातूनां भावकर्मणोः सिस-तासीस्यपामिड् वा इण्वद्वक्तव्यः ॥ वाग्रहणात्सेटां धातूनां नित्यमिट् स विकल्पेन णित् । अनिटां धातूनां विकल्पेन इड् भवति स नित्यं णिद् भवति । अन्यद् व्याख्यानं मूले कृतम् । तत्सुगममेव । लिङ् । अनेन इट् । स णिद् वा भवति । णित्त्वाद् वृद्धिः 'धातो-र्नामिनः' अनेन सूत्रेण । भाविषीष्ट । णिद्भावपक्षे । 'गुणः' । 'ओ अव्' । भविषीष्ट । इत्यादीनि भवन्ति । भाविता भावितारौ भावितारः । णित्त्वाभावपक्षे । गुणः । भविता भवितारौ भवितारः । भाविष्यते भाविष्येते भाविष्यन्ते इत्यादीनि । 'दिवादावट्' । अभाविष्यत अभाविष्येताम् अभाविष्यन्त । अभविष्यत अभविष्येताम् अभविष्यन्त । लुङ्लकारे ॥

**इण् तन्यकर्तरि ॥ धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययो भवति ॥ सेरपवादः । णो वृद्ध्यर्थः ॥ लोपः ॥ इण्संयोगे तनो लोपो भवति ॥ अभावि ॥**

सूत्रम्—'इण् तन्यकर्तरि' ॥ इण् तनि अकर्तरि ॥ धातोस्तनि परे अकर्तरि भावे लोपः कर्मणि च इण्प्रत्ययो भवति । 'भूते सिः' अस्यापवादोऽयम् । णित्त्वाद् वृद्धिः । 'धातो-र्नामिनः' अनेन सूत्रेण । णकारस्तु वृद्ध्यर्थः ॥ सूत्रम्—'लोपः' इणः संयोगे सति तनः प्रत्ययस्य लोपो भवति । अनेन तनो लोपः । 'दिवादावट्' । अभावि । अभाविषाताम् अभविषाताम् अभाविषत अभविषत । इत्यादीनि रूपाणि भवन्ति तानि सुगमान्येव अनेनैव प्रकारेण साध्यानि विकल्पेन । णित्त्वाद् वृद्धिविकल्पः ॥

**अकर्मकोऽपि कदाचित् सकर्मकतामनुभवति ॥ उक्तं च—**

**उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।**
**विहाराहारसंहारपरिहारप्रहारवत् ॥**
**धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।**
**विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥**

**सुखमनुभूयते स्वामिना । अन्वभावि भवो भवता । अन्वभाविषाताम्—अन्व-भविषाताम् । अन्वभाविषत—अन्वभविषत ॥**

अकर्मकोऽपि धातुः कदाचिदुपसर्गबलात् सकर्मकतामनुभवति । उक्तं च—उपसर्गे-

णेति—उपसर्गेण धातोरर्थोऽन्यत्र नीयते । अन्यस्मिन्नर्थे प्राप्यत इत्यर्थः । उदाहरणानि उत्तरार्धे सन्ति । अन्योऽपि श्लोकोऽस्ति । कश्चिदुपसर्गो धातोरर्थं बाधते । कश्चिदुपसर्गो धातोरर्थमनुवर्तते । कश्चिदुपसर्गस्तमेवार्थं विशिनष्टि । अनया रीत्योपसर्गाणां त्रिधा गतिरस्ति । 'भू सत्तायाम्' अयं धातुर्यद्यपि अकर्मकः तथापि यदानुपूर्वः तदा सकर्मकः । उदाहरणम् । सुखमनुभूयते स्वामिना । अन्वभावि भवो भवता । इदमप्युदाहरणम् ॥

**शीङोऽयङ् किति ङिति ये वक्तव्यः ॥ शय्यते । शिश्ये । शायिषीष्ट । शयिषीष्ट । अशायि । अन्वशायि । अन्वशायिषाताम्-अन्वशयिषाताम् अन्वशायिषत अन्वशयिषत ॥**

शीङ् स्वप्ने । 'यक् चतुर्षु' । अनेनास्य यक्प्रत्ययः शीयते । इति स्थिते ॥ सूत्रम्—'शीङोऽयङ्०' ॥ शीङः अयङ् ॥ शीङ्धातोः यकि परे सति अयङादेशो भवति । ङकारोऽन्त्यादेशार्थः । तेनेकारस्य भवति । अकार उच्चारणार्थः । शय्यते शूद्रेण । केचिदाचार्याः इदं सूत्रं न पठन्ति । किंतु शीङः सर्वत्र गुणो भवति । अनेन कित्यपि गुणः—'क्वचित्स्वरवद्यकारः'—अनेन यकारस्य स्वरवत्वात् एअय् । शय्यते शय्येते शय्यन्ते । शय्येत शय्येयाताम् शय्येरन् । शय्यताम् शय्येताम् शय्यन्ताम् । 'दिबादावट्' । अशय्यत अशय्येताम् अशय्यन्त । इत्यादीनि रूपाणि भवन्ति । लिट्लकारे । 'द्विश्च' । 'नुधातोः' 'ह्रस्वः' अनेन पूर्वस्य ह्रस्वो भवति । शिश्ये शिश्याते शिश्यिरे । इत्यादीनि । 'स्वरान्ता०' अनेनेट् । इटो वा णित्त्वम् । 'धातोर्नामिनः' अनेन वृद्धिः । 'ऐ आय्' । शायिषीष्ट । णित्त्वाभावपक्षे—गुणः । 'ए अय्' । शयिषीष्ट । एवं सर्वत्र वा णित्त्वं ज्ञेयमस्य धातोः । शायिता । शयिता । शायिष्यते । शयिष्यते । 'दिबादावट्' । [ अशायिष्यत । अशयिष्यत ॥ लुङ्लकारे—'इणूतन्यकर्तरि' । अनेन इण् । वृद्धिः । अशायि अशायिषाताम् अशयिषाताम् अशायिषत अशयिषत । ] (?) यदा अनुपूर्वोऽयं तदा अन्वशायि । इत्यादीनि भवन्ति ॥

**ये कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः । यकि । घटः क्रियते देवदत्तेन । 'त्वं दुःखी क्रियसे रागैः विरागैः सुख्यहं क्रिये ॥' चक्रे । कारिषीष्ट । कृषीष्ट । कारिता-कर्ता । कारिष्यते करिष्यते । अकारिष्यत-अकरिष्यत । अकारि अकारिषाताम्-अकृषाताम् । अकारिषत-अकृषत ॥**

सकर्मकधातुलक्षणमाह—ये धातवः कर्मसापेक्षां क्रियामाहुस्ते सकर्मका ज्ञेयाः करोत्यादयः । डुकृञ् करणे । अस्य धातोः 'यक् चतुर्षु' अनेन यक् । 'अयकि०' अनेन ऋकारस्य रिः । क्रियते । क्रियेत् । क्रियताम् । अक्रियत । लिट्लकारे । 'द्विश्च' । 'रः' । 'कुहोश्चुः' । 'ऋरम्' चक्रे चक्राते चक्रिरे । इत्यादीनि । 'स्वरान्ता०' अनेन इट् । अयं धातुरनिट् । तस्माद् विकल्पेन इट् । नित्यं णित् । इटो णित्त्वात् 'धातोर्नामिनः' अनेन वृद्धिः । कारिषीष्ट । इडभावे—'नुः' गुणनिषेधः । षत्वम् । कृषीष्ट । कारिता कारितारौ कारितारः । इडभावे—'गुणः' । कर्ता कर्तारौ कर्तारः । कारिष्यते कारिष्येते कारिष्यन्ते । णित्वाभावपक्षे । 'हनृतः स्यपः' अनेन इट् । गुणः । करिष्यते करिष्येते करिष्यन्ते ।

अकारिष्यत अकारिष्येताम् अकारिष्यन्त । णित्त्वाभावपक्षे–अकरिष्यत अकरिष्येताम् अकरिष्यन्त । इत्यादीनि रूपाणि भवन्ति । लुङ्लकारे—'इण् तन्यकर्तरि' । 'धातोर्नामिनः' । 'ल्लोपः' अनेन तनो लोपः । अकारि अकारिषाताम् अकृषाताम् । अकारिषत अकृषत । इत्यादीनि । देवदत्तेन त्वं सुखी क्रियसे । रागैस्त्वं दुःखी क्रियसे । विरागैः सुख्यहं क्रिये ॥

**चिञ् चयने । चीयते । चिच्ये । चायिषीष्ट-चेषीष्ट । चायिता-चेता । चायिष्यते-चेष्यते । अचायिष्यत-अचेष्यत । अचायि अचायिषाताम्-अचेषाताम् ॥**

चिञ् चयने । 'यक् चतुर्षु' । अनेन यक्प्रत्ययः । 'ये' । अनेन दीर्घः । चीयते चीयेते चीयन्ते । चीयेत चीयेयाताम् चीयेरन् । चीयताम् चीयेताम् चीयन्ताम् । 'दिवादावट्' । अचीयत अचीयेताम् अचीयन्त । लिट् । 'द्विश्च' । 'नुधातोः' । चिच्ये चिच्याते चिच्यिरे । 'स्वरान्तानां०' अनेन इट् । णित्त्वात् वृद्धिः 'धातोर्नामिनः' अनेन । 'ऐ आय्' । चायिषीष्ट । इडभावपक्षे गुणः । चेषीष्ट । चायिता चेता । चायिष्यते चायिष्येते चायिष्यन्ते । इडभावपक्षे । चेष्यते चेष्येते चेष्यन्ते । 'दिवादावट्' । अचायिष्यत अचायिष्येताम् अचायिष्यन्त । इडभावपक्षे । अचेष्यन्त । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । 'दिवादावट्' । अचायि अचायिषाताम् । इडभावपक्षे । अचेषाताम् । अचायिषत अचेषत । इत्यादीनि ॥

**दादेरिः । दीयते । ददे ददाते ददिरे ॥ आतो युक् ॥ आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे ॥ दायिषीष्ट-दासीष्ट । दायिता दाता । दायिष्यते-दास्यते । अदायि अदायिषाताम् । 'दाधास्थामित्वम्' । अदिषाताम् ॥**

दा दाने । 'यक् चतुर्षु' । अनेन यक् । 'दादेरिः' अनेन इकारः । 'ये' अनेन दीर्घः । दीयते दीयेते दीयन्ते । दीयेत दीयेयाताम् दीयेरन् । दीयताम् दीयेताम् दीयन्ताम् । 'दिवादावट्' अदीयत अदीयेताम् अदीयन्त । लिट् । 'द्विश्च' । 'ह्रस्वः' । 'आतोऽनपि' । ददे ददाते ददिरे । दासीष्ट इति स्थिते । 'स्वरान्तानां०' अनेन इट् इटो णित्त्वम् ॥ सूत्रम्—( आतो युक् ) आतः युक् ॥ आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । अनेन युक् । उकार उच्चारणार्थः । ककारः कित्कार्यार्थः । दायिषीष्ट ॥ इडभावपक्षे । दासीष्ट । दायिता दायितारौ दायितारः । इडभावपक्षे । दाता दातारौ दातारः । दायिष्यते दास्यते । 'दिबादावट्' । अदायिष्यत अदायिष्यताम् अदायिष्यन्त । इडभावपक्षे । अदास्यत अदास्येताम् अदास्यन्त । लुङ् । इण् । युक् । तनो लोपः । अदायि अदायिषाताम् । 'दाधास्थाम्०' अनेन इडभावपक्षे इकारः । अदिषाताम् । अदायिषत । अदिषत । इत्यादीनि ॥

**धीयते । अधायि अधायिषाताम्-अधिषाताम् ॥**

डुधाञ् धारणपोषणयोः । 'यक् चतुर्षु' अनेन यक् । 'दादेरिः' अनेनाकारस्य इकारः ।

'ये' अनेन पूर्वस्य दीर्घः । धीयते । धीयेत । धीयताम् । अधीयत । इत्यादीनि भवन्ति । लिट्लकारे । 'द्वित्व' । 'ह्रस्वः' । 'झपानाम्०' । 'आतोऽनपि' अनेनाकारलोपः । दधे दधाते दधिरे । 'स्वरान्तानाम्०' । इटो णित्त्वम् । 'आतो युक्' । षत्वम् । धायिषीष्ट । इडभावे । धासीष्ट । धायिता धाता । धायिष्यते धास्यते । 'दिबादावट्' । अधायिष्यत अधास्यत । लुङ्लकारे । इण् । युक् । तनो लोपः । अधायि अधायिषाताम् । इडभावपक्षे । 'दाधास्थाम्०' अधिषाताम् । अधायिषत अधिषत । इत्यादीनि ॥

**स्थीयते । अस्थायि ॥**

ष्ठा गतिनिवृत्तौ । सत्वम् । यक् । 'दादेरिः' । 'ये' । स्थीयते । स्थीयेत । स्थीयताम् । अस्थीयत । लिट्लकारे तु साधनं पूर्ववत् । तस्थौ तस्थतुः तस्थुः । 'स्वरान्तानाम्' । 'आतो युक्' स्थायिषीष्ट । इडभावे । स्थासीष्ट । स्थायिता स्थाता । स्थायिष्यते स्थास्यते । अस्थायिष्यत अस्थास्यत । लुङ्लकारे । इण् । युक् । तनो लोपः । अस्थायि अस्थायिषाताम् । इडभावे । 'दाधास्थाम्०' अनेनेत्वम् । अस्थिषाताम् । इत्यादीनि ॥

**स्तूयते । तुष्टुवे । अस्तावि अस्ताविषाताम्-अस्तोषाताम् हरिहरौ भक्तेन ॥**

ष्टुञ् स्तुतौ । सत्वम् । यक् । 'ये' । स्तूयते । स्तूयेत । स्तूयताम् । अस्तूयत । इत्यादीनि । लिट्लकारे । द्वित्वादिकम् । अन्यत्साधनं पूर्ववत् । तुष्टुवे तुष्टुवाते तुष्टुविरे । 'स्वरान्तानां०' अनेनेट् । इटो णित्त्वम् । वृद्धिः । स्ताविषीष्ट । इडभावपक्षे । गुणः । षत्वम् । स्तोषीष्ट । स्ताविष्यते स्तोष्यते । अस्ताविष्यत अस्तोष्यत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । अस्तावि अस्ताविषाताम् । इडभावपक्षे । अस्तोषाताम् । इत्यादीनि ॥

**हन्यते । हनो घ्ने । जघ्ने । घानिषीष्ट-हंसीष्ट ॥ हन्तेः स्याशीर्यादाद्योर्वधादेशो वक्तव्य आति वा ॥ वधिषीष्ट ॥ घानिता-हन्ता । घानिष्यते हनिष्यते । अघानिष्यत-अहनिष्यत । अघानि अघानिषाताम् ॥ हन आत्मनेपदे सिः किद्वाच्यः ॥ लोपस्त्वनुदात्ततनाम् । अहसातां अघानिषत-अहसत । अवधि अवधिषाताम् ॥**

हन् हिंसागत्योः । यक् । हन्यते । हन्येत । हन्यताम् । अहन्यत । लिट्लकारे । द्वित्वम् । 'कुहोश्चुः' । 'गमां स्वरे' 'हनो घ्ने' । जघ्ने जघ्नाते जघ्निरे । इत्यादीनि । 'स्वरान्तानाम्०' । 'हनो घ्ने' । घानिषीष्ट । इडभावपक्षे । 'नश्चा०' । हंसीष्ट ॥ सूत्रम्—'हन्तेः०'॥ हन्तेर्धातोः स्याशीर्यादाद्योर्वधादेशो वक्तव्यः । आत्मनेपदे वा भवति । 'जनिवध्योः' । अनेन वृद्धिनिषेधः । वधिषीष्ट । घानिता । 'नश्चा०' । हन्ता । घानिष्यते । 'हन्नृतः' । हनिष्यते । अघानिष्यत । अहनिष्यत । लुङ्लकारे । इण् । 'हनो घ्ने' । 'अत उपधायाः' । अघानि । अत्र–हनो घत् । अनेन घदादेशो न भवति । तत्र सूत्रे इणि निषेधः । अघानिषाताम्॥ सूत्रम्—'हनः०'॥ हनो धातोरात्मनेपदे सिः प्रत्ययः किद्वाच्यः । 'लोपः' अनेन वकारलोपः । अहसाताम् । अघानिषत अहसत । इत्यादीनि । 'हन्तेः' अनेन वा वधादेशः । वृद्धिनिषेधः । अवधि अवधिषाताम् अवधिषत । अवधिष्ठाः । इत्यादीनि रूपाणि भवन्ति ॥

**'ग्रहां क्ङिति च' गृह्यते । जगृहे । ग्राहिषीष्ट । 'ईटो ग्रहाम्' ग्रहीषीष्ट । ग्राहिता-ग्रहीता । ग्राहिष्यते-ग्रहीष्यते । अग्राहिष्यत-अग्रहीष्यत । अग्राहि अग्राहिषाताम् अग्रहीषाताम् ॥ दृश्यते । ददृशे । दर्शिषीष्ट-दृक्षीष्ट । दर्शिता द्रष्टा । दर्शिष्यते द्रक्ष्यते । अदर्शि अदर्शिषातां-अदृक्षाताम् ॥ डुपचष् पाके । पच्यते । पेचे । पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । अपाचि अपक्षाताम् ॥**

ग्रह उपादाने । 'यक् चतुर्षु' अनेन यक्प्रत्ययः । 'ग्रहां क्ङिति च' अनेन संप्रसारणम् । गृह्यते । गृह्येत । गृह्यताम् । 'दिबादावट्' । अगृह्यत । लिट्लकारे । संप्रसारणम् । ततो द्वित्वम् । 'रः' । 'कुहोश्चुः' । जगृहे जगृहाते जगृहिरे । इत्यादीनि । 'स्वरान्तानाम्०' अनेन इट् इटो णित्त्वम् । 'अत उपधायाः' अनेन वृद्धिः । ग्राहिषीष्ट । 'ईटो ग्रहाम्' अनेन इट ईकारो भवति । ग्रहीषीष्ट । ग्राहिता । अत्र दीर्घो न भवति । अनिष्टत्वात् । ग्रहीता । ग्राहिष्यते ग्रहीष्यते । 'दिबादावट्' अग्राहिष्यत अग्रहीष्यत । इत्यादीनि ॥ लुङ्लकारे । इणू । वृद्धिः । तनो लोपः । अग्राहि अग्राहिषाताम् अग्रहीषाताम् । अग्राहिषत अग्रहीषत । इत्यादीनि भवन्ति ॥ दृशिर् प्रेक्षणे । 'यक् चतुर्षु' अनेन यक् । दृश्यते दृश्येते दृश्यन्ते । इत्यादीनि । दृश्येत दृश्यताम् अदृश्यत । इत्यादीनि । लिट्लकारे । 'द्विश्च' । 'रः' । ददृशे ददृशाते ददृशिरे । 'स्वरान्तानाम्०' अनेन इट् । इटो णित्त्वम् । णित्त्वाद्वृद्धेरप्राप्तत्वाद् गुणः । दर्शिषीष्ट । इडभावपक्षे । 'छशष०' अनेन षत्वम् । 'षढोः कः से' । षत्वम् । 'कषसंयोगे०' । 'सिस्योः' अनेन गुणनिषेधः । दृक्षीष्ट । अन्यानि सुगमानि । दर्शिता । इडभावे षत्वम् । 'गुणः' । 'रारो झसे०' द्रष्टा । दर्शिष्यते द्रक्ष्यते । 'दिबादावट्' अदर्शिष्यत अद्रक्ष्यत । इत्यादीनि रूपाणि भवन्ति । लुङ्लकारे । इणू । गुणः । तनो लोपः । अदर्शि अदर्शिषाताम् । इडभावपक्षे० । 'सिस्योः' अनेन गुणनिषेधः । षत्वम् । अदृक्षाताम् । अदर्शिषत अदृक्षत । इत्यादीनि भवन्ति ॥ डुपचष् पाके । 'यक् चतुर्षु' अनेन यक् । पच्यते । पच्येत । पच्यताम् । 'दिबादावट्' । अपच्यत । इत्यादीनि रूपाणि भवन्ति तानि सुगमानीति । लिट्लकारे । 'द्विश्च' । 'पूर्वस्य' । 'लोपः पचाम्०' अनेनैत्वपूर्वलोपौ भवतः । पेचे पेचाते पेचिरे । इत्यादीनि । 'चोः कुः' षत्वम् । 'कषसंयोगे क्षः' । पक्षीष्ट । 'चोः कुः' । पक्ता पक्तारौ पक्तारः । पक्ष्यते अपक्ष्यत । लुङ्लकारे । इणू । 'अत उपधायाः' अनेन वृद्धिः । तनो लोपः । अपाचि अपक्षाताम् अपक्षत । इत्यादीनि रूपाणि भवन्ति ॥

**तनोतेर्नो वा ॥ तनोतेर्नकारस्य वा आकारो भवति यकि परे ॥ तायते तन्यते । तेने । अतानि । अतानिषातां-अतनिषाताम् ॥**

तनु विस्तारे । 'यक् चतुर्षु' अनेन यक् ॥ सूत्रम्—'तनोतेर्नो वा' ॥ तनोतेः नः वा अव्ययम् । तनोतेर्धातोर्नकारस्य वा आकारो भवति यक्प्रत्यये परे सति । 'सवर्णे०' तायते । तायेत । तायताम् । अतायत । आत्वाभावपक्षे । तन्यते । तन्येत । तन्यताम् । अतन्यत । इत्यादीनि रूपाणि भवन्ति । लिट्लकारे 'द्विश्च' । 'पूर्वस्य' । 'लोपः पचाम्०' अनेनैत्वपूर्वलोपौ भवतः । तेने तेनाते तेनिरे । इत्यादीनि । 'स्वरान्तानाम्०' । अस्य

सूत्रस्य व्याख्यानात् । इट् । वा णित् । तानिता । 'अत उपधायाः' अनेन वृद्धिः । णित्त्वाभावपक्षे । तनिता । तानिष्यते । तनिष्यते । 'दिबादावद्' । अतानिष्यत अतनिष्यत । इत्यादीनि रूपाणि भवन्ति । लुङ्लकारे । इणू वृद्धिः । ततो लोपः । 'दिबादावद्' । अतानि अतानिषाताम् अतनिषाताम् । अतानिषत अतनिषत । इत्यादीनि रूपाणि भवन्ति ॥

**भञ्जो आमर्दने । नो लोपः । भज्यते । अकित्त्वात् बभञ्जे । भङ्क्षीष्ट । भङ्क्ता । भङ्क्ष्यते ॥ भञ्जेरिणि वा नलोपो वाच्यः ॥ अभञ्जि अभाजि ॥**

भञ्जो आमर्दने । 'यक् चतुर्षु' अनेन यक् । 'नो लोपः' अनेन नकारस्य लोपः । भज्यते । भज्येत । भज्यताम् । 'दिबादावद्' । अभज्यत । लिट्लकारे । अकित्त्वान्नकारस्य लोपो न भवति । द्वित्वादिकं कार्यम् । 'झपानाम्०' । 'पूर्वस्य०' । बभञ्जे बभञ्जाते बभञ्जिरे । इत्यादीनि । भञ्जूसीष्ट इति स्थिते । 'चोः कुः' । 'खसे०' षत्वम् । 'कषसंयोगे क्षः' । भङ्क्षीष्ट । 'चोः कुः' । 'खसे०' । भङ्क्ता भङ्क्ष्यते । 'दिबादावद्' अभङ्क्ष्यत । लुङ्लकारे । 'इणूतन्य०' अनेन इणू ॥ सूत्रम्—'भञ्जेः०' ॥ भञ्जेर्धातोरिणि वा नकारस्य लोपो वाच्यः । अनेन वा नकारस्य लोपः । 'अत उपधायाः' । तनो लोपः । अभाजि । नकारलोपाभावपक्षे । अभञ्जि अभङ्क्षाताम् अभङ्क्षत । इत्यादीनि ॥

**शम उपशमे । शम्यते मुनिना । धातोः प्रेरणे । मितां ह्रस्वः । ञेः । शम्यते मोहो हरिणा । शमयांचक्रे ॥ ञ्यन्तानां मितामिणि णिड्टि च वा वृद्धिर्वाच्या णिड्टि ञिलोपश्च ॥ अशमि अशामि अशामिषातां-अशमिषाताम् । णिड्टिडभावपक्षे अशमयिषाताम् ॥**

शम उपशमे । 'धातोः प्रेरणे' अनेन ञिः । 'अत उपधायाः' अनेन वृद्धिः । 'मितां ह्रस्वः' अनेन ह्रस्वः । 'यक् चतुर्षु' अनेन यक् । 'ञेः' अनेन ञिलोपः । शम्यते मोहो हरिणा । शम्येत शम्यताम् । 'दिबादावद्' अशम्यत । 'कासादि०' । अनेन आम् । अन्यत्साधनं पूर्ववत् । शमयांचक्रे ॥ सूत्रम्—'ञ्यन्तानां०' ॥ ञ्यन्तानां मितां धातूनां इणि णिड्टि च वा वृद्धिर्वाच्या । णिड्टि ञेर्लोपो वाच्यः । अनेन ञेर्लोपः । वा वृद्धिः । शामिषीष्ट । वृद्ध्यभावपक्षे । शमिषीष्ट । शामिता शमिता । शामिष्यते शमिष्यते । अशामिष्यत अशमिष्यत । लुङ्लकारे । 'इणूतन्य०' अनेन इणू । ञेर्लोपः । वा वृद्धिः । अशामि अशमि । अशामिषाताम् अशमिषाताम् । अशामिषत अशमिषत । इत्यादीनि रूपाणि भवन्ति तानि अनेनैव क्रमेण साध्यानि ॥

**गुणोर्तिसंयोगाद्योः । अर्यते सर्यते ॥**

ऋ गतौ । 'यक् चतुर्षु' अनेन यक्प्रत्ययः । 'गुणोर्तिसंयोगाद्योः' अनेन गुणः । अर्यते । अर्येत । अर्यताम् । 'दिबादावद्' । 'स्वरादेः' अनेन द्वितीयोऽडागमः । 'सवर्णे०' । आर्यत । इत्यादीनि रूपाणि भवन्ति । लिट्लकारे साधनं पूर्ववत् । आर आरतुः आरुः । इत्यादीनि । आरिषीष्ट ऋषीष्ट । आरिता अर्ता । आरिष्यते आरिष्यत । लुङ्लकारे । आरि आरिषाताम् । इत्यादीनि । एवं स्मृ स्मरणे । यक् । 'गुणोर्ति०' अनेन गुणः ।

स्मर्यते । स्मर्येत । स्मर्यताम् अस्मर्यत । लिट्लकारे । सस्मरे । स्मारिषीष्ट स्मृषीष्ट । स्मारिता स्मर्ता । इत्यादीनि ॥ लुङ्लकारे । अस्मारि । अस्मारिषाताम् अस्मृषाताम् । इत्यादीनि ।

यत्कर्मगुणसंयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्ता । तदुक्तम्—

'क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति ।
सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुः ॥'

तत्राप्येतदेवोदाहरणम् ॥ कर्मवत्कर्मणा तुल्यक्रियः ॥ कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति ॥ लूयते केदारः स्वयमेव । लुलुवे । अलावि अलाविषाताम् ॥ पच्यते ओदनः स्वयमेव ॥ भिदिर् विदारणे । भिद्यते काष्ठं स्वयमेव । अभेदि ॥

अथ कर्मोक्ताधिकारे कर्मकर्तृलक्षणं तस्योदाहरणं चाह यत्कर्मेति । यत्कर्मापि गुणयोगात् वस्तुमध्यस्थितसुकरादिमार्दवादिगुणस्य संयोगात् उपचारात्कर्तृत्वेन विवक्ष्यते सः कर्मकर्तेत्युच्यते । यतः 'क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ॥ सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदुः ॥' तत्रापि एतदेव यक्प्रत्ययान्तस्यैवोदाहरणमुच्यते ॥

सूत्रम्—कर्मवत्कर्मणा तुल्यक्रियः ॥ कर्मवत् कर्मणा तुल्यक्रियः । कर्मस्था या क्रिया तया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति । अनेन कर्तुः कर्मत्वं भवति । लूञ् छेदने । देवदत्तः केदारं लुनाति । स एवं वदति नाहं लुनामि किंतु केदारः स्वयमेव लूयते । लूञ्धातोः 'यक्चतुर्षु' अनेन यक्प्रत्ययो भवति । लूयते । लूयेत । लूयताम् । 'दिवादावट्' । अलूयत । लिट्लकारे । 'द्विश्च' । 'नुधातोः' । लुलुवे लुलुवाते लुलुविरे । 'स्वरान्तानां०' अनेन इट् । इटो वा णित्त्वम् । णित्त्वाद् वृद्धिः । लाविषीष्ट लविषीष्ट । णित्त्वाभावपक्षे । इदं रूपम् । लाविता लविता । लाविष्यते लविष्यते । 'दिवादावट्' । अलाविष्यत अलविष्यत । लुङ्लकारे । इण् वृद्धिः । तनो लोपः । अलावि । अलाविषाताम् अलविषाताम् । अलाविषत अलविषत । इत्यादीनि रूपाणि भवन्ति ॥

डुपचष् पाके । पच् ते । यक्प्रत्ययो भवति । कश्चिद् वक्ति—देवदत्त ओदनं पचति । स एवं वदति नाहं पचामि किंतु ओदनः स्वयमेव पच्यते । अत्र ओदनस्य स्वयमेव पाकसिद्धौ सामर्थ्यं ततः कर्मकर्तृत्वम् । कर्म एव कर्ता जातः । न पुनस्तृतीयान्तः कर्ता भवति । पच्यते । पच्येत । पच्यताम् । अपच्यत । लिट्लकारे । 'द्विश्च' 'पूर्वस्य०' । 'लोपः पचां०' । पेचे पेचाते पेचिरे । 'चोः कुः' । षत्वम् । 'कषसंयोगे०' । पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । लुङ्लकारे । इण् । 'अत उपधायाः' । 'तनो लोपः' । अपाचि अपक्षाताम् अपक्षत । इत्यादीनि ॥ भिदिर् विदारणे । कश्चिदेवं वक्ति देवदत्तः काष्ठं भिनत्ति । स एवं वक्ति 'नाहं भिनद्मि किंतु काष्ठं स्वयमेव भिद्यते' । 'यक्चतुर्षु' । भिद्यते । भिद्येत । भिद्यताम् । अभिद्यत । लिट्लकारे । 'द्विश्च' 'पूर्वस्य०' । बिभिदे बिभिदाते बिभिदिरे । भित्सीष्ट । भेत्ता । भेत्स्यते । अभेत्स्यत । लुङ् । इण् । गुणः । तनो लोपः । अभेदि अभित्साताम् अभित्सत ॥

**दुहस्नुनमां कर्मकर्तरि यगिणौ न ॥ दुग्धे स्नुते गौः स्वयमेव । नमते दण्डः स्वयमेव । अदुग्ध । अस्नोष्ट । अस्नाविष्ट । अनंस्त ॥**

सूत्रम्—'दुहस्नुनमां०' ॥ दुह स्नु नम् एतेषां धातूनां कर्मकर्तरि यगिणौ न भवतः । तेषां धातूनां रूपाणि पूर्ववत् ज्ञेयानि । आत्मनेपदे । दुग्धे दुहाते दुहते । इत्यादीनि रूपाणि ज्ञेयानि ॥ स्नुधातोः । स्नुते स्नुवाते स्नुवते । इत्यादीनि ॥ नमधातोः । नमते नमेते नमन्ते । त्रयाणां लुङ्लकारे । अदुग्ध अधुक्षाताम् अधुक्षत । अस्नोष्ट अस्नाविष्ट । अनंस्त अनंसाताम् अनंसत ।

---

॥ अथ द्विकर्मकाः ॥

**दुह्याच्पचूदण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।**
**कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ २५ ॥**
**न्यादयो ब्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।**
**प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ २६ ॥**
**निन्ये विजनमजागरि रजनीमगमि मदमयाचि संभोगम् ।**
**गोपी हास्यमकार्यत भावश्चैनामनन्तेन ॥ २७ ॥**

अथ द्विकर्मका धातवः कथ्यन्ते । द्वे कर्मणी यस्य स द्विकर्मकः । यस्य धातोः कर्मद्वयापेक्षत्वं भवति स द्विकर्मकः ॥ ते धातवः श्लोकेन गणिताः ॥

'दुह्याच्पचूदण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृषूवहाम् ॥'

दुह् । याच् । पच् । दण्ड् । रुधि । प्रच्छि । चि । ब्रू । शास् । जि । मथ् । मुष् । नी । हृ । कृष् । वह् एतेषां धातूनां द्विकर्मकत्वं स्यात् ॥

'न्यादयो ब्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति गुह्यादिर्गौणेऽन्ये तु यथारुचि ॥'

न्यादयः । ब्यन्तनिष्कर्मगत्यर्था धातवः मुख्यकर्मणि प्रत्ययं यान्ति । दुह्यादिर्गौणे कर्मणि प्रत्ययं यान्ति अन्ये तु यथारुचि प्रत्ययं यान्ति । गौणे वा मुख्ये वा । उभयत्रापि वा । तत्र द्विकर्मके कर्मद्वयम् । एकं मुख्यं कर्म । अपरं च गौणं कर्म । यदर्थं क्रिया आरभ्यते तत् मुख्यं कर्म । अन्यद् गौणम् । न्यादीनां मुख्ये कर्मणि प्रथमा । याच्यादीनां तु गौणे कर्मणि प्रथमा । प्रच्छादीनां तु मुख्येऽमुख्ये वापि कर्मणि प्रथमा ।

'निन्ये विजनमजागरि रजनीमगमि मदमयाचि संभोगम् ॥
गोपी हास्यमकार्यत भावश्चैनामनन्तेन ॥'

अस्य व्याख्या—अनन्तेन गोपी विजनं निन्ये । अनन्तेन गोपी रजनीमजागरि । गोपी मदमगमि । त्रिषु स्थानेषु गोपी मुख्यं कर्म । गोपी संभोगमयाचि । गोपी हास्यमकार्यत । एनां भावोऽकार्यत ॥

**कर्तुरिष्टतमं प्रधानं कर्म । अन्यदप्रधानम् । नगरं नीयते नागरिकैर्वनेचरः । भोजनं याच्यते यजमानो याचकेन । पृच्छ्यते पन्थानं पथिकेन पान्थः । शिष्येणाचार्यस्तत्त्वं पृच्छ्यते । कटश्चिकीर्ष्यते देवदत्तेन । यतः बोभूय्यते । अनपि च हसात् । पापच्यते । तेन पापचिता अपापचि । इत्यादि ॥ इति भावकर्मप्रक्रिया ॥**

अथ दुह्यादीनामुदाहरणानि आह—मूले तु कर्तुरिष्टतमं प्रधानं कर्म । अन्यदप्रधानमिति व्याख्यातम् । तदपि समीचीनम् । नगरं नीयते नागरिकैर्वनेचरः । अत्र वनेचरस्य मुख्यत्वम् । नगरस्य गौणत्वम् । तेन वनेचर इति प्रथमा । यदा मुख्ये कर्मणि प्रथमा तदा गौणे द्वितीया । यदा गौणे प्रथमा तदा मुख्ये द्वितीया भवति इति विवेकः ॥ यदा मुख्यामुख्ये द्वे अपि प्रत्यये न अभिधीयेते तदोभयत्रापि प्रथमा । भोजनं याच्यते यजमानो याचकेन । अत्र मुख्ये द्वितीया । गौणे प्रथमा ॥ पृच्छ्यते पन्थानं पथिकेन पान्थः । अत्रापि मुख्ये द्वितीया । गौणे प्रथमा । शिष्येणाचार्यस्तत्त्वं पृच्छ्यते । अन्यान्यपि उदाहरणानि यथासंभवं ज्ञेयानि ॥

सप्रत्ययान्तात् 'कृ' धातोर्यक् । चिकीर्ष्यते । चिकीर्ष्येत । चिकीर्ष्यताम् । अचिकीर्ष्यत । लिट्लकारे—चिकीर्षांचक्रे । चिकीर्षिषीष्ट । अचिकीर्षि कटः चिकीर्ष्यते देवदत्तेन ॥

यङन्तात् भूधातोर्यक् । 'यक्चतुर्षु' अनेन । 'यतः' अनेनाकारलोपः । बोभूय्यते । बोभूय्येत । बोभूय्यताम् । 'दिबादावद्' । अबोभूय्यत । बोभूयांचक्रे । इत्यादीनि । लुङ्कारे । अबोभूयिष्ट ॥ यङन्तात् पचधातोर्यक् । पापच्यते । पापच्येत । पापच्यताम् अपापच्यत । 'अनपि च हसात्' अनेन अनपि विषये यङो लोपः । पापचांचक्रे । पापचिषीष्ट । पापचिता । पापचिष्यते । अपापचिष्यत । अपापचि । इत्यादीनि रूपाणि भवन्ति तानि सुगमानि । इति भावकर्मप्रक्रिया समाप्ता ॥

---

## लकारार्थप्रक्रिया ३४

**अथ लकारार्थप्रक्रिया ॥ हठपौनःपुन्ययोर्लोण्मध्यमपुरुषैकवचनान्तता निपात्यते । सर्वकाले सर्वपुरुषविषये अतीते काले ॥**

**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।**
**विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥ २८ ॥**

अथ लकारार्थप्रक्रिया कथ्यते । सूत्रम् 'हठपौनःपुन्ययोः' हठात्कारेऽर्थे पौनःपुन्यार्थे च धातोर्लोण्मध्यमपुरुषस्य एकवचनं ततो हिः निपात्यते सर्वकाले सर्वपुरुषविषये अतीते काले । अस्योदाहरणानि । पुरीमवस्कन्द अस्मिन् श्लोके उक्तानि ज्ञेयानि । तत्र परोक्षे काले लोण्मध्यमपुरुषस्यैकवचनान्तानि रूपाणि प्रदृश्यन्ते । श्लोकार्थः सुगमोऽस्ति ॥

**वर्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या ॥ आह स हारीतः । यजति स युधिष्ठिरः ॥**

सूत्रम्—'वर्तमानार्थाया:०' ।। वर्तमानार्थाया अपि त्यादिविभक्तेः स्म इत्यस्य योगे भूतार्थता वक्तव्या । अस्योदाहरणम्—आह स्म हारीतः । अत्र वर्तमानेऽपि स्मयोगेन भूतार्थता । द्वितीयमुदाहरणम् यजति स्म युधिष्ठिरः । अत्रापि वर्तमाने स्मयोगेन भूतार्थता भवति ।।

**वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः ।। सुप्तोऽहं किल विललाप । नाहं कलिङ्गं जगाम ।।**

सूत्रम्—'वैचित्त्यापह्नवयोः०' ।। वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः । अस्योदाहरणम् । वैचित्त्ये सुप्तोऽहं किल विललाप । अपह्नवे नाहं कलिङ्गं जगाम । इत्युदाहरणम् ।।

**यावत्पुरानिपातयोर्योगे भविष्यदर्थे तिबादयः लट् ।। पुरा करोति । यावत्करोति । करिष्यतीत्यर्थः ।।**

सूत्रम्—'यावत्पुरानिपातयोः०' ।। यावत् पुरा अनयोर्निपातयोर्योगे भविष्यदर्थे तिबादयः प्रत्यया भवन्ति । लट्लकारश्च । अस्योदाहरणम् पुरा करोति । पुरा करिष्यतीत्यर्थः । यावत्करोति । करिष्यतीत्यर्थः ।।

**स्मृत्यर्थधातुयोगे भूतेऽर्थे लृट् ।। स्मरसि मित्र यदुपकरिष्यसि । उपकुरुथा इत्यर्थः ।। इति लकारार्थप्रक्रिया ।।**

सूत्रम्—'स्मृत्यर्थधातुयोगे०' ।। स्मृत्यर्थधातुयोगे सति भूतेऽर्थेपि लृट्लकारो भवति । स्मरसि मित्र यदुपकरिष्यसि उपकुरुथाः । इति लकारार्थप्रक्रिया समाप्ता ।।

**धातूनामप्यनन्तत्वान्नानार्थत्वाच्च सर्वथा ।<br>अभिधातुमशक्यत्वादाख्यातख्यापनैरलम् ।। २९ ।।**

**इति श्रीअनुभूतिस्वरूपाचार्यविरचितायां सारस्वतप्रक्रियायामाख्यातप्रक्रिया समाप्ता ।।**

अथ आख्यातोपसंहारमाह—धातूनामिति । यतो धातवोऽनन्ता यद्यपि कविकल्पद्रुमादौ चतुःपञ्चाशदधिकसप्तदशशतानि धातुसंख्या प्रतिपादिता तथापि प्रयोगाणां बहुत्वदर्शनात् धातवोऽनन्ता एव । तथा एकैकस्य धातोः अनेकेऽर्थाः यथा दिव् क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमदमोदस्वप्नकान्तिगतिषु इत्यादि । एवमेकैको धातुरनेकेष्वर्थेषु वर्तते । तथा 'ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च' इत्यनेकार्थत्वम् । तथा उपसर्गयोगादप्यनेकार्थत्वम् तत उक्तं धातूनामनन्तत्वात् । नास्ति अन्तो येषां तेऽनन्तास्तेषां भावोऽनन्तत्वं तस्मात् अनन्तत्वात् । तथा प्रत्येकं धातूनां नानार्थत्वात् नाना बहुप्रकारेण अर्थो येषां ते नानार्थास्तेषां भावो नानार्थत्वं तस्मात् । चकारात्सर्वथा सर्वप्रकारेण संपूर्णतयाभिधानं कथनं शब्दशास्त्रं अभिधातुं वक्तुं कथयितुं वा अशक्यम् । यदि बृहस्पतिः स्वयं वक्ता इन्द्रः स्वयं श्रोता तथापि वर्षसहस्रेणापि धातूनामन्तं न गच्छति । 'लोकाच्छेषस्य सिद्धि' रिति सर्वैर्वैयाकरणैरुक्तत्वात्, तेषां प्रक्रिया प्रयोगानुसारेण प्रकारान्तरेण वा ज्ञातव्या मया वक्तुं न शक्यते इति कारणात् आख्यातस्य व्याकरणनवमाधिकारस्य ख्यापनैः कथनैरलं पर्याप्तं पूर्यतामिति यावत् ।।

**इति सारस्वतव्याकरणे द्वितीया वृत्तिः संपूर्णा ।।**

॥ श्रीः ॥

# सारस्वतव्याकरणम् ।

## चन्द्रकीर्तिसमाख्यया व्याख्यया समलंकृतम् ।

## तृतीया वृत्तिः ।

### कृदन्तप्रकरणम् ॥ १ ॥

**निजजनैर्विधिना निखिलापदो झटिति यो विनिवर्तयति स्मृतः ।**
**जलधिजापरिरम्भणलालसो नरहरिः कुरुतां जगतां शिवम् ॥ १ ॥**

**अथ कृदन्तप्रक्रिया निरूप्यते ॥ कृत्कर्तरि च ॥ वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि च भवन्ति ॥ चकाराद्भावकर्मणोरपि ॥ [ स्वतन्त्रः कर्ता ॥ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ शुद्धो धात्वर्थो भावः ॥ कर्तुरीप्सिततमं कर्म । तथायुक्तं चानीप्सितम् । विषं भुङ्क्ते देवदत्तः । अन्नं भुङ्क्ते देवदत्तः ॥ ][1]**

अथेत्याख्यातकथनानन्तरं कृत्प्रत्यया निरूप्यन्ते । तृतीयवृत्तिस्थप्रत्ययानां 'कृत्' इति संज्ञास्ति ते निरूप्यन्ते प्रकाश्यन्ते । यद्वा कृदन्तप्रक्रिया निरूप्यते । कृत्संज्ञकाः प्रत्यया अन्ते येषां ते कृदन्ताः शब्दास्तेषां प्रक्रिया निरूप्यते । द्वितीयवृत्तौ धातवः साधितास्ते भवन्त्याद्यन्ताः अत्र तु भ्वादीनां कृत्प्रत्यययोगेन निष्पन्नाः स्याद्यन्ताः शब्दाः साध्यन्ते ॥ सूत्रम् 'कृत् कर्तरि०' कृत् प्रथमैकवचनान्तम् कर्तरि 'हसे पः' करोतीति कर्ता तस्मिन् 'ङौ' इति अर् 'स्वर०' ॥ अत्र ये प्रत्यया वक्ष्यन्ते ते कृत्संज्ञकाः कृन्नामानो ज्ञेयाः । अत्र 'जातावेकवचनम्' इति वचनाद्वक्ष्यमाणा इति कथितं च कृत्प्रत्ययः प्रायः कर्तरि कर्त्रुक्तावेव भवति । चकारात् विशेषविधाने भावकर्मणोरपि ॥

**तृवुणौ ॥ धातोस्तृवुणौ प्रत्ययौ भवतः ॥ डुपचष् पाके । पच् तृ इति स्थिते । चोः कुः । पक्तृ इति स्थिते । 'कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा' इति केचित् इति नामत्वम् । नामसंज्ञायां स्यादिर्विभक्तिर्भवति । स्तुरार् । सेरा । पचतीति पक्ता पक्तारौ पक्तारः । पक्तारम् । पुंलिङ्गे पक्ता । स्त्रियां पक्त्री । नपुंसके पक्तृ पक्तृणी पक्तृणि इत्यादि ॥ डुकृञ् करणे । करोतीति कर्ता । हृञ् हरणे । हरतीति हर्ता । मृङ् प्राणत्यागे । म्रियते इति मर्ता । डुभृञ् धारणपोषणयोः । बिभर्तीति भर्ता ॥**

---

१ अयं कोष्ठकान्तर्गतः पाठो नैव व्याख्याकृता व्याख्यातः पाणिनीयत्वात् ।

सूत्रम्—'तृवुणौ' ॥ तृश्च वुण् च तृवुणौ 'स्वर०' । धातोरग्रे तृवुणौ इत्येतौ द्वौ प्रत्ययौ भवतः कर्तरि । वुण् इत्यत्र णकारो वृद्ध्यर्थः । उदाहरणम् । डुपचष् पाके । पच् तृप्रत्ययः । 'चोः कुः' । 'स्वर०' । पक्तृ इति जातम् । कृत्तद्धितसमासाश्चेति नामसंज्ञायाम् प्रथमैकवचने 'स्तुरार्' । यदादेशस्तद्वद्भवति इति न्यायात् 'सेरा' । सच डित् डित्त्वाट्टिलोपः । 'स्वरहीनं०' । पक्ता । 'स्तुरार्' । 'स्वर०' । पक्तारौ पक्तारः । एवं कृ—तृप्रत्ययः । 'गुणः' 'राद्यपो द्विः' । कर्तृशब्दात्प्रथमैकवचने 'स्तुरार्' । 'सेरा' । 'स्वर०' । कर्ता कर्तारौ । एवं सप्तसु विभक्तिषु रूपाणि ज्ञेयानि । एवं हृ हर्ता । पचतीति पक्ता । करोतीति कर्ता । हरतीति हर्ता । एवं भर्ता भर्तारौ भर्तारः । भोक्ता, दाता, पाता, स्नाता, माता, गन्ता, वक्ता, मंक्ता इत्यादि ॥ स्त्रीलिङ्गे—पक्त्री, हर्त्री कर्त्री, 'ऋण् ईप्' इतीप् । 'ऋ रम्' ॥ नपुंसकलिङ्गे—पक्तृ पक्तृणी पक्तॄणि । इत्यादि ॥

कृतः ॥ सेट्धातोः परस्य कृत्प्रत्ययस्य वसादेरिडागमो भवति ॥ कृत इदं सूत्रं सेट्धातुविषयम् ॥ सत्तायाम् । भवतीति भविता । एध् वृद्धौ । एधतेऽसौ एधिता ॥

सूत्रम्—'कृतः' ॥ कृत् प्रथमैकवचनान्तम् 'स्वर०' 'स्रोर्विं०' । एकपदं सूत्रम् । सेट्धातोः परस्य वसादेः कृत्प्रत्ययस्य इडागमः स्यात् । वस्प्रत्याहार आदौ यस्य तस्यैव कृत्प्रत्ययस्येडागमः नत्वन्यस्य । उदाहरणम् भू तृ प्रत्ययः । 'कृतः' इति इडागमः । 'गुणः' । 'ओ• अव्' । 'स्वर०' । भवितृशब्दात्प्रथमैकवचने कर्तृशब्दवत्साधना । भवतीति भविता । एध् वृद्धौ । एध तृ । 'कृतः' एधिता ॥

गुपू रक्षणे ॥ ऊदितो वा ॥ ऊदितो धातोरिड्वा भवति ॥ गोपायति गोपिता-गोपायिता-गोप्ता ॥ षिधू शास्त्रे माङ्गल्ये च । सेधिता-सेद्धा ॥ इषुसहलुभरिषरुषामनपि तस्येड्वा भवति । इषु इच्छायाम् । इच्छतीति एषिता एष्टा ॥ लुभ् विमोहने ॥ लुभ् गार्द्ध्ये । लुभ्यतीति लोभिता । इडभावपक्षे-तथोर्धः । झबे जबाः । लुभ्यतीति लोब्धा ॥ रिष् बन्धने । रेषतीति वा रिष्यतीति रेषिता-रेष्टा ॥ रुष क्रोधे । रोषतीति रोषिता-रोष्टा ॥ षह मर्षणे । आदेः ष्णः स्नः । हो ढः । तथोर्धः । ष्टुभिः ष्टुः । ढि ढो लोपः । सहिवहोरोदवर्णस्य । सहतेऽसौ सोढा । वह् प्रापणे । वहति इति वोढा ॥

सूत्रम्—'ऊदितो वा' ॥ ऊत् ऊकारः इत् यस्य स ऊदित् तस्मात् ऊदितः पञ्चम्येकवचनम् 'स्वर०' 'स्रोर्विं०' वा 'अव्ययम्' । 'हबे' । 'उओ' ऊदितो धातोः । गुपू रक्षणे षिधू माङ्गल्ये इत्यादेर्वा इडागमः वस्प्रत्याहारादेः कृत्प्रत्ययस्यैव । उदाहरणम् । गुपू रक्षणे । गुप् । 'तृवुणौ' इति तृप्रत्ययः 'उपधाया लघोः' 'ऊदितो वा' इति इडागमः । 'स्वर०' । उभयत्रापि प्रथमैकवचने 'स्तुरार्' । 'सेरा' । डित्त्वाट्टिलोपः 'स्वर०' गोपिता—गोप्ता । गोपायतीति—गोपिता । गोप्ता । षिधू शास्त्रे माङ्गल्ये च । षिध् 'आदे ष्णः स्नः' सिध् तृप्रत्ययः 'उपधायाः लघोः' । 'ऊदितो वा' इत्येकत्र डागमः द्वितीये 'तथोर्धः' । तृस्थाने धृ । 'झबे

जबाः' । 'स्वर०' । उभयत्रापि प्रथमैकवचने 'सेरा' । 'स्तुरार्' टिलोपः । 'स्वर०' । सेधिता । सेद्धा । वाशब्दादेव इषु इच्छायामित्यस्य-एष्टा एषिता ॥ षह् मर्षणे सहने च । 'आदेः ष्णः स्नः' सहते इति सोढा । तृप्रत्ययः । 'हो ढः' । 'तथोर्धः' । 'ष्टुभिः ष्टुः' । 'ढि ढो लोपो दीर्घश्च' । 'सहिवहोरोद०' सहिवहोः षह् मर्षणे वह् प्रापणे इत्येतयोः धात्वोः संबन्धिनोऽवर्णस्य ओकारो भवति ढकारलोपे सति । तेन दुःसहं सह्यं भारवाड् इत्यादौ ओकारो न भवति । अनेन स इत्यस्य सो । सोढृ शब्दात्प्रथमैकवचने 'स्तुरार्' । 'सेरा' । इत्यादि कर्तृशब्दवत् । एवं वह प्रापणे । वहतीति वोढा ॥

युवो(ण्वो)रनाकौ ॥ यु वु इत्येतयोरन अक इत्येतावादेशौ भवतः यथासंख्येन ॥ णित्त्वाद्वृद्धिः । अत उपधायाः । पचति वा पाचयतीति पाचकः पाचकौ पाचकाः । देवशब्दवत् । पठति वा पाठयतीति पाठकः । एवं याचते वा याचयतीति याचकः । भवति वा भावयतीति भावकः । लुनाति वा लावयतीति लावकः । पुनाति वा पावयतीति पावकः । श्रुञ् श्रवणे । शृणोति वा श्रावयतीति श्रावकः । यु मिश्रणे । औ आव् । यौति वा यावयतीति यावकः । हनो घत् । हन्ति वा घातयतीति घातकः । जायते वा जनयतीति जनकः । 'जनिवध्योर्न वृद्धिः' । वध हिंसायाम् । वधतीति वधकः । 'मितां ह्रस्वः' घटते वा घटयतीति घटकः ॥ 'आतो युक्' ॥ आकारान्तस्य धातोर्युगागमो भवति ञिति णिति च परे ॥ डुदाञ् दाने । ददाति वा दत्तेऽसौ दायकः । दैप् शोधने । 'सन्ध्यक्षराणामा' । दायतीति दायकः ॥ वुण्सयुटौ हित्वा दरिद्रातेरनप्यालोपो लुङि वा वक्तव्यः ॥ दरिद्रा दुर्गतौ । दरिद्राति वा दरिद्रायतीति दरिद्रायकः । दरिद्रिता । नृतिखनिरञ्जिभ्यो वुर्वक्तव्यः । नृती गात्रविक्षेपे । उपधाया लघोः । रायपोद्धिः । नृत्यतीति नर्तकः । नदादेः । नर्तकी । खनकः खनकी ॥ रञ्जेर्नलोपो वा ॥ रञ्जकः-रजकः रजकी । युवोरनाकौ इति तद्धितयुप्रत्ययस्य नेति वक्तव्यम् । तेन ऊर्णायुः ॥

सूत्रम्—'युवोरनाकौ' ॥ युश्च वुश्च युवू तयोः षष्ठीद्विवचनान्तम् 'उवम्' । 'स्वरहीनं०' । 'स्रोर्विसर्गः' । अनाकौ । अनश्च अकश्च प्रथमाद्विवचनान्तम् 'ओऔऔ' । पश्चात् 'नामिनो रः' । 'स्वर०' । द्विपदम् । यु वु इत्येतयोः प्रत्यययोः क्रमेण अन अक इत्यादेशौ भवतः यु इत्यस्य अनः वुइत्यस्य अकः । उदाहरणम् । पच् । 'तृवुणौ' इति वुण् । णकारो वृद्ध्यर्थः । 'अत उपधायाः' इति 'युवोरनाकौ' इति वु इत्यस्य अकादेशः । 'स्वर०' । पचतीति पाचकः । प्रथमैकवचने 'स्रोर्वि०' । एवं पठ् पठति पाठयति वा पाठकः ॥ डुकृञ् करणे । वुण् प्रत्ययः । 'धातोर्नामिनः' । कार वु इत्यस्य अक । 'स्वर०' । करोति कारयति वा कारकः । प्रथमैकवचने 'स्रोर्विसर्गः' ॥ एवं भू वुण् । ऊकारस्य औकारो वृद्धिः । 'औ आव्' अक । 'स्वरहीनं०' । भवतीति भावकः ॥ एवं लूञ् छेदने । लुनातीति लावकः ॥

यु मिश्रणे । यौतीति यावकः ॥ श्रु श्रवणे । शृणोतीति श्रावकः । एतेषां रूपाणि देवशब्दवत् । तद्धितसंबन्धियुप्रत्ययस्यानादेशो न । तेन ऊर्णायुः । शंयुः ॥

नाम्युपधात्कः ॥ नाम्युपधाद्धातोः कः प्रत्ययो भवति ॥ ककारो गुणाभावार्थः । क्षिप् प्रेरणे । क्षिपतीति क्षिपः ॥ छिदिर् द्वैधीकरणे । छिनत्तीति छिदः ॥ भिदिर् विदारणे । भिनत्तीति भिदः ॥ दुह प्रपूरणे । द्रवद्रव्यभागानुकूलो व्यापारः प्रपूरणम् । कामान् दोग्धि सा कामदुघा ॥ दुहः के वा घो वाच्यः ॥ तेन कामदुहा । दुहः दुघः ॥ तुद् व्यथने । तुदतीति तुदः ॥ विद् ज्ञाने । वेत्तीति विदः ॥ द्विष् अप्रीतौ । द्वेष्टीति द्विषः ॥ षुर ऐश्वर्यदीप्त्योः । सुरतीति सुरः ॥ शुभ् शोभायाम् । शोभते तत् शुभं कल्याणम् ॥

सूत्रम्—'नाम्युपधात्कः' ॥ नामी उपधा यस्य स नाम्युपधस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' । 'सवर्णे०' । कः प्रथमैकवचनान्तम् । 'स्नोर्विं०' । नामी अवर्णवर्जः स्वर इकारादिः स उपधा यस्य तस्माद्धातोः कप्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः ॥ क्षिप् प्रेरणे । क्षिप् अत्र नाम्युपधात् कप्रत्ययः । 'स्वरहीनं' 'स्नोर्विं०' क्षिपः । क्षिपति प्रेरयतीति क्षिपः ॥ एवं भिदिर् विदारणे । भिनत्तीति भिदः ॥ छिदिर् द्वैधीकरणे । छिनत्तीति छिदः ॥

जानातेश्च ॥ जानातेर्धातोरपि कः प्रत्ययो भवति ॥ जानातेश्चेति चकारात्कॄगॄधृदृप्रीब्रुवामपि कः प्रत्ययो भवति ॥ कॄ विक्षेपे ॥ ऋत इर् । किरतीति किरः ॥ [ धृञ् धारणे । धरतीति ध्रः ।] प्रीञ् तर्पणे । प्रीणाति वा प्रीणीतेसौ प्रियः 'नु धातोः' गॄ निगरणे । गिरतीति गिरः । 'गिरते रस्य वा लः स्वरे वाच्यः ॥ गिले परेऽगिलस्य ॥ गिलशब्दं विहाय पूर्वस्य मुम् वक्तव्यः । तिमिं गिलतीति तिमिंगिलः । अगिलस्येति किम् । गिलगिलः । ब्रूञ् व्यक्तायां वाचि । 'नु धातोः ॥ ब्रवीतीति ब्रुवः । अपिशब्दात्कर्तरि ग्रहेरपि कः प्रत्ययो भवति । गृह्णातीति गृहम् । तात्स्थ्यात् गृह्णन्ति ते गृहा दाराः ॥

सूत्रम्—'जानातेश्च' इति ज्ञा अवबोधने इत्येतस्यापि धातोः कप्रत्ययो भवति । ज्ञा । अकित्त्वात् 'आतोऽनपि' इत्याकारलोपः । 'स्वर०' । 'स्नोर्विं०' । जानातीति ज्ञः । चकारात्कॄप्रियोरपि कप्रत्ययः । किरः । प्रियः ॥

सूत्रम्—'ऋत इर्' । प्रियः । प्रीञ् कप्रत्ययः । 'नुधातोः' इति इय् ॥

पचिनन्दिग्रहादेरयुणिनि ॥ पचादेर्नन्द्यादेर्ग्रहादेश्च अ, यु, णिनि, इत्येते प्रत्यया भवन्ति यथासंख्येन ॥ पचतीति पचः । वक्तीति वचः । वेत्तीति वेदः । वपतीति वपः ॥ चरिचलिपतिहनिवदीनां वा द्वित्वं पूर्वस्याऽऽगमश्च ॥ अप्रत्यये परे । हसादिः शेषाभावः । चर गतिभक्षणयोः । चरतीति चराचरः-चरः । चल चलने । चलतीति चलाचलः-चलः । पतल

१ टीकयात्र विसंवादो द्रष्टव्यो हि मनीषिभिः ॥

पतने । पततीति पतापतः-पतः । वदतीति वदावदः-वदः ॥ हन्तेर्घनश्च ॥ हन्तीति घनाघनः-हनः । चकाराद् धन शब्दे । धनतीति धनाधनः धनः । इत्यादि ॥ णद अव्यक्ते शब्दे । नदतीति नदः ॥ प्लुङ् गतौ । प्लवतेऽसौ प्लवः । चरतेऽसौ चरः ॥ क्षमूष् सहने । क्षमतेऽसौ क्षमः । पचादिषु देवट् नदट् इति । टकारानुबन्धत्वादीप् । दीव्यतीति देवी ॥ षिवु तन्तुसन्ताने । षेवृ सेवने । सेवतेऽसौ सेवः । सीव्यतीति सेवः ॥ व्रण क्षते । व्रण रुजि । व्रण शब्दे । व्रणतीति व्रणः ॥ अन प्राणने । प्राणितीति प्राणः ॥ दृशिर् प्रेक्षणे । पश्यतीति दर्शः । सृप्लृ गतौ । सर्पतीति सर्पः । भृञ् भरणे । भरते वा भरतीति भरः । डुभृञ् धारणपोषणयोः । बिभर्ति वा बिभृतेऽसौ भरः । सहतेसौ सहः । पचादिराकृतिगणः पचादेरप्रत्ययो निरुपपदस्यैव ज्ञातव्यः ॥ इति पचादिः ॥

सूत्रम्—'पचिनन्दिग्रहादेरयुणिनि' ॥ पचिश्च नन्दिश्च ग्रहश्च पचिनन्दिग्रहं तदादिर्यस्य स पचिनन्दिग्रहादिस्तस्मात् पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यलोपः । 'स्रोर्वि०' । अयुणिनि । अश्च युश्च णिनिश्च अयुणिनि प्रथमैकवचनान्तम् । 'नपुंसकात्स्यमोर्लुक्' । पश्चात् 'नामिनो रः' । 'स्वरहीनं' । वृत्तिः कण्ठ्या । पचादेः अप्रत्ययः । नन्द्यादेर्युः प्रत्ययः० । ग्रहादेर्णिनिः प्रत्ययः । णकारो वृद्ध्यर्थः । इकार उच्चारणार्थः । उदाहरणम् । पच् अप्रत्ययः । 'स्वर०' । 'स्रोर्वि०' । पचः । एवं वदतीति वदः ॥ दिवु क्रीडा० । दिव् दीव्यतीति देवः । अप्रत्ययः । 'उपधाया लघोः' 'स्वरही०' 'स्रो०' ॥ एवं षिव् सेवायाम् । 'आदेः ष्णः स्नः' । सिव् सेवते इति सेवः । पच वद देव सेव चप नन्द भद प्लद चर जर मर क्षर वेद सेध कोप नर्त व्रण सर्प भर स्वप इत्यादिपचादयः ॥

अथ नन्द्यादिर्निरूप्यते ॥ टुनदि समृद्धौ । इदितो नुम् । नन्दति वा नन्दयतीति नन्दनः । नन्दतीति नन्दकः ॥ रमु क्रीडायाम् । रमतेऽसौ रमणः ॥ वाम क्रम संहर्षे । वामतीति वामनः । क्रामतीति क्रमणः ॥ वासृ शब्दे । वासयतीति वासनः ॥ मितां ह्रस्वः ॥ मदी हर्षे । माद्यतीति वा मदयतीति मदनः ॥ दुष वैकृत्ये ॥ दुषेर्णौ कृति च दीर्घो वक्तव्यः ॥ दूषयतीति दूषणः । राध् साध् संसिद्धौ । साध्यतीति वा राधयतीति राधनः साधनः ॥ वृधुङ् वृद्धौ । वर्धयतीति वर्धनः ॥ रु शब्दे ॥ रोर्युण् ॥ रु शब्द इत्येतस्माद्धातोर्युण् प्रत्ययो भवति ॥ रौति वा रावयतीति रावणः ॥ रुशब्दात् युरपि वक्तव्यः ॥ तेन रवणः ॥ [१ ऋकारान्ताच्च ॥ युण्प्रत्ययो भवति । करोतीति वा कारयतीति कारकः । कारणः ॥ शुभ शोभने रोचने च । शोभयतीति शोभनः ॥ रुच दीप्तौ । रोचयतीति रोचनः । बिभीषयतीति बिभी-

१ कोष्ठकान्तर्गतस्य व्याख्या नोपलक्ष्यते ।

षणः ॥ णश् अदर्शने । चित्तं विनाशयतीति चित्तविनाशनः । युध्यते इति योधनः । एते ञ्यन्ताः । सहतेऽसौ सहनः तपतीति तपनः ॥ ज्वल ज्वलने । ज्वल दीप्तौ । ज्वलतीति ज्वलनः । शम् दम् उपशमे । शाम्यतीति शमनः । दाम्यतीति दमनः । जल्पतीति जल्पनः ॥ तृप् प्रीणने । तृप्यतीति तर्पणः । रमणः । दृप् संदर्पे । दृप्यतीति दर्पणः ॥ क्रन्द आक्रन्दने । क्रदि आह्वाने रोदने च संपूर्वः । संक्रन्दति वा संक्रन्दयतीति संक्रन्दनः ॥ कृष् निष्कर्षे । कृष आमर्षणे । संकर्षतीति संकर्षणः ॥ अर्द मर्द अर्दने । अर्द गतौ याचने च । जनान् अर्दयतीति जनार्दनः । मर्दयतीति मर्दनः ॥ घृष संघर्षणे । संघर्षतीति संघर्षणः । पुनातीति पवनः । पवतेऽसौ पवनः ॥ षूद क्षरणे । षूद निबर्हणे । सूदी हिंसायाम् । मधुं सूदयतीति मधुसूदनः । लुनातीति लवणः । अत्र णत्वं निपात्यते । शत्रून् दाम्यतीति वा दामयतीति शत्रुदमनः ॥ ] इति नन्द्यादिः ॥

टुनदि समृद्धौ । णद् । 'आदेः ष्णः स्नः' 'पचिनन्दि०' इति युप्रत्ययः । 'इदितः' इति नुमागमः । 'नश्चापदान्ते०' 'युवोरनाकौ' अन । 'स्वरहीनं०' नन्दयति वर्धयति कुलमिति नन्दनशब्दात्प्रथमैकवचने 'स्रोर्विं०' नन्दनः । रम् । 'युवोरनाकौ' इति युप्रत्ययस्य अनादेशः । 'स्वरहीनं०' 'ष्ट्रनोंणोऽनन्ते' रमते इति रमणः । नन्दनः रमणः वासनः मदनः दूषणः साधनः शोभनः रोचनः तपनः जल्पनः दर्पणः हर्षणः अर्दनः यवनः लवणः मधुसूदनः विचक्षणः इत्यादिनन्द्यादयः । 'रोर्युण्' रु शब्दे इत्यस्य धातोः युण्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । रु युप्रत्ययः । णित्त्वात् 'धातोर्नामिनः' रौ । 'युवोरनाकौ' अन । 'औ आव्' 'स्वरहीनं०' 'ष्ट्रनों०' 'स्रोर्विं०' । रौति रावयतीति वा रावणः । युरपि तेन रवणः ॥

अथ ग्रहादिर्निरूप्यते ॥ ग्रह उपादाने । इनां शौ सौ । 'हसे पः सेर्लोपः' णिनिप्रत्ययान्ताः सर्वे दण्डिवत् । गृह्णातीति ग्राही । उत्साही ॥ आस उपवेशने । उदास्तेऽसौ उदासी ॥ दास्ट दाने । उत्पूर्वः । उद्दासी ॥ भासृ दीप्तौ । उद्भासतेऽसौ उद्भासी ॥ आतो युक् । छो छेदने । छ्यतीति छायी । तिष्ठतीति स्थायी ॥ मत्रि गुप्तभाषणे । मत्रि अवधारणे । मन्त्रयतीति मन्त्री ॥ मृद मर्दने । मर्द आमर्दने । मृदु आर्जवे । संमर्दति वा संमर्दयतीति संमर्दी । निस्तौतीति निस्तावी । निशृणोतीति निश्रावी ॥ रक्ष पालने । निरक्षतीति निरक्षी । वस निवासे । निवसतीति निवासी ॥ डुवप् बीजसंताने । निवपतीति निवापी ॥ शो तनूकरणे । निश्यतीति निशायी ॥ नञ्पूर्वेभ्यः कृहृणीयाचृवदिभ्यो णिनिश्च ॥ न करोति वा कुरुतेऽसौ अकारी । इनां शौ सौ । न हरतीत्यहारी ॥ णीञ् प्रापणे । न नयतीत्यनायी । न याचतेऽसौ अयाची । न वदतीत्यवादी ॥ रध हिंसायाम् । णिनिश्चेति चकारादपावपरिविभ्यो णिनिः ।

अपराध्यतीत्यपराधी । रुधिर् आवरणे । अवरुणद्धीत्यवरोधी । परिभवतीति परिभावी । विपूर्वः । विचरतीति विचारी । विशेषेण रौतीति विरावी ॥ इति ग्रहादयः ॥

ग्रह उपादाने । गृह्णातीति ग्राही । ग्रहादित्वात् णिनिप्रत्ययः । इन् । 'अत उपधायाः' ग्रा । 'स्वरहीनं०' । प्रथमैकवचने 'इनां शौ सौ' इति दीर्घः । 'हसेपः सेर्लोपः' 'नाम्नो नो०' रु शब्दे । रु विपूर्वः । विशेषेण रौतीति विरावी । णिन्प्रत्ययः । णित्वात् 'धातोर्नामिनः' 'औ आव्' 'स्वरहीनं०' दण्डिन्शब्दवत् । उदासी उद्भासी स्थायी यायी संमर्दी वादी परिभावी निश्रावी निवासी इत्यादिग्रहादयः ॥

अथ दृशादिर्निरूप्यते ॥ दृशादेः शः ॥ दृश् हन् धेट् ध्मा घ्रा पा दा धा विद् एभ्यः शप्रत्ययो भवति ॥ शकारः शिति चतुर्वत्कार्यार्थः ॥ शिति चतुर्वत् ॥ शिति प्रत्यये परे तिबादिषु परेषु यत्कार्यमुक्तं तद्भवति ॥ दृशादेः पश्यादिः । अप् । अदे । पश्यतीति पश्यः । उत्पूर्वः । उत् ऊर्ध्वं पश्यतीति उत्पश्यः ॥ हन् हिंसागत्योः । अप् । अदादित्वादपो लुक् । अपित्तादिर्ङित् । गमां स्वरे । हनो घ्ने । गां हन्तीति गोघ्नः । पापघ्नः ॥ धेट् पाने । अप् । अदे धयतीति धयः ॥ ध्मा धमादेशः । धमतीति धमः । उद्धमतीति उद्धमः ॥ घ्रा जिघ्रादेशः । जिघ्रतीति जिघ्रः ॥ पा पाने । पिबादेशः । पिबतीति पिबः । अप् । अदे ॥ ह्वादेर्द्विश्च दादेः इत्याकारलोपः । ददाति वा दत्तेऽसौ ददः । दधाति वा धत्तेऽसौ दधः ॥ मुचादेर्मुम् । तुदादेरः । विद्लृ लाभे । गां विन्दतीति गोविन्दः ॥

सूत्रम्—'दृशादेः शः' ॥ दृश् आदिर्यस्य स दृशादिः तस्मात् दृशादेः । पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः 'स्रोर्विसर्गः' शः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' । दृश् धे घ्र पा ध्मा हन् इत्यादेर्धातोः शप्रत्ययो भवति । दृश् आदिर्यस्य स दृशादिः । शकारः शित्कार्यार्थः ॥ शित्प्रयोजनमाह । 'शिति चतुर्वत्' शकार इत् यस्यासौ शित् तस्मिन् शिति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' चतुर्भिस्तुल्य इति चतुर्वत् प्रथमैकवचनान्तम् । 'अव्ययाद्धि०' वृत्तिः सुकरा । न वरम् । शिति प्रत्यये परे तिबादिवर्तमाना विधिसंभावना आशीःप्रेरणा अनद्यतनाख्यविभक्तिचतुष्टयस्य यत्कार्यं 'दृशादेः' 'अप् कर्तरि' इत्यादि तद्भवति । उदाहरणम् । दृश् । पश्यतीति पश्यः । शप्रत्ययः चतुर्वत्त्वात् 'अप् कर्तरि' 'दृशादेः पश्यादिः' इति पश्यादेशः । 'स्वरहीनं०' 'अदे' पुनः 'स्वरहीनं०' प्रथमैकवचने । 'सिस्रोः' । धेट् पाने । धयतीति धेटः शप्रत्ययः । 'अप् कर्तरि' 'ए अय्' 'स्वरहीनं०' 'अदे' 'स्वरहीनं०' एवं स्तनंधयः ॥ एवं पिबः ॥ ध्मा शब्दाग्निसंयोगयोः । धमादेशः । उत्पूर्वः । उत्प्राबल्येन धमतीति उद्धमः । शप्रत्ययः । 'अप् कर्तरि' 'अदे' 'स्वरहीनं०' उद्धमः । प्रथमैकवचने 'स्रोर्विसर्गः' ॥ हन् हिंसागत्योः । हन् गोपूर्वः । गां हन्तीति गोघ्नः । शप्रत्ययः ।

'अप् कर्तरि' 'अदादेर्लुक्' पश्चात् 'हनो घ्ने' हस्य घः । पूर्वं 'गमां स्वरे' 'स्वरहीनं०' 'स्रोर्विसर्गः' एवं कृतघ्नः ॥

**ज्वलादेर्णः ॥ ज्वलादेर्गणात् णः प्रत्ययो भवति ॥ ज्वलादेर्णो वेति केचित् ॥ पक्षे पचादित्वादः । ज्वल दीप्तौ । ज्वालः-ज्वलः ॥ तपतीति तापः-तपः ॥ पथि गतौ । चुरादिः । इदित् । पान्थयतीति वा पन्थतीति पान्थः-पथः । अत्र वृद्ध्यनन्तरं नुमागमः । ज्वलादिगणपाठसामर्थ्यात् ॥ पत्लृ गत्यैश्वर्ययोः । पततीति पातः—पतः ॥ क्रथ पचने । क्रथतीति क्राथः—क्रथः ॥ पथ गत्याम् । पथतीति पाथः-पथः ॥ मथ गाहे । मथतीति माथः-मथः-॥ सहतेसौ साहः । इति ज्वलादिः ॥**

सूत्रम्—'ज्वलादेर्णः' ॥ ज्वल आदिर्यस्य तस्य ज्वलादेः । पञ्चम्येकवचनान्तम् । 'ङिति' । 'ङस्य' इत्यकारलोपः । 'स्रोर्वि०' ॥ णः प्रथमैकवचनान्तम् । 'नामिनो रः' । 'रात्यपो द्विः' जलतुम्बिका० । ज्वलादेः ज्वल् तप् पथि पद् इत्यादेर्धातोः णप्रत्ययो भवति । णकारो वृद्ध्यर्थः ॥ ज्वल दीप्तौ । ज्वल् णप्रत्ययः । अ । 'स्वरहीनं०' 'अत उपधायाः' प्रथमैकवचने 'स्रोर्वि०' ॥ एवं तप संतापे । तापः ॥ पद् गतौ । पादः ॥ पथि गतौ । पथ् । णप्रत्ययः । वृद्धिः । 'स्वरहीनं०' ॥ पथि गच्छतीति पान्थः । लक्ष्यमुद्दिश्य लक्षणस्य प्रवृत्तिरिति प्रथमं वृद्धिस्ततः 'इदितः' इति नुमागमः । 'नश्चापदान्ते०' ॥

**अथाऽण् ॥ कार्येण् ॥ धातोः कर्मणि प्रयुज्यमाने अण् प्रत्ययो भवति ॥ कुम्भकारः । ग्रन्थकारः ॥**

सूत्रम्—'कार्येऽण्' ॥ कार्ये सप्तम्येकवचनान्तम् । 'अइए' । अण् प्रथमैकवचनान्तम् । 'हसेपः०' यत्क्रियते तत्कर्म तस्मिन् कर्मणि पूर्वं प्रयुज्यमाने धातोरण्प्रत्ययो भवति । कृ कुम्भपूर्वः । कुम्भं करोतीति कुम्भकारः । अण्प्रत्ययः । 'धातोर्नामिनः' इति वृद्धिः । कार् अ । 'स्वरहीनं०' 'स्रोर्विसर्गः' । एवं ग्रन्थपूर्वः । ग्रन्थं करोतीति ग्रन्थकारः । एवं शास्त्रकारः । एवं तन्तुवायादयः ॥

**आतो डः ॥ आकारान्ताद्धातोः कर्मणि प्रयुज्यमाने डप्रत्ययो भवति ॥ गोदः । धनदः । जलदः ॥**

सूत्रम्—'आतो डः' । आतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । डः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'हबे' 'उ ओ' सिद्धम् । आकारोऽन्ते येषां तेषां धातूनां डप्रत्ययो भवति कर्मणि प्रयुज्यमाने । डकारष्टिलोपार्थः ॥ डुदाञ् दाने । दा गोपूर्वः । गां ददातीति गोदः । डप्रत्ययः । अ । टिलोपः । 'स्वरहीनं०' एवं धनं ददातीति धनदः । एवं जलदः ॥

**नाम्नि च ॥ नाम्न्युपपदे धातोर्डः ॥ द्वाभ्यां पिबतीति द्विपः । द्वौ वारौ जायतेऽसौ द्विजः । गृहैर्दारैः सह तिष्ठतीति गृहस्थः ॥ गिरिशः । शीङ् स्वप्ने ॥ पादैः पिबतीति पादपः ॥ द्रु गतौ । शुचं द्रवतीति शूद्रः ॥ शुचः शूद्रे ॥ शुचः शूरादेशो भवति द्रे परे ॥**

सूत्रम्—'नाम्नि च' ॥ नाम्नीति नामन्शब्दस्य सप्तम्येकवचनान्तम् । 'अल्लोपः स्वरे' 'स्वरहीनं०' । च प्रथमैकवचनान्तम् । 'अव्यया०' नाम्नि नाममात्रे कर्मादिनियमरहिते प्रयुज्यमाने डप्रत्ययो भवति कर्तरि चकाराड्डावेऽपि । यथा । आखूनां मूषकाणामुत्थानमाखूत्थम् । ष्ठा । 'आदेः ष्णः स्नः' उत्पूर्वः । 'उदः स्थादेः' इति सलोपः । 'खसे चपा०' आखुपूर्वः । 'सवर्णे दीर्घः' डप्रत्ययः । टिलोपः । 'स्वरहीनं०' 'अतोऽम्' इत्यादौ उदाहरणम् ॥ पा पाने । पा द्विपूर्वः । द्वाभ्यां शुण्डामुखाभ्यां पिबतीति द्विपः । डप्रत्ययः । अत्र टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' ॥ एवं द्विवारं द्वाभ्यां जन्मसंस्काराभ्याम् एकं जन्मतो द्वितीयं दीक्षासंस्काराच्च जायते उत्पद्यत इति द्विजः । जनी प्रादुर्भावे । [ जनेर्जो आदेशः ] । डप्रत्ययः । टिलोपः । 'स्वरहीनं०' ॥ ष्ठा गतिनिवृत्तौ । ष्ठा । 'आदेः ष्णः स्नः' स्था षस्य सः । निमित्ताभावे० इति ठस्य थः । गृहपूर्वः । गृहे तिष्ठतीति गृहस्थः । डप्रत्ययः । टिलोपः 'स्वरहीनं०' ॥ द्रु गतौ । शुच्पूर्वः । शुचं शोकं द्रवति प्राप्नोति हीनजातित्वादिति शूद्रः । डप्रत्ययः । अत्र टिलोपः । 'शुचः शूद्रे' शुच्शब्दस्य द्रे इति डप्रत्ययान्तद्रुधातौ परे शू इत्ययमादेशो भवति । अनेन शुचः शू ॥

**उरसः सलोपो मुम्वा ॥ उरसः सकारस्य लोपो भवति डप्रत्ययान्ते गमौ मुमागमश्च वा ॥ उरसा गच्छतीत्युरगः । उरङ्गः सर्पः ॥**

'उरसः सलोपो मुम्वा' ॥ उरस्शब्दस्य उपपदस्य गमिधातौ परे सकारस्य लोपो भवति वा विकल्पेन मुमागमो भवति । अनेन गम् उरस्पूर्वः । उरसा हृदयेन गच्छतीति उरगः उरङ्गो वा । 'नाम्नि च' इति डप्रत्ययः । अत्र टिलोपः । 'स्वरहीनं०' 'उरस०' इति सलोपः । एकत्र मुमागमः । 'नश्चापदान्ते' ॥

**विहायसो विहश्च ॥ विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ ॥ विहायसि आकाशे गच्छतीति विहगः-विहङ्गः ॥ भुजस्य च मुम्वा डप्रत्ययान्ते गमौ ॥ भुजो वक्रार्थे ॥ भुजं वक्रं गच्छतीति भुजगः भुजङ्गः । विहायसो विहश्चेति चकारात् तरसस्तुरादेशः । मुम्वेति अनुवर्तनीयम् । तरसस्तुरादेशः । तुरस्य मुम्वा डान्ते गमौ ॥ तरसा वेगेन गच्छतीति तुरगः-तुरङ्गः ॥**

एवं विहायसा आकाशेन विहायसि आकाशे वा गच्छतीति विहगः विहङ्गः । गम् विहायस्पूर्वः ॥ 'विहायसो विहश्च' विहायस्शब्दस्य विहादेशः मुमागमः । डप्रत्ययः ॥ चकारात् भुजं कुटिलं गच्छतीति । भुज कौटिल्ये । भुजगः भुजङ्गः । प्लवगः प्लवङ्गः । तुरगः तुरङ्गः । इत्याद्यपि ॥

**अटौ ॥ नाम्नि कार्ये च उपपदे सति अटौ प्रत्ययौ भवतः ॥ अस्थि हरतीति अस्थिहरः कः[1] श्वा । कवचं हरतीति कवचहरः कुमारः ॥ धृञ् धारणे । धनुर्धरतीति धनुर्धरः क्षत्रियो राजा वा ॥ चर गतौ । कुरुषु देशेषु चरतीति**

---

[1] इदं टीकाकृत्कल्पितं भवेत् अन्येन वा केनचिद्वर्धितं भवेत् ॥

कुरुचरः । ट ईबर्थः । ष्ट्रितः स्त्री चेत् कुरुचरी । महीचरी । सेनाचरी । भिक्षाचरी । दीक्षाचरी ॥ अप्रत्ययः सर्वधातुसाधारणः । टप्रत्ययस्तु चरादेरेव भवति ॥ शोकं करोतीति शोककरी कन्या । यशः करोतीति यशस्करी विद्या ॥ सृ गतौ । पुरः सरतीति पुरःसरः । अग्रे सरतीति अग्रेसरः ॥ पार्श्वे शेतेऽसौ पार्श्वशयः । तथैव पृष्ठे शेतेऽसौ पृष्ठशयः । उदरशयः ॥ उत्तानादिषु कर्तृषु । उत्तानः शेतेऽसौ उत्तानशयः । स्तम्बेरमः हस्ती ॥ जप जल्प व्यक्तायां वाचि । कर्णेजपः ॥ ग्रह उपादाने । शक्तिं गृह्णातीति शक्तिग्रहः । लाङ्गलग्रहः । पृष्ठिग्रहः । अङ्कुशग्रहः । तोमरग्रहः । घटीग्रहः । धनुर्ग्रहः । सूत्रग्रहः । पुष्पग्रहः । फलग्रहः । कामग्रहः । मधुरग्रहः । शंपूर्वः कृञ् । शं सुखं वा कल्याणं करोतीति शंकरः । शंवदः । भारंवहः । अत्र कर्मणि अणपि वक्तव्यः । भारवाहः । श्वेतवाहः । इत्यादि ॥

सूत्रम्—'अटौ' ॥ अश्च टश्च अटौ प्रथमाद्विवचनान्तम् । 'ओ औ औः' नाम्नि कार्ये च वाच्यमाने अकारटकारप्रत्ययौ यथायोग्यं भवतः टप्रत्यये । टकार ईबर्थः । पचिनन्दीति पचादीनां निरुपपदानामप्रत्यय उक्तः । अटावित्यत्र तु सोपपदानां अप्रत्यय इति न पौनरुक्त्यम् । उदाहरणम् । हृञ् हरणे । हृ अस्थिपूर्वः । अप्रत्ययः । 'गुणः' 'स्वरहीनं०' अस्थीनि हरतीति अस्थिहरः श्वा कुर्कुरः ॥ एवं कवचं संनाहं हरतीति कवचहरः कुमारः इन्द्रो वा ॥ धृ धनुष्पूर्वः । 'दोषां०' इति षस्य रः । 'राधपो द्विः' 'झबे जबाः' जलतुम्बिकान्यायेन० । धनुर्धरतीति धनुर्धरः कुमारः इत्यादयोऽप्रत्ययान्ताः ॥ चर गतिभक्षणयोः । चर कुरुपूर्वः । कुरुषु देशेषु चरतीति कुरुचरः । स्त्रीचेत् कुरुचरी । टप्रत्ययः । अ 'स्वरहीनं०' एकत्र प्रथमैकवचने 'स्त्रोर्विं०' ॥ द्वितीये टित्त्वात् 'ष्ट्रितः' इतीप् । 'यस्य लोपः' प्रथमैकवचने 'हसेपः सेर्लोपः' नदीशब्दवत् ॥

इखखि ॥ धातोर्नाम्नि कार्ये च सति इ ख खि एते प्रत्याया भवन्ति ॥

शकृत्स्तम्बात्कृञः फले रजोमलाद्ग्रहो हृञः ।
दृतिनाथादेववातादापःकर्तरि वाच्य इः ॥ ३ ॥

वत्सव्रीह्योरेव । डुकृञ् करणे । शकृत्करोतीति शकृत्करिः को वत्सः । स्तम्बं करोतीति स्तम्बकरिः को व्रीहिः । फलं गृह्णातीति फलेग्रहिः वा फलानि गृह्णातीति फलेग्रहिर्वृक्षः । फलस्यैदन्तत्वं निपातनात् । रजो गृह्णातीति रजोग्रहिः । मलग्रहिः । दृतिं हरतीति दृतिहरिः । नाथहरिः । आप्लृ व्याप्तौ । देवान् आप्नोतीति देवापिः । वातं आप्नोतीति वातापिः ।

सूत्रम्—'इखखि' ॥ इश्च खश्च खिश्च इखखि प्रथमाबहुवचनान्तं सांकेतिकम् । यद्वा प्रथमैकवचनान्तं नपुंसके ॥ धातोर्नाम्नि कार्ये च सति इ, ख, खि, एते त्रयः प्रत्यया भवन्ति यथायोग्यम् । उदाहरणम् । कृ स्तम्बपूर्वः । स्तम्बं करोतीति विग्रहे इप्रत्ययः । 'गुणः'

'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' स्तम्बकरिः व्रीहिः शालिः । एवं शकृत्करिर्वत्सः । आप्लृ व्याप्तौ । आप् देवपूर्वः । देवानाप्नोतीति देवापिः । इप्रत्ययः 'स्वरहीनं०' एवं वातापिः । फलग्रहिः । नाथहरिः ॥

खकारः 'खिति पदस्ये'ति सूत्रस्य विशेषणार्थः ॥ खिति पदस्य ॥ खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति ॥ तेन दोषामन्यमहः । आत्मानं दोषा मन्यते तद्दोषामन्यम् अहः ॥

करीषकूलसर्वाभ्रात्कषः प्रियवशाद्वदः ।
ऋतिमेघभयात्कृञः क्षेममद्रप्रियात्तु वा ॥ ३ ॥

कष निष्कर्षे । करीषं कषतीति करीषंकषः । करीषं शुष्कगोमयमित्यमरः । कूलं कषतीति कूलंकषः । सर्वं कषतीति सर्वंकषः । अभ्रं कषतीति अभ्रंकषः । खकारो मुमागमार्थः ॥ वद व्यक्तायां वाचि । प्रियं वदतीति प्रियंवदः । वशंवदः ॥ ऋतिं करोतीति ऋतिंकरः । मेघंकरः । भयंकरः । विकल्पपक्षे 'कार्ये अण्' । क्षेमं करोतीति क्षेमंकरः क्षेमकारः । भद्रं करोतीति भद्रंकरः भद्रकारः । प्रियं करोतीति प्रियंकरः प्रियकारः ॥

आशिताच्च भुवो भावे करणे च तुराद्भुजात् ।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥ ४ ॥
गच्छतेः प्रत्ययः खः स्यांद्भृञोधातोस्तु खिर्भवेत् ।[1]
आत्मन्कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः ॥ ५ ॥

आशितेन भूयते इति आशितंभवम् । ( भावे नपुंसकता वाच्या ) । आशितो भवत्यनेनेति आशितंभवः ओदनः ॥ तुरं गच्छतीति तुरंगमः । भुजंगमः । विहंगमः । सुतंगमः । उरंगमः । हृदयंगमः । जनंगमः । प्लवेन गच्छतीति प्लवंगमः ॥ डुभृञ् धारणपोषणयोः । आत्मानं बिभर्तीति आत्मंभरिः । कुक्षिंभरिः । उदरंभरिः । लुप्तविभक्तेश्च पदान्तत्वं विज्ञेयम् ॥ अतः परं वाचंयमादीन् कथयति । वाचंयमादयो निपात्याः । वाचं यच्छतीति वाचंयमः । अत्र अकारो निपात्यते ॥ दॄ विदारणे । पुरं दारयतीति पुरंदरः ॥ तप संतापे । द्विषं तापयतीति द्विषंतपः । परंतपः । सर्वं सहतेऽसौ सर्वंसहः । विश्वं बिभर्तीति विश्वंभरः । भगं दारयतीति भगंदरः ॥ तॄ प्लवनतरणयोः । रथं तरतीति रथंतरः ॥ वृञ् वरणे । पतिं वृणोतीति वा वृणुते सा पतिंवरा ॥ जि जये । धनं जयतीति धनंजयः ॥ धृञ् धारणे । वसूनि वा वसु धरति वा

---

१ टीकाकर्तुर्मतेन तु 'गच्छतेः प्रत्ययः खः स्यात्तथा वाचंयमादयः' आत्मन्कुक्ष्युदरेभ्यो वै भृञो धातोस्तु खिर्भवेत् ॥' इत्येवं पाठः स्यात् ॥ परंतु अग्रेऽपि खप्रत्ययस्यैव दर्शितत्वात् मूलपाठ एव समीचीनः ॥

धरतेऽसौ वसुंधरा। शत्रुं सहतेऽसौ शत्रुंसहः। अरिं दाम्यतीति अरिंदमः। शत्रुंतपः। एते वाचंयमादयः॥

सूत्रम्। 'खिति पदस्य' ख इत् यस्य स खित् तस्मिन् खिति। सप्तम्येकवचनान्तम्। 'स्वरहीनं०' पदस्येति षष्ठ्येकवचनान्तम्। 'ङस्य' खिति खकारेत्प्रत्यये परे पूर्वपदस्य मुमागमो भवति। उकार उच्चारणार्थः॥ कृ क्षेमपूर्वः। क्षेमं करोतीति क्षेमंकरः। 'इखखि' इति खप्रत्ययः। अत्र खकारो मुमागमार्थः। 'खिति पदस्य' इति पूर्वपदस्य मुमागमः। 'मोऽनुस्वारः' 'गुणः' 'स्वरहीनं०' एवं प्रियं वदतीति प्रियंवदः। वशंवदः। कूलंकषः। अभ्रंलिहः। वाचंयमः। पुरंदरः। भयंकरः। परंतपः। सर्वंसहः। विश्वंभरः। मितंपचः। विधुंतुदः। सूर्यंपश्यः। ललाटंतपः। असूर्यंपश्याः राजदारा इत्यादि॥ डुभृञ्। भृ आत्मन्पूर्वः। आत्मानं बिभर्तीति आत्मंभरिः। खिप्रत्ययः। 'नाम्नो नो०' 'खिति पदस्य' 'मोऽनुस्वारः' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विसर्गः' एवम् उदरंभरिः। कुक्षिंभरिः इत्यादयोऽपि ज्ञेयाः॥

एजो खश्॥ एजृ कम्पने इत्यादीनां खश् प्रत्ययो भवति॥ खकारो मुमागमार्थः। शकारः शिति चतुर्वत्कार्यार्थः। धातोः प्रेरणे इति ञिः प्रत्ययः। जनान् एजयतीति जनमेजयः॥

ण्यन्तैजेर्मन्यतेर्मुञ्जकूलास्यपुष्पतो धयेः।
नाडीमुष्टीशुनीपाणिकरस्तनात्सनासिकात्॥ ६॥

मनु अवबोधने। दिवादेर्यः। आत्मानं पण्डितं मन्यते स पण्डितंमन्यः। धेट् पाने। मुञ्जं धयतीति मुञ्जंधयः। कूलंधयः। आस्यंधयः। पुष्पंधयः। ध्माधेटोस्तुल्योपपदत्वं ज्ञेयम्॥ ध्मा शब्दाग्निसंयोगयोः। नाडीं धयतीति नाडिंधयः। नाडिंधमः॥ खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः॥ मुष्टिंधयः। मुष्टिंधमः। शुनिंधयः। शुनिंधमः। पाणिंधयः। पाणिंधमः। करंधयः। करंधमः। स्तनंधयः। स्तनंधमः। नासिकां धयतीति नासिकंधयः। नासिकंधमः॥

ध्मा खारीवातघटीतो रुजवहौ तु कूलतः।
अरुर्विधुतिलात्तुद् स्यादसूर्योगाद्दृशिस्तपिः॥ ७॥
ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः।
वाताद्जिरिरायामद् जहातिः शर्धतिस्तथा॥ ८॥

खारीं धमतीति खारिंधमः। वातंधमः। घटिंधमः॥ रुजो भङ्गे। वह प्रापणे। उत्पूर्वः। कूलमुद्रुजतीति कूलमुद्रुजः। कूलमुद्वहतीति कूलमुद्वहः॥ अरुः किम्?। मर्मस्थानम्। अरुस्तुदतीति अरुंतुदः। विधुंतुदः। तिलंतुदः॥

दृशिर् प्रेक्षणे । न सूर्यं पश्यन्तीति असूर्यंपश्याः । के ? राजदाराः । उग्रंपश्यः । ललाटंतपः ॥ लिह आस्वादने । वहं लेढीति वहंलिहः । अभ्रंलिहः ॥ मितं पचतीति मितंपचः । प्रस्थंपचः । पानंपचः । नखंपचः ॥ अज गतौ क्षेपणे च । वातमजतीति वातमजः ॥ मदी गर्वप्लवनयोः । इरया माद्यतीति इरंमदः ॥ ओहाक् त्यागे । शर्धं जहतीति शर्धंजहा माषाः ॥ इति खश्प्रत्ययः ॥

सूत्रम् । 'एजां खश्' एजां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वा०' खश् प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः' 'एज् कम्पने' इत्यादीनां धातूनां खश् प्रत्ययो भवति खकारो मुमागमार्थः । शकारश्चतुर्वत्कार्यार्थः । एज् जनपूर्वः । जनं लोकमेजयति कम्पयतीति विग्रहे । 'धातोः प्रेरणे' ञिप्रत्ययः । 'स्वरहीनं०' ततः । 'एजां खश्' इति खश् । अ । 'खिति पदस्य' इति पूर्वस्य मुम् । 'स्वरहीनं०' चतुर्वत्त्वात् 'अप् कर्तरि' 'गुणः' 'ए अय्' 'स्वरहीनं०' 'अदे' इत्यकारलोपः । 'स्वरहीनं०' जनमेजयः ॥ मन ज्ञाने मन् पण्डितपूर्वः । आत्मानं पण्डितं मन्यते इति पण्डितंमन्यः । खश्प्रत्ययः । शित्वात् 'दिवादेर्यः' खित्त्वान्मुमागमः । 'स्वरहीनं०' 'अदे' 'स्वरहीनं०' ॥ एवं सुभगंमन्यः इत्यादि ॥

ख्युट् करणे ॥ धातोः करणेऽर्थे ख्युट् प्रत्ययो भवति ॥ अभूततद्भावे ॥ आढ्यसुभगस्थूलपलितनग्नांधप्रियेषु कृञः ख्युट् वाच्यः ॥ अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यंकरणं द्यूतम् । सुभगंकरणम् ॥ स्थूलंकरणं किम् ? । दधि ॥ पलितंकरणं किम् ? । शीतवस्तुसेवनम् । अनग्नः नग्नः क्रियते अनेनेति नग्नंकरणं द्यूतम् ॥ अन्धंकरणं किम् ? । सूर्यावलोकनमसकृत् । अप्रियः प्रियः क्रियते अनेनेति प्रियंकरणं मैत्रम् ॥ [ दार्वाहनो अण् वक्तव्यः ॥ तकारस्य च टः ॥ घाटादेशो वक्तव्यः ॥ उग्रम् । दारु आहन्तीति दार्वाघाटः ॥ चारौ वा ॥ चारुं आहन्तीति चार्वाघाटः चार्वाघातः ॥ कर्मणि संपूर्वाच्च ॥ वर्णान् संहन्तीति वर्णसंघातः ॥ जायापत्योष्टक् ॥ जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्तरि ॥ जायां हन्तीति जायाघ्नः ना । पतिं हन्तीति पतिघ्नी स्त्री ॥ अमनुष्यकर्तृके च ॥ जायाघ्नः तिलकालकः । कपाले भ्रमरः । पतिघ्नी पादरेखा ॥ पाणिघताडघौ शिल्पिनि निपात्येते ॥ राजघ उपसंख्यानम् ॥ ]

सूत्रम् । 'ख्युट् करणे' ख्युट् प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः' करणे सप्तम्येकवचनान्तम् । 'अ इ ए' । अकृतस्य निष्पादनं करणमुच्यते तस्मिन्नर्थे धातोः ख्युट्प्रत्ययो भवति । खकारो मुमागमार्थः । टकार ईबर्थः । कृ नग्नपूर्वः । अनग्नो नग्नः क्रियते अनेन इति विग्रहे ख्युट्प्रत्ययः । यु । 'खिति पदस्य' इति खित्त्वान्मुम् । 'समासप्रत्यययोः' इति विभक्तिलोपे मुमागमः । 'युवोरनाकौ' इति अनादेशः । 'स्वरहीनं०' 'ऋर्णोणो०' नपुंसकान्तम् । नग्नंकरणं द्यूतम् । एवम् अस्थूलः स्थूलः क्रियते अनेनेति स्थूलंकरणं दधि । कृ स्थूलपूर्वः ॥

**भजां विण् ॥ भजसहवहां कर्तरि विण् प्रत्ययो भवति णकारो वृद्ध्यर्थः ॥ वेः ॥ वेर्लोपो भवति ॥ भज सेवायाम् । अर्धं भजतीति अर्धभाक् । चोः कुः सुखभाक् । दुःखभाक् ॥ वह प्रापणे । भारं वहतीति भारवाट्-भारवाड् भारवाहौ भारवाहः । भारवाहम् भारवाहौ ॥ वाहो वौ ॥ वाहो वाकारस्यौकारो भवति शसादौ स्वरे परे । भारौहः भारौहा भारवाड्भ्याम् भारवाड्भिः । इत्यादि ॥ सह मर्षणे । हो ढः । वावसाने । सहादेः सादिः इति सूत्रेण स्वरायास्तुरादेशः । त्वरां शत्रूणां वेगं सहतेऽसौ तुराषाड् । साहेः षः सोऽढि । तुरासाहौ तुरासाहः ॥ पृच्छतेर्विण् ॥ तत्त्वं पृच्छतीति तत्त्वप्राट् । अम्बूनि वहतीति अम्बुवाट् । शसादौ तु अम्बूहः ॥ अन उः ॥ अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे ॥ शालिवाट् शाल्यूहः ॥**

सूत्रम्—'भजां विण्'॥ भजां षष्ठीबहुवचनान्तम् । 'स्वर०' 'मोऽनुस्वारः' विण् प्रथमैकवचनान्तम् । 'हसेपः०' भजामिति । भजादीनां भज, वह, षह, शम्, इत्यादीनां धातूनां विण्प्रत्ययो भवति कर्त्रुक्तौ विषये । णकारो वृद्ध्यर्थः ॥ भज सेवायाम् । भज् । अर्धपूर्वः । अर्धं भजतीत्यर्धभाक् । विण्प्रत्ययः । वि । णित्त्वात् 'अत उपधायाः' इति वृद्धिः । अर्धभाज् वि इति स्थिते ॥ सूत्रम्—'वेः' ॥ षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' वेरिति विप्रत्ययस्य लोपो भवति । इत्यनेन विलोपः । प्रथमैकवचने 'चोः कुः' 'हसेपः सेर्लोपः' 'वावसाने' अर्धभाक् अर्धभाजौ अर्धभाजः इत्यादि । स्त्रीलिङ्गेऽप्येवम् । नपुंसके तु अर्धभाक् अर्धभाजी अर्धभाञ्जि इत्यादि ॥

वह भारपूर्वः । भारं वहतीति विग्रहे विण् प्रत्ययः । वृद्धिः । विलोपः । प्रथमैकवचने 'हो ढः' 'हसेपः सेर्लोपः' 'वावसाने' ढस्य डः । भारवाट् भारवाड् । मधुलिह्शब्दवत्प्रक्रिया । शसादौ स्वरे तु विशेषः ॥ 'वाहो वौ' शसादौ स्वरे । वाह इति विण्प्रत्ययान्तस्य वह्धातोः शसादौ स्वरे परे वा इत्यक्षरस्य कृत्स्नस्य औकारो भवति वा इत्यस्य औ 'ओ औ औः' भारौहः । भारौहा भारवाड्भ्यां 'हो ढः' 'झबे जबाः' 'स्वरहीनं०' भारवाड्भिरित्यादि । षह मर्षणे । 'आदेः ष्णः स्नः' सह विण्प्रत्ययः । वृद्धिः । वेर्लोपः । प्रथमैकवचने 'हो ढः' 'साहेः षः सो ढि' साहः षष्ठ्येकवचनान्तम् । षः प्रथमैकवचनान्तम् । सः षष्ठ्येकवचनान्तम् । ढि सप्तम्येकवचनान्तम् । सहधातोः सकारस्य षकारो भवति ढकारे परे रसे पदान्ते च । अनेन सस्य षः । 'हसपः से०' 'वावसाने' तुरां शत्रुवेगं सहते इति तुराषाड् इन्द्रः । तुराषाट् तुरासाहौ तुरासाहः । भकारादौ सुपि च तुराषाड्भ्यां तुराषाड्भिः इत्यादिरूपाणि ज्ञेयानि ॥ अत्र केचित् तत्त्वं पृच्छतीति तत्त्वप्राट् इत्युदाहरणं पठन्ति । तदत्र न युज्यते । अग्रे क्विप्प्रत्ययाधिकारे साधितत्वात् इह तु भ्रमात् पठन्ति ॥

**शमेरपि विण् वक्तव्यः ॥ मो नो धातोः । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् प्रशामौ प्रशामः ॥**

शम उपशमे। शम् प्रपूर्वः। प्रकर्षेण शाम्यतीति प्रशान्। विण्प्रत्ययः। वृद्धिः। वेर्लोपः। प्रथमैकवचने। 'मो नो धातोः' धातोर्मकारस्य नकारो भवति रसे पदान्ते च। इति मस्य नः। 'हसेपः सेर्लोपः' प्रशान् प्रशामौ प्रशामः। प्रशान्भ्यां प्रशान्भिः॥

**अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ॥ अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नश्च्विप्रत्ययो भवति ॥ संपद्यकर्तरीति वक्तव्यम् ॥ तेन अगृहे गृहे भवतीति गृहेभवति। चकारश्च्वौ दीर्घ इति विशेषणार्थः। अथवा चकारः प्रत्ययभेदज्ञापनार्थः। वेः॥**

अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः न प्राक् भूतमभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथाभावस्य तथाभावे सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरेण योगे नाम्नश्च्विप्रत्ययो भवति। चकारश्च 'च्वौ दीर्घ ई चास्य' इति सूत्रविशेषणार्थः॥

**च्वौ दीर्घ ई चास्य ॥ च्वौ प्रत्यये परे अकारस्य ईकारादेशो भवति अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य ॥ अमिथुनं मिथुनं संपद्यमानं तथा करणं इति मिथुनीकरणम्। किम्?। पाणिग्रहणम्। च्व्यन्तत्वादव्ययम् अव्ययाद्विभक्तेर्लुक्। असहायः सहायः संपद्यमानस्तथा स्यात् इति सहायी स्यात्। अकृष्णः कृष्णः यथा संपद्यमानस्तथा करोतीति कृष्णीकरोति। हेतूकृतम्। अव्ययस्य न दीर्घत्वम्। अस्वस्ति स्वस्ति यथा संपद्यमानस्तथा स्यादिति स्वस्ति स्यात्। संपद्यकर्तरि किम्। अगृहे गृहे भवतीति गृहेभवति। अलुक् क्वचित् इति विभक्तेरलुक्॥**

'च्वौ दीर्घ ई चास्य' च्वौ परे सति अकारव्यतिरिक्तस्वराणां दीर्घः आकारस्य च। यद्वा अस्य अवर्णस्य ईकारो भवति। उदाहरणम्। कृ मिथुनपूर्वः। अमिथुनं मिथुनं क्रियते इति विग्रहे। 'भावे युट्' यु। 'अभूततद्भावे०'। अनेन मिथुनस्याग्रे च्विः। 'च्वौ दीर्घ ई चास्य' इति अकारस्य ईकारः। 'युवोरनाकौ' 'गुणः' 'स्वरहीनं०' 'वेर्लोपः' 'ऋर्नो णो०' भावत्वान्नपुंसकलिङ्गत्वम् कुलशब्दवत्। एवं मिथुनीकरोति मिथुनीभवति मिथुनीस्यात्। भू शुक्लपूर्वः। अशुक्लस्य शुक्लभवनं शुक्लीभावः। घञ्। 'घञ् भावे' अ। ञित्वाद्वृद्धिः। 'औ आव्' 'स्वरहीनं०' च्विः। अकारस्य ई। 'वेर्लोपः' अत्र भूयोत्र च्विः। 'सोर्वि०' अस् भुवि। विधिसंभावनयोः यात्। 'अप् कर्तरि' 'अदादेर्लुक्' 'नमसोऽस्य' इत्यलोपः। सहायपूर्वः। असहायः सहायः स्यादिति विग्रहे च्विप्रत्ययः ई चास्य। 'वेः' इति लोपः। सहायी स्यात् क्रियापदम्। अत्र अस्योगे च्विः। कृ हेतुपूर्वः। अहेतुर्हेतुतया कृतं हेतूकृतम्। 'क्तक्तवतू' तप्रत्ययः। च्विप्रत्ययः। 'च्वौ दीर्घः०' इति दीर्घः। उकारस्य ऊकारः। नपुंसकान्तम्॥

**च्वौ सलोपश्च ॥ अरुस् मनस् महस् चेतस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे ॥ द्वौ नञौ प्रकृतार्थमनुसरतः। उत्सुकं मनो**

यस्यासौ उन्मनाः, न उन्मनाः, अनुन्मनाः, अनुन्मनाः उन्मनाः संपद्यमानस्तथा भाव इति उन्मनीभावः । विगतं मनो यस्याऽसौ विमनाः, न विमनाः अविमनाः, अविमना विमनाः संपद्यमानः तथा भाव इति विमनीभावः । न विद्यते मनो यस्यासौ अमनाः, न अमनाः अनमनाः, अनमनाः अमनाः संपद्यमानस्तथा भाव इति अमनीभावः । तथा सुमनीभावः । सुचेतीभावः । महीकरोति । अरूकरोति । चक्षूकरोति ॥

'च्वौ सलोपश्च' च्विप्रत्यये परे अरुस्मनश्चक्षुश्चेतोरहोरजसां सकारस्य लोपो भवति । सलोपे कृते च पूर्वस्य दीर्घः । अकारस्य ईकारः । स्थिरस्य मनसः अमनस्त्वेन भवनममनीभावः । अरूकरोति । चक्षूकरोति । चेतीकरोति । विरहीकरोति । विरजीकरोति । भू । अमनस्पूर्वः । 'घञ्भावे' अ । च्विप्रत्यये कृते । 'च्वौ सलोपश्च' इति सलोपे कृते अकारस्य ईकारः ॥ एवमपरिखा परिखाकृता परिखीकृता । क्तप्रत्ययः । परिखापूर्वः च्विप्रत्ययः । 'ई चास्य' इति अवर्णस्य ईकारः । 'वेः' इति विलोपः ॥

**डाच् क्वचिद्भूक्तृभ्यः** ॥ अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति ॥ अदुःखं दुःखं संपद्यते तत् करोतीति दुःखाकरोति । तथा भद्राकरोति ॥

प्रथमैकवचने 'स्रोर्विसर्गः'……क्वचित्प्रयोगान्तरे कृभ्वस्तियोगे च्व्यर्थे नाम्नो डाच्प्रत्ययो भवति । डकारष्टिलोपार्थः । चकारः प्रत्ययभेदज्ञापनार्थः । अदुःखिनं दुःखिनं करोतीति दुःखाकरोति । इति सिद्धमेव । करोति दुःखिन्पूर्वः । डाच् । टिलोपः । 'स्वरहीनं०'॥ एवं सुखाकरोति । सपत्राकरोति । प्रियाकरोति । मुण्डने भद्राकरणम् ॥

**आतो मनिप्क्वनिब्वनिपः** ॥ प्रादौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति ॥ सुष्ठु ददातीति सुदामा । राजन्शब्दवद्रूपम् । खसे चपा झसानाम् । अश्वे तिष्ठतीति अश्वत्थामा ॥

सूत्रम्—'आतो मनिप्क्वनिब्वनिपः' ॥ आतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' मनिप् च क्वनिप् च वनिप् च मनिप्क्वनिब्वनिपः । प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' आकारान्ताद्धातोः मनिप्, क्वनिप्, वनिप्, एते त्रयः प्रत्यया भवन्ति कर्तरि । पकारः पित्कार्यार्थः । इकार उच्चारणार्थः । क्वनिप् इत्यत्र ककारः कित्कार्यार्थः । डुदाञ् दाने । दा सुपूर्वः । सुष्ठु ददातीति सुदामा । मनिप्प्रत्ययः । सुदामन्शब्दात् प्रथमैकवचने । 'नोपधायाः' 'हसेपः से०' 'नाम्नो नो लोप०' राजन्शब्दवत्साधना ॥

**स्थामी** ॥ इश्च ईश्च ई । दासोमास्थां ह्रस्व इकारो भवति ॥ धागैहाक्पिबतीनां दीर्घ ईकारो भवति तकारादौ किति हसे परे, न क्यपि किपि वा क्वनिप्प्रत्ययः । सुष्ठु पिबतीति सुपीवा । भूरि ददातीति भूरिदिवा । घृतं पिबतीति घृतपीवा । धनदिवा । मलसिवा । मार्गस्थिवा । धनधीवा । सुगीवा । दोषहीवा ॥ क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते ॥ सुष्ठु करोतीति सुकर्मा ।

सुष्ठु शृणोतीति सुशर्मा । अन प्राणने । अत्र क्विप् । प्राणितीति प्राण् प्राणौ प्राणः । हे प्राण् ॥ अनः ॥ पदान्ते वर्तमानस्यापि अनो नस्य णत्वं स्यात् । अर्थो इति विशेषणान्नलोपो न शङ्कनीयः । इण् गतौ ॥ ह्रस्वस्य पिति कृति तुक् ॥ ह्रस्वस्य पिति कृति परे तुगागमो भवति ॥ प्रातरेतीति प्रातरित्वा ॥ वनिपि जमस्याऽत्वं वाच्यम् ॥ जनी प्रादुर्भावे । विजायतेऽसौ विजावा । केवलेभ्योपि वनिप् । ओणृ अपनयने । ओणतीति अवावा अवावानौ ॥ ईपि वनो नस्य रो वाच्यः ॥ न्रण ईप् । ओणति । सा अवावरी । पारं पश्यतीति पारदृश्वा । पारं पश्यतीति सा पारदृश्वरी । केवलेभ्योऽपि क्वनिप् । षुञ् अभिषवे । षूङ् प्राणिगर्भविमोचने । सुनोतीति सुत्वा । तुक् ॥ धेट् पाने । धयतीति धीवा ॥ गै शब्दे । गायतीति गीवा । जहातीति हीवा । पीवा ॥

सूत्रम्——'स्थामी' ॥ स्थां षष्ठीबहुवचनान्तम् । 'आतो धातोर्लोपः' 'स्वरहीनं०' 'मोऽनुस्वारः' ई प्रथमैकवचनान्तम् सांकेतिकम् । अथवा स्थां षष्ठीबहुवचनान्तम् । इ प्रथमैकवचनान्तम् । ई प्रथमैकवचनान्तम् त्रिपदम् । 'अव्ययाद्वि०' इश्च ईश्च ई । स्था, पा पाने, गा, मा, हा, इत्यादीनामीकारो भवति क्विप्प्रत्ययव्यतिरिक्ते कृति परे स्थादीनामाकारस्य इकारः ईकारश्च भवति । क्वचित्प्रयोगानुसारेण ह्रस्व इकारः । यथा स्थितं सहितं मितं प्रमितम् । दो अवखण्डने । दितम् । षोऽन्तकर्मणि । अवसितम् । छो छेदने । छितम् । निशितमित्यादि । क्वचिद्दीर्घः । पा पाने । पा सुपूर्वः । सुष्ठु पिबतीति विग्रहे । 'आतो मनिप्०' इत्यादिना क्वनिप्प्रत्ययः । कित्त्वादाकारस्य ईकारः । पा इत्यस्य पी सुपीवन् । प्रथमैकवचने 'नोपधायाः' 'हसेपः सेर्लोपः' 'नाम्नोनो०' सुपीवा इति क्वनिबन्तम् । डुदाञ् । दा भूरिपूर्वः । भूरि प्रचुरं स्वर्णं वा ददातीति भूरिदावा वनिप् कित्त्वाभावात् 'स्थामी' इतीकारो न । राजन्शब्दवत्प्रक्रिया ॥

क्विप् ॥ उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति ॥ क्विपः सर्वापहारित्वाल्लोपः । कृपाविती ॥ वेः ॥

सूत्रम् । 'क्विप्' प्रथमैकवचनान्तम् । 'हसेपः०' एकपदम् । सर्वधातुभ्यः क्विप्प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः तुग्विधानार्थश्च । अन्ये तु प्रत्यया उदाहरणानुसारेण यथायोग्यं धातुभ्यः प्रयोज्याः । क्विप्प्रत्ययस्तु सर्वधातुभ्यो भवतीत्यर्थः । कृ । कर्मन्पूर्वः । कर्म करोतीति विग्रहे क्विप्प्रत्ययः ॥

ह्रस्वस्य पिति कृति तुक् ॥ कर्म करोतीति कर्मकृत् । अग्निं चिनोतीति अग्निचित् । देवान् स्तौतीति देवस्तुत् । सोमं पिबतीति सोमपाः ॥ सर्वं पश्यतीति सर्वदृक् । दिशाम् इति कुत्वम् । दिश अतिसर्जने । दिशतीति दिक् क्विप् ॥ वचिप्रच्छयायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च व-

**क्तव्यः ॥ वक्त्यनया सा वाक् वा उच्यते अनया सा वाक् ॥ प्रच्छ ज्ञीप्सायाम् । तत्त्वपूर्वः । तत्त्वं पृच्छतीति तत्त्वप्राट् । छशषराजादेः षः ॥ छ्वोः शऊ वाच्णो किति ङिति झसे परेऽनुनासिके कौ च ॥ तेन तत्त्वप्राच्छौ(शौ) तत्त्वप्राच्छः(शः) ॥ ष्टुञ् स्तुतौ । आयतं स्तौतीति आयतस्तूः ॥ प्रुङ् गतौ । कटं प्रवतेऽसौ कटप्रूः ॥ जु गतौ । जवतेसौ जूः । सुष्ठु श्रयतीति सुश्रीः । वा सुष्ठु श्रीर्यस्यासौ सुश्रीः । श्रयन्ते जना यामिति श्रीः ॥**

सूत्रम्—'ह्रस्वस्य पिति कृति तुक्' ॥ ह्रस्वस्य षष्ठ्येकवचनान्तम् । 'ङस्य' पिति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' तुक् प्रथमैकवचनान्तम् । 'हसेपः सेर्लो०' पिति कृति परे ह्रस्वस्य स्वरस्य तुगागमो भवति । अनेन धातोः पुरस्तुगागमः । क्विपः सर्वापहारी लोपः इति क्विप्लोपः । प्रथमैकवचने 'हसेपः सेर्लोपः' कर्मन्नित्यत्र 'नाम्नो नो०' कर्मकृत् । एवमग्निं चिनोतीत्यग्निचित् । चिञ् चयने ॥ देवान् स्तौतीति देवस्तुत् । ष्टुञ् स्तुतौ । ष्टु । 'आदेः ष्णः स्नः' 'निमित्ताभावे०' इति टस्य तः । देवपूर्वः । क्विप्प्रत्ययः । तुगागमः । क्विपः सर्वापहारी लोपः ॥ पा पाने । सोमपूर्वः । क्विप्प्रत्ययः । सोमं पिबतीति सोमपाः । अत्र दीर्घत्वान्न तुगागमः । प्रथमैकवचने 'स्रोर्विं०' ॥ दृशिर् प्रेक्षणे । सर्वपूर्वः । सर्वं पश्यतीति सर्वदृक् । क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । 'दिशाम्' इति शस्य कः । प्रथमैकवचने । 'हसेपः से०' सर्वदृक् सर्वदृशौ इत्यादि ॥ श्रिञ्धातुः सेवायाम् । श्रिः सुपूर्वः । सुष्ठु श्रयतीति विग्रहे क्विप् ॥ 'वचिप्रच्छ्यायत०' इति । प्रच्छ, वच, स्तु, कटप्रु, जु, श्रीणां दीर्घता भवति चकारात् प्रच्छः संप्रसारणाभावः । इति स्वरस्य दीर्घः । क्विब्लोपः । सुश्रीशब्दात्प्रथमैकवचने । 'स्रोर्विं०' ॥ प्रच्छ ज्ञीप्सायाम् । प्रच्छ तत्त्वपूर्वः । क्विप्प्रत्ययः । 'प्रच्छादे० ।' इति दीर्घः । 'संयोगान्तस्य लोपः' 'छशषराजादेः षः' 'षो डः' 'हसेपः से०' 'वावसाने' तत्त्वं पृच्छतीति तत्त्वप्राट् तत्त्वप्राड् तत्त्वप्राच्छौ (शौ) तत्त्वप्राच्छः (शः) ॥

**नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः ॥ णह् बन्धने । आदेः ष्णः स्नः । नहो धः । उप समीपे नह्यतीति उपानत् ॥ नितरां वर्ततेऽसौ नीवृत् ॥ व्यध ताडने । ग्रहां क्ङिति च । मर्माणि विध्यतीति मर्मावित् ॥ वृष वृष्टौ । प्रकर्षेण वर्षतीति प्रावृट् ॥ रुच दीप्तौ । नितरां रोचतेऽसौ नीरुक् ॥**

णह् बन्धने । नह उपपूर्वः । उपनह्यते पादयोरित्युपानत् । क्विप् प्रत्ययः । क्विपि परे नहेर्धातोः पूर्वस्य उपसर्गस्य दीर्घता च वक्तव्या । क्विप्परे इति पाठे क्विप् परो यस्मात् स क्विप्परः ईदृशे नहिधातौ परे उपसर्गस्य दीर्घता वक्तव्या । प्रथमैकवचने 'नहो धः' हस्य धः । 'वावसाने' उपानत् उपानद् उपानहौ इत्यादि हसान्तस्त्रीलिङ्गे ॥ चकारात् प्रावृट् । प्रवर्षतीति प्रावृट् । मर्मावित् । नीरुक् इत्यादावपि दीर्घता ॥ नहेरित्युपलक्षणात् नहि वृषि वृति व्यधि सहि तनयः गृह्यन्ते ॥

---

१. मूलपाठेन न संवदति टीकापाठः ॥

**गम्यम्नम्हन्तनादीनां क्विपि अमस्य लोपो वाच्यः क्यपि वा ॥**
तुक् । परितः तनोतीति परितत् ॥ कटं चिकीर्षतीति कटचिकीः । चिकीर्षतेः क्विप् । यतः इत्यकारलोपः । दोषाम् इति षस्य रेफः । रिलोपो दीर्घश्च इति मध्यमरेफस्य लोपः नतु संयोगान्तस्य लोपः । रसे पदान्ते चेति चकाराद् ॥ रात्सस्य । स्रोर्विसर्गः । कटचिकीर्षौ कटचिकीर्षः ॥
वह प्रापणे । यजां यवराणाम् । अनो वहतीति अनड्वान् ॥ **क्विबन्ते वह्यनसो डान्तादेशो वाच्यः ॥** अनड्वाहौ अनड्वाहः ॥
राजृ दीप्तौ । मो राजि समः कौ । सम्यक् राजतेऽसौ सम्राट् ॥ ध्यै चिन्तायाम् ॥ **ध्यायतेः क्विपि संप्रसारणं दीर्घता च वक्तव्या ॥** सुष्ठु ध्यायतीति सुधीः ॥ **द्युतिगमिजुहोतीनां क्विपि कचित् द्वित्वं वाच्यम् ॥** हसादिः शेषाभावः ॥ **द्योततेः कचित्पूर्वस्य क्विपि संप्रसारणं वाच्यम् ॥** द्योततेऽसौ दिद्युत् । गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति जगत् ॥ **जुहोतेर्दीर्घश्च ।** जुहोत्यनया सा जुहूः ॥

क्व कटपूर्वः । कटं चिकीर्षतीति विग्रहे । 'इच्छायां०' इति सप्रत्ययः । 'से दीर्घः' 'ऋत इर्' किर् । द्वित्वम् । 'पूर्वस्य', 'हसादिः शेषः' रलोपः । 'कुहोश्चुः' चिकिर् । 'य्वोर्विहसे' इति दीर्घः । 'क्विलात्षः सः०' कटं चिकीर्ष अग्रे क्विप् । 'यतः' इति सप्रत्ययस्य अकारस्य लोपः । क्विपः सर्वापहारी लोपः । 'दोषां रः' 'रिलोपो दीर्घश्च' 'स्रोर्वि०' एवं साधयन्ति ॥ ध्यै चिन्तायाम् । ध्यै सुपूर्वः । सुष्ठु ध्यायति इति सुधीः क्विप्प्रत्ययः । ध्यायतेः ध्यै चिन्तायामित्यस्य धातोः क्विपि परे संप्रसारणं भवति दीर्घस्य(?) दीर्घ ईकारः । ध्यै इत्यस्य धी । क्विप्लोपः । प्रथमैकवचने 'स्रोर्वि०' सुश्रीशब्दवत् ॥

**दृशेष्टक्सकौ चोपमाने कार्ये ॥** दृशेर्धातोः सर्वादिषु टक्सकौ प्रत्ययौ भवत उपमाने कार्ये सति ॥ चकारात् क्विप् वक्तव्यः ॥ **आ सर्वादेः ॥** एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति ॥ दृशिर् प्रेक्षणे । अन्य इव दृश्यतेऽसौ अन्यादृशः । छशषराजादेः षः । षढोः कः से । क्विलात् । अन्यादृक्षः अन्यादृक् । स इव दृश्यतेऽसौ तादृशः-तादृक् । य इव दृश्यतेऽसौ यादृक्षः यादृक् । एष इव दृश्यतेऽसौ एतादृशः-एतादृक्षः एतादृक् ॥

सूत्रम्—'दृशेष्टक्सकौ चोपमाने कार्ये' ॥ दृशेरिति दृशिशब्दस्य पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' टक् च सक् च टक्सकौ प्रथमाद्विवचनान्तम् । 'स्वरहीनं०' पश्चात् 'विसर्जनीयस्य सः' 'ष्टुभिः ष्टुः' च प्रथमैकवचनान्तम् । 'अव्यया०' उपमाने सप्तम्येकवचनान्तम् । 'अ इ ए' । कार्ये सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । दृशेर्धातोः टक्सकौ प्रत्ययौ भवतः । चकारात् तृतीयरूपे क्विप्प्रत्ययो भवति कार्ये कर्मोक्तौ उपमाने वाच्ये सति । दृश् अन्यपूर्वः । अन्य इव दृश्यत इति विग्रहे एकत्र टक् प्रत्ययः । टकारा-

नुबन्धः 'श्रितः' इति कार्यार्थः। ककारो गुणनिषेधार्थः॥ सूत्रम्—'आ सर्वादेः'॥ आ प्रथमैकवचनान्तम् सांकेतिकम्। सर्वादेः षष्ठ्येकवचनान्तम्। 'ङिति' 'ङस्य' एतेषु टक् सक् क्विप् सप्रत्ययेषु परेषु सर्वादेः सर्वादिगणस्य पूर्वपदस्य टेरात्वं भवति। 'स्वरही०' प्रथमैकवचने 'स्रोर्वि०' अन्यादृशः। द्वितीये सक्प्रत्ययः। टेरात्वम्। 'दिशाम्' इति शस्य कः। 'किलात्षः सः०' 'कषसंयोगे क्षः' प्रथमैकवचने। 'स्रोर्विसर्गः' अन्यादृक्षः। तृतीयरूपे क्विप्प्रत्ययः। टेरात्वम्। क्विप्लोपः। प्रथमैकवचने 'दिशाम्' 'हसेपः सेर्लोपः' अन्यादृक्। टित्त्वादीप्। अन्यादृशी॥ एवं स इव दृश्यते इति तादृशः तादृक्षः तादृक्। तद्पूर्वः। 'आ सर्वादेः'॥

**किमिदमः कीश्**॥ किम्शब्दस्य इदम्शब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः टगादिषु प्रत्ययेषु परेषु॥ शकारः सर्वादेशार्थः। क इव दृश्यतेऽसौ कीदृशः-कीदृक्षः-कीदृक्। अयमिव दृश्यतेऽसौ ईदृशः-ईदृक्षः-ईदृक्। ईदृशी वार्ता। सर्वादित्वाट्टेरात्वम्॥ भवदादिषु दृशेष्टकारादयः पूर्वस्य टेर्दीर्घता च वक्तव्या॥ भवानिव दृश्यतेऽसौ भवादृशः-भवादृक्षः-भवादृक्। चकारात् एतेषु प्रत्ययेषु परेषु समानशब्दस्य सो वाच्यः। समान इव दृश्यतेऽसौ सदृशः-सदृक्षः-सदृक्॥ **अदसोऽमू आदेशः**॥ अदस्शब्दस्य टगादिषु सत्सु अमू आदेशो भवति क्विति परे॥ असाविव दृश्यतेऽसौ अमूदृशः- अमूदृक्षः- अमूदृक्-ग्॥ **प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे त्वत् मत् इत्येतावादेशौ भवतः**॥ त्वमिव दृश्यतेऽसौ त्वादृशः-त्वादृक्षः-त्वादृक्-ग्। अहमिव दृश्यतेऽसौ मादृशः-मादृक्षः-मादृक्-ग्। यूयमिव दृश्यतेऽसौ युष्मादृशः-युष्मादृक्षः-युष्मादृक्। वयमिव दृश्यतेऽसौ अस्मादृशः-अस्मादृक्षः-अस्मादृक्। टकारानुबन्धत्वादीप्। तादृशी। यादृशी। एतादृशी। त्वादृशी। मादृशी। अन्यादृशी। युष्मादृशी। अस्मादृशी। भवादृशी इत्यादि॥

सूत्रम्—'किमिदमः कीश्'॥ किं च इदं च किमिदम् तस्य षष्ठ्येकवचनान्तम्। 'स्रोर्वि०'। की च ई च की कीपूर्वः शः शकारोऽनुबन्धः उभयत्रापि युज्यते। कीश् प्रथमैकवचनान्तम्। 'हसेपः से०'॥ केचित्तु 'किमिदमः कीशीश' एवं सूत्रं पठन्ति। एतेषु प्रत्ययेषु परेषु धातोः पूर्वयोः किम् इदम् शब्दयोः कीश् ईश् इत्येतावादेशौ भवतः यथासंख्येन। किम् शब्दस्य कीश्। इदम् शब्दस्य ईश्। शकारः सर्वादेशार्थः। दृश् किम्पूर्वः। क्रमेण टक्सक्क्विप्प्रत्ययाः। क इव दृश्यत इति विग्रहे किमः की आदेशः। कीदृशः कीदृक्षः कीदृक्। शेषं प्राग्वत्॥ एवम् इदम् पूर्वः। इदमः ई आदेशः। अयमिव दृश्यते ईदृशः ईदृक्षः ईदृक्॥

भवदादिषु प्राक्पदेषु सत्सु इवार्थे उपमानार्थे दृशेर्धातोः टक्सक्क्विप्प्रत्यया भवन्ति। पूर्वपदस्य टेरात्वं भवतीत्यर्थः। भवानिव दृश्यते भवादृशः। भवादृक्षः। भवादृक्।

अहमिव दृश्यते इति मादृशः मादृक्षः मादृक् दृश् अस्मत्पूर्वः । 'त्वन्मदेकत्वे' इति मदादेशे सौ कृते पश्चाट्टेराकारः । एवं त्वमिव दृश्यत इति त्वादृशः त्वादृक्षः त्वादृक् ॥ चकारात् समान इत्यस्य स आदेशः । समान इव दृश्यत इति सदृशः सदृक्षः सदृक् । वयमिव दृश्यत इत्यस्मादृशः अस्मादृक्षः अस्मादृक् । यूयमिव दृश्यत इति युष्मादृशः ॥

णिनिरतीते ॥ धातोरतीते काले शीलेऽर्थे च णिनिप्रत्ययो भवति ॥ करणे उपपदे यजेर्णिनिर्वाच्यः ॥ इनां शौ सौ । अग्निष्टोमेन इयाज इति वा अग्निष्टोमेन अयाक्षीत् इति अग्निष्टोमयाजी । वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी । अश्राद्धं भुङ्क्ते इत्येवंशीलः अश्राद्धभोजी । अर्धं भुङ्क्ते इत्येवंशीलः अर्धभोजी । सुखभोजी । उष्णं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णभोजी ॥ हनो घत् ॥ हन्तेर्निन्दायां णिनिर्वाच्यः ॥ पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती । दण्डिन् शब्दवद्रूपं ज्ञेयम् ॥ कर्तर्युपमाने णिनिर्वाच्यः ॥ अभ्र इव पततीति अभ्रपाती । मत्त इव करोतीति मत्तकारी । हंस इव गच्छतीति हंसगामी । स्त्री चेत् हंसगामिनी । ईप् ॥

सूत्रम्—'णिनिरतीते' ॥ णिनिः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । अतीते सप्तम्येकवचनान्तम् । 'अ इ ए' पश्चात् 'नामिनोरः' 'स्वरहीनं०' । धातोरतीते गतकाले णिनिप्रत्ययो भवति । शीले स्वभावेऽर्थे । णिनिरित्यत्र णकारो वृद्ध्यर्थः । इकारः प्रत्ययभेदज्ञापनार्थः ॥ उदाहरणम् । यज् अग्निष्टोमपूर्वः । अग्निष्टोममिष्टवान् यष्टुं शीलमस्येति वा अग्निष्टोमयाजी । णिनिप्रत्ययः इन् । णित्त्वाद्वृद्धिः । 'स्वरहीनं' 'इनां शौ सौ' 'हसेपः से०' 'नाम्नो नो०' दण्डिन् शब्दवत्प्रक्रिया ॥

क्विप्क्वनिब्डाः ॥ धातोरतीते काले शीलेऽर्थे च क्विप् क्वनिप् डा इत्येते प्रत्यया इव भवन्ति ॥ क्विप् ॥ वृत्र ब्रह्म भ्रूण एतत्पूर्वकादेव हन्तेः क्विप् स्यात् ॥ अतीते काले एव । वृत्रं हतवानिति वृत्रहा । ब्रह्महा । भ्रूणहा । अन्यत्र शत्रुघातीत्यत्र णिनिः । शत्रुं हन्तीत्येवंशीलः शत्रुघाती । सुष्ठु करोति साऽसौ सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । शास्त्रकृत् । सोमं सुनोति साऽसौ सोमसुत् । अग्निं चिनोति साऽसौ अग्निचित् । इत्येते क्विबन्ताः ॥ क्वनिप् । युधि संप्रहारे । राजानं युध्यते साऽसौ राजयुध्वा । राजानं करोतीत्येवंशीलः राजकृत्वा । सह युध्यते साऽसौ सहयुध्वा सहकृत्वा ॥ षुञ् प्राणिप्रसवे । क्वनिब् तुक् । कित्त्वाद्गुणाभावः । सुनोति साऽसौ वा सुत्वान् इति सुत्वा । सुत्वा । यजति यज्वा । पारमद्राक्षीत् इति पारदृश्वा । इत्येते क्वनिबन्ताः ॥

सूत्रम्—'क्विब्वनिप्डाः' ॥ प्रथमाबहुवचनान्तम् । 'सवर्णे०' । 'स्रोर्वि०' । वृत्तिः सुगमा । हन् हिंसागत्योः । हन् वृत्रपूर्वः । वृत्रासुरं हतवानिति विग्रहे क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । प्रथमैकवचने 'इनां शौ सौ' 'हसेपः से०' 'नाम्नो नो०' वृत्रहा वृत्रहणौ । एवं ब्रह्महा भ्रूणहा । पूर्वं क्विप्प्रत्ययो वनिप्प्रत्ययश्च वर्तमानकाले उक्तः । अत्र तु अतीते काले इति न पौनरुक्त्यमित्यादि । यज् वनिप्प्रत्ययः । वन् । 'स्वर०' यज्वन् प्रथमैकवचने 'नोपधायाः' 'हसेपः से०' 'नाम्नो नो०' इष्टवानिति यज्वा । यज्वानौ ॥

जनी प्रादुर्भावे ॥ सप्तम्यां जनेर्डः ॥ सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले ॥ सरसि जायते तत् सरसिजं पद्मम् । अलुक् क्वचित् । सरसि जातं सरोजम् । संस्कारजः । अजः । द्विजः ॥ परितः खाता इति परिखा । प्रकर्षेण जायते सेति प्रजा । सर्वं गतवान् इति सर्वगः वा सर्वं गच्छति साऽसौ सर्वगः ॥ गै शब्दे । साम गीतवान् गायति साऽसौ सामगः ॥ इति डप्रत्ययान्ताः ॥ इति कर्त्रर्थप्रक्रिया ॥ १ ॥

जनी प्रादुर्भावे । जन् सरसिपूर्वः । डप्रत्ययः । अ । डित्त्वाट्टिलोपः । 'स्वरहीनं०' सरसि जातं सरसिजम् । 'अलुक् क्वचित्' इति सप्तम्या अलुक् । नपुंसके कुलशब्दवत् । ज्ञा अवबोधने । ज्ञा सर्वपूर्वः । डप्रत्ययः । टिलोपः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' सर्वं ज्ञातवानिति सर्वज्ञः ॥ गम्लृ गतौ गम् सामन्पूर्वः । सामवेदं गतवान् ज्ञातवान् । गीतवानिति विग्रहे ये गत्यर्थास्ते ज्ञानार्था इति डप्रत्ययः टिलोपः 'स्वरहीनं०' 'नाम्नो नो०' सामगः । एवं सर्वत्र गतवान् सर्वगः ॥

---

## निष्ठाधिकारप्रक्रिया २

अथ निष्ठाधिकारप्रक्रिया ॥ क्तक्तवतू ॥ धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः ॥ भावकार्ययोः क्तः । क्तवतुः कर्तर्येव ॥ कृतो घटः । कृतवान् घटम् । उकावितौ । उर्नुमर्थः ॥ ष्णा शौचे । स्नायते स तत् स्नातं त्वया । आगम्यते स तत् आगतम् । स्थीयते स तत् स्थितं देवदत्तेन । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भावे नपुंसकता ॥

अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे ।
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥ ८ ॥

क्रियते साऽसौ कृतः कटस्तेन । स कटं कृतवान् । करोति साऽसौ कृतवान् । कृष्णः सर्वं कृतवान् । ञितो नुम् इति नुमागमः ॥

अथ निष्ठाप्रक्रिया ॥ सूत्रम्—'क्तक्तवतू' ॥ क्तश्च क्तवतुश्च क्तक्तवतू प्रथमाद्विवचनान्तम् । 'औ यू' 'सवर्णे०' ॥ धातोरतीते क्त क्तवतु इत्येतौ प्रत्ययौ भवतः । तत्र क्तप्रत्ययो भावे कर्मणि च भवति, क्तवतुश्च कर्तरि । ककारो गुणप्रतिषेधार्थः । अकारि इति कृतः । कृ

क्तप्रत्ययः । त । प्रथमैकवचने 'स्रोर्विं०' कृतः घटः कारुकेण । अत्र कर्मणि क्तः ॥ क्त । क्तवतुः । उकारो नुम्विधानार्थः तवत् प्रथमैकवचने । 'त्रितो नुम्' अत्वसोः सौ दीर्घः' 'हसेपः सेर्लोपः' 'संयोगान्तस्य लोपः' ॥ चकार इति कृतवान् । 'क्तितः' । स्त्रीचेत् कृतवती । अत्र कर्तरि क्तवतुः ॥

**गत्यर्थादकर्मकाच्च कर्तरि क्तः ॥ गत्यर्थादकर्मकाच्च कर्तरि क्तप्रत्ययो भवति ॥ चाद्भावकर्मणोरपि ॥ [ लोपस्त्वनुदात्ततनाम् । गच्छति स इति गतः ॥ स्थामी । तिष्ठति स इति स्थितः । कृतः । ] अटति स इति अटितः ॥ शम दम उपशमे ॥ ञमान्तस्य क्तिति झसे दीर्घः ॥ ञमान्तस्य धातोर्दीर्घो भवति क्तिति झसे परे क्विपि वा ॥ शाम्यति स इति शान्तः । दाम्यति स इति दान्तः ॥ टुवम् उद्गिरणे । वमति स इति वान्तः ॥**

सूत्रम्—'गत्यर्थादकर्मकाच्च कर्तरि क्तः' ॥ गतिरर्थो यस्य सः गत्यर्थः तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः०' न विद्यते कर्म यस्येत्यकर्मकस्तस्मात् । पञ्चम्येकवचनान्तम् । 'ङसिरत्' मध्ये । 'चपा अबे०' 'स्वरहीनं' च प्रथमैकवचनान्तम् । 'अव्यया०' पश्चात् 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं' कर्तरीति कर्तृशब्दस्य सप्तम्येकवचनान्तम् । 'ङौ' इत्यर् । 'स्वरहीनं' क्तः प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ गम् क्तः । त । 'लोपस्त्वनुदात्ततनाम्' इति मलोपः । देवदत्तेन आगतमत्र भावे क्तः । नपुंसकलिङ्गे भावे विहितस्य क्तप्रत्ययस्य नपुंसकलिङ्गता च ॥ ष्ठा 'आदेः ष्णः स्नः' स्था क्तप्रत्ययः । 'स्थामी' इति ह्रस्व इकारः । देवदत्तेन स्थितम् ॥ गत्यर्थो धातुः 'अट गतौ' इत्यादिः । अकर्मकश्च लज्जासत्तादिः । एवं द्विविधादपि धातोः कर्तरि क्तप्रत्ययो भवति । उदाहरणम् । अट् क्तप्रत्ययः । 'कृतः' इतीडागमः । अटितशब्दात् प्रथमैकवचने 'स्रोर्विं०' । अत्र गत्यर्थत्वात् क्तप्रत्ययः ॥ ष्ठा स्था क्तः । 'स्थामी' इति इकारः । स्थितः । अत्र अकर्मकत्वात् क्तः ॥ शम् दम् उपशमे । शम् क्तप्रत्ययः । 'शमां दीर्घः' 'नश्चापदान्ते०' शान्तः । एवं दम्धातोः दान्तः ॥ टुवम् । वान्तः । अकर्मकत्वात्कर्तरि क्तः ॥ मदेर्न दीर्घता, तेन मत्तः इति रूपम् ॥

**यस्य क्वचिद्विकल्पेनेट् तस्य निष्ठायां नेड् वाच्यः ॥ [ गुप्तः गुप्तवान् ] ॥ श्लिषशीङ्स्थाआसश्रिवसजनरुहजीर्यतीनां सोपसर्गत्वेन सकर्मकाणामपि कर्तरि क्तो वाच्यः ॥ रमामाश्लिष्यति सेति आश्लिष्टः हरिः । हरी रमामाश्लिष्टः ॥ शेषमधिशिश्ये इति अधिशयितः । को? विष्णुः । शेषमधिशयितो विष्णुः । स्वर्गमधितष्ठावित्यधिष्ठितः । स्वर्गमधिष्ठितः ॥ अधिशीङ्स्थासां कर्म ॥ उपासांचक्रे इति उपासितः भक्तो हरिम् । भक्तो हरिमुपासितः ॥ आश्रयति स इति आश्रितः ॥ एकादशीमुपोवास इति उपोषितः वा हरिदिनमुपोवास इति उपोषितः ॥ वसिक्षुधोरिट् ॥ आभ्यां**

नित्यमिट् स्यात् ॥ घसादेः षः ॥ राममनुजज्ञे इति अनुजातोऽच्युतः तमनुजातः ॥ वृषमारुरोह इति आरूढः शिवः ॥ जॄष् वयोहानौ । 'ऋत इर्' । 'य्वोर्वि हसे' जगत् अनुजजार इति अनुजीर्णोऽच्युतः । जगदजीर्णो वासुदेवः ॥ रः ॥ रेफादुत्तरस्थक्तस्य नो भवति । णत्वम् ॥ पक्षे तेन रमाश्लिष्टा हरिणा इत्यादि ज्ञेयम् ॥

'वसिक्षुधोरिट्' इति । यद्यपि वसिक्षुधौ एतौ द्वौ धातू अनुदात्तौ अनिटौ कथितौ तथापि तयोरिडागमः । वस निवासे । क्तप्रत्ययः । संप्रसारणम् । 'वसिक्षुधोरिट्' इतीडागमः । 'घसादेः षः' । अवात्सीदिति उषितः ॥ एवं क्षुध् बुभुक्षायाम् । क्षुधितः । ञिष्वप् शये । 'आदेः ष्णः स्नः' स्वप् क्तप्रत्ययः । संप्रसारणम् । सुप्तम् ॥

क्तो वा सेट् ॥ उकारोपधान्मृषश्च परः सेट् क्तः प्रत्ययः किद्वा भवति ॥ दिद्युते तत् द्युतितम् । द्योतते स्म तत् द्योतितम् । प्रकर्षेण दिद्युते साऽसौ प्रद्युतितः । प्रकर्षेण द्युतं प्राप्तः वा प्रद्योतते साऽसौ प्रद्योतितः ॥ मृष क्षान्तौ संपूर्वः । सम्यक् ममृषे तत् संमृषितं-संमर्षितम् ॥ उद्यं प्राप्तः उद्यते साऽसौ उदितः । रोदनं प्राप्तः रोदितः वा रोदिति साऽसौ रोदितः रुदितः ॥ मुष्यते साऽसौ मोषितः-मुषितः ॥ ग्रहां क्ङिति च । गृह्यते साऽसौ गृहीतः ॥ नुद्यते स्म इति नोदितः-नुदितः । वेदितः-विदितः ॥ शीङ्-स्विदिमिदिक्ष्विदिधृषुपूङः क्षेमार्थे ॥ एभ्यः परौ सेटौ क्तक्तवतू प्रत्ययौ कितौ न भवतः ॥ पूङो वा क्तः सेट् ॥ पूङः परस्य क्तप्रत्ययसेड्वा भवति ॥ पूङ् शोधने । पुपुवेऽसौ पवितः पूतः ॥ शिश्येऽसौ शयितः ॥

सूत्रम्—'क्तो वा सेट्' ॥ क्तः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' 'हबे' 'ड ओ' सेट् । सह इटा वर्तमानः सेट् प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः' ॥ इट्सहितः क्तप्रत्ययो भवति कित्त्वे सत्यपि विकल्पेन कित्त्वं कल्पनीयम् । कित्त्वाद्गुणप्रतिषेधः । यत्र कित्त्वं न तत्र गुणो भवति । द्युत् दीप्तौ । द्युत् प्रपूर्वः । कर्तरि क्तः । 'कृतः' इतीडागमः । एकत्र कित्त्वाभावः तत्र गुणः । 'उपधाया लघोः' कित्त्वपक्षे गुणाभावः । प्रद्योतितः प्रद्युतितः ॥ रुदिर् अश्रुविमोचने । रुद् रोदितः रुदितः ॥ मुष स्तेये । मोषितः । मुषितः । एवं नोदितः । नुदितः । वेदितः विदितः ॥ ग्रह । 'क्तक्तवतू' इति क्तप्रत्ययः । 'ग्रहां क्ङिति च' इति संप्रसारणम् । 'कृतः' इतीडागमः । 'ईटो ग्रहाम्' इति इकारस्य ईकारः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' गृहीतः ॥

वृतः ॥ उवर्णान्तात् ऋवर्णान्तात् श्विश्रियश्च धातोः परस्य कित्प्रत्ययस्य वसादेः इट् न भवति ॥ बभूवेत्यसौ वा भवति स्म इति भूतः ॥ णु स्तुतौ ।

नौति स्म इति नुतः ॥ वृञ् वरणे । ववार इति वृतः ॥ श्रयते स्म इति श्रितः ॥ श्वयतेः संप्रसारणस्य दीर्घः ॥ अशिश्वियदिति शूनः ॥

सूत्रम्—'वृतः' ॥ षष्ठ्येकवचनान्तम् । एकपदम् । 'वुः से' इति सूत्रात् वुरित्यनुवर्तते । क्वापि 'वृश्रिञ् कितः' इति सूत्रं दृश्यते । उवर्णान्तात् ऋवर्णान्तात् श्रिञ् सेवायाम् इत्यस्माच्च धातोः परस्य कितः ककारेतः प्रत्ययस्य इडागमो न भवति । 'भू गत्यर्थादकर्मका०' इति क्तप्रत्ययः । प्रथमैकवचने 'स्मोर्वि०' ॥ वृञ् वरणे । क्तप्रत्ययः । 'प्रथमैकवचने 'स्मोर्वि०' ॥ श्रिञ् सेवायाम् । श्रि क्तप्रत्ययः ॥ अभावि इति भूतः । अवारि व्रियते स्म इति वृतः । अश्रायि इति श्रितः । अत्र रूपत्रयेऽपि उवर्णान्तात् ऋवर्णान्तात् श्रिञश्च धातोरिति वचनात् 'क्तः' इति सूत्रेण प्राप्तस्य इटो निषेधः । एवं नुतः मृतः ॥

आदीदितः ॥ आदितः ईदितश्च परस्य क्तस्येट् न भवति ॥ जीतां तक् (क्त[2]) वर्तमानेऽपि ॥ जीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि तक् (क्त) प्रत्ययो भवति ॥ अपिशब्दात् भावकर्मणोरपि ॥ दस्तस्य नो दश्च ॥ दकारादुत्तरस्य कितस्तस्य नत्वं भवति ॥ चकाराद्दकारस्य नकारो भवति ॥ ञिमिदा स्नेहे ॥ आदितः कर्मणि निष्ठा कर्तरि च वाच्या ॥ मिद्यते तत् मिन्नं । मिन्नमन्नं तैलेन वर्तते ॥ भावे कर्तरि चादितः क्तस्येट् वा वाच्यः ॥ मिदेर्गुणः ॥ मेद्यतेऽसौ मेदितः । मिद्यते तत् मेदितम् । ह्लाद आह्लादने ॥ निष्ठायां ह्रस्वो वाच्यः ॥ ह्लादतेऽसौ ह्लन्नः ॥ ञिष्विदा गात्रप्रक्षरणे ह्लादने च । आयासेन प्रस्विद्यतेऽसौ प्रस्विन्नः । प्रस्वेदितः । स्वेदितं तेन ॥ ञिक्ष्विदा संचूर्णने । क्ष्विद्यतेऽसौ क्ष्विण्णः । क्ष्विद्यते तत् क्ष्वेदितं तेन ॥ ञिधृषा प्रागल्भ्ये । स्वादिषु । धृष्णोतीति धर्षितः-धृष्टः ॥ मन्यतेऽसौ मतः ॥ बुध अवगमने । बुध्यतीति बुद्धः ॥ पूज अर्चायाम् । पूजतीति पूजितः सः । जीतां तक् वर्तमानेऽपि इत्यपिशब्दात् ज्ञार्चेच्छार्थशीलादेस्तक् । ज्ञा अवबोधने । अर्च पूजायाम् । इषु इच्छायाम् । शील स्वभावे । एतेषां तक् भवति ॥ ज्ञातः । अर्चितः । इष्यतेऽसौ एषितः । शील्यतेऽसौ शीलितः ॥ [ क्तस्य च वर्तमाने ॥ वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् ॥ तेन राज्ञां पूजितः । पूज पूजने । अन्यत्र कार्ये क्तः सामान्यः ॥ ] दस्तस्य नो दश्चेति चकारान्मदेर्नेति वाच्यम् । तेन माद्यतीति मत्तः । मदी हर्षे ॥

सूत्रम्—'आदीदितः' ॥ आच्च ईच्च आदीतौ तौ इतौ यस्य स आदीदित् तस्मात् पञ्चम्ये-

---

१ 'शूनः' इत्येवोपयुक्तम् 'ल्वाद्योदितः' इत्यनेन तकारस्य नकारविधानात् । २ 'तक्' इति पाठे 'आदीदितः' इति विधीयमान इड्निषेधो न स्यात् ॥

कवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' आकारानुबन्धादीकारानुबन्धाच्च धातोः परस्य कितः प्रत्ययस्य इडागमो न भवति ॥ 'ञीतां तक्' ञि इत् येषां ते ञीतस्तेषां धातूनां वर्तमानकालेऽर्थे अपिशब्दादतीतेऽप्यर्थे तक्(क्त)प्रत्ययो भवति । ञिमिदाधातुः स्नेहने म्रक्षणे । ञिकार आत्मनेपदार्थः । मिद् ञ्यनुबन्धत्वात् तक्(क्त)प्रत्ययः । त । आकारानुबन्धत्वात् इड्निषेधः । मिद् त इति स्थिते ॥ सूत्रम्—'दस्तस्य नो दश्च' ॥ दः पञ्चम्येकवचनान्तम् । 'स्नोर्वि०' । दः षष्ठ्येकवचनान्तम् । 'ङस्य' पश्चात् 'विसर्जनीयस्य सः' ॥ नः प्रथमैकवचनान्तम् । 'स्नोर्वि०' ॥ दः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' ॥ च प्रथमैकवचनान्तम् । 'अव्यया०' ॥ दकारान्ताद्धातोः परस्य कितस्तकारस्य नकारो भवति धातुसंबन्धिनो दकारस्यापि नकारः । इति तकसंबन्धिनस्तस्य नः, दस्य च नः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' नपुंसकान्तम् । भिन्नं तैलेन भिन्नं स्निग्धं वर्तते इत्युदाहरणम् ॥ एवं ञिष्विदाधातुः गात्रप्रक्षरणे प्रस्वेदने । ष्विद् । 'आदेः ष्णः स्नः' स्विद् ञ्यनुबन्धत्वात्तक् । 'आदीदितः' इति आकारानुबन्धत्वादिण्निषेधः । 'दस्तस्य नो०' इति दकारतकारयोर्नकारः ॥ प्रपूर्वः । आयासेन खेदेन प्रस्विन्नः ॥ ञिष्विदा ॥ ञिक्ष्विदा ॥ क्षुदिर् संचूर्णने । संचूर्णनं पेषणं । क्षुद् तक्प्रत्ययः । दकारतकारयोर्नकारः । 'ष्रर्नोणोऽनन्ते' 'अवकुप्वन्तरेऽपि' इति धातोर्नस्य णत्वे 'ष्टुभिः ष्टुः' इत्युत्तरनकारस्य णकारः । 'स्वरहीनं०' क्षुण्णः । चूर्णित इत्यर्थः ॥ मदी हर्षे । इत्यस्य तु दकारतकारयोर्नकारो न । तेन मत्त इति रूपम् ॥

**अदो जग्धः ॥** अदो जग्धुरादेशो भवति निष्ठायां किति तकारे परे क्यपि च ॥ उकार उच्चारणार्थः ॥ क्तक्तवतू निष्ठा ॥ एतौ प्रत्ययौ निष्ठासंज्ञौ स्तः ॥ तथोर्धः । झबे जबाः । अद् भक्षणे । अद्यते स तत् जग्धम् । किं ? अन्नम् ॥ रः ॥ दॄ विदारणे । कॄ हिंसायाम् । कॄ विक्षेपे । ऋत इर् । य्वोर्विहसे विकीर्यते साऽसौ विकीर्णः । जॄष् झॄष् वयोहानौ । षकारः षिद्भिदामङ् इत्यस्य विशेषणार्थः । जीर्यते स तत् जीर्णम् किं ? शरीरम् । गीर्यते स तत् गीर्णम् । पुरी पूर्तौ । पूर्यते साऽसौ पूर्णः ॥ 'रः' इति सूत्रं न पिपर्तेः ॥ पोरुर् पिपर्ति स इति पूर्तः ॥

सूत्रम्—'अदो जग्धः'॥ इति । अद भक्षणे इत्यस्य धातोर्जग्धुरित्ययमादेशो भवति । तकारादौ किति परे । अद् क्तप्रत्ययः । जग्ध् आदेशः । 'तथोर्धः' 'झबे जबाः' घस्य गः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' 'अमृशसोरस्य' 'मोऽनुस्वारः' जग्धम् । अन्नम् ॥ सूत्रम्—'रः' ॥ पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' रेफात् रकारात्परस्य कितः तकारस्य नकारो भवति । उदाहरणम् । कॄञ् विक्षेपे विकरणे हिंसायां वा । कॄ क्तप्रत्ययः । त । 'ऋत इर्' 'रः' इति सूत्रेण तस्य नः । 'य्वोर्वि हसे' इति दीर्घः । 'ष्रर्नो णो०' 'रायपो द्विः' जलतुम्बिका० विकीर्णम् । प्रथमैकवचने । 'अतोऽम्' ॥ जॄष्धातुः झॄष् धातुश्च वयोहानौ वार्धक्ये । षकारः षित्कार्यार्थः । जॄ क्तप्रत्ययः । 'ऋत इर्' रकारान्तत्वात् 'रः' इति सूत्रेण तस्य नः ।

'य्वोर्विहसे' 'ष्रुर्नो णो०' 'राद्यपो द्विः' जलतुम्बिका० जीर्णं शरीरम् । एवं झृष् झीर्णं शरीरम् ॥

ल्वाद्योदितः ॥ ल्वादेरोदितश्च धातोः कितस्तो नो भवति ॥ लूञ् छेदने । लूयते सासौ लूनः ॥ ज्या वयोहानौ । ग्रहां क्ङिति च । जीनाति सासौ जीनः ॥ भुजो कौटिल्ये । चोः कुः । भुज्यते साऽसौ भुग्नः । ओहाक् त्यागे । स्थामी । हीयते सासौ हीनः ॥ षूङ् दूङ् दीङ् धीङ् रीङ् मीङ् दीङ् लीङ् व्रीङ् एते नव ओदितः । षूङ् प्राणिप्रसवे । सूयते सासौ सूनः ॥ दूङ् परित्यागे । दूङ् दुःखे । दूयते सासौ दूनः ॥ डीङ् विहायसा गतौ ॥ डीङ इडभावः ॥ डीयते सासौ डीनः ॥ धीङ् धारणे । धीङ् सामर्थ्ये । धीयते सासौ धीनः ॥ रीङ् क्षरणे । रीङ् स्रवणे । रीयते सासौ रीणः ॥ मीङ् प्राणवियोगे । मीङ् हिंसायाम् । मीयते साऽसौ मीनः ॥ दीङ् क्षये । दीयते सासौ दीनः ॥ लीङ् आश्लेषणे । लीङ् विलपने । लीयते सासौ लीनः । व्रीङ् वरणे । व्रीयते सासौ व्रीणः । एते ओदितः । ओप्यायी वृद्धौ ॥ प्यायः पी ॥ प्यायः पी आदेशो भवति निष्ठायाम् ॥ प्यायते सासौ पीनः ॥ क्षि क्षये ॥ क्षियो निष्ठायां कर्तरि दीर्घो वाच्यः ॥ दीर्घादेव क्षियो निष्ठातस्य नो वाच्यः ॥ क्षीयते सासौ क्षीणः । क्षीणवान् । भावकर्मणोस्तु क्षीयते स तत् क्षितं तेन । क्षितः कामो मया ॥ यरलवसंयोगादेरादन्तान्निष्ठातस्य नो वाच्यः ॥ द्रा स्वप्ने । द्रायते सासौ द्राणः ॥ ग्लै म्लै हर्षक्षये । ग्लायते सासौ ग्लानः । म्लानः ॥ हि गतौ । हीयते सासौ हितः ॥

सूत्रम्—'ल्वाद्योदितः' ॥ लू आदिर्यस्य स ल्वादिः ओकार इत् यस्य स ओदित् । ल्वादिश्च ओदित् च ल्वाद्योदित् तस्मात् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ल्वादयो धातुपाठोक्ताः । ओदितश्च । ओहाक् त्यागे । ओहाङ् गतौ । ओप्यायी वृद्धौ । इत्यादयस्तेभ्यः परस्य कितस्तकारस्य नकारो भवति । उदाहरणम् ॥ लूञ् छेदने । लू । 'क्तक्तवतू' त । 'ल्वाद्योदितः' इति तस्य नः । प्रथमैकवचने 'स्रोर्वि०' लूनः ॥ क्षि क्षये । क्षि क्तप्रत्ययः । 'शमां दीर्घः' केचित्तु क्ष्यादेर्दीर्घता च । 'ल्वाद्योदितः' इति तस्य नः । 'ष्रुर्नो णो०' 'स्रोर्विसर्गः' क्षीणः ॥ ग्लै हर्षक्षये । ग्लै क्तप्रत्ययः । 'संध्यक्षराणामा' ग्लै इत्यस्य ग्ला । 'ल्वाद्योदितः' इति तस्य नः । 'स्रोर्वि०' ग्लानः । एवं म्लै गात्रविनामे । म्लानः ॥ ओहाक् त्यागे । हा क्तप्रत्ययः । 'स्थामी' 'ल्वाद्योदितः' इति तस्य नः । हीनः ॥ ओप्यायी धातुः वृद्धौ । 'प्यायः पी' ओप्यायी इत्यस्य धातोः पी इत्यादेशो भवति इति प्यायीस्थाने पी । 'ल्वाद्योदितः' इति तस्य नः । पीनः । एवं दीनः लीनः दूनः ॥

त्रैङ् पालने ॥ त्राणाद्या वा ॥ त्राणादीनां नत्वं वा निपात्यते । त्रायते

सासौ त्राणः त्रातः ॥ घ्रा गन्धोपादाने। जिघ्रति सासौ घ्राणः-घ्रातः ॥ ह्री लज्जायाम्। ह्रीयते सासौ ह्रीतः ह्रीणः ॥ नुद् प्रेरणे। नुद्यते सासौ नुन्नः-नुत्तः ॥ विदिर् विचारणे। विद्यते सासौ-विन्नः-वित्तः ॥

वेत्ति रूपं विद ज्ञाने विन्ते विदिर् विचारणे।
विद्यते विद सत्तायां विद्लृ लाभे च विन्दति ॥ १० ॥

उन्दी क्लेदे। उद्यते सासौ उन्नः-उत्तः ॥ वा गतिगन्धनयोः। निर्वाति स वा निर्वायते सासौ निर्वाणः-निर्वातः ॥ विद् सत्तायाम्। विद्यते सासौ विन्नः-वित्तः। एते त्राणाद्या ज्ञेयाः ॥

त्राणाद्याः शब्दाः अतीते कालेऽर्थविशेषे सिद्धा एव वा निपात्यन्ते ॥ त्रै रक्षणे इत्यस्य त्राणः त्रातः। इति रूपद्वयम्। त्रै क्तप्रत्ययः। 'संध्यक्षराणामा' त्रातः। पक्षे क्तप्रत्ययेन सहैव त्राण इति निपात्यन्ते ॥ एवं ह्री लज्जायाम् इत्यस्य ह्रीणः ह्रीतः ॥ वाधातुः गतिगन्धनयोः। निरूपूर्वः। निर्वाणः। एवं घ्राणः घ्रातः ॥ वित्तं विन्नम्। उत्तः उन्नः। नुत्तः नुन्नः ॥

संपर्युपेभ्यः करोतेः सुट् ॥ सं परि उप एभ्यः परस्य करोतेर्धातोर्भूषणेऽर्थे शोभनेऽर्थे च वाच्ये सति सुट् आगमो भवति ॥ टित्त्वादादौ। संस्क्रियते सासौ संस्कृतः। परिष्क्रियते सासौ परिष्कृतः। उपस्क्रियते सासौ उपस्कृतः। [ यदा संस्कृतिर्न तदा संक्रियते सासौ संकृतः। परिक्रियते सासौ परिकृतः। उपकृतः ॥ भावे घञ्। संस्क्रियते सासौ संस्कारः। अलंक्रियते सासौ अलंकारः ॥ विद ज्ञाने। विद्यते सासौ विदितः। जातः खातः ॥ ]

'संपर्युपेभ्यः०'॥ सम् परि उप इत्येतेभ्यः परस्य करोतेर्धातोर्भूषणे अलंकरणार्थे सुडागमो भवति टित्त्वादादौ। उकार उच्चारणार्थः। कृ क्रमेण संपरिउपपूर्वः। क्तप्रत्ययः। सर्वत्र सुडागमः। 'स्वरहीनं०' संस्कृतः परिष्कृतः उपस्कृः अलंकृत इत्यर्थः ॥

दो दत्ति ॥ दा इत्यस्य दद्भवति किति तकि परे ॥ दीयते सासौ दत्तः। ददाति स इति दत्तवान्। त्रितो नुम् ॥

सूत्रम्—'दो दत्ति' ॥ दः षष्ठ्येकवचनान्तम्। 'आतो धतोः' इत्याकारलोपः। 'स्वरहीनं०' खोर्वि०'। दत्। प्रथमैकवचनान्तम्। 'हसेपः०'। ति सप्तम्येकवचनान्तम् 'स्वरहीनं०' डुदाञ् दाने इत्यस्य धातोस्तकारादौ किति परे दत् आदेशो भवति। दा क्त दत् आदेशः। 'स्वरहीनं०' 'खोर्वि' दत्तः। क्तवतुप्रत्यये दत्तवान् भवच्छब्दवत् ॥

स्वरात्तो वा ॥ स्वरादुत्तरस्य दा इत्यस्य वा तो भवति किति तकि परे ॥ प्रकर्षेण दीयते सासौ प्रत्तः प्रदत्तः। अवदीयते सासौ अवदत्तः-अवत्तः ॥ नाम्यन्तोपसर्गस्य दीर्घो भवति ॥ द्दातेस्तो वाच्यः ॥ नितरां

दीयते स्म तत् नीत्तं निदत्तम्। पर्यासमन्ताद्भावेन दीयते स्म तत् परिदत्तम्॥ दधातेर्हिर्निष्ठायां वाच्यः॥ धीयते स्मासौ हितः । दधाति स्मासौ हितवान्॥ जहातेश्च क्तिति॥ जहातेर्धातोः क्तिति प्रत्यये परे हिरादेशः स्यात्॥ तेन पूर्वं हित्वा। हीयते स्मासौ हितः। अहासीदिति हितवान्॥ ध्याख्यापॄमूर्च्छिमदां क्तस्य नत्वाभावो वाच्यः॥ ध्यै चिन्तायाम्। ध्यायते स्मासौ ध्यातः॥ ख्या प्रकथने। ख्यायते स्मासौ ख्यातः॥ पॄ पालने। पूर्यते स्मासौ पूर्तः। पोरुर्। य्वोर्विहसे॥ मूर्छा मोहसमुच्छ्राययोः॥ राल्लोपश्छ्वोः॥ रेफादुत्तरयोश्छ्वोर्लोपो भवति क्तिति तकारे परे॥ मूर्छ्यते स्मासौ मूर्तः॥ मदी हर्षे। मद्यते स्म इति मत्तः॥ यज देवपूजासंगतिकरणदानेषु। यजेः क्तः। षत्वम्। ष्टुत्वम्। संप्रसारणम्। इज्यते स्म तत् इष्टं-इष्टवान्॥

सूत्रम्—'स्वरात्तो वा'॥ स्वरात् पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०'। तः प्रथमैकवचनान्तम्। 'स्रोर्वि०'। वा प्रथमैकवचनान्तम्। 'अव्यया०'॥ सस्वरादुपसर्गात्परस्य दाधातोः न इत्यादेशो वा भवति पक्षे वा दत् इत्यादेशो भवति तकारादौ क्तिति परे। दा प्रपूर्वः। एकत्र त एकत्र दत् क्तप्रत्ययः। प्रत्तम् प्रदत्तम्। एवम् अवपूर्वः। अवत्तम् अवदत्तं चेति रूपद्वयम्। प्रादायि इति प्रत्तं प्रदत्तम्। उपात्तम्॥ यज् देवपूजासंगतिकरणदानेषु। यज् क्तप्रत्ययः। 'यजां यवराणां०' इति संप्रसारणम्। यकारस्य इकारः। 'छशषराजादेः षः' इति षत्वम्। 'ष्टुभिः ष्टुः' इष्टम्। क्तवतुप्रत्यये इष्टवान्॥

डुवप् बीजतन्तुसन्ताने। उप्यते स्म तत् उप्तम्॥ वह प्रापणे। हो ढः। तथोर्धः। ढि ढो लोपो दीर्घश्च। उह्यते स्मासौ ऊढः भारः ऊढोऽनडुहा पङ्गुः॥ वेञ् तन्तुसन्ताने। ऊयते स्मासौ उतः॥ व्येञ् संवरणे। संवीयते स्मासौ संवीतः॥ ह्वेञ् स्पर्धायां। ह्वेञ् आह्वाने। ह्वेञ् कौटिल्ये। संप्रसारणं दीर्घः। आहूयते स्मासौ आहूतः॥ वद व्यक्तायां वाचि। संप्रसारणम्। उद्यते स्मासौ उदितः॥ वच परिभाषणे। उच्यते स्मासौ उक्तः॥ वसिक्षुध्योरिट्। वस् निवासे। उष्यते स्मासौ उषितः। घसादेः षः। क्षुध बुभुक्षायाम्। क्षुध्यते स्मासौ क्षुधितः॥ ञिष्वप् शये। सुप्यते स्मासौ सुप्तः। ओव्रश्चू छेदने॥ वेटो निष्ठायां इट् न॥ स्कोराद्योश्च संप्रसारणम्। ल्वाद्योदितः इति नत्वम्। णत्वम्। चोः कुः। प्रवृश्च्यते स्मासौ प्रवृक्णः॥ जनेर्जा निष्ठायाम्॥ जनेर्धातोर्जा आदेशो भवति निष्ठायां परतः॥ जन जनने। जन्यते स्मासौ जातः॥ खनेरात्वं निष्ठायाम्॥ खन खनने। खन्यते स्मासौ खातः॥

डुवप् बीजसंताने ॥ अन्नादिवापने इत्यर्थः । डुकारः 'ड्वितो थुक्' इति कार्यार्थः । वप् क्तवतुप्रत्ययः । 'यजां यवराणां०' इति वस्य उः । 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' उप्तं बीजम् । अवापि इत्यर्थः ॥ वह प्रापणे । वह क्तप्रत्ययः । 'यजां यवराणां०' इति वस्य उः । 'हो ढः' तथोर्धः' 'ष्टुभिः ष्टुः' 'ढि ढो लोपः' ढलोपः—उकारस्य ऊकारः । प्रथमैकवचने 'स्नोर्वि०' ऊढः । अनुडुहा वृषभेण पङ्गुः खञ्जः पुमानूढः ॥ व्येञ् संवरणे । व्ये संपूर्वः । क्तप्रत्ययः । किन्त्वात् । 'यजां यवराणां०' इति संप्रसारणम् । सस्वरस्य संप्रसारणं दीर्घे च दीर्घः इति व्ये इत्यस्य वी । संवीतः ॥ ह्वेञ् आह्वाने । आङ्पूर्वः । क्तप्रत्ययः । संप्रसारणम् । ह्वे इत्यस्य हू । प्रथमैकवचने 'स्नोर्वि०' आहूतः । आहूतवान् । आहूयते स्म इत्याहूतः । आजुहाव इत्याहूतवान् ॥ वद व्यक्तायां वाचि । वद क्तप्रत्ययः । 'कृतः' इतीडागमः । किन्त्वात्संप्रसारणम् । वस्य उः । प्रथमैकवचने 'अतोऽम्' उपितम् ॥ वच् क्तप्रत्ययः । संप्रसारणम् । 'चोः कुः' उक्तः ॥

'जनेर्जा' जनी प्रादुर्भावे इत्यस्य जा इत्यादेशः । क्तप्रत्ययः । जातः ॥ एवं खन इत्यस्य खा आदेशः । खातः ॥

**पचो वः ॥ पचेः परस्य क्तस्य वो भवति निष्ठायाम् ॥ पच्यते स्मासौ वा पाकक्रियया निर्वृत्तः पक्वः । पचति स्मासौ पक्ववान् ॥ क्षायो मः ॥ क्षायः परस्य क्तस्य मो भवति निष्ठायाम् ॥ क्षै क्षये । सन्ध्यक्षराणामा । क्षायते स्मासौ क्षामः ॥ शुषेः कः ॥ शुषेः परस्य क्तस्य को भवति निष्ठायाम् ॥ शुष् शोषणे । शुष्यते स्मासौ शुष्कः ॥ स्फायः स्फीः ॥ स्फायः स्फीरादेशो भवति निष्ठायां परतः ॥ ओस्फायी वृद्धौ । स्फायते स्मासौ स्फीतः । धेट् पाने । धीयते स्म तत् धीतम् । स्थामी । गै शब्दे । गीयते स्म तत् गीतम् । पा पाने । पीयते स्म तत् पीतम् । दो अवखण्डने । दीयते स्म तत् दितम् । षोऽन्तकर्मणि । सीयते स्म तत् सितम् । माङ् माने । मीयते स्म तत् मितम् ॥ सेति निष्ठायां ञेर्लोपो वाच्यः ॥ चोर्यते स्मासौ चोरितः । याच्यते स्माऽसौ याचितः ॥ क्तक्तवतू निष्ठासंज्ञौ ॥ इति निष्ठाधिकारप्रक्रिया ॥ २ ॥**

'पचो वः' । पचेर्धातोरतीतेऽर्थे वप्रत्ययो भवति क्तप्रत्ययार्थे । यद्वा क्तप्रत्ययस्यैव व इत्यादेशो भवति । 'चोः कुः' ॥ 'शुषेः कः' शुष शोषणे इत्यस्य कप्रत्ययः शुष्कः ॥ 'स्फायः स्फी' स्फायेर्धातोः क्तप्रत्ययो भवति क्तप्रत्यये परे स्फीआदेशो भवति । स्फायी वृद्धौ । स्फाय् क्तप्रत्ययः । स्फी आदेशः स्फीतः ॥ क्षै क्षये । 'संध्यक्षराणामा' 'क्षायो मः' क्षायतेर्मप्रत्ययः । क्षामः ॥ इति निष्ठाधिकारप्रक्रिया ॥ २ ॥

---

## क्स्वादिप्रक्रिया ३

**अथ क्स्वादिप्रक्रिया ॥ क्वसुकानौ णबेवत् ॥ धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले वाच्ये सति तौ च णबेवत् परस्मैपदात्मनेपदे भवतः ॥**

णबादित्वाद्द्विर्वचनं न तु णपो णित्त्वाद्वृद्धिरित्याशयः ॥ यथा च णप् परस्मैपदे तथा क्वसुः । यथा आत्मनेपदे ए तथा कानः । ककारो गुणप्रतिषेधार्थः । उकारो नुम्विधानार्थः ॥ डुकृञ् करणे । चकार इति चकृवान् । उगितो नुम् । हे चकृवन् चकृवांसौ चकृवांसः । चकृवांसम् चकृवांसौ । वसोर्व उः । चक्रुषः । चक्रुषा । वसां रसे । चकृवद्भ्याम् चकृवद्भिः । इत्यादि । चक्रे इति चक्राणः । स्त्रीलिङ्गे चक्रुषी । नपुंसके चकृवद् चक्रुषी चकृवांसि ॥ भिदिर् विदारणे । बिभेद इति बिभिद्वान् बिभिद्वांसौ बिभिद्वांसः । बिभिद्वांसम् । बिभिद्वांसौ । वसोर्व उः । बिभिदुषः । बिभिदुषा । वसां रसे । बिभिद्वद्भ्याम् । बिभिद्वद्भिः । इत्यादि । बिभिदे इति बिभिदानः ॥ भञ्जो आमर्दने । बभञ्ज इति बभञ्ज्वान् । बभञ्जे इति बभञ्जानः । जागृ निद्राक्षये । जजागार इति जजागृवान्-जजागर्वान् । इत्यपि भवति ॥ जागर्तेः क्विति गुणो वक्तव्यः ॥ तेन जजागरुषः ॥ कृतद्वित्वानामेकस्वराणामादन्तानां च घसेरेव क्वसोरिड्वाच्यः नान्येषाम् ॥ बभूव इति बभूवान् ॥ ऋ गतौ । आर इति आरिवान् ॥ पपौ इति पपिवान् ॥ अद भक्षणे । आद इति आदिवान् ॥ तस्थौ इति तस्थिवान् ॥ बभौ इति बभिवान् ॥ ययौ इति ययिवान् । या प्रापणे । दरिद्रातेरनपि नित्यालोपित्वेनेट् । ददरिद्रौ इति ददरिद्रिवान् ॥ वण्सयुटौ हित्वा दरिद्रातेरनप्यालोपो वाच्यो लुङि वा ॥ ददरिद्रुषः ॥ डुदाञ् दाने । ददौ इति ददिवान् ददुषः ॥ घस्लृ अदने । जघास इति जक्षिवान् । कुहोश्चुः । झपानां जबचपाः । गमां स्वरे । खसे चपा झसानाम् । किलात् वसोत्वे कृते इडभावः । जक्षुषः ॥ गम्‌हन्विद्‌विशृदृशां क्वसोर्वेट् ॥ गम्लृ गतौ । जगाम इति जग्मिवान्-जगन्वान् । मो नो धातोः ॥ द्विरुक्तस्य हन्तेर्हकारस्य घत्वं वक्तव्यम् ॥ जघान इति जघ्निवान् जघन्वान् ॥ विद ज्ञाने । विवेद इति विविदिवान् विविद्वान् ॥ विश प्रवेशने । विवेश इति विविशिवान्-विविश्वान् । दृशिर् प्रेक्षणे । ददर्श इति ददृशिवान्-ददृश्वान् ॥ इण् गतौ ॥ इणो दीर्घता क्वसौ वक्तव्या ॥ इयाय इति ईयिवान् । उपेयाय इति उपेयिवान् । लोपः पचां किल्ये । पपाच इति पेचिवान् ॥

सूत्रम्—'क्वसुकानौ णबेवत्' ॥ कसुश्च कानश्च कसुकानौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' । णप् च ए च णबे णबेभ्यां तुल्यौ वर्तेते इति णबेवत् प्रथमैकवचनान्तम् ॥ धातोरतीते काले कसुकानौ प्रत्ययौ भवतः तौ च णबेवद् भवतः । यथा आख्याते परस्मैपदिनां धातूनां परोक्षे णप् तथा अत्रापि तेषां परस्मैपदिनां क्वसुः । यथा चात्मनेपदिनाम्

ए आते तथात्र कानः। उभयपदिनामुभावपि आख्याते तु णप् ए इत्येतयोः प्रथमपुरुषः। अन्यत्र पुरुषत्रयमपि। ककारो गुणनिषेधार्थः। क्सोः उकारो नुम्विधानार्थः। णबादित्वाद्द्विवचनं न तु वृद्धिः। उदाहरणम्॥ विद ज्ञाने। 'क्सुकानौ०' इति परस्मैपदित्वात् क्सुप्रत्ययः। वस्। णबादित्वात् द्वित्वम्। 'पूर्वस्य' 'हसादिः शेषः'। नामसंज्ञायां स्यादिर्विभक्तिः। विविद्वस् स् इति स्थिते। उकारानुबन्धत्वात् 'न्रितो नुम्' इति नुमागमः। 'न्संमहतो०' इति दीर्घः। 'हसेपः०' 'संयोगान्तस्य०' इति सलोपः। विविद्वान् विविद्वांसौ विविद्वांसः। विविद्वांसं विविद्वांसौ। शसादौ स्वरे तु विशेषः 'वसोर्व उः' 'किलात्षः सः०' 'स्वरहीनं' विविदुषः विविदुषा। भकारादौ 'वसां रसे' विविद्वद्भ्यामित्यादि। विवेद इति विविद्वान्॥ एवं भिदिर् विदारणे। भिद्। क्सुप्रत्ययः। द्वित्वम्। 'झपानां जबचपाः' भस्य बः। शेषं पूर्ववत्। बिभेद इति बिभिद्वान्॥ कृ क्सुप्रत्ययः। वस् णबादित्वात् द्वित्वम्। 'रः' इति पूर्वऋकारस्य अकारः। 'कुहोश्चुः'॥ चकृवस्शब्दात् प्रथमैकवचने 'न्रितो नुम्' 'न्सम्महत०' इति दीर्घः। 'हसेपः०' 'संयोगान्तस्य लोपः' चकृवान् चकार इत्यर्थः। शसादौ स्वरे तु वस्य उत्वे कृते 'ऋरम्' 'स्वरहीनं०' 'किलात्षः सः' चक्रुषः चक्रुषा इत्यादि। आत्मनेपदे कानप्रत्ययः। आन। द्वित्वम्। 'रः' 'कुहोश्चुः' 'स्वरहीनं०' 'रघुवर्णान्नो णो०' प्रथमैकवचने 'स्नोर्वि०' चक्राणः चक्रे इत्यर्थः। देववत्॥ षद्लृ विशरणे। 'आदेः ष्णः स्नः' सद् आङ्पूर्वः। क्सुप्रत्ययः। द्वित्वम् पूर्वस्य 'हसादिः०' इति दलोपः। 'लोपः पचां किल्ये चास्य' इति पूर्वपदस्य लोपः अकारस्य एकारः। 'कृत०' इतीडागमः। 'स्वरहीनं०' प्रथमैकवचने नुमादिकं प्राग्वत्। आसेदिवान् आसेदिवांसौ इत्यादि। शसादौ 'वसोर्व उः' निमित्ताभावे नैमित्तिकस्याप्यभावः' इति वचनात् इटो लोपः। 'स्वरहीनं०' 'किलात्षः सः०' आसेदुषः। आसेदुषा आसेदिवद्भ्यामित्यादि। एवमन्येऽप्यूह्याः। क्सुप्रत्यये। घस् एकस्वरम्। ऋ इण् अकारान्तानामिट् वक्तव्यः। जक्षिवान् पेचिवान् आरिवान् उपेयिवान् ददिवान् विद् हन् गम् दृशां वा इट्। इडभावे गम्धातोर्मकारस्य नकारः। यद्वा 'क्वचिदपदान्तेऽपि पदान्तता' इति 'मो नो धातोः' विविद्वान् विविदिवान् जघ्निवान् जघन्वान् जगन्वान् जग्मिवान् ददृशिवान् ददृश्वान्। वाशब्दो व्यवस्थार्थः। विविश्वान् विविशिवान्॥

**शतृशानौ तिसेवत् क्रियायाम्॥** क्रियापदे गम्यमाने सति धातोः शतृशानौ प्रत्ययौ भवतः वर्तमानेऽर्थे तौ च तिप्तेवत् परस्मैपदात्मनेपदयोर्भवतः॥ अदे। पचतीति पचन्॥ आस्ते॥ ऋकारानुबन्धस्य नुमागम एव भवति न दीर्घता वक्तव्या॥ पठतीति पठन्। तिष्ठतीति तिष्ठन्। गायतीति गायन्। गच्छतीति गच्छन्। पिबतीति पिबन्॥ **मुगानेतः॥** अकारस्य आने परे मुगागमो भवति॥ पचतेऽसौ पचमानः पिबति वा पठति॥ यज देवपूजासंगतिकरणदानेषु। यजतेऽसौ यजमानः स्तौति॥ मन ज्ञाने। मन्यतेऽसौ मन्यमानः॥ मनु अवबोधने।

**तनादेरुप् । मनुतेऽसौ मन्वानः परागच्छति । करोतीति कुर्वन् सः । ङित्यदुः । कुरुतेऽसौ कुर्वाणः । क्रियतेऽसौ क्रियमाणः ॥ उपसर्गस्थनिमित्तात् नकारस्य णो वाच्यः ॥ प्रपीयतेऽसौ प्रपीयमाणः ॥ आसेरान ई ॥ आसेर्धातोः परस्य आन आकारस्य ईकारादेशो भवति । आस् उपवेशने । आस्तेऽसौ आसीनः ॥**

सूत्रम्—'शतृशानौ तिप्तेवत् क्रियायाम्' ॥ शतृश्च शानश्च शतृशानौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' तिप्तेवत् 'अव्यया०' क्रियायां सप्तम्येकवचनान्तम् । 'आम् ङे ङितां यट्' 'सवर्णे०' ॥ क्रियापदे गम्यमाने प्रोच्यमाने धातोः शतृशानौ प्रत्ययौ भवतः तौ तिप्तेवत् भवतः । परस्मैपदिनां शतृ । आत्मनेपदिनां च शानच् । उभयपदिनामुभावपि इत्यर्थः । शकारः शित्कार्यार्थः । ऋकारश्च नुम्विधानार्थः । पच् शतृप्रत्ययः । अत् । चतुर्वत्त्वात् 'अप् कर्तरि' 'स्वरहीनं०' 'अदे' अलोपः । 'स्वर०' प्रथमैकवचने 'त्रितो नुम्' 'हसेपः०' 'संयोगान्तस्य लोपः' पचन् आस्ते ॥ एवं पठ व्यक्तायां वाचि । पठन् तिष्ठति । 'नः सकूछते' । 'नश्चापदान्ते०' पठंस्तिष्ठति ॥ गै शब्दे । शतृप्रत्ययः । अत् 'अप् कर्तरि' 'ऐ आय्' 'स्वरहीनं०' 'अदे०' 'त्रितो नुम्' 'हसेपः०' 'संयोगान्तस्य०' गायन् गच्छति । एवं कुर्वन् कुर्वाणः ॥ सूत्रम्—'मुगानेतः' ॥ मुक् प्रथमैकवचनान्तम् । 'हसेपः०' आने सप्तम्येकवचनान्तम् । 'अ इ ए' अतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विस०' अकारस्य शानप्रत्ययसंबन्धिनि आकारे परे मुमागमो भवति । ककारः स्थाननियमार्थः । उकार उच्चारणार्थः ॥ डुपचष् पाके । पच् उभयपदित्वात् शानप्रत्ययः । आन । 'शिति चतुर्वत्' इति । 'अप् कर्तरि' 'मुगानेतः' इति मुगागमः । कित्त्वात् पच् अमे म् । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' पचमानः पानीयं पिबति ॥ एवं यज देवपूजासंगतिकरणदानेषु । यजमानः सन् पूजां कुर्वन् सन् स्तौति ॥ मन ज्ञाने । शानप्रत्ययः । 'तनादेरुप्' उप्प्रत्ययः । 'स्वरहीनं०' 'उवम्' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' मन्वानः मनुत इति मन्वानः ॥ आस उपवेशने । आस् । 'शतृशानौ तिप्ते०' इति शानप्रत्ययः 'अप् कर्तरि' 'आदादेर्लुक्' ॥ 'आसेरान ई' आसेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' । आनः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' । 'स्रोर्वि' ई प्रथमैकवचनान्तम् । सांकेतिकम् । चतुःपदं सूत्रम् । 'आस उपवेशने' इत्यस्य धातोः परस्य आनप्रत्ययसंबन्धिन आकारस्य ईकारो भवति । 'स्वरहीनं०' आसीनः ॥

**वादीपोः शतुः ॥ अवर्णात्परस्य शतृप्रत्ययस्य वा नुमागमो भवति ईकारे ईपि च परे ॥ तुद व्यथने । तुदतीति तुदन् तुदन्तौ तुदन्तः । स्त्रीलिङ्गे तुदति सा तुदन्ती-तुदती तुदन्त्यौ-तुदत्यौ तुदन्त्यः तुदत्यः । नपुंसके तुदतीति तुदत् तुदन्ती-तुदती तुदन्ति । इत्यादि ॥**

सूत्रम्—'वादीपोः शतुः' ॥ वा प्रथमैकवचनान्तम् । आत् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' ईश्च ईप् च ईपौ तयोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' पश्चात् 'चपा

अबे जबाः' शतुः षष्ठ्येकवचनान्तम् । 'ऋतो ङ उः' टिलोपः । 'स्वरहीनं०' चतुःपदम् । अवर्णान्तात्परस्य शतुः शतृप्रत्ययस्य वा नुमागमो भवति नपुंसके 'ईमौ' इति सूत्रोत्पन्ने ईपि परे ॥ तुद व्यथने । तुद शतृप्रत्ययः । अत् । 'तुदादेरः' 'स्वरहीनं०' 'अदे' 'स्वरहीनं–' तुदत् । 'नपुंसकात्स्यमोर्लुक्' द्विवचने तुदत् औ इति स्थिते । 'ईमौ' औस्थाने ई । 'वादीपोः शतुः' इति एकत्र नुमागमः । 'मिदन्त्यात्स्वरात्परो वक्तव्यः' 'नश्चापदान्ते' 'स्वरहीनं०' तुदन्ती पक्षे तुदती व्याकुले ॥ तुदन्ति पुनरपि तुदत् तुदन्ती तुदती तुदन्ति । स्त्रीलिङ्गे तुदत् ऋकारानुबन्धत्वात् 'ऋितः' इतीप् । 'वादीपोः शतुः' इति एकत्र नुमागमः । तुदन्ती तुदती वा स्त्री वर्तते । तुदन्त्यौ तुदत्यौ तुदन्त्यः तुदत्यः । एवं पक्षद्वयेऽपि नदीशब्दवत् ॥

अप्ययोरान्नित्यम् ॥ अप्प्रत्यययप्रत्ययसंबन्धिनः अकारात्परस्य शतुर्नित्यं नुगागमो भवति ईपोः परतः ॥ भवति इति भवन् भवन्तौ भवन्तः । भवति सा भवन्ती भवन्त्यौ भवन्त्यः । भवति तत् भवत् भवन्ती भवन्ति । पचतीति पचन् पचन्ती स्त्री । नपुंसके पचति तत् पचत् पचन्ती पचन्ति । दिवु क्रीडादिषु । दीव्यति इति दीव्यन् । दीव्यन्ती स्त्री । नपुंसके ॥ दीव्यति तत् दीव्यत् दीव्यन्ती दीव्यन्ति । पठतीति पठन् । पठन्ती स्त्री । नपुंसके पठन् पठन्ती पठन्ति । हसतीति हसन् । हसन्ती स्त्री । हसत् नपुंसके । श्लिष्यतीति श्लिष्यन् । श्लिष्यन्ती स्त्री । श्लिष्यत् नपुंसके ॥ जयतीति जयन् जयन्ती स्त्री । नपुंसके जयत् ॥ वादीपोः शतुरित्यत्र वाशब्दात् द्विरुक्तानां जक्षादीनां च शतुर्नित्यं नुम्प्रतिषेधो वक्तव्यः नपुंसके शौ वा ॥ ददातीति ददत् दधत् ददती दधती । जक्ष भक्षहसनयोः । जक्षतीति जक्षत् जक्षती जक्षति जक्षन्ति कुलानि ॥ जागृ निद्राक्षये । जागर्तीति जाग्रत् जाग्रती जाग्रन्ति-जाग्रति ॥

सूत्रम्—'अप्ययोरान्नित्यम्' ॥ अप् च यश्च अप्यौ तयोः षष्ठीद्विवचनान्तम् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्नोर्वि०' आत् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' पश्चात् 'नामिनोरः' 'स्वर०' नित्यम् प्रथमैकवचनान्तम् । 'अव्यया०' 'अमे अमा वा' 'स्वरहीनं०' ॥ 'अप् कर्तरि' इति अप्प्रत्ययः । 'दिवादेर्यः' इति यप्रत्ययः । एतयोः संबन्धिनः अकारात्परस्य शतृप्रत्ययस्य नित्यं नुमागमो भवति न तु विकल्पेन ईकारे ईपि च परे । मकारः स्थाननियमार्थः । भू शतृप्रत्ययः अत् । 'अप् कर्तरि' 'गुणः' 'औ अव्' 'स्वरहीनं०' 'अदे' 'स्वरहीनं०' 'ऋितः' इतीप्प्रत्ययः । 'अप्ययोरान्नित्यम्' इति नुमागमः । भवन्ती ॥ एवं पचन्ती ॥ दिव् । 'दिवादेर्यः' शतृप्रत्ययः । 'य्वोर्विहसे' इति दीर्घः । 'अदे' 'स्वरहीनं०' 'ऋितः' 'अप्ययोरान्नित्यम्' इति नुमागमः । दीव्यन्ती दृश्यते ॥ एवं श्लिष आलिङ्गने । श्लिष्यन्ती ॥ द्विरुक्तानां धातूनां विशेषमाह—'द्विरुक्तानां०' जक्ष भक्ष हसनयोः । जक्ष जागृ दरिद्रा चकास् शास् इत्यादीनां च संबन्धिनः शतृप्रत्ययस्य 'ऋितो

नुम्' तस्य निषेधो वक्तव्यः । नुमागमो न भवतीत्यर्थः । उदाहरणम्—दा शतृप्रत्ययः अत् । 'अप् कर्तरि' 'ह्वादेर्द्विश्च' अप्लुक् द्वित्वं च । 'ह्रस्वः' 'दादेः' इत्यालोपः । 'स्वर०' द्विरुक्तान्नुम्निषेधः । प्रथमैकवचने 'हसेपः०' ददत् ददतौ ददतः इत्यादि ॥ स्त्रीलिङ्गे—ददती ददत्यौ ददत्यः ॥ नपुंसके ददत् ददती ददन्ति । द्विरुक्तानां नपुंसके वा नुम् तेन ददति ददन्ति इति रूपद्वयम् ॥ डुधाञ् धारणपोषणयोः । धा शतृप्रत्ययः । 'अप् कर्तरि' 'ह्वादेर्द्विश्च' अपो लुक् द्वित्वं 'ह्रस्वः' 'झपानां जबचपाः' पूर्वस्य धस्य दः । 'स्वरहीनं०' प्रथमैकवचने 'द्विरुक्तानां०' इति नुम्निषेधः । दधत् दधतौ दधतः ॥ एवं बिभ्रत् डुभृञ् भृ शतृप्रत्ययः । अत् 'अप् कर्तरि' 'ह्वादेर्द्विश्च' 'रः' 'झपानां जबचपाः' 'भृत्रां लुकि' 'ऋरम्' 'स्वरहीनं०' ॥ ञिभी भये । भी अत् अप् 'ह्वादेर्द्विश्च' 'झपानां०' 'ह्रस्वः' 'नुधातोः'। अनेकस्वरस्य० इति यकारः । बिभ्यत् ॥ एवं जुह्वत् विदधत् इत्यादयोऽन्येपि ह्वादितुल्या यङ्लुगन्ताश्च ज्ञातव्याः ॥ जक्षभक्ष हसनयोः । जक्ष शतृप्रत्ययः । 'अप् कर्तरि' 'अदादेर्लुक्' 'स्वरहीनं०' जक्षादित्वान्नुम्निषेधः । 'हसेपः०' जक्षत् जक्षतौ जक्षतः ॥ जागृ निद्राक्षये । जागृ अत् । 'अप् कर्तरि' 'अदादेर्लुक्' 'ऋरम्' 'स्वरहीनं०' प्रथमैकवचने 'हसेपः०' जाग्रत् जाग्रतौ जाग्रतः ॥

**दरिद्रा दुर्गतौ ॥ दरिद्रातेरालोपो वक्तव्यः ॥ दरिद्रातीति दरिद्रत् दरिद्रन्ती-दरिद्रति दरिद्रन्ति । चकास्तीति चकासत् चकासती चकासन्ति-चकासति । शास्तीति तत् शासत् । अनुशास्ति तत् अनुशासत् ॥ दादेः । ददत् ददती ददन्ति-ददति । दधत् । इत्यादि ॥ विदेर्वा वसुः ॥ विदेर्धातोः शतृविषये वा वसुः प्रत्ययो भवति ॥ वेत्तीति विद्वान्-विदन् ॥ भविष्यदर्थे तिसेवत् शतृशानौ भवतः ॥ अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थे निपात्येते ॥ अत्रभवन्तो भट्टमिश्राः । पूज्या इत्यर्थः । तत्रभवद्भिर्भगवत्पादैर्भणितम् ॥**

दरिद्रा दुर्गतौ । दरिद्रा अत् । 'अदादेर्लुक्' 'दरिद्रातेरालोपो वक्तव्यः' इत्याकारलोपः । 'स्वरहीनं०' 'हसेपः०' दरिद्रत् ॥ चकासृ दीप्तौ । चकास् शतृप्रत्ययः । 'अदादेर्लुक्' 'स्वरहीनं०' चकासत् ॥ शास अनुशिष्टौ । शास् अनुपूर्वः । शतृ अनुशासत् । एषु 'द्विरुक्तानां जक्षादीनां०' इति नुम्निषेधः । इत्यादि जक्षादयः । आनप्रत्यये जक्षाणः दरिद्राणः बिभ्राणः विदधानः ॥ सूत्रम्—'विदेर्वा वसुः' ॥ विदेः षष्ठ्येकवचनान्तम् 'ङिति' 'ङस्य' 'स्नोर्वि०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' । वसुः प्रथमैकवचनान्तम् । 'स्नोर्वि०' सिद्धम् । विद ज्ञाने इत्यस्य धातोः शतृप्रत्यये शतृप्रत्ययार्थे वा विकल्पेन वसुप्रत्ययो भवति । उदाहरणम्—विद एकत्र वसुप्रत्ययः । विद्वस् हसान्तपुंलिङ्गवत्प्रक्रिया । 'त्रितो नुम्' 'न्सम्महतो०' 'संयोगान्तस्य०' विद्वान् विद्वांसौ इत्यादि । द्वितीये तु शतृप्रत्यये कृते भवच्छब्दवत्प्रक्रिया । विदन् विदन्तौ इत्यादि ॥ अर्ह पूजायाम् शतृप्रत्ययः । अत् । अप् । 'अदे' 'स्वरहीनं०' प्रथमैकवचने 'त्रितो नुम्' 'संयोगान्तस्य लोपः' 'हसेपः०' अर्हतीत्यर्हन् । अत्रभवत् तत्रभवत् इत्येतौ द्वौ शब्दौ उकारानुबन्धौ पूजार्थे पूज्यत्ववाचकत्वे

निपात्येते । शतृप्रत्ययं विनापीत्यर्थः । "पूज्ये तत्रभवानत्रभवांश्च भगवानपि" इत्यभिधानवचनात् उकारानुबन्धत्वात् 'नितो नुम्' 'अत्वसोः सौ' इति भवति । अत्रभवान् अत्रभवन्तौ अत्रभवन्तः इत्यादि । अत्रभवन्तः पूज्या एते भट्टमिश्राः । एवं तत्रभवान् तत्रभवन्तौ तत्र भवन्तः । तत्रभवद्भिः पूज्यैः भगवत्पादैर्युष्माभिः भणितं कथितम् । शतृप्रत्ययरहितावेतौनिपातौ ॥

शीले तृन् ॥ धातोस्तृन् प्रत्ययो भवति शीले स्वभावेऽर्थे ॥ नकारः प्रत्ययभेदज्ञापनार्थः । करोतीत्येवंशीलः कर्ता । विचरतीत्येवंशीलः विचारिता ॥ णीञ् प्रापणे । नयतीत्येवंशीलः नेता । धर्ता । म्रियते इत्येवंशीलः मर्ता । बिभर्तीत्येवंशीलः भर्ता । शयिता इत्यादि ॥ इति क्वस्वादिप्रक्रिया ॥

सूत्रम्—'शीले तृन्' ॥ शीले सप्तम्येकवचनान्तम् 'अ इ ए' तृन् प्रथमैकवचनान्तम् । 'इसेपः०' ॥ शीले स्वभावार्थे धातोः तृन्प्रत्ययो भवति । नकारः प्रत्यये पदे भेदज्ञापनार्थः । कृ तृन्प्रत्ययः । 'गुणः' । जलतुम्बिकान्यायेन० । प्रथमैकवचने 'स्तुराट्' 'सेरा' डित्त्वाट्टिलोपः । 'स्वरहीनं०' करणशीलः कर्ता ॥ अश्वम् । हृञ् हरणे । हरणशीलो हर्ता । भरणशीलो भर्ता । इति क्वस्वादिप्रक्रिया ॥

---

## शीलार्थप्रक्रिया ४

अथ शीलार्थप्रक्रिया ॥ इष्णुस्नुक्नुः ॥ धातोः शीले स्वभावेऽर्थे इष्णु स्नु क्नु इत्येते प्रत्यया भवन्ति ॥ कृञ् अलंपूर्वः ॥ अलंकृञ् निराकृञ् प्रजन् उत्पच् उत्पत् उत्पद् ग्रस् उन्मत् रुच् अपत्रप् वृतु वृधु सह चर भू भ्राज् ण्यन्त एभ्य इष्णुः ॥ अलंकरोतीत्येवंशीलः अलंकरिष्णुः । निराकरिष्णुः । प्रजायते इत्येवंशीलः प्रजनिष्णुः । उत्पचतीत्येवंशीलः उत्पचिष्णुः ॥ पत्लृ पतने । उत्पततीत्येवंशीलः उत्पतिष्णुः । पद् गतौ । उत्पद्यते इत्येवंशीलः उत्पदिष्णुः ॥ ग्रस् अदने । ग्रसतीत्येवंशीलः ग्रसिष्णुः ॥ उन्माद्यतीत्येवंशीलः उन्मदिष्णुः ॥ रुच दीप्तौ । रोचतीत्येवंशीलः रोचिष्णुः ॥ त्रपूष् लज्जायाम् । अपत्रपति वा अपत्रपते इत्येवंशीलः अपत्रपिष्णुः ॥ वृतु वर्तने । वर्तते इत्येवंशीलः वर्तिष्णुः ॥ वृधुङ् वृद्धौ । वर्धते इत्येवंशीलः वर्धिष्णुः ॥ सहति सहते वेत्येवंशीलः सहिष्णुः ॥ चरतीइत्येवंशीलः चरिष्णुः । भविष्णुः ॥ भ्राजृ दीप्तौ । भ्राजते इति भ्राजिष्णुः ॥ इष्णुप्रत्यये परे ण्यन्तानां णिलोपाभावो वाच्यः ॥ कारयतीत्येवंशीलः कारयिष्णुः ॥ एते इष्णुप्रत्ययान्ताः ॥

सूत्रम्—'इष्णुस्नुक्नु' ॥ इष्णुश्च स्नुश्च क्नुश्च इष्णुस्नुक्नु प्रथमैकवचनान्तम् । 'नपुंसकात्स्यमोर्लुक्' शीलेऽर्थे इष्णु स्नु क्नु एते त्रयः प्रत्यया भवन्ति यथायोग्यम् । ण्यन्त, भ्राज्,

भू, सह, रुच्, वर्, वृध्, वृत्, प्रजन्, अपत्रप्, अलंकृञ्, निराकृञ्, उन्मद्, उत्पच्, उत्पत् एभ्यः इष्णुः । उदाहरणानि । कृ अलंपूर्वः । अलंकरणशीलोऽलंकरिष्णुः इष्णुप्रत्ययः । 'गुणः' 'स्वरहीनं०' निराङ्पूर्वः । निराकरिष्णुः निराकर्तुं शीलमस्येति निराकरिष्णुः । भानुशब्दवत् । ग्रस अदने । ग्रसिष्णुः उन्मदिष्णुः इत्यादि ॥

**ग्ला जि स्था भू म्ला क्षि पच् यज् परिमृज् एभ्यः स्नुः ॥** ग्लै हर्षक्षये । ग्लायतीत्येवंशीलः ग्लास्नुः । जयतीत्येवंशील: जिष्णुः । भवतीत्येवंशीलः भूष्णुः ॥ जिभ्वोः स्नौ गुणाभावो न इट् ॥ क्षेश्च तथा ॥ तिष्ठतीत्येवंशीलः स्थास्नुः । क्षि क्षये । क्षयतीत्येवंशीलः क्षिष्णुः । पचतीत्येवंशीलः पक्ष्णुः । यजतीत्येवंशीलः यक्ष्णुः । मृजूष् शुद्धौ ॥ मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या ॥ परिमार्ष्टीत्येवंशीलः परिमार्क्ष्णुः ॥

स्था, म्ला, ग्ला, पच्, परिम्रज्, जि, भू, एभ्यः स्नुः जिभुवोर्गुणः इडभावश्च । जि जये स्नुप्रत्ययः । 'किलात्वः०' 'रृवर्णोणो०' नस्य णः । जिष्णुः एवं भूष्णुः स्थास्नुः ग्लास्नुः पक्ष्णुः मार्क्ष्णुः ॥

**विष् त्रस् गृध् धृष् क्षिप् एभ्यः क्नुः ॥** विष्लृ व्याप्तौ । वेवेष्टि इत्येवंशीलः विष्णुः । त्रसी उद्वेगे । त्रसी भये । त्रसतीत्येवंशीलः त्रस्नुः । गृध अभिकाङ्क्षायाम् । दिवादिः । गृध्यतीत्येवंशीलः गृध्नुः । ञिधृषा प्रागल्भ्ये । स्वादिः । धृष्णोतीत्येवंशीलः धृष्णुः । क्षिप् प्रेरणे । क्षिपतीत्येवंशीलः क्षिप्नुः । ककारो गुणनिषेधार्थः ॥

क्षिप्, त्रस्, गृध्, विष्, एभ्यः क्नुः । विष्लृ व्याप्तौ वेवेष्टि जगदिति एवंशीलो विष्णुः । क्नुप्रत्ययः । ककारो गुणप्रतिषेधार्थः । गृध्धातुः अभिकाङ्क्षायां वाञ्छायाम् । गृध् क्नुप्रत्ययः । गर्धनशीलो गृध्नुः क्षिप्नुः त्रस्नुः ॥

**षाकोकणः ॥** धातोः शीलेऽर्थे षाक उ उकण इत्येते प्रत्यया भवन्ति ॥ **जल्प भिक्ष कुट्ट लुण्ट वृङ् एभ्यः षाकः प्रत्ययो भवति ॥** जल्प व्यक्तायां वाचि । जल्पतीत्येवंशीलः जल्पाकः ॥ भिक्ष याञ्चायाम् । भिक्षतीत्येवंशीलः भिक्षाकः ॥ कुट्ट ताडने वा छेदने । कुट्टतीत्येवंशीलः कुट्टाकः ॥ लुण्ट चौर्ये । लुण्टतीत्येवंशीलः लुण्टाकः । वृङ् संभक्तौ । वृञ् संवरणे । वर निवारणे । वृणुते वा वरतीत्येवंशीलः वा वृणीत इत्येवंशीलः वराकः । ष ईबर्थः । वराकी ॥

'षाकोकणः' ॥ षाकश्च उश्च उकण् च षाकोकणः प्रथमाबहुवचनान्तम् । स्वरहीनं०' 'स्नोर्वि०' शीले स्वभावार्थे षाकः उः उकण् एते त्रयः प्रत्यया भवन्ति । भिक्ष, जल्प, कुट्ट, लुण्ठ, वृञ्, वर् एभ्यः षाकः षकार ईबर्थः । वर् निवारणे । वर् षाकप्रत्ययः । 'स्वरहीनं०' वराकः । स्त्री चेत् वराकी 'ष्णितः' 'यस्य लोपः' 'स्वरहीनं०' वारयतीति

वराकः । भिक्ष याचनायाम् । भिक्ष षाकप्रत्ययः । आकः । 'स्वरहीनं०' 'स्रोर्वि०' भिक्षाकः ॥ जल्प जल्पने । कुट्ट कुट्टने । लुठि स्तेये । जल्पाकः । कुट्टाकः । लुण्ठाकः ॥

**सान्ताशंस् भिक्ष एभ्य उः प्रत्ययो भवति ॥ सान्ताशंसयोश्च ॥ सप्रत्ययान्तादाङ्पूर्वात् शंसु स्तुतावित्यस्माद्धातोश्च शीलार्थं विनापि उः प्रत्ययो भवति ॥ वच परिभाषणे । विवक्षतीति विवक्षुः । इच्छायामात्मनः सः । द्वित्वम् । 'पूर्वस्य' हसादिः शेषः । ऋत इर् । य्वोर्विहसे । कुहोश्चुः । चिकीर्षतीत्येवंशीलः चिकीर्षुः । जिघृक्षतीत्येवंशीलः जिघृक्षुः । आङ्पूर्वः शंसु स्तुतौ । शंस् कथने । आशंसतीत्येवंशीलः आशंसुः । भिक्षतीत्येवंशीलः भिक्षुः । पिपासतीत्येवंशीलः पिपासुः । तितीर्षतीत्येवंशीलः तितीर्षुः ॥**

सान्ताशंसूभिक्ष् एभ्यः उप्रत्ययो भवति । भिक्ष उप्रत्ययः । 'स्वरहीनं०' भिक्षुः । 'सान्ताशंसयोश्च' इच्छार्थे सप्रत्ययो भवति । आङ्पूर्वात् 'शंसु स्तुतौ' इत्यस्माद्धातोः शीलार्थं विनापि उप्रत्ययो भवति ॥ वच परिभाषणे । वच् वक्तुमिच्छुर्विवक्षुः । 'इच्छायामात्मनः सः' 'द्विश्च पूर्वस्य' 'हसादिः शेषः' 'यः से' अकारस्य इकारः । 'चोः कुः' 'किलात्षः सः०' 'कषसंयोगे क्षः' विवक्षुरिति सिद्धम् । शंस् उप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' आशंसुः ॥ ग्रह उपादाने । ग्रह इच्छार्थे सप्रत्ययः । 'द्विश्च' पूर्वस्य 'हसादिः०' 'कुहोश्चुः' 'यः से' 'ग्रहां क्ङिति' इति संप्रसारणम् । 'हो ढः' 'आदिजबानां०' इति गस्य घः । 'षढोः कः से' 'किलात्षः सः' 'कषसंयोगे०' उप्रत्ययः । 'यतः' इत्यलोपः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' जिघृक्षुः । ग्रहीतुमिच्छुर्जिघृक्षुः ॥ पा पाने । सप्रत्ययः । द्वित्वं 'ह्रस्वः' 'यः से' उप्रत्ययः । 'स्रोर्वि०' पिपासुः ॥

**लष पत भिक्ष पद् स्था भू वृष हन् कम् गम् शॄ एभ्यः उकण् प्रत्ययो भवति ॥ लष कान्तौ । लषतीत्येवंशीलः लाषुकः । पततीत्येवंशीलः पातुकः ॥ भिक्ष याञ्चायाम् । भिक्षतीत्येवंशीलः भिक्षुकः ॥ पद गतौ । णित्वाद्वृद्धिः । पद्यतीत्येवंशीलः । पादुकः ॥ तिष्ठतीत्येवंशीलः स्थायुकः । भवतीत्येवंशीलः वा भवितुं शीलमस्यास्तीति भावुकः ॥ वृष वृष्टौ । वृषु सेचने । वर्षतीत्येवंशीलः वर्षुकः ॥ हन्तीत्येवंशीलः घातुकः ॥ कमु कान्तौ । कामयते इत्येवंशीलः वा कामितुं शीलमस्यास्तीति कामुकः ॥ गम्लृ गतौ । गच्छतीत्येवंशीलः गामुकः ॥ शॄ हिंसायाम् । शृणातीत्येवंशीलः शारुकः ॥ शॄवन्द्योरारुः ॥ शॄवन्द्योर्धात्वोरारुः प्रत्ययो भवति ॥ शरारुः । वन्दारुः । स्पृहि गृहि पति शीङ् एभ्य आलुर्वाच्यः ॥ स्पृह ईप्सायाम् । ईप्सा इच्छा । गृह ग्रहणे । पत ऐश्वर्ये । त्रयश्चुरादयोऽदन्ताः ॥ आलौ त्रिलोपाभावो वाच्यः ॥ स्पृहयतीत्येवंशीलः स्पृहयालुः । गृहयतीत्येवंशीलः**

गृहयालुः । पतयतीत्येवंशीलः पतयालुः । शीङ् स्वप्ने । शेते इत्येवंशीलः शयालुः ॥

कम्, भिक्ष, भू, स्था, हन्, गम्, लप्, शश्, पत्, पद्, एभ्यः उकण् । कम् धातुः कान्तौ अभिलाषे । कामयतीति कामुकः । कम् उकण्प्रत्ययः । यकारो वृद्ध्यर्थः । 'अत उपधायाः' 'स्वरहीनं०' 'स्रोर्वि०' एवं भैक्षकः ॥ भू सत्तायाम् । भू उकण्प्रत्ययः । 'धातोर्नामिनः' इति वृद्धिः । 'औ आव्' 'स्वरहीनं०' 'स्रोर्वि०' भावुकः ॥ स्थायुकः । 'आतो युक्०' ॥ 'हनो घत्' घातुकः । अभिलाषुकः । वार्षुकः । पातुकः । पादुकः । आगामुकः । इत्यादि ॥

**नमादे रः** ॥ नम्, कपि, स्मिङ्, नञ्पूर्वो जस्, कम्, हिंस्, दीप्, एभ्यो रः प्रत्ययो भवति शीलेऽर्थे ॥ णमु प्रह्वत्वे शब्दे च । नमतीत्येवंशीलः नम्रः ॥ कपि चलने । कम्पतीत्येवंशीलः कम्प्रः ॥ स्मिङ् ईषद्धसने । स्मयते इत्येवंशीलः स्मेरः ॥ जसु मोक्षणे । जस् गतिनिवृत्तौ । दिवादिः । न जस्यतीत्येवंशीलं अजस्रम् ॥ कामयते इत्येवंशीलः कम्रः ॥ हिसि हिंसायाम् । हिनस्तीत्येवंशीलः हिंस्रः ॥ दीपी दीप्तौ । दीप्यते इत्येवंशीलः दीप्रः ॥

'नमादे रः' ॥ नम् आदिर्यस्यासौ नमादिः तस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' प्रथमैकवचनान्तम् । 'स्रोर्वि०' मध्ये । 'नामिनो रः' 'रिलोपो दीर्घश्च' ॥ नम् कम् स्मिङ् अजस् कम्प दीप् हिंस् एभ्यो रप्रत्ययः । णम् प्रह्वीभावे । 'आदेः ष्णः स्नः' नम् रप्रत्ययः । 'स्वरहीनं०' 'स्रोर्वि०' नमनशीलो नम्रः ॥ एवं कमु कान्तौ कम्रः । स्मेरः अजस्रः कम्प्रः दीप्रः हिंस्रः ॥

**घसादेः क्मरः** ॥ घस् सृ अद् एभ्यः क्मरः प्रत्ययो भवति शीलेऽर्थे ॥ घस्लृ अदने । घसतीत्येवंशील घस्मरः ॥ सृ गतौ । सृ सरणे । सृ हिंसायाम् । सरतीत्येवंशीलः सृमरः ॥ अद् भक्षणे । अत्तीत्येवंशीलः अद्मरः ॥ **भिदि छिदि विदि एभ्यः कुरङ्वाच्यः शीलेऽर्थे** ॥ भिनत्तीत्येवंशीलः । भिदुरः ॥ विद् ज्ञाने । वेत्तीत्येवंशीलः विदुरः ॥ छिदिर् द्वैधीकरणे । छिनत्तीत्येवंशीलः छिदुरः ॥ **भासादेर्घुरः** ॥ भास् भञ्ज् मिद् एभ्यो घुरः प्रत्ययो भवति शीलेऽर्थे ॥ घकारो घित्कार्यार्थः ॥ भासृ दीप्तौ । भासते इत्येवंशीलः भासुरः ॥

सूत्रम्—'घसादेः क्मरः' ॥ घस् आदिर्यस्यासौ घसादिः तस्य षष्ठ्येकवचनान्तम् । क्मरः प्रथमैकवचनान्तम् । 'स्रोर्वि०' घसादेर्धातोः अदेश्च क्मरप्रत्ययो भवति शीलार्थे । ककारो गुणनिषेधार्थः । घस्लृ अदने घस् क्मरप्रत्ययः । 'स्वरहीनं०' 'स्रोर्वि०' ॥ सृ गतौ । मरप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' सृमरः ॥ अद भक्षणे अद् मरप्रत्ययः । 'स्वरहीनं०' अद्मरः ॥ 'भासादेर्घुरः' भास दीप्तौ भञ्ज् ञिमिदा स्नेहने एभ्यो धातुभ्यो घुरप्रत्ययो

भवति शीलेऽर्थे । घकारो घित्कार्यार्थः । भास् उरप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' भासनशीलो भासुरः । भञ्जो आमर्दने भञ्ज् 'भासादेः०' इति उरप्रत्ययः ॥

**चजोः कगौ घिति ॥ धातोश्चकारजकारयोः ककारगकारौ भवतः घिति प्रत्यये परे ॥ भञ्जो आमर्दने । भनक्तीत्येवंशीलः भङ्गुरः । ञिमिदा गात्रविक्षेपे । मेद्यते इत्येवंशीलः मेदुरः ॥**

'चजोः कगौ घिति' इति जस्य गः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' भङ्गुरः स्वयमेव भज्यत इत्येवंशीलो भङ्गुरः । मृदुः मृदुरः । 'छिदिभिदिविदां कुरः' ककारो गुणनिषेधार्थः । छिदुरः भिदुरः विदुरः । एते सर्वे प्रत्ययाः शीलार्थाः ॥

**यङ ऊकः ॥ यज् जप् दंश् वद् एभ्यो यङ्प्रत्ययान्तेभ्य ऊकः प्रत्ययो भवति शीलेऽर्थे ॥ यङो लुक् । तत्सन्नियोगेन धातोर्द्विर्वचनम् । यज देवपूजासंगतिकरणदानेषु । अतिशयेन यजतीति वा इज्यते इत्येवंशीलः यायजूकः ॥ जप व्यक्तायां वाचि । नमजपां नुक् । जञ्जपूकः ॥ दंश दंशने । दंदशूकः ॥ वावद्यते इत्येवंशीलः वावदूकः ॥**

सूत्रम्—'यङ ऊकः' ॥ 'यङः' पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ऊकः प्रथमैकवचनान्तम् । 'स्रोर्विं०' अतिशयार्थे यङ् प्रत्ययाद्धातोः शीलार्थे ऊकः प्रत्ययो भवति । यज् जप् जागृ वद् दंशिभ्य इति वक्तव्यम् । वक्तव्यस्य प्रयोगानुसरणार्थत्वात् । अयङन्तस्यापि जागर्तेः ऊकःप्रत्ययो भवति ॥ सूत्रम्—यङो लुक् ॥ यङः षष्ठ्येकवचनान्तम् । लुक् प्रथमैकवचनान्तम् । 'हसेपः' तस्य ऊकस्य संनियोगे यङ्प्रत्ययस्य लुक् भवति । उदाहरणम् । यज देवपूजा० । यज् । अतिशयेन यजतीत्येवंशीलो यायजूकः । अतिशयेन 'हसादेर्यङ्' द्वित्वम् । 'पूर्वस्य' 'हसादिः०' 'आतः' इत्यकारस्य आकारः । यायज्य इति स्थिते ऊकप्रत्ययः । 'यङो लुक्' इति यङो लुक् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ दंश दशने । दश् अतिशयेन दशतीत्येवंशील इति विग्रहे यङ्प्रत्ययः । 'नो लोपः' द्वित्वम् । 'पूर्वस्य' 'हसादिः शेषः' । 'नमजपां नुक्' 'नश्चापदान्ते०' ऊकप्रत्ययः । 'लुक्' इति यङो लुक् । दंदशूकः सर्पः ॥ जप व्यक्तायां वाचि । जंजपूकः । वावदूकः ॥

**जागर्तेरूको वाच्यः ॥ जागर्तीत्येवंशीलः जागरूकः ॥ इण्नशजिसृगमिभ्यः क्वरप् वाच्यः ॥ इण् गतौ । ह्रस्वस्य पिति । एतीत्येवंशील इत्वरः ॥ णश अदर्शने । नश्यतीत्येवंशीलः नश्वरः । जयतीत्येवंशीलः जित्वरः ॥ सरतीत्येवंशीलः सृत्वरः ॥ गत्वरो निपात्यते शीलेऽर्थे ॥ गच्छतीत्येवंशीलः गत्वरः ॥ भियः क्रुक्लुकौ वक्तव्यौ ॥ बिभेतीत्येवंशीलः भीरुः । भीरुकः ॥ इषेरुश्छश्च ॥ इषेरुः प्रत्ययो भवति छान्तादेशश्च । इच्छतीति इच्छुः ॥ वरः ॥ स्था ईश् भास् पिस् कसादिभ्यो वरः प्रत्ययो भवति शीलेऽर्थे ॥ तिष्ठतीत्येवंशीलः स्थावरः ॥**

अयङन्तस्यापि जागर्तेः ऊकप्रत्ययो भवति । जागरूकः ॥ यातेर्यङन्ताद्वरप्रत्ययः । तत्संनियोगे यङो लुक् । अतिशयेन कुटिलं वा यातीत्येवंशीलो यायावरः इत्यादि ॥

**आदृतः किर्द्विश्च भूते ॥ आकारान्तादृकारान्ताद्धातोर्जनिनमिगमिभ्यश्च शीलेऽर्थे भूतकाले किः प्रत्ययो भवति णवादिवद्धातोश्च द्विर्वचनं भवति ॥ आतोऽनपि**

**रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् ।**
**याजकान् वव्रिराजह्रिः पौण्डरीके महाद्विजान् ॥ १ ॥**
**तदा जघ्निर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ।**
**ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा ॥ २ ॥**

**इति कृदन्तप्रक्रियायां शीलार्थप्रक्रिया ॥ ४ ॥**

सूत्रम्—'आदृतः किर्द्विश्च भूते' ॥ आच्च ऋच्च आदृत् तस्मात् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' किः प्रथमैकवचनान्तम् । 'स्रोर्विं०' 'द्वित्रिचतुर्भ्यः सुः' प्रथमैकवचनान्तम् । 'अव्यया०' ॥ च प्रथमैकवचनान्तम् । 'अव्ययाद्वि०' ॥ भूते सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ आकारान्ता दादयः, ऋकारान्ताः डुकृञ्करणे हृञ्हरणे इत्यादयः तेभ्यो धातुभ्यः शीले स्वभावार्थे अतीते काले किप्रत्ययो भवति । ककारो गुणनिषेधार्थः । तत्संनियोगे धातोर्द्विर्वचनम् ॥ पा पाने । पा किप्रत्ययः । इ द्वित्वम् । 'पूर्वस्य' 'ह्रस्वः' 'आतोऽनपि' इत्याकारलोपः । प्रथमैकवचने 'स्वरहीनं०' 'स्रोर्विं०' पपिः । एवं डुदाञ् दाने । ददिः ॥ डुकृञ् करणे । कृ किप्रत्ययः । इ । 'द्विश्च' । 'रः' इति पूर्वऋकारस्य अकारः 'कुहोश्चुः' 'स्वरहीनं०' 'स्रोर्विं०' चक्रिः ॥ एवं वृञ् वरणे वव्रिः । हृञ् हरणे हृ आङ्पूर्वः । कि प्रत्ययः । इ द्वित्वम् । 'रः' 'कुहोश्चुः' हस्य झः । 'झपानां जबचपाः' झस्य जः । 'ऋरम्' 'स्वरहीनं०' आजह्रिः । श्लोकश्चात्र—

'रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् ।
याजकान् वव्रिराजह्रिः पौण्डरीके महाद्विजान् ॥ १ ॥
तदा जघ्निर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ।
ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा' ॥ २ ॥

व्याख्या । रामः पौण्डरीके नाम्नि यज्ञे सोममसृतं पपिः पीतवान् । पपौ इत्येवंशीलः पपिः । पुनः गाः धेनूः ददिः दत्तवान् । पुनः अद्भुतमाश्चर्यं चक्रिः कृतवान् । पुनः याजकान् यज्ञकर्तृन् वव्रिः ववारेत्येवंशीलः । पुनः महाद्विजान् ब्राह्मणान् आजह्रिः आहृतवान् आजहारेत्येवंशील इत्यर्थः । इति श्लोकव्याख्या । चकारादुपधालोपिनामपि किप्रत्ययः । गम् जग्मिः । हन् जघ्निः । जन् जज्ञिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किः । सासहिः वावहिः चाचलिः पापतिरित्यादि ॥ इति शीलार्थप्रक्रिया ॥

---

## उणादिप्रक्रिया ५

अथोणादयो निरूप्यन्ते ॥ सदोणादयः ॥ सर्वस्मिन्काले उणादयः प्रत्यया भवन्ति ॥ कृ वा पा जि मि स्वदि साधि अशूङ् एभ्य उण् प्रत्ययो भवति ॥ णकारो वृद्ध्यर्थः । करोतीति कारुः कारुकः ॥ वा गतिगन्धनयोः । आतो युक् । वातीति वायुः ॥ पा पाने । पातीति पायुः ॥ जयति अनेनेति जायुः ॥ डुमिञ् प्रक्षेपणे । मि कौटिल्ये । मिनोतीति मायुः ॥ स्वदि आस्वादने । स्वद्यते इति स्वादुः । साध्यतीति साधुः । अश्नोतीति आशुः ॥ सि तनि गमि मसि सचि अवि हि धा क्रुशि एभ्यस्तुन्प्रत्ययो भवति ॥ षिञ् बन्धने । सिनोतीति सेतुः । अव रक्षणे । अवतेर्वकारस्य उकारः । अवतीति ओतुः ॥ हि गतौ वृद्धौ च । हिनोतीति हेतुः ॥ दधातीति धातुः ॥ क्रुश आह्वाने । क्रुशि रोदने च । क्रुश् आक्रोशे । छशषराजादेः षः । ष्टुभिः ष्टुः । क्रोशतीति क्रोष्टा ॥

अथोणादिप्रक्रिया ॥ सूत्रम्—'सदोणादयः' ॥ सदा सप्तम्येकवचनान्तम् । 'अव्यया०' उण् आदिर्येषां ते उणादयः प्रथमाबहुवचनान्तम् । 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'स्रोर्वि०' पश्चात् 'उ ओ' ॥ सर्वस्मिन् भूतभविष्यद्वर्तमानकाले उणादयः प्रत्यया भवन्ति । उण् आदिर्येषां ते उणादयः । उदाहरणम्—करोतीति कारुः । कृ उण्प्रत्ययः । णित्त्वाद्वृद्धिः । कृस्थाने कार् 'स्वरहीनं०' 'स्रोर्वि०' कारुः ॥ वा गतिगन्धनयोः । वा अयं धातुर्गतौ गन्धने च । वा उण्प्रत्ययः । 'आतो युक्०' 'स्वरहीनं०' 'स्रोर्वि०' वातीति वायुः ॥ पा पिबतीति पायुः ॥ मिनोति हिनस्तीति मायुः । गोपूर्वकत्वे गोमायुः ॥ क्रुश आह्वाने । क्रुश् उणादयः इत्यादिशब्दात् तुप्रत्ययः । 'उपधाया लघोः' गुणः 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' 'स्वरहीनं०' क्रोशति आह्वयति पूत्करोतीति वा क्रोष्टा शृगालः । साधना स्वरान्तपुंलिङ्गे कथिता ॥ जायते जन्यते वा जन्तुः । जन् तुप्रत्ययः कामयति अभिलषतीति कन्तुः ॥

अवतेर्मुक् ॥ अवतेर्धातोर्मुक्प्रत्ययो भवति ॥ अवतीति अव रक्ष पालने । किस्वात्संप्रसारणमुकारः ॥ ओम् ओमौ ओमः ॥ अतिबृंहिभ्यां मनिण् ॥ अत सातत्यगमने । सततं अततीति आत्मा वा अतति अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति आत्मा ॥

अव रक्ष पालने । अवधातुः रक्षधातुश्च द्वावपि पालने । अव मुक्प्रत्ययः किस्वात्संप्रसारणम् । किस्वकरणसामर्थ्यादेव व्यञ्जनस्यापि वकारस्य संप्रसारणं भवति वस्य उः । 'उ ओ' 'मोनुस्वारः' ओम् । अवतीति ओम् । जनपूर्वः जनान् अवतीति जनौम् । विश्वमवतीति विश्वौम् । जनौ जनौमौ जनौमः जनौममित्यादि । यद्वा । अवतीति ओम् अव्ययमेतत् । अतधातुः सातत्यगमने । निरन्तरगमन इत्यर्थः । अतति सातत्येन गच्छति

तांस्तान् भावानित्यात्मा । अत मनिण्प्रत्ययः । इकार उच्चारणार्थः । णकारो वृद्ध्यर्थः । मन् 'अत उपधायाः' 'स्वरहीनं०' आत्मन् प्रथमैकवचने 'नोपधायाः' इति दीर्घः । 'हसेपः०' 'नाम्नो नो०' ॥

**बृहि वृद्धौ ॥ मन्युपधाया ऋ रः ॥ मनिप्रत्यये परे उपधाया ऋकारस्य रेफो भवति ॥ बृंहतीति ब्रह्मा ॥ घृधृपदो मः ॥ घृ क्षरणे दीप्तौ च । घरतीति वा घ्रियते इति घर्मः ॥ धृ धारणे । धरतीति वा ध्रियतेऽसौ धर्मः ॥ पद गतौ । पद्यते तत् पद्मम् ॥ ऋ स्तु सू हृ हु मृ क्षि क्षु भा मा या वा जक्ष रै नी श्यैङ् पद् एभ्यो मः प्रत्ययो भवति ॥ ऋ गतौ । ऋच्छतीति अर्मः नेत्ररोगः ॥ स्तौतीति स्तोमः ॥ षूङ् प्रसवे । सूतेऽसौ सोमः । हर्मः ॥ जुहोतीति होमः ॥ म्रियते इति मर्मः ॥ क्षि निवासगत्योः । क्षयतीति क्षेमः ॥ टुक्षु क्षब्दे । क्षौतीति क्षोमः ॥ भातीति भामः ॥ मातीति मामः ॥ यातीति यामः ॥ वातीति वामः ॥ जक्ष भक्ष हसनयोः । जक्ष्मः । रायतीति रामः ॥ नेमः ॥ श्यैङ् दीप्तौ । श्यायतीति श्यामः ॥ पद्मः ॥ भीध्वोर्वा मक् ॥ बिभेत्यस्मादिति भीमः । धूयतेऽसौ धूमः ॥ ध्वादेरुलिक् ॥ ध्वादेर्धातोरुलिक् प्रत्ययो भवति ॥ धूनोति वा धूयतेऽसौ धूलिः । अगि लघि रघि गत्यर्थाः इदितः । अङ्गते सा अङ्गुलिः ॥**

बृहि बृहि वृद्धौ । बृह् बृह् । बृंहति वेति ब्रह्म । मन्प्रत्ययः । 'मन्युपधाया ऋरः' मनि परे उपधासंबन्धिन ऋकारस्य रो भवति । बृइत्यस्य ब्र । ब्रह्मन्निति सिद्धम् । प्रथमैकवचने 'नपुंसका०' 'नाम्नो नो०' पुंलिङ्गे ब्रह्मा स्वयं ब्रह्मत्वात् अन्येषां बृंहणत्वाद्व्यापकत्वाद्वा ब्रह्मा । आगमजमनित्यमिति न्यायात् 'इदितो०' इति नुम् न ॥ धृञ् धारणे धृ मप्रत्ययः । 'गुणः' 'राद्यपो द्विः' जलतुम्बिका० । प्रथमैकवचने 'स्रोर्विं०' धारणात् धर्मः ॥ 'ध्वादेरुलिः' ध्वादेर्धातोः उलिप्रत्ययो भवति किच्च । धूञ् कम्पने । धू उलिप्रत्ययः । 'सवर्णे०' धूलिः धूयते वातादिना इति धूलिः । अगि रगि लगि गत्यर्थाः । अग् उलिप्रत्ययः । 'इदितो०' इति नुमागमः । 'नश्चापदान्ते०' 'स्वर०' प्रथमैकवचने 'स्रोर्विं०' अङ्गुलिः ॥

**भविष्यदर्थे णिनिः ॥ आगमिष्यतीति आगामी । भविष्यतीति भावी ॥ शसादेः करणे त्रक् ॥ शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति ॥ सर्वधातुभ्यस्त्रमनौ ॥ शस् हिंसायाम् । शंसति वा शस्यते अनेनेति शस्त्रम् । शास् अनुशिष्टौ । शिष्यते अनेनेति शास्त्रम् । असु क्षेपणे । अस्यते अनेनेति अस्त्रम् । पा पाने । पीयते अनेनेति पात्रम् । नीयते अनेनेति नेत्रम् । दाप् लवने । दायते अनेनेति दात्रम् ॥ [ युंवहागिभ्यो निः ॥ एभ्यो धातुभ्यो निःप्रत्ययो भवति ॥ यु मिश्रणे । यौतीति योनिः । वहतीति वह्निः ।**

---

१ अस्य व्याख्याऽग्रे ४४४ पृष्ठे वर्तते ॥

अङ्गतेऽसौ अग्निः ॥ इदिचदिशकिरुदिभ्यो रः ॥ एभ्यो रप्रत्ययो भवति ॥ इदि परमैश्वर्ये । चदि आह्लादने दीप्तौ च ॥ इन्दत्यसौ इन्द्रः । चन्दतेऽसौ चन्द्रः । शक्नोतीति शक्रः । रोदितीति रुद्रः ॥ पुष्पादेरः ॥ पुष्पादेर्धातोरः प्रत्ययो भवति ॥ पुष्प विकसने । पुष्पति तत् पुष्पम् । फल निष्पत्तौ । फलति तत् फलम् । मूल व्याप्तौ । मूलति तत् मूलम् ॥ रघ सामर्थ्ये ॥ उप्रत्ययः ॥ रघते शास्त्राणां शत्रूणां च अन्तं गच्छति प्राप्नोतीति रघुः ॥

गम्लृ गतौ । गम् । आङ्पूर्वः । 'भविष्यदर्थे णिनिः' इति णिनिप्रत्ययः । णित्त्वाद्वृद्धिः । 'स्वरहीनं०' 'इनां शौ सौ' 'हसे पः०' 'नाम्नो नो०' आगमिष्यतीत्यागमी । भू णिन् वृद्धिः । 'औ आव्' भविष्यतीति भावी ॥

ईश् ऐश्वर्ये । ईष्टे इत्येवंशीलः ईश्वरः । भासृ दीप्तौ । भासते इत्येवंशीलः भास्वरः । पिसृ गतौ । पिसतीत्येवंशीलः पेस्वरः । कस् गतौ । कसतीत्येवंशीलः कस्वरः ॥

ईश ऐश्वर्ये । ईष्टे ऐश्वर्यं करोतीति ईश्वरः । ईश् वरप्रत्ययः । 'स्वरहीनं०' एवं तिष्ठतीति स्थावरः । ष्ठा गतिनिवृत्तौ । 'आदेः ष्णः स्नः' स्था वरप्रत्ययः । 'स्रोर्विं०' भास्वरः । 'इण्नश्जि०' इति करप् । पित्त्वात्तुक् । जयतीत्येवंशीलो जित्वरः । एतीत्येवंशील इत्वरः । नश्यतीत्येवंशीलो नश्वरः ॥

गमेर्डोः ॥ गमेर्धातोर्डोः प्रत्ययो भवति ॥ गच्छतीति गौः ॥ ग्लानुदिभ्यां डौः ॥ ग्लायतीति ग्लौः । नुदतीति नौः । नुद प्रेरणे ॥ [ष्ट्यै स्त्यै शब्दसंघातयोः ॥ स्त्यायतेर्ड्रट् ॥ डित्त्वाट्टिलोपः । संयोगान्तस्य लोपः टित्त्वादीप् । स्त्यायति समूहं करोति सा स्त्री ॥ लक्ष दर्शनाङ्कनयोः ॥ लक्षतेरी मुट् च ॥ लक्षतेर्धातोरिः प्रत्ययो भवति तस्य ईप्रत्ययस्य मुडागमश्च ॥ लक्ष्यते पुमान् अनया सा लक्ष्मीः ॥ ]

'गमेर्डोः' । गम् डोप्रत्ययः । टिलोपः । 'स्वरहीनं०' 'ओरौ' 'स्रोर्विं०' गच्छतीति गौः ॥ 'नुदिग्लैभ्यां डौ' नुदति नुद्यते वा नौः । ग्लायतीति ग्लौः चन्द्रः ॥

राजादेः कन् ॥ राजादेर्धातोः कन् प्रत्ययो भवति ॥ राज् धन्व यु द्यु प्रतिदिव् वृष् तक्ष् दंश् पचि षप् अशूङ् तु मह एते राजादयः ॥ राजृ दीप्तौ । राजतेऽसौ राजा ॥ धन्व गतौ । धन्वतीति धन्वा ॥ यु मिश्रणे । यौतीति युवा ॥ द्यु गतौ । द्योतीति द्युवा ॥ प्रतिदीव्यतीति प्रतिदिवा ॥ वृषु वृद्धौ । वर्षतीति वृषा ॥ तक्षू तनूकरणे । तक्ष्णोतीति तक्षा ॥ दंशन्तीति

१ अग्रेऽप्यायास्त्ययं पाठः । व्याख्याऽप्यत्र नैवोपलक्ष्यते ॥ परंतु पाठोऽत्रैवोचितः, नाम्नि कृत्प्रक्रियायाम् ॥

दश ॥ पचि विस्तारे ॥ पचि संख्याने । इदित् । जसूशसोर्लुक् । पञ्चन्तीति पञ्च ॥ षप् संबन्धे । षप् गणने । अशूङ् व्याप्तौ । षपेरशेः किति तुग् वक्तव्यः ॥ सपन्ति ते सप्त । अश्नुवते इति अष्ट ॥ णु स्तुतौ ॥ अस्य गुणः ॥ नुवन्ति ते नव । मह पूजायाम् ॥ अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे ॥ मह्यते इति मघवा । इति राजादयः ॥

**इस्मन्त्रासुकः सर्वधातुभ्यः** ॥ सर्वधातुभ्य इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति ॥

'राजादे०' ॥ राजृ दीप्तौ इत्यादेर्धातोः कन्प्रत्ययो भवति । राजते इति राजा । राजृ अन्प्रत्ययः । 'स्वरहीनं०' 'नोपधायाः' 'हसेपः०' 'नाम्नो नो०' ॥ यु मिश्रणे । यु अन्प्रत्ययः । 'नुधातोः' इत्युव् । 'स्वरहीनं०' यौतीति युवा ॥

**वचादेरस्** ॥ वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽस्प्रत्ययः ॥ उच्यते इति वचः । मह्यते इति महः । पीङ् पाने । पीयते तत् पयः ॥ **पिबतेरसि** ॥ पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च ॥ पीयते इति पयः ॥ तिज् निशाने क्षमायां च । तितिक्षतीति तेजः । तप्यते इति तपः ॥ रञ्ज रागे । असि नलोपो वाच्यः ॥ रजते तत् रजः । रक्ष हिंसायाम् । रक्षतीति रक्षः ॥ **अर्चिरुचिशुचिहुसृपिच्छादिछृदिभ्य इस्** प्रत्ययो भवति ॥ अर्चिरुची दीप्तौ । अर्चतीति अर्चिः । गुणः । रोचिः । शोचिः । हूयते इति हविः । सर्पिः ॥ छादेरिस्मन्त्रघञ्क्विप्सु ह्रस्वो वाच्यः ॥ छद संवरणे । चुरादिः । छादयतीति छदिः ॥ उच्छृदिर् दीप्तिदेवनयोः । छृणत्तीति छर्दिः ॥ **सर्वधातुभ्यस्त्रमगौ** ॥ तनु विस्तारे । तनोतीति तन्त्र् तन्त्रम् ॥ मन ज्ञाने । मन्यते इति मन्त्रः ॥ यम उपरमे । यच्छतीति यन्त्रः ॥ छदि संवरणे । ञ्यन्तः । छादयतीति छत्रम् ॥ क्रियते तत्कर्म ॥ वृञ् आच्छादने । वृणोतीति वर्म । मर्म । दाम । घर्म । छादयतीति छद्म ॥ **धनार्तिचक्षिङ्पॄवपितपिजनियजिभ्य उस्** प्रत्ययो भवति ॥ धन शब्दे । धनतीति धनुः ॥ ऋ गतौ । गुणः । अरुः ॥ चक्षिङ् व्यक्तायां वाचि । चष्टे इति चक्षुः । पिपर्तीति परुः । वपतीति वपुः । तपतीति तपुः । जायते इति जनुः । यजतीति यजुः ॥ **अवतॄस्तॄञ्तन्त्रिकण्ठिभ्य ईः** ॥ अवतीति अवीः । तरतीति तरीः । स्तॄञ् आच्छादने । स्तृणोतीति स्तरीः । तन्त्रि धारणे । तन्त्रयति वा तन्त्रयते सा तन्त्रीः । कण्ठ अवधारणे । कण्ठयतीति कण्ठीः ॥

'वचादेरस्' ॥ वच् असप्रत्ययः । स्वरहीनं०' प्रथमैकवचने 'नपुंसकात्स्यमोर्लुक्' 'स्रोर्विं०' वचः वचसी वचांसि । एवं मह दीप्तौ । महः । उच्यते इति वचः । मह्यत इति महः ॥ कादीनामिः । कु शब्दे । इप्रत्ययः । कौतीति कविः । पुनातीति पविः । हरतीति हरिः । 'मनेरुच' मन ज्ञाने इत्यस्य इप्रत्ययः अकारस्य चोकारः । मनुते तत्त्वमिति मुनिः ॥ मुहो खः मुरादेशश्च । मुह्यतीति मूर्खः ॥ 'पुरः कुषन्' पॄ पालनपूरणयोः इत्यस्य कुषन् प्रत्ययः । पॄ उषप्रत्ययः । 'पोरुर्' पिपर्ति पूर्यते वा पुरुषः ॥ माप्रभृतिभ्यः सः । मीयत इति मासः । ददात्यात्मानं दासः ॥ माप्रभृतिभ्यो यः । मातीति माया । जन्यते अपत्यमिति जाया । जनेर्जादेशः । 'दधातेर्ये नुट्' दधाति सत्त्वानीति धान्यम् ॥ पतिचण्डिभ्यामालच् । वृद्धिः पतत्यस्मिन्निति पातालम् । चडि कोपेऽतश्चण्डालः ॥ खर्जादिभ्यः ऊः । खर्ज व्यथने । खर्जूः ॥ वहेर्धश्च । वहति गृहभारं वधूः । अवितृतन्त्रिभ्यः ईः । अवीः तरीः तन्त्रीः ॥ ऊतियूतिजूतिसातिहेतिकीर्तयश्च निपात्याः । अवनम् ऊतिः । यु सिश्रणे । यूतिः । हन्यते अनयेति हेतिः । कीर्तनं कीर्तिः । कृत संशब्दे ॥ शॄवन्द्यो रारुः । शॄ हिंसायाम् । हिंसनशीलः शरारुः । वन्दनशीलो वन्दारुः । वद आरुप्रत्ययः । 'इदितो०' इति नुम् 'स्वरहीनं०' ॥ भृञादिभ्यो यण् । डुभृञ् यण्प्रत्ययः । वृद्धिः । जलतुम्बिका० । भ्रियते इति भार्या । एवं ऋ गतौ । आर्या स्त्रीत्वादाप् ॥ 'युवहअगिभ्यो निः' योनिः वह्निः अग्निः ॥ 'इदिचदिशकिरुदिभ्यो रः' । इन्द्रः शक्रः । रुद्रः इत्यादि ॥

**सौकर्ये केलिनः ॥ सुखेन भिद्यते तत् भिदेलिमं वा भेत्तुं सुकरं भिदेलिमं । किं ? काष्ठम् । सुखेन पच्यन्ते इति पचेलिमा आढक्यः वा पक्तुं सुकराः पचेलिमाः के ? तण्डुलाः ॥**

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥**
**उणादयोऽपरिमिता येषु संख्या न गम्यते ।**
**प्रयोगमनुसृत्याद्धा प्रयोक्तव्यास्ततस्ततः ॥ २ ॥**

**इति कृदन्ते उणादिप्रक्रिया ॥ ५ ॥**

'सौकर्ये केलिमः' ॥ सुखेन क्रियते इति सुकरम् तस्य भावः सौकर्यं तस्मिन्नर्थे केलिमप्रत्ययो भवति । ककारो गुणनिषेधार्थः । एलिम इति । भिदिर् विदारणे । सुखेन भिद्यत इति विग्रहे एलिमप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने 'अतोऽम्' भिदेलिमं काष्ठम् । पच् एलिमप्रत्ययः 'स्वरहीनं०' 'आबतः स्त्रियाम्' प्रथमाबहुवचने अस् । 'सवर्णे०' 'स्रोर्विं०' सुखेन पच्यन्ते इति पचेलिमाः आढक्यः । आढकी धान्यविशेषः ॥ उपसंहारमाह—उणादयः प्रत्ययाः अपरिमिताः संख्यारहिता इत्यर्थः । यो यत्र प्रयोगः संभवति तत्र तं प्रयोगमनाश्रित्याश्रित्य वा प्रयोगानुसारेण प्रयोक्तव्या इत्यर्थः ॥ इत्युणादयः ॥ ५ ॥

## भावाधिकारप्रक्रिया ६

**तुम् तदर्थायां भविष्यति ॥ धातोर्भविष्यति काले तुम् प्रत्ययो भवति तदर्थायां क्रियायां प्रयुज्यमानायाम् ॥ भुज पालनाभ्यवहारयोः । भोक्ष्यतीति भोक्तुं व्रजति । पठिष्यतीति पठितुं ईष्टे । स्तोष्यतीति स्तोतुं ईहते । स्थातुं ईहते ॥ [ तुमर्थे वुण् वक्तव्यः ॥ द्रक्ष्यतीति द्रष्टुम् । कृष्णं द्रष्टुं व्रजति । कृष्णदर्शको व्रजति ॥ ]**

'तुम् तदर्थायां भविष्यति' ॥ तुम् प्रथमैकवचनान्तम् । स एवार्थो यस्याः सा तदर्था तस्यां सप्तम्येकवचनान्तम् । 'आम्ङे' 'ङितां यट्' 'स्वर०' भविष्यति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ धातोर्भविष्यति काले तुम्प्रत्ययो भवति यस्याग्रे तुम्प्रत्ययो भवति स एव धात्वर्थ एवार्थः प्रयोजनं यस्याः सा तस्यां तत्संबन्धार्थवाचिकायां तत्प्रयोजनायां क्रियायां वाच्यमानायां सत्याम् ॥ भुज पालनाभ्यवहारयोः । भुज् तुम्प्रत्ययः । 'चोः कुः' 'उपधाया लघोः' 'खसे चपा झसानाम्' 'स्वरहीनं०' । तुम्प्रत्ययान्तोऽव्ययम् । भोक्तुं व्रजति । अत्र भुज्धात्वर्थप्रयोजने व्रजतीति क्रिया प्रयुज्यते ॥ पठ् तुम्प्रत्ययः । 'कृतः' इतीडागमः । 'स्वरहीनं०' पठितुमीष्टे समर्थो भवति ॥ ष्णा शौचे । 'आदेः ष्णः स्नः' स्ना तुम्प्रत्ययः स्नातुमीहते वाञ्छति ॥

**कालसमयवेलासु तुम् ॥ भोक्तुं कालः । अध्येष्यतीति अध्येतुं समयः । स्तोष्यतीति स्तोतुं वेला ॥ घञ् भावे ॥ धातोर्भावे घञ् प्रत्ययो भवति ॥ चजोः कगौ घिति ॥ पच्यते तत् पचनं पाकः ॥ त्यज् वयोहानौ । त्यज्यते तत् त्यजनं त्यागः ॥ भज्यते तत् भजनं भागः ॥ इज्यते तत् यजनं यागः ॥ विभज्यते तत् विभजनं विभागः ॥ युजिर् योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः ॥ अनूच्यते तत् अनुवचनं अनुवाकः ॥ इण् गतौ [ नन्दादित्वाद्युः[1] । ततोऽनादेशः । गुणः] वृद्धिः । अयनं आयः ॥ भूयते तत् भवनं भावः ॥ आतो युक् । दीयते तत् दानं दायः । पानं पायः ॥ भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः । रज्यते अनेनेति रञ्जनं वा रागः ॥ भावे किम् । रज्यतेऽस्मिन्निति रङ्गः ॥ रभ राभस्ये ॥ रभलभोः स्वरे णाद्यपौ विना नुम् वाच्यः ॥ आरम्भः ॥ अञ्चु गतिपूजनयोः । परितः अञ्चतीति पर्यङ्कः ॥**

'कालवेलासमयेषु च तुम् वक्तव्यः' ॥ भोक्तुं कालः भोक्तुं वेला भोक्तुं समयः ॥ 'घञ् भावे' ॥ घञ् प्रथमैकवचनान्तम् । भावे सप्तम्येकवचनान्तम् । 'अ इ ए' धातोर्भावे कर्मरहितेऽर्थे केवलधात्वर्थ एव घञ् प्रत्ययो भवति । ञकारो वृद्ध्यर्थः । घकारो घित्कार्यार्थः । डुपचष् पाके । घञ् प्रत्ययः । 'अत उपधायाः' पाच् अ इति स्थिते । 'चजोः कगौ०' चश्च ज् च चजौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'ङ्णोर्वि०' कश्च गश्च

---

१ व्याख्याया अनुपलम्भात्केनचिद् वर्धितः पाठो भवेत् ॥ २ अप्रकृतमनुपयुक्तं च ॥

कगौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' घ इत् यस्य स घित् तस्मिन् घिति सप्तम्येकवचनान्तम् । 'स्रोर्वि०' घिति परे चकारस्य ककारः । जकारस्य गकारः । अनेन चस्य कः । 'स्वरहीनं०' 'स्रोर्वि०' पचनं पाकः ॥ त्यज हानौ त्यज् घञ्प्रत्ययः । आ वृद्धिः । 'चजोः कगौ घिति' इति जस्य गः । 'स्वरहीनं०' त्यजनं त्यागः ॥ भज सेवायाम् । विपूर्वः । घञ् । 'चजोः कगौ०' वृद्धिः । 'स्वरहीनं०' विभजनं० विभागः ॥ इण् गतौ इ घञ् । ऐ वृद्धिः । 'ऐ आय्' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' ॥ अयनम् आयः । अय गतौ । अयनमायः । ये गत्यर्थास्ते ज्ञानार्थाः । एवं भवनं भावः । डुदाञ् दाने । दा घञ्प्रत्ययः । 'आतो युक्' स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' दानं दायः ॥ एवं विस्तरणं विस्तारः ॥

**संज्ञायामकर्तरि च ॥ धातोः कर्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञायां विषये ॥ कार्यं कार्यं प्रति आह्रियते इति प्रत्याहारः । दीयते अस्मिन् इति दायः । पीयते अस्मिन् इति पायः । विक्रियते अनेनेति विकारः ॥ मृजूष् शुद्धौ । अपामृज्यते अनेनेति अपामार्गः ॥ लिख् आलेखने । लिख्यतेऽस्मिन्निति लेखः ॥ आचर्यतेऽस्मिन्निति आचारः । उपाधीयतेऽस्मादिति उपाध्यायः ॥**

सूत्रम्—'संज्ञायामकर्तरि च' ॥ संज्ञायां सप्तम्येकवचनान्तम् । 'आम्ङे' 'ङितां यट्' 'सवर्णे दीर्घः०' न कर्ता अकर्ता तस्मिन् अकर्तरि सप्तम्येकवचनान्तम् । 'ङौ' इति अर् । 'स्वरहीनं०' च प्रथमैकवचनान्तम् । 'अव्य०' ॥ संज्ञायां विषये कस्यापि नाम्नि वाच्ये सति कर्तृवर्जिते कारके भावेऽर्थे कर्मार्थे च घञ्प्रत्ययो भवति । अनुबन्धादिः प्राग्वत् । उदाहरणम्—हृ प्रत्याङ्पूर्वः प्रतिकार्यमाह्रियत आनयत इति प्रत्याहारः । घञ्प्रत्ययः । वृद्धिः 'स्वरहीनं०' 'स्रोर्वि०' ॥ एवं विक्रियते विकारः । दीयत इति दायः ॥ वस्यते अस्मिन्निति वासः ॥

**स्वरादः ॥ इउऋवर्णान्तेभ्यो धातुभ्यः अः प्रत्ययो भवति भावादौ ॥ घञोऽपवादः । संचीयतेऽसौ संचयः । चयनं चयः । जीयते इति जयः । नीयते तत् नयनं नयः । उन्नीयते इति उन्नयः । नूयते तत् नवनं नवः । लवनं लवः । स्तूयते तत् स्तवनं स्तवः ॥ कॄ विक्षेपे । कीर्यते इति करः । गरः ॥ नॄ विक्षेपे । न्रियते विक्षिप्यते कामादिभिरिति नरः ॥ षिञ् बन्धने । विशेषेण सीयते बध्यते अनेनेति विषयः ॥**

सूत्रम्—'स्वरा०' ॥ स्वर० पञ्चम्येकवचनम् । ङसिरत् । 'सवर्णे' अ प्रथमैकवचनान्तम् । 'स्रो०' 'चपा अबे जबाः' 'स्वर' ॥ वृत्तिः सुगमा । चिञ् चयने चि अप्रत्ययः । 'गुणः' 'ए अय्' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' चयनं चयः । अत्र भावे संपूर्वः । संचीयत इति संचयः अत्र कर्मणि ॥ ष्टुञ् स्तुतौ । 'आदेः ष्णः स्नः' स्तु । 'स्वरादः' इति अप्रत्ययः 'गुणः' 'ओ अव्' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' स्तवनं स्तवः ॥ एवं भवनं भवः ।

अनुभवनमनुभवः ॥ णु स्तुतौ । नवनं नवः ॥ णीञ् प्रापणे 'आदेः ष्णः स्नः' नी उत्पूर्वः । उत्प्राबल्येन ऊर्ध्वं वा नयनं प्रापणमुन्नयः अप्रत्ययः गुणः 'ए अय्' 'स्वरहीनं०' प्रथमैकवचने 'स्रो०' ॥ नॄ विक्षेपे । त्रियते विक्षिप्यते कर्मादिभिः अथ कामादिभिः इति नरः । 'स्वरादः' इति अप्रत्ययः । 'गुणः' 'स्वरहीनं' प्रथमैकवचने 'स्रोर्वि०' ॥

**मदामः ॥ मदादीनां अः प्रत्ययो भवति भावादौ कर्तृवर्जिते ॥ मदी हर्षे । मद्यते तत् मदनं मदः । प्रमद्यते अनेनेति प्रमदः । प्रमद्यते पुरुषोऽनया सा प्रमदा । पण्यते तत् पणनं पणः ॥ शमु दमु उपशमे । शम्यतेऽसौ शमः । दमनं दमः ॥ श्रम खेदे । श्रम्यते इति श्रमः । भ्रमः ॥ यमु उपरमे । यम्यते इति यमः । दीव्यति विश्वमनेनेति देवः । जङ्गम्यतेऽसौ जङ्गमः ॥ हिसि हिंसायाम् ॥ सिंहे वर्णविपर्ययश्च ॥ चकारादः प्रत्ययः । हिनस्तीति सिंहः ॥**

सूत्रम्—'मदामः' ॥ मदां षष्ठी बहुवचनान्तम् ।'स्वरहीनं०' 'मोऽनुस्वारः'। अः प्रथमैकवचनान्तम् । मदादीनां धातूनामप्रत्ययो भवति भावे कर्मणि च । मदी हर्षे मद् । अप्रत्ययः । 'स्वरहीनं०' 'स्रोर्वि०' मदनं मदः अत्र भावे । एवं प्रमद्यते प्रकर्षेण हृष्टः क्रियते अनयेति प्रमदा स्त्रीत्वादाप् । अत्र कर्मणि । पणधातुः व्यवहारे स्तुतौ च । पण अप्रत्ययः । 'स्वरहीनं०' पणः । शम दम उपशमे । शमः दमः । यम उपरमे । यमः विस्तरः । दीव्यते विश्वमनेनेति देवः । षिञ् बन्धने । 'आदेः ष्णः स्नः' सि विपूर्वः । विशेषेण सिनीते बध्नाति पुरुषमीश्वरोऽनेनेति विषयः । अप्रत्ययः 'गुणः' 'प्रादेश्च तथा तौसुनमाम्' प्रथमैकवचने 'स्रोर्वि०' ॥ हिंसतेर्धातोः अप्रत्ययो भवति वर्णविपर्ययश्च भवति । 'सिंहे वर्णविपर्ययः' इति प्रागुक्तत्वात् । हिंस हिंसायाम् । हिंस् हिनस्तीति सिंहः । अप्रत्ययः वर्णविपर्ययः । हस्य स्थाने सः । सस्य स्थाने ह इति । 'स्वरहीनं' 'स्रोर्वि०' ॥

**मूर्तौ घनः ॥ मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्ते रः प्रत्ययो भवति भावादौ हन्तेर्घनादेशश्च ॥ दधिकाठिन्यं हन्यते इति दधिघनः । परिच्छिन्नं सैन्धवं हन्यते इति सैन्धवघनः । हनो वधादेशश्चाप्रत्ययः ॥ हन्यते इति वधः ॥**

सूत्रम्—'मूर्तौ घनः' ॥ मूर्ताविति मूर्तिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' । घनः प्रथमैकवचनान्तम् 'स्रोर्वि०' ॥ मूर्तौ कोऽर्थः' काठिन्येऽर्थे पुनः परिच्छेदे परिमाणेऽर्थे स्तोकार्थे वा ज्ञानविशेषे वा अभिधेये वाच्ये सति हन्तेर्धातोः अप्रत्ययो भवति हन्तेश्च घनादेशः । हन् एकत्र दधिपूर्वः द्वितीये संबन्धपूर्वः अप्रत्ययः । घनादेशः । 'अदे' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' कठिनं दधि दधिघनः । परिच्छिन्नमेतावत्स्तोकं वा सैन्धवं सैन्धवघनः ॥

**द्वितोऽथुः ॥ द्वितो धातोरथुः प्रत्ययो भवति भावादौ ॥ टुवेपृ कम्पने ।**

वेप्यते अनेनेति वेपथुः ॥ टुनदि समृद्धौ । नन्द्यते अनेनेति नन्दथुः ॥ टुवप् बीजतन्तुसन्ताने । उप्यते इति वपथुः ॥ टुक्षेपृ क्षेपणे । क्षेप्यते अनेनेति क्षेपथुः । टुओश्वि गतिवृद्ध्योः । श्वयथुः । टुक्षु शब्दे । क्षूयते इति क्षवथुः । टुवम् उद्गिरणे । वमथुः ॥

सूत्रम्—'ट्वितोऽथुः' ॥ टु इद्यस्य स ट्वित् तस्मात् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' अथुः प्रथमैकवचनान्तम् । 'स्नोर्वि०' 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' ॥ टु इद्यस्य स तथा धातोः अथुप्रत्ययो भवति भावे । टुवेपृ कम्पने । वेप् अथुप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने 'स्नोर्वि०' वेपथुः ॥ एवं क्षिप प्रेरणे । क्षेपथुः ॥ टुणदि समृद्धौ । नन्दथुः दवथुः ॥ टुक्षु शब्दे । क्षवथुः ॥ टु ओश्वि गतिवृद्ध्योः । श्वयथुः ॥ टुवम् उद्गिरणे । वमथुः ॥

**ड्वितस्त्रिमक् तत्कृते ॥ ड्वितो धातोस्त्रिमक् प्रत्ययो भवति तेन धात्वर्थेन कृतेऽर्थे वाच्ये सति ॥ क्रियया निर्वृत्तः कृत्रिमः घटः । संभारेण संभृतं वा निर्वृत्तं संभृत्रिमं युद्धम् । पाकेन निर्वृत्तं पक्त्रिमं फलम् । याचनेन निर्वृत्तं याचित्रिमं किं ? विप्रधनम् ॥**

सूत्रम्—'ड्वितस्त्रिमक्' ॥ ड्वितः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्वि०' त्रिमक् प्रथमैकवचनान्तम् । 'हसेपः' तत्कृते सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ डु इत् अनुबन्धो यस्य स ड्वित् तस्माद्धातोः त्रिमक् प्रत्ययो भवति तेन धात्वर्थेन साधनभूतेन कृते निष्पादितेऽर्थे वस्तुनि वाच्ये सति कृ । क्रियया करणेन निर्वृत्तो निष्पन्न इति कृत्रिमः अस्वाभाविको घटः । अत्र कृधातोरर्थः करणं तेन कृतो निष्पन्नो यो घटरूपोऽर्थः पदार्थस्तस्मिन् वाच्ये सति त्रिमक् प्रत्ययः । ककारो गुणनिषेधार्थः प्रथमैकवचने 'स्नोर्वि०' ॥ एवं डुभृञ् धारणपोषणयोः । संपूर्वः । त्रिमक्प्रत्ययः । प्रथमैकवचने 'अतोऽऽम्' संभारेण जनसमूहेन निर्वृत्तं संभृत्रिमं युद्धम् ॥ डुपचष् पाके । पच् त्रिमक्प्रत्ययः । 'चोः कुः' 'स्वरहीनं०' प्रथमैकवचने । 'अतोऽम्' पाकेन निर्वृत्तं निष्पन्नं पक्त्रिमं फलम् । एवं पक्त्रिमः ओदनः ॥

**नङ्की ॥ धातोर्नङ्की इत्येतौ भवतः भावादौ ॥ यज् याच् यत् विच्छ प्रच्छ स्वप् एभ्यो नङ् प्रत्ययो भवति ॥ स्तोः श्चुभिः श्चुः । असंप्रसारणम् । इज्यते अनेनेति यज्ञः । याच्यते सा याच्ञा । यती प्रयत्ने यत्यते तत् यतनं यत्नः ॥**

सूत्रम्—'नङ्की' ॥ नङ् च किश्च नङ्की प्रथमाद्विवचनान्तम् 'औ यू' 'सवर्णे०' धातोर्नङ् कि इत्येतौ प्रत्ययौ भवतः भावादौ । स्वप् रक्ष यत् प्रच्छि विच्छ याच् यज् एभ्यो नङ् । यती धातुः प्रयत्ने । यत् नङ् प्रत्ययः 'स्वर०' 'स्नोर्वि०' यत्नः ॥

**छः श्वे ॥ छकारस्य शकारादेशो भवति नप्रत्यये परे भावादौ ॥ शकारादेशः संप्रसारणबाधार्थः । विच्छि गतौ । विछ्यते इति विश्नः । प्रच्छ**

ञीप्सायाम् । पृच्छ्यतेऽसौ प्रश्नः । रक्ष्यतेऽसौ रक्ष्णः । सुप्यते इति स्वप्नः ॥

**उपसर्गकर्माधारेषु दाधोः किः ॥** उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति ॥ अन्तर्धीयते इति अन्तर्धिः । आधिः । आदिः । विधिः । आधीयते तत् आधानं आधिः । आदीयते तत् आदानं आदिः । आतोऽनपि इत्याकारलोपः । विधीयते तत् विधानं विधिः । संधीयते तत् संधानं संधिः । उदकं धीयतेऽस्मिन्निति उदधिः ॥ **उदकस्य ॥** उदकशब्दस्य उदादेशो भवति अधिकरणे ॥ पयोधिः । अम्भो निधीयते यत्र स अम्भोनिधिः ॥

प्रच्छ ज्ञीप्सायाम् ॥ प्रच्छ नट् प्रत्ययः । प्रश्नः ॥ सू०—'छः श्ने' ॥ प्रच्छ धातोर्नें परे छकारस्य शकारो भवति संप्रसारणभावश्च । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' पृच्छनं प्रश्नः । याचनं याच्ञा । यज देवपूजा० । यजनं यज्ञः । नट्प्रत्ययः । 'स्तोः श्चुभिः श्चुः' 'जञोर्ज्ञः' प्रथमैकवचने 'स्रोर्विं०' स्वप्नं स्वप्नः । टकार ईवर्थस्तेन द्रवतीति द्रोणी । राजा धीयते यस्यामिति राजधानी ॥ डुधाञ् धारणपोषणयोः । धा विपूर्वः । किप्रत्ययः । ककारः कित्कार्यार्थः । इ । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'स्रोर्विं०' विधानं विधिः । एवं निधिः आधिः संधिः अम्भो निधीयते यत्र सः अम्भोनिधिः । [ ग्रन्थिः आदीयत इति आदिः । ग्रथि ग्रन्थने । ग्रथ् । किप्रत्ययः । 'इदित०' 'नश्चापदान्ते०' 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्विं०' ग्रन्थिः । ] विधि, निधि, संधि, आधि, समाधि, अम्भोनिधि, [ ग्रन्थि, ] एते सर्वेऽपि किप्रत्ययान्ताः पुंलिङ्गे हरिशब्दवत्साध्याः ॥

**भावे युट् ॥** धातोर्भावे युट् प्रत्ययो भवति ॥ युवोरनाकौ । ज्ञायते तत् ज्ञानम् । क्रियते तत् करणम् । दीव्यते तत् देवनम् । दीयते तत् दानम् । भूष अलंकारे । भूष्यते तत् भूषणम् । ह्रियते तत् हरणम् । हूयते तत् हवनम् । उह्यते तत् वहनम् ॥ भाष व्यक्तायां वाचि । भाष्यते तद्भाषणम् ॥ दुष वैचित्ये । दूष्यते तत् दूषणम् । गीयते तत् गानम् । पीयते तत् पानम् । मीयते तत् मानम् ॥ **उदः स्थास्तम्भोः सलोपश्च ॥** उदुपसर्गात्परयोः स्थास्तम्भयोः सकारस्य लोपो भवति ॥ उत्थीयते तत् उत्थानम् । स्तम्भ रोधने । उत्तम्भ्यते तत् उत्तम्भनम् ॥

सूत्रम्—'भावे युट्' ॥ प्रथमैकवचनान्तम् । 'हसेपः' ॥ वृत्तिः कण्ठ्या । युट्प्रत्ययान्ता नपुंसकलिङ्गे भवन्ति । कृ युट्प्रत्ययः । यु 'युवोरनाकौ' 'गुणः०' 'रषृवर्णा णो०' क्रियते इति करणम् ॥ हु दानादनयोः । हूयते इति हवनम् ॥ दुष वैकृत्ये । दूष्यत इति दूषणम् । 'दुषेर्ण्यन्तस्य कृति च कचित्' इति दीर्घः ॥ डुदाञ् दानम् ॥ एवं भाषणमुदाहरणम् इति ॥ उत् उपसर्गपूर्वात् स्थाधातोर्युट्प्रत्ययो भवति सलोपश्च भवति । ष्ठा गतिनिवृत्तौ

---

१, २ अप्रकृतमिदम्, ग्रन्थधातोः प्रकृतसूत्रेऽनुपादानात् ॥

'आदेः ष्णः स्नः' स्था उत्पूर्वः । यु 'युवोरनाकौ' 'उदः स्थास्तम्भोः सलोपश्च' इति सकारस्य लोपः । 'खसे चपा झसानाम्' उत्थानम् । एवं स्तम्भ निरोधे । उत्तम्भनम् उत्थितिः ॥

साधनाधारयोर्युट् ॥ साधने आधारे चार्थे युट् प्रत्ययो भवति ॥ पच्यते अनेनेति पचनः अग्निः । पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली ॥

सूत्रम्—'साधनाधारयोः' ॥ साधनं च आधारश्च साधनाधारौ तयोः सप्तमीद्विवचनान्तम् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्नोर्वि०' साध्यते येन कृत्वा तत्साधनं करणं यत्र आधेये साध्यते स आधारः एतयोः अर्थे युट्प्रत्ययो भवति । पच् 'युवोरकानौ' 'स्वरहीनं०' 'स्नोर्वि०' पच्यते अन्नमनेनेति पचनोऽग्निः । अत्र साधने युट् । पच्यते अस्यामिति पचनी स्थाली युट् टित्त्वादीप् । आधारे युट् । एवमन्येऽप्यूह्याः ॥

ईषद्दुःसुषु खल्यू ॥ ईषदादिषु प्रयुज्यमानेषु खल्यू इत्येतौ प्रत्ययौ भवतः भावादौ ॥ लकारः प्रत्ययभेदज्ञापनार्थः ॥ खकारो गुणविधानार्थः मुमागमार्थश्च ॥ ईषत्सु अकृच्छ्रार्थौ । दुःकृच्छ्रार्थः । ईषदनायासेन भूयते इति ईषद्भवः । दुर्भवः । सुभवः । ईषदनायासेन क्रियते इति ईषत्करः प्रपञ्चो हरिणा । दुःखेन क्रियते इति दुष्करः । सुखेन क्रियतेऽसौ सुकरः । ईषदाढ्यः क्रियते अनेनेति ईषदाढ्यंकरः । दुराढ्यंकरः । आढ्यंकरश्चैत्रो भवता । ईषत् । पीयते असौ ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । युधि संप्रहारे । दुःखेन योधयितुं शक्यः दुर्योधनः । सुखेन योधयितुं शक्यः सुयोधनः । ईषच्छासनः । दुःखेन शासयितुं शक्यः दुःशासनः । सुशासनः ॥ इति कृदन्ते भावाधिकारप्रक्रिया ॥ ६ ॥

सूत्रम्—'ईषद्दुःसुषु खल्यू' ॥ ईषच्च दुश्च सुश्च ईषद्दुःसुवः तेषु सप्तमीबहुवचनान्तम् । 'किला०' खल् च युश्च खल्यू प्रथमाद्विवचनान्तम् । 'औ यू' 'सवर्णे०' ॥ ईषदादिषु ईषत् दुः सु एतेषु त्रिषु पूर्वपदेषु सत्सु धातोः खल्यु एतौ प्रत्ययौ भवतः । खकारः 'खिति पदस्य' इति मुमागमार्थः । लकारः 'इखखि' इति खप्रत्ययाद्भेदज्ञापनार्थः । भू ईषत् दुः सुपूर्वः । खल्प्रत्ययः । अ 'ओ अव्' 'स्वरहीनं०' 'स्नोर्वि०' ईषद्भवतीति ईषद्भवः । एवं दुःखेन भवतीति दुर्भवः । सुखेन भवतीति सुभवः । एवं करोतेः । ईषत्क्रियते इति ईषत्करः । दुःकरः । सुकरः । एवं दुर्जयः सुजयः । दुर्लभः सुलभः । युधधातुः संप्रहारे संग्रामे । युध् दुर् पूर्वः । युप्रत्ययः । 'युवोरनाकौ' इति अनादेशः 'उपधाया लघोः' 'स्वरहीनं०' 'स्नोर्वि०' दुर्योधनः दुःखेन युध्यते अनेनेति दुर्योधनः । एवं सुयोधनः ॥ इति कृदन्ते भावाधिकारप्रक्रिया ॥ ६ ॥

---

## कृत्यप्रक्रिया ७

अथ कृत्यप्रक्रिया ॥ तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम् । कृत्यादि भावकर्मणोरेव ॥ तव्यानीयौ ॥ धातोस्तव्यानीयौ प्रत्ययौ भवतः भावादौ ॥

एध वृद्धौ । एध्यते वा एधितुमर्हं एधितव्यं एधनीयं धनं त्वया । भावस्यै-कत्वादेकवचनं नपुंसकत्वं च । भूयते वा भवितुमर्हं भवितव्यं भवनीयम् । क्रियते वा कर्तुमर्हं कर्तव्यं करणीयम् । आस्यते वा आसितुमर्हं आसितव्यं आसनीयम् । कर्तव्यः करणीयो वा धर्मस्त्वया । या प्रापणे । प्रयातुमर्हं प्रयातव्यं प्रयाणीयम् । ईटो ग्रहाम् । गृह्यते तत् ग्रहीतव्यं ग्रहणीयम् । वृङ् संभक्तौ । व्रियते वा वरितुं योग्यं वरितव्यं वरीतव्यम् वरणीयम् । वृञ् वरणे । व्रियते तत् वरितव्यं वरीतव्यम् वरणीयम् ॥

सूत्रम्—'तव्यानीयौ' ॥ तव्यश्च अनीयश्च तव्यानीयौ प्रथमाद्विवचनान्तम् । 'ओऔ औ' ॥ धातोस्तव्यानीयौ प्रत्ययौ भवतः । अकर्तरि कर्मादिकारके भावे च ॥ भू तव्य-प्रत्ययः 'कृतः' इतीडागमः । 'स्वरहीनं०' 'अतोऽम्' भवनं भवितव्यम् । अत्र भावे तव्यप्र-त्ययः ॥ आस उपवेशने । अनीयप्रत्ययः । 'स्वरहीनं०' 'अतोऽम्' ॥ कृ एकत्र तव्यप्र-त्ययः । एकत्र अनीयप्रत्ययः । स्वरान्तत्वान्नेट् । 'स्वरहीनं०' कर्तव्यं करणीयम् । अत्र कर्मणि । क्रियते इति कर्तव्यं करणीयम् ॥ ग्रह् तव्यप्रत्ययः । 'कृतः' इतीडागमः । ग्रहितव्य इति स्थिते । सूत्रम्—'ईटो ग्रहाम्' ॥ ई प्रथमैकवचनान्तम् । सांकेतिकम् । इटः षष्ठ्येकवचनान्तं 'स्वरहीनं०' 'स्रोर्वि०' । ग्रहां षष्ठीबहुवचनान्तं 'स्वर०' 'मोऽनुस्वारः' ॥ ग्रहादीनां ग्रह् वृञ् वृङ् इत्यादीनामिटः ईकारो भवति नतु णबादौ । तेन जग्रहिथेत्यादौ न । अनेन इकारस्य ईकारः । ग्रहीतव्यम् ॥ वृञ् धातुः संभक्तौ संसेवायाम् । तव्यप्र-त्ययः । 'कृतः' इतीडागमः । 'गुणः' 'स्वरहीनं०' 'अतोऽम्' 'ईटो ग्रहाम्' वरीतव्यम् ॥

स्वराद्यः ॥ स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ ॥ चीयते वा चेतुमर्हं चेयम् । नेयम् । जेयम् । मीयते तत् मेयम् ॥ असरूपोऽपवादः प्रत्ययोऽ-स्त्रियां वा बाधकः सरूपस्तु नित्यम् ॥ चीयते वा चेतुमर्हं चेतव्यं चयनीयम् । चिकीर्ष्यते वा चिकीर्षितुमर्हं चिकीर्ष्यम् । दातुमिच्छतीति दित्सति वा दित्स्यते इति दित्स्यम् ॥ क्षय्यजय्यौ शक्यार्थे निपात्येते ॥ क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । अन्यत्र क्षेयं पापं जेयं मनः । क्षय्यजय्यौ चेति चकारादजर्यमिति निपात्यते । न जीर्यतीत्यजर्यं संगतम् ॥

सूत्रम्—'स्वराद्यः' ॥ स्वरात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' यः प्रथमैकवच-नान्तम् । 'स्रो०' 'चपा अबे जबाः' 'स्वरहीनं०' सिद्धम् । उदाहरणम् । चिञ् चयने । यप्रत्यये 'गुणः' प्रथमैकवचने 'अतोऽम्' 'मोऽनुस्वारः' चेयम् । एवं णीञ् प्रापणे । 'आदेः ष्णः स्नः' नीयप्रत्ययः । 'गुणः' नेयम् । क्रय्यजय्यौ एतौ द्वौ शक्यार्थे निपात्येते । क्रेतुं योग्यं शक्यं वा क्रय्यम् । जेतुं योग्यं शक्यं वा जय्यम् । एतौ निपात्येते । केचित्तु क्षय्य-जय्यौ निपात्यौ तन्मते क्षि क्षये । क्षेतुं शक्यं क्षय्यं जेतुं शक्यं जय्यम् । पक्षे क्षेयं जेयम् ॥

ईच्चातः ॥ आकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च इकारादेशः ॥

दीयते वा दातुमर्हं देयम् । ज्ञातुं योग्यं ज्ञेयम् । गीयते तत् गेयम् । ग्लेयम् । पातुमर्हं पेयम् । धीयते तत् धेयम् ॥

सूत्रम्—'ईच्चातः' ॥ ईत् प्रथमैकवचनान्तं सांकेतिकम् । च प्रथमैकवचनान्तम् । 'अव्यया०' । अतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' सिद्धम् । वृत्तिः सुगमा । अकारस्य चेकारः । डुदाञ् । 'ईच्चातः' इति यप्रत्ययः । आकारस्य ईकारः । 'गुणः' 'स्वरहीनं०' 'अतोऽम्' 'मोऽनुस्वारः' । देयं दीयत इति देयम् । एवं गेयं पेयं गै 'संध्यक्षराणामा' ॥ खनेश्च । खनेर्धातोः यप्रत्ययः । टेश्चेकारः । खन खनने । यप्रत्ययः । खन इत्यस्य खि । 'गुणः' प्रथमैकवचने । 'अतोऽम्' 'मोऽनुस्वारः' खेयम् ॥

पुशकात् ॥ पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ ॥ शप् उपालम्भे आक्रोशे च । शप्यते इति शप्यम् । डुलभष् प्राप्तौ । लब्धुं योग्यं लभ्यम् । यभ् मैथुने । यब्धुं शक्यं यभ्यम् । जप्तुं योग्यं जप्यम् । सरूपत्वात् पक्षे न घ्यण् । शक्यम् । शक् सह गद् मद् चर् यम् तक् शस् चत् यत् पत् जन् हन् शल् रुच् एते शकादयः । षह मर्षणे । सोढुं शक्यं शक्यते सह्यते वा सोढुमर्हं सह्यम् । गद्यते वा गदितुमर्हं गद्यम् । मद्यते वा मदितुमर्हं मद्यम् । चरितुमर्हं चर्यम् । यम्यम् ॥ तक् हसने । तक्यते वा तकितुमर्हं तक्यम् ॥ शसु हिंसायाम् । शसितुमर्हं शस्यम् ॥ चते माने । चते कान्तौ ॥ चत्यते इति चत्यम् ॥ यत्यम् । पत्यम् । जन्यम् ॥ हनो वधादेशो ये ॥ हन्यते वा हन्तुमर्हं वध्यम् । शल् शोभायाम् । शल्यम् । रोचितुं शक्यं रुच्यम् । शक् सामर्थ्ये । शक्ल शक्तौ । शक्यते तत् शक्यम् ॥

सूत्रम्—'पुशकात्' ॥ पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' पवर्गान्तात् पफबभम इत्येतदन्तात् शकादेश्च धातोर्यप्रत्ययो भवति भावादौ । यभ मैथुने । यभ् यभ्यते इति यभ्यं कलत्रम् । पवर्गान्तत्वात् यप्रत्ययः । प्रथमैकवचने 'अतोऽम्' 'मोऽनुस्वारः' एवं लभ्यं जप्यं नम्यम् इत्यादयः पवर्गान्ताः । शक्ल शक्तौ शक् यप्रत्ययः । शक्यम् । मह पूजायाम् । मह् यप्रत्ययः । 'स्वरहीनं०' 'अतोऽम्' 'मोऽनुस्वारः' मह्यम् । एवं षह मर्षणे सह्यम् ॥

ऋहसात् घ्यण् ॥ ऋवर्णान्ताद्धसान्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ ॥ घकारो घित्कार्यार्थः । णकारो वृद्ध्यर्थः । क्रियते वा कर्तुमर्हं कार्यम् । वृञ् वरणे । व्रियते तत् वार्यम् । धार्यम् । चार्यम् । हस् हसने । हास्यम् । ह्रियते तत् हार्यम् । हनो घत् । हन्यते तत् घात्यम् । चजोः कगौ घिति ॥ पक्तुं योग्यं पाक्यम् । वच परिभाषणे ॥ वचेः शब्दसंज्ञायां कुत्वं वाच्यम् ॥ तेन वाक्यम् । अन्यत्र वाच्यम्[1] ॥ यजयाचवचरुचप्रवच-

---

१ टीकाकृतोऽसंमतोऽयं पाठः ॥ २ 'वाच्यं तु कुत्सिते हीने वचनार्हे च वाच्यवत्' इति मेदिनी ।

अर्चत्यजपूजगर्जभुजां घ्यणि कुत्वाभावः ॥ याज्यम् । याच्यम् । वाच्यम् । रोच्यम् । प्रवाच्यम् । अर्च्यम् । त्याज्यम् । पूज्यम् । गर्ज शब्दे । गर्ज्यते तत् गर्ज्यम् । भुज्यते तत् भोज्यम् । ] बाध् हिंसायाम् । बाधितुं योग्यं बाध्यम् । भजितुं योग्यं भाज्यम् ॥

'ऋहसान्तात् घ्यण्' ॥ ऋश्च हसश्च ऋहसं ऋहसमन्ते यस्य स ऋहसान्तस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' घ्यण् प्रथमैकवचनान्तम् । 'हसेपः०' ॥ ऋवर्णान्तात् हसान्ताच्च धातोः घ्यण्प्रत्ययः स्यात् भावादौ । घकारो घित्कार्यार्थः । णकारो वृद्ध्यर्थः । कृ घ्यण्प्रत्ययः । वृद्धिः । 'स्वरहीनं०' 'राद्यपो०—' जलतुम्बिका० । प्रथमैकवचने 'अतोऽम्' । कारणाय अर्हं क्रियते वा तत्कार्यम् । वृञ् वरणे । वार्यम् ॥ वच् परिभाषणे । वचनाय योग्यं वाच्यम् । बध बन्धने । बध् घ्यण्प्रत्ययः । य वृद्धिः । 'स्वरहीनं०' बन्धनाय योग्यं बध्यम् । हस हसने । घ्यण्प्रत्ययः । वृद्धिः । 'स्वरहीनं०' 'अतोऽम्' हास्यम् । डुपचष् पाके । पच् घ्यण्प्रत्ययः । य 'चजोः कगौ०' इति चस्य कः । वृद्धिः पाक्यम् । एवं वाक्यम् उच्यते इति वाक्यम् । घित्वात्ककारोऽपि भवति । अपिशब्दात् कुत्रचित् 'चजोः कगौ०' इति भवति । कुत्रचिन्न भवति कुत्रचिद्विकल्पः । तेन वाच्यं वाक्यं भोज्यं भोग्यम् । इत्यादौ विकल्पः । त्याज्यं पूज्यं रुच्यम् अर्च्यम् इत्यादौ न । प्रयोगानुसारेण कुत्वाभावो ज्ञेयः ॥ अमापूर्वस्य वसतेर्घ्यण् णित्वाद्वृद्धिर्वक्तव्या । अकर्तरि घ्यण् च । अमा सह वसतश्चन्द्रार्कौ अस्यामिति अमावास्या अमावस्या इति विकल्पेन वृद्धिः ॥

य एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः । 'रारो ङसे दृशाम् ।' दर्शनार्हो द्रष्टव्यः । दर्शनीयः । दृश्यः ॥ इङ् अध्ययने । स्वाध्यायोऽध्येतव्यः । स्वाध्यायो नाम वेदः ॥ श्रु श्रवणे । श्रवणार्हः । श्रोतव्यः । श्रोतुं योग्यं श्रवणीयम् ॥ मान पूजायाम् । मानितुं योग्यो मानितव्यः । माननीयः ॥ ध्यै चिन्तायाम् । ध्यानार्हो ध्यातव्यः । ध्यातुं योग्यो ध्यानीयः ॥ मन ज्ञाने । मननार्हो मन्तव्यः । मन्तुं योग्यो मननीयः । सप्रत्ययान्तादपि एते प्रत्यया भवन्ति । नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः । भवितुमेष्टव्यो बुभूषितव्यः । बुभूषणीयः ॥

पुनर्विशेषमाह—य एते इति ॥ एते पूर्वोक्तास्तव्यादयः तव्य, अनीय, य, घ्यण् एते प्रत्यया भावकार्ययोः भावोक्तौ कर्मोक्तौ विहिताः कृताः ते अर्हे योग्यत्वादिविधौ च कर्तव्यार्थोपदेशे च वक्तव्याः । कर्तव्या इत्यर्थः । दृशिर् प्रेक्षणे । दर्शनार्हो द्रष्टव्यः । तव्यप्रत्ययः । 'गुणः' 'रारो ङसे दृशाम्' इति द्रा । 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' दृश् अनीयप्रत्ययः । 'गुणः' जलतुम्बिका० । दर्शनीयः । पुनः दृश् । 'ऋहसात्' इति घ्यण् प्रत्ययः । 'स्वरहीनं०' दृश्यः ॥ ईङ् अध्ययने । ई अधिपूर्वः । अध्येतुं विधेयोऽर्हो वा अध्येतव्यः तव्यप्रत्ययः । 'गुणः' 'इयं स्वरे' 'स्वरहीनं०' स्वाध्यायोऽध्येतव्यः ॥ एवं श्रु श्रवणे । श्रोतुं योग्यः ।

श्रूयेत वा इति श्रोतव्यः ।। मन ज्ञाने । मन्तव्यः ।। ध्यै चिन्तायाम् । ध्यै 'संध्यक्षराणामा' ध्यातव्यः । 'सप्रत्ययान्तादपि०' इच्छार्थसप्रत्ययान्ताद्धातोरपि तव्यादयः प्रत्यया भवन्ति । ध्यै नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः । नितरां ध्यातुमेष्टव्य इति विग्रहे इच्छार्थे सप्रत्ययः । 'द्विश्च' 'पूर्वस्य' 'हसादिः शेषः' 'ह्रस्वः' 'यः से' इति पूर्वाकारस्य इकारः । 'झपानां जबचपाः' धस्य दः । ततः सप्रत्ययान्तात्तव्यप्रत्ययः । 'कृतः' इति डागमः । 'यतः' इत्यकारलोपः । निपूर्वः । निदिध्यासितव्यः । ज्ञा अवबोधने ज्ञा । सप्रत्ययः । द्वित्वादि प्राग्वत् । विजिज्ञासितव्यः । विशेषेण ज्ञातुमेष्टव्यः ।।

**ओरावश्यके घ्यण् ।।** उवर्णान्ताद्धातोरावश्यकेऽर्थे घ्यण् प्रत्ययो भवति ।। **ओदौतोर्यः प्रत्ययः स्वरवत् ।।** धातोरोकारौकारयोर्निमित्तं वा संबन्धी यः प्रत्ययः स स्वरवत् स्यात् ।। समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिकाः ।।

**लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ।**
**समो वा हिततत्योर्मांसस्य पचि युड्घञोः ।। १ ।।**

लूञ् छेदने । लूयते वा लवितुं योग्यः लाव्यः । अवश्यं लाव्यो अवश्यलाव्यः । भोक्तुं कामो यस्य स भोक्तुकामः । श्रोतुं मनो यस्य स श्रोतुमनाः । सम्यक्प्रकारेण हितं सहितं संहितम् । संततं-सततम् । मांसस्य पचनं मांसपचनम् । युड्घञोः पचि परे मांसस्याकारो वा लुम्पेत् । मांसस्य पचनं मांस्पचनम् । मांसस्य पाकः मांस्पकः मांसपाकः ।।

'ओरावश्यके घ्यण्' ।। ओः पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्नोर्विं०' आवश्यके सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ।। उवर्णान्ताद्धातोः आवश्यकेऽर्थे निश्चयार्थे घ्यण्प्रत्ययो भवति भावादौ । भू घ्यण्प्रत्ययः । य णकारो वृद्ध्यर्थः । भो अवश्यंपूर्वः । 'ओदौतोर्यः प्रत्ययः स्वरवत्' ओश्च औश्च ओदौत् तस्मात् । ओकारौकाराभ्यां परो यप्रत्ययस्य यकारः स्वरवत् ज्ञेयः । स्वरवत्त्वात् 'औ आव्' 'स्वरहीनं०' अवश्यंभाव्यम् । एवं लूञ् छेदने । अवश्यं लाव्यम् । मकारलोपार्थमाह—समासे सति अवश्यादीनाम् अवश्यं, तुम्, सम्, मासानां मलोपमिच्छन्ति । मश्च अश्च मः । इति समासस्तेन मकारलोपः । यद्वा अन्तलोपमिच्छन्तीति पठन्ति । श्लोकश्चात्र—लुम्पेदिति । कृत्ये प्रत्यये परे अवश्यंशब्दस्य षष्ठीनिर्दिष्टत्वेति अन्तं मकारं लुम्पेत् । व्याख्या । तव्य, अनीय, य, घ्यण् क्यप्, एतेषां पञ्चप्रत्ययानां कृत्यसंज्ञा ।। तथा काममनसोः शब्दयोः परयोः तुमुशब्दस्यान्तं मकारं लुम्पेत् । तुमिति षष्ठ्यन्तमव्ययम् ।। हिततत एतयोः परयोः सतोः सममित्यस्य मकारं वा लुम्पेत् ।। युट्प्रत्ययसहिते घञ्प्रत्ययसहिते च पचिधातौ परे मांसशब्दस्य अन्तं मकारं वा लुम्पेत् विकल्पेन ।। कृत्यसंज्ञायां संमतिमाह—तव्या० । पाणिनीयानां मते तव्यादीनां कृत्य इति संज्ञा । अवश्यं लाव्यमित्यत्र तव्यप्रत्ययपरत्वात् अवश्यंशब्दस्य मकारलोपः । अवश्यलाव्यमिति सिद्धम् । अवश्यं निश्चयेन लवितुं योग्योऽवश्य-

लाव्यः ॥ तथा भुज तुम्प्रत्ययः । 'उपधाया लघोः' गुणः । 'चोः कुः' 'स्वरहीनं०' भोक्तुं कामोऽभिलाषो यस्य सः भोक्तुकामः ॥ तथा श्रु श्रवणे । तुम्प्रत्ययः । 'गुणः' श्रोतुं मनो यस्य स श्रोतुमनाः । अत्रोभयत्रापि काममनसोः सतोः तुमो मकारलोपः ॥ ओहाङ् गतौ । संपूर्वः । 'क्तक्तवतू' इति क्तप्रत्ययः । 'स्थामि' इकारः संहितम् । 'समो वा' इति विकल्पेन समो मकारलोपः सहितम् । तनु विस्तारे । क्तप्रत्ययः । 'लोपस्त्वनुदात्त०' संपूर्वः । संततं सततम् । अत्रापि ततशब्दे परे विकल्पेन समो मकारलोपः ॥ पच् युट्प्रत्ययः । 'युवोरनाकौ' 'स्वरहीनं०' मांसपूर्वः । युट्प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्याकारलोपः । मांसपचनं मांस्पचनम् । पुनः पच् 'घञ् भावे' इति घञ् प्रत्ययः । अ वृद्धिः । 'चजोः कगौ घिति' 'स्वरहीनं०' पाक मांसपूर्वः । अत्र घञ्प्रत्ययसहिते पचि धातौ परे विकल्पेन मांसशब्दस्याकारलोपः । मांसपाकः मांस्पाकः इति रूपद्वयम् ॥ केचित्तु मांसशब्दस्य मकारस्य तथान्त्यस्याकारस्य लोपमिच्छन्ति । यथा मांस्पाकः । इति ॥

ऋदुपधात् क्यप् ॥ ऋकारोपधाद्धातोः क्यप् प्रत्ययो भवति भावकार्ययोः । कृती छेदने । कर्तितुमर्हं कृत्यम् । नितरां कर्तितुं योग्यं निकृत्यम् । वृद्ध्यम् । वृत्यते तत् वृत्यम् ॥ कृपिचृत्योर्न क्यप् ॥ कृपू सामर्थ्ये । कृपो रो लः । कल्पितुं योग्यं कल्प्यम् । चृत दीप्तौ । चर्त्यम् ॥ मृजो वा क्यप् ॥ मृज्यं मार्ग्यम् ॥ ह्रस्वाच्च क्यप् ॥ ह्रस्वान्ताद्धातोर्भावे क्यप् प्रत्ययो भवति ॥ तस्य ग्रहणे तदन्तस्य ग्रहणम् । क्रियते तत्कृत्यम् ॥ कृञः क्यपि वा रिङ् वक्तव्यः तुगभावश्च ॥ कृत्या क्रिया ॥ ङिदनेकाक्षरोऽप्यादेशस्त-दन्तस्यैव वक्तव्यः ॥ गुपगुहोः क्यप् ॥ गोप्तुं योग्यं गुप्यम् । गूहितुं योग्यं गुह्यम् ॥ वदेः क्यप् भावादौ ॥ वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ ॥ मृषा उद्यते इति मृषोद्यम् । ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या ॥ गृहेः क्यप् ॥ अर्जुनगृह्या सेना ॥ भुवो भावे क्यप् ॥ नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति ॥ ब्रह्मणो भावः ब्रह्मभूयं गतः । ब्रह्मणा भूयेत तत् ब्रह्मभूयं गतः । नाम्नि किम् । भवितव्यं भव्यम् ॥ [ स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्यायतेर्ड्रट् । डित्वाट्टिलोपः । संयोगान्तस्य लोपः । टित्वा-दीप् । स्त्यायति समूहं करोति सा स्त्री । लक्ष दर्शनाङ्कनयोः ॥ लक्षेरी मुट् च । लक्षतेर्धातोरीः प्रत्ययो भवति तस्य मुडागमश्च । लक्ष्यते पुमाननया सा लक्ष्मीः ॥ ]

सूत्रम्—'ऋदुपधात्क्यप्' ॥ ऋत् ऋकारः उपधा यस्य स ऋदुपधस्तस्मात् पञ्चम्येकव-चनान्तम् । 'ङसिरत्' 'सवर्णे०' क्यप् प्रथमैकवचनान्तम् । 'हसेपः०' ऋकारोपधात्

१ कृत्यप्रक्रियायामस्य पाठः किंमूलक इति चिन्त्यम् ॥

'वृतु वर्तने' इत्यादेर्धातोः क्यप्रत्ययो भवति भावादौ । ककारो गुणनिषेधार्थः । कृती छेदने । कृत् क्यप्प्रत्ययः । 'स्वरहीनं०' प्रथमैकवचने 'अतोऽम्' निःपूर्वः । निःकृत्यं नितरां कृत्यते निःकृत्यम् ॥ वृतु वर्तने । वृत्यं नृत्त्यम् । 'ह्रस्वाच्च क्यप्प्रत्ययो भवति' पित्त्वात् 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमः । डुकृञ् कृ क्यप्प्रत्ययः । 'ह्रस्वस्य पिति कृति तुक्' कृत्यं स्तुत्यम् । 'भुवो भावे क्यप्' भूधातोर्भावे शब्दप्रवृत्तिनिमित्ते क्यप्प्रत्ययो भवति । कित्त्वाद्गुणो न । क्यप्प्रत्ययः । ब्रह्मपूर्वः । प्रथमैकवचने 'अतोऽम्' ब्रह्मभूयं ब्रह्मणो भावः । ब्रह्मत्वं गतः प्राप्त इत्यर्थः । एवं देवभूयं देवत्वम् । [ 'स्त्यायतेर्ड्रट्' स्त्यायतेर्धातोः स्त्रीत्वे वाच्ये ड्रट्प्रत्ययो भवति । डकारष्टिलोपार्थः । ष्ट्यै स्त्यै शब्दसंघातयोः । शब्दार्थे समूहार्थे च । स्त्यै ड्रट्प्रत्ययः । डित्त्वाट्टिलोपः । 'संयोगान्तस्य०' इति यलोपः । 'स्वरहीनं०' 'ष्ट्रितः' इतीप् । प्रथमैकवचने 'हसेपः०' स्त्री 'लक्षेरी मुट् च' लक्षधातोः ईप्रत्ययो भवति तस्य च मुडागमः । लक्ष दर्शनाङ्कनयोः । लक्ष ईप्रत्ययः । मुट् । टित्त्वादादौ । 'स्वरहीनं०' 'स्रोर्विं०' लक्ष्यत इति लक्ष्मीः । अत्र ईबन्तत्वाभावात्सेर्लोपो न ॥ ]

**इण् स्तु वृ दृ भृ शास् जुष् खन् एभ्यः क्यप् वाच्यः ॥** तुक् ईयते इति इत्यः । स्तुत्यः । वृत्यः । दृङ् आदरे । दृत्यः । भृत्यः । शासेरिः शिष्यः । जुष् प्रीतिसेवनयोः । जुष्यः ॥ **खन एत्वं क्यपि वाच्यम् ॥** खन्यते इति खेयम् ॥ **भिद्योद्ध्यौ नदे निपात्येते ॥** भिनत्ति कूलमिति भिद्यः । उज्झ उत्सर्गे । उज्झति जलमिति उद्ध्यः नदः । नदे किम् । भेत्ता उज्झिता ॥ **कृवृष्योर्वा क्यप् ॥** क्रियते तत् कृत्यम् । कर्तुं योग्यं कार्यम् । वृष वृष्टौ । वृष्यम् । वर्ष्यम् ॥ [ ये[२] एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः ॥ रारो झसे दृशाम् । दर्शनार्हो द्रष्टव्यः । द्रष्टुं अर्हः दर्शनीयः-दृश्यः । इङ् अध्ययने । स्वाध्यायोऽध्येतव्यः । स्वाध्यायो नाम वेदः । श्रु श्रवणे । श्रवणार्हः श्रोतव्यः । श्रोतुं योग्यं श्रवणीयम् । मान पूजायाम् । मानितुं योग्यो मानितव्यः माननीयः । ध्यै चिन्तायाम् । ध्यानार्हो ध्यातव्यः । ध्यातुं योग्यो ध्यानीयः । मन ज्ञाने । मननार्हो मन्तव्यः । मन्तुं योग्यो मननीयः ॥ सप्रत्ययान्तादपि एते प्रत्यया भवन्ति ॥ नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः । भवितुमेष्टव्यो बुभूषितव्यः-बुभूषणीयः । तव्यानीयौ क्यब्घ्यण्यः ॥ ]

**कृत्याः पञ्च समाख्याता घ्यण्क्यपौ भावकर्मणोः ।**
**तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः ॥ २ ॥**

॥ इति कृत्यप्रक्रिया ॥ ७ ॥

---

१ कृत्यप्रक्रियायामस्य पाठः किंमूलक इति चिन्त्यम् ॥ २ प्राग्लिखितोऽयं पाठः पुनः किमर्थं लिखित इति चिन्त्यम् ॥

## स्त्रीप्रत्ययाधिकारः ८

अथ स्त्र्यधिकारः ॥ स्त्रियां यजां भावे क्यप् ॥ यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति ॥ यज् व्रज् समज् निषद् निपत् मन् नम् विद् षुञ् शीङ् भृञ् इण् कृ इषु परिसृप परिचर अटाट्य आस् चर् जागृ हन् एते यजादयः ॥ कित्त्वात्संप्रसारणम् ॥ इज्यते सा इज्या । स्त्रीत्वादाप् ॥ व्रज्यते सा व्रज्या ॥ अज गतौ क्षेपणे च । समज्यते सा समज्या शिबिका ॥ प्रकर्षेण व्रज्यते अस्यामिति प्रव्रज्या ॥ षद् विशरणगत्यवसादनेषु । निषद्यते सा निषद्या ॥ निपत्या ॥ मन ज्ञाने । मन्यते सा मन्या ॥ नम्या । विद्यते सा विद्या । सुत्या ॥ शीङोऽयङ् क्विति ये वक्तव्यः ॥ शय्या । भृत्या । ईयते सा इत्या । कृत्या ॥ कृञो यक् वा वाच्यः ॥ 'अयकि' । क्रियते सा क्रिया ॥ इषेच्छान्तादेशो यलोपश्च ॥ इष्यते सा इच्छा ॥ सरतेर्गुणः ॥ परिसर्या ॥ परिचर्या । अटाट्या । आस्या । चर्या ॥ जागर्तेर्गुणः ॥ जागर्या । हनस्तकारान्तादेशो हिंसायामर्थे । हन्यते सा हत्या ॥ हन्तेस्तः ॥ हन्तेर्नकारस्य तकारादेशो भवति क्यपि स्त्रियाम् ॥ ब्रह्म हन्यते इति ब्रह्महत्या ॥

सूत्रम्—'स्त्रियां यजां भावे' ॥ स्त्रियां सप्तम्येकवचनान्तम् । यजां षष्ठीबहुवचनान्तम् । भावे सप्तम्येकवचनान्तम् । यज् अज् हन् शीङ् व्रज् विद् आस् मन् चर् भृ अटाट्या निषद् निपत् इत्यादेर्धातोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवति । ककारः संप्रसारणार्थः । यजनमिज्या क्यप्प्रत्ययः । 'यजां यवराणां०' इति संप्रसारणम् यस्य इः । 'स्वरहीनं०' स्त्रीत्वात् । 'आबतः स्त्रियाम्' 'सवर्णे०' प्रथमैकवचने 'आपः' । अज गतौ क्षेपणे च । अज् संपूर्वः । 'स्वरहीनं०' क्यप्प्रत्ययः । 'स्वरहीनं०' स्त्रीत्वादाप् । समज्या परिषत् । हन् ब्रह्मपूर्वः । क्यप् । 'लोपस्त्वनुदात्ततनाम्' इति तुशब्दात् झसाभावेऽपि नकारस्य लोपः । 'ह्रस्वस्य पिति०' 'स्वरहीनं०' ब्रह्महत्या । ब्रह्मणो ब्राह्मणस्य हननं ब्रह्महत्या । शीङ् शय्या व्रज् व्रज्या विद् विद्या षद् निषद्या आस्या मन्या चर्या भृत्या अटाट्या । 'कृञो वा' रिङ् । कृत्या क्रिया ॥

स्त्रियां भावे क्तिः ॥ धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति ॥ क्रियते सा कृतिः । बुध्यते सा बुद्धिः । स्मृङ् चिन्तायाम् । स्मर्यते सा स्मृतिः । पच्यते सा पक्तिः । पचि विस्तारे । पञ्च्यते तत् पञ्चनं पङ्क्तिः । संप्रसारणम् । उह्यते सा ऊढिः । संविद्यते संवित्तिः ॥

सूत्रम्—'स्त्रियां भावे क्तिः' ॥ धातोः क्तिप्रत्ययो भवति स्त्रीलिङ्गे भावे । ककारो गुणनिषेधार्थः संप्रसारणार्थश्च । डुपचष् पाके पक्तिः । पचि विस्तारे । पच् क्तिप्रत्ययः । ति ।

'चोः कुः' 'स्वरहीनं०' 'इदितः०' इति नुम् । 'नश्चापदान्ते०' 'स्नोर्वि०' पञ्चनं पङ्क्तिः श्रेणिरित्यर्थः । वह प्रापणे क्तिप्रत्ययः । 'हो ढः' 'तथोर्धः' 'ष्टुभिः ष्टुः' 'यजां यवराणां०' इति संप्रसारणम् । वस्य उः । 'ढि ढो लोपो दीर्घश्च' इति ढलोपः । ऊकारस्य उकारः । प्रथमैकवचने 'स्नोर्वि०' ऊढिः । विद् संपूर्वः । क्तिप्रत्ययः । 'खसे चपा झसानाम्' इति दस्य तः । 'स्वरहीनं०' संवित्तिः ॥

**शमां दीर्घः ॥** शमादीनां दीर्घो भवति क्तिप्रत्यये परे ॥ शम्यते सा शान्तिः । दम्यते सा दान्तिः । गम्यते सा गतिः । हन्यते सा हतिः । भ्रमु चलने । भ्रम्यते सा भ्रान्तिः । अनुभूयते तत् अनुभवनं अनुभूतिः । विशिष्टा भूतिः विभूतिः । प्रभूतिः । भवनं भूतिः । शुध शौचे । शोधनं शुद्धिः ॥

शम् क्तिप्रत्ययः ॥ 'शमां दीर्घः' 'नश्चापदान्ते०' 'स्नोर्वि०' शान्तिः भ्रान्तिः । ग्लै 'संध्यक्षराणामा' ग्ला क्तिप्रत्ययः । 'त्वाद्योदितः' तस्य नः । ग्लानिः । म्लै म्लानिः । भू क्तिप्रत्ययः । भूतिः । अनुपूर्वः । अनुभवनमनुभूतिः । प्रथमैकवचने 'स्नोर्वि०' ॥ गमनं गतिः । नमनं नतिः । 'लोपस्त्वनुदात्ततनां०' इति मलोपः ॥

**ईश्शीङोर्वरक्तिप्रत्ययौ नेड्गुणश्च ॥** ईश्शीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य क्तिप्रत्ययस्य च इट् न । शीङो गुणोऽपि न भवति ॥ ईष्टेऽसौ ईश्वरः । संशय्यते तत् संशयनम् संशीतिः । ह्री गतौ । ह्रीयते इति ह्रीतिः । जागरणं जागृतिः । निगृह्यते सा निगृहीतिः । कुच संकोचने । कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । तुदादिः । निकुचितिः । निपठितिः । स्निह् आस्कन्दने । उपस्निहितिः । निपतितिः । विशेषेण ध्रियते सा विधृतिः ॥ **ग्लाम्लाज्याहाकृत्वरिभ्यः क्तेरर्थे निः प्रत्ययो भवति ॥** ग्लायते सा ग्लानिः । ज्यानिः । हानिः । ञित्वरा संभ्रमे ॥ **त्वरतेर्वस्य उत्वं वाच्यम् ॥** त्वर्यते सा तूर्णिः ॥ **कॄल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति ॥** ऋत इर् । कीर्यते सा कीर्णिः । लूनिः । धूनिः । पूर्णिः ॥ **संपदादेः क्विप् वा वाच्यः ॥** संपत् संपत्तिः ॥

शीङो गुणाभावो वक्तव्यः । 'ईश्शीङोर्वरक्तिप्रत्यये नेट् गुणश्च' ॥ संशीतिः । बुध् अवगमने । बुध् तिप्रत्ययः 'तथोर्धः' 'झबे जबाः' 'स्वरहीनं०' बुद्धिः ॥ अनुभूतिरित्यादौ 'कृतः' इतीडागमे प्राप्ते तन्निषेधार्थं 'ह्विवत्योनेट्' इति सूत्रं पठन्ति केचित् । हकारवकारादेः प्रत्ययस्य क्तिप्रत्यये इटो निषेधः । ग्रहादेस्तु क्तप्रत्यये इटो न निषेधः । गृहीतिः भणितिरित्यादिः ॥

**कर्तरि क्तिश्च संज्ञायाम् ॥** कर्त्रर्थे धातोः क्तिः प्रत्ययो भवति संज्ञायां विषये ॥ डुकृञ् करणे । प्रकुरुते सा प्रकृतिः । धृञ् धारणे । विपूर्वः । विशेषेण धरतीति विधृतिः ॥

---

१ ईशधातोर्वरप्रत्ययविधानं पुनरुक्तम् 'वर' इति सूत्रेण विहितत्वात् ॥

'कर्तरि क्तिश्च०' ॥ कर्तर्यपि क्तिप्रत्ययो भवति ॥ तन् क्ति संपूर्वः । 'लोपस्त्वनुदात्त०' संतनोति कुलमिति संततिः ॥ एवं कृ क्तिप्रत्ययः । प्रपूर्वः । प्रकुरुते इति प्रकृतिः प्रधानं पुरुषः । धृञ् धारणे विपूर्वः । तिप्रत्ययः । विधृतिः ॥ पत् तिप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' पत्तिः ॥

**षिद्भिदामङ् ॥ षितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्ययो भवति भावादौ ॥ पच्यते सा पचा । मृज्यते सा मृजा ॥ जॄष् वयोहानौ ॥ जरादौ ङानुबन्धरहितः अः प्रत्ययो भवति ॥ जीर्यत्यनया सा जरा ॥ [इषु इच्छायामिति निर्देशाज्ज्ञापकादिच्छा इत्यादि निपात्यते । इच्छा] इषादेरङर्थे युट् ॥ एषणमिति एषणा । भिद्यते अनया सा भिदा । छिद्यतेऽनया सा छिदा । क्षिपा ॥ गुहू संवरणे । गुहा ॥ मेधृ हिंसायाम् । मेधृ वधमेधासंगमेषु । मेध्यते इति मेधा ॥ कृपा ॥ पीड बाधायाम् । पीडा ॥ बाध पीडायाम् । बाधा ॥ क्षपा रात्रिः ॥**

सूत्रम्—'षिद्भिदामङ्' ॥ षिच्च भिदश्च षिद्भिदस्तेषां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' अङ् प्रथमैकवचनान्तम् 'हसेपः०' षितः षकारेतो धातोः भिदादेश्च धातोः स्त्रीलिङ्गे अङ्प्रत्ययो भवति भावादौ । ङकारो गुणनिषेधार्थः । डुपचष् पाके । षित्त्वात् अङ्प्रत्ययः । 'स्वरहीनं०' स्त्रीत्वादाप् । पचनं पचा । मृजूष् शुद्धौ । मृजा । अङ् । 'स्वरहीनं०' आप् । मार्जनं मृजा ॥ एवं भेदनं भिदा । छेदनं छिदा । जरा इत्यत्र 'ङकारानुबन्धरहितोऽप्रत्ययो वक्तव्यः' तेन गुणप्राप्तिर्भवति । केचित्तु 'नोक्तमनित्यम्' इति न्यायेन गुणं कुर्वन्ति । जॄष् वयोहानौ । जॄ अप्रत्ययः । 'गुणः' 'स्वरहीनं०' स्त्रीत्वादाप् । जरा । साधना स्वरान्तस्त्रीलिङ्गे प्रतिपादिताऽस्ति ॥

**गुरोर्हसात् ॥ गुरुमतो हसान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ न क्तिः ॥ ईह चेष्टायाम् । ईह्यते सा ईहा ॥ ऊह्यते सा ऊहा ॥ ईक्ष दर्शनाङ्कनयोः । ईक्ष्यते तत् ईक्षणं ईक्षा ॥ एध्यते सा एधा । गुरोः किम् । भक्तिः ॥ हसात्किम् । नीतिः ॥ लिख् रिख् लेखने । लिख्यते तल्लेखनं लेखा । रिख्यते तद्रेखणं रेखा ॥ गुध परिवेष्टने । गुध्यते इति गोधा ॥ धेट् पाने । सुष्ठु धीयते इति सुधा ॥ डुधाञ् धारणपोषणयोः । श्रद्धीयते सा श्रद्धा ॥ क्तिरापादिभ्यः ॥ आप्तिः । दीप्यते सा दीप्तिः । राध्यते सा राद्धिः । प्रशास्तिः ॥**

सूत्रम्—'गुरोर्हसात्' ॥ गुरुशब्दस्य पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः । 'स्रोर्वि०' हसादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' पश्चात् 'नामिनोरः' गुरुमतो गुरूपधात् हसान्ताद्धातोः अप् कर्तरि भावेऽर्थे अप्रत्ययो भवति । उदाहरणम्—एध वृद्धौ । एध् । गुरूपधत्वात् हसान्ताच्च अप्रत्ययः । स्त्रीत्वादाप् । प्रथमैकवचने 'आपः'

---

१ 'इच्छा' इति रूपसाधनस्य प्रागप्युक्तत्वात् एकत्र प्रक्षिप्तः पाठ इति सुधीभिरन्वेषणीयम् ॥

एषा ॥ ईहा । ईह वाञ्छायाम् ॥ ऊह वितर्के । ऊहा ॥ ईक्ष दर्शनाङ्कनयोः । ईक्षा ॥ एवं रेखा लेखा ॥

**प्रत्ययान्तात्** ॥ प्रत्ययान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ ॥ चिकीर्ष्यते सा चिकीर्षा । आत्मनः कर्तुमिच्छा चिकीर्षा । आत्मनः पुत्रेच्छा वा पुत्रीयते सा पुत्रीया । अशितुमिच्छा अशनाया । लोलूयते सा लोलूया । अटाट्या । कण्डूञ् गात्रविघर्षणे । कण्डूयते सा कण्डूया । मुमूर्षणं मुमूर्षा ॥

सूत्रम्—'प्रत्ययान्तात्' ॥ पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' सादयः प्रत्यया अन्ते यस्य स प्रत्ययान्तस्तस्मादपि धातोः अप्रत्ययो भवति । उदाहरणम् । कृ । 'इच्छायामात्मनः सः' 'ऋत इर्' 'द्विश्च' 'पूर्वस्य' 'हसादिः शेषः' 'कुहोश्चुः' 'य्वोर्विहसे' इति दीर्घः । 'किलात्षः सः०' जलतुम्बिका० चिकीर्ष इति जातम् । ततः 'प्रत्ययान्तात्' इति अप्रत्ययः । 'यतः' इत्यलोपः । 'स्वरहीनं०' 'आबतः स्त्रियाम्' 'आपः' कर्तुमिच्छा चिकीर्षा । एवं जिहीर्षा बुभूषा । पुत्र 'नाम्नो य ई चास्य' इति यप्रत्ययः । तत्संनियोगे अकारस्य ईकारः । पुत्रीयत इति जातम् । 'स धातुः' ततः 'प्रत्ययान्तात्' इति सूत्रेण अप्रत्ययः । 'यतः' इत्यलोपः । 'स्वरहीनं०' 'आबतः स्त्रियाम्' प्रथमैकवचने 'आपः' आत्मनः पुत्रेच्छा पुत्रीया । एवं पुत्रकाम्या कण्डूया इत्यादि ॥

**इक्श्तिपौ धातुनिर्देशे** ॥ धातुनिर्देशे वाच्ये सति इक्श्तिपौ प्रत्ययौ भवतः । शकारः शिति चतुर्वत्कार्यार्थः । पच् इत्ययं धातुः पचिः । श्रयतिः । पचतिः । भवतिः ॥ ण्यन्तआस्ग्रन्थअर्थश्रन्थघट्विद्वन्दिइषिभ्यः स्त्रियां युर्वाच्यः ॥ डुकृञ् करणे । युवोरनाकौ । कारणा । आसना । उपासनमिति उपासना । अर्थ याच्ञाप्रकाशनयोः । अर्थना । ग्रन्थ संदर्भे । ग्रथ्यते तद्ग्रन्थनमिति ग्रन्थना । श्रथि शैथिल्ये । श्रन्थना । घटनमिति घटना । विद्यते वेदनमिति वेदना । वन्द्यते सा वन्दना । एषणमिति एषणा ॥ इञ् अजादिभ्यः ॥ अज गतौ । आजिः । अत सातत्यगमने । आतिः ॥ इक् कृष्यादिभ्यः ॥ भावादौ ॥ कृष्यते सा कृषिः । गिरिः । किरिः । सर्वधातुभ्य इः । कविः । रविः ॥ इति स्त्र्यधिकारप्रक्रिया ॥ ८ ॥

सूत्रम्—'इक्श्तिपौ धातुनिर्देशे' ॥ इक् च श्तिप् च इक्श्तिपौ प्रथमाद्विवचनान्तम् । धातुनिर्देशे सप्तम्येकवचनान्तम् । धातोर्निर्देशे धातोर्नामग्रहणे नामोच्चारणेऽर्थे इक् श्तिप् इत्येतौ प्रत्ययौ भवतः । श्तिपः शकारः चतुर्वत्कार्यार्थः । पच् पच् एकत्र इप्रत्ययः । 'स्वरहीनं०' 'स्नोर्वि०' पचिः पच्धातुरित्यर्थः । द्वितीये श्तिप्प्रत्ययः । शित्त्वात् 'अप्कर्तरि' 'स्वरहीनं०' पचतिः ॥ एवं पठिः पठतिः । गमिः गच्छतिः । करोतिः ॥ इति स्त्र्यधिकारप्रक्रिया ॥

## क्त्वाप्रत्ययाधिकारः ९

**अथ क्त्वादयः प्रत्ययाः ॥ पूर्वकाले क्त्वा ॥ धातोः क्त्वाप्रत्ययो भवति पूर्वकाले समानकर्तृके धातौ प्रयुज्यमाने ॥ देवदत्तः स्नात्वा भुङ्क्ते । भुक्त्वा व्रजति ॥**

'पूर्वकाले क्त्वा' ॥ पूर्वकाले सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ क्त्वा प्रथमैकवचनान्तम् । 'अव्यया०' ॥ धातोः समानकर्तृके एककर्तृके धातोः क्रियापदे अग्रे प्रयुज्यमाने सति पूर्वकाले प्रथमकाले क्त्वाप्रत्ययो भवति । उदाहरणम्—ष्णा शौचे । 'आदेः ष्णः स्नः' स्ना क्त्वाप्रत्ययः त्वा इति । 'अव्यया०' 'क्त्वाद्यन्तं च' इत्यव्ययसंज्ञा । स्नात्वा भुङ्क्ते अत्र स्नानभोजनक्रियाद्वयमध्ये स्नानक्रियायाः पूर्वकालीनत्वात् त्वाप्रत्ययः ॥ भुज पालनाभ्यवहारयोः । भुज् क्त्वाप्रत्ययः । त्वा 'चोः कुः' 'स्वरहीनं०' प्रथमैकवचने 'अव्यया०' भुक्त्वा व्रजति । अत्र भोजनार्थे व्रजनक्रियामध्ये च भोजनस्य प्रथमकालीनत्वात् त्वाप्रत्ययः । एवं कृत्वा दत्त्वा । 'दो दत्ति ।' इति सूत्रेण दत् आदेशः ॥ लात्वा शयित्वा सुप्त्वा उक्त्वा गृहीत्वा भङ्क्त्वा । णश अदर्शने । नष्ट्वा हित्वा जग्ध्वा इत्यादि ॥

**न क्त्वा सेट् कित् ॥ सेट् क्त्वा किन्न भवति ॥ वर्तित्वा । शयित्वा । भवित्वा । सेट् किम् । कृत्वा ॥ रलो व्युपधाद्धलादेः संश्च ॥ उश्च इश्च वी ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ विद ज्ञाने । विदित्वा वेदित्वा ॥ लिखित्वा । द्युतित्वा । व्युपधात्किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा ॥ मृड्मृद्गुध्गुह्कुष्क्लिशवदवस्मुषग्रहिभ्यः ॥ सेट् किद् भवति । मृड सुखने । मृडित्वा । मृद क्षोदे । मृदित्वा । गुध् रोचने । गुध् रोषे । गुधित्वा । गुह रोगे । गुहू संवरणे । गुहित्वा । कुष् निष्कर्षे । कुषित्वा । क्लिश् विबाधने । क्लिशित्वा । वद व्यक्तायां वाचि । उदित्वा । वस् निवासे । उषित्वा । मुषित्वा । गृहीत्वा ॥ नोपधात्थफान्ताद्वा कित् ॥ नकारोपधात् थफान्ताद्धातोः सेट् क्त्वा वा किद्भवति ॥ ग्रन्थ संदर्भे । नो लोपः । ग्रथित्वा ग्रन्थित्वा । गुम्फ ग्रन्थने । गुफित्वा-गुम्फित्वा । इत्यादि ॥ अलंखल्वोः प्रतिषेधे क्त्वा ॥ प्रतिषेधार्थयोरलंखलुशब्दयोः पूर्वपदयोः सतोः पूर्वकालं विनापि क्त्वा प्रत्ययो भवति ॥ अत्रालंखलुशब्दौ निषेधार्थौ तयोरुपपदत्वात् । अलं भुक्त्वा न भोक्तव्यम् । भोजनं मा कुरु इत्यर्थः । खलु उक्त्वा न वक्तव्यम् ॥**

सूत्रम्—'न क्त्वा सेट्०' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । क्त्वा प्रथमैकवचनान्तम् । 'अव्यया०' । सेट् प्रथमैकवचनान्तम् । 'हसेपः०' । कित् प्रथमैक० । इट्सहितः क्त्वाप्रत्ययो विकल्पेन कित्संज्ञो भवति । कित्त्वपक्षे गुणनिषेधः । कित्त्वाभावे

गुणः। विद् ज्ञाने। क्त्वाप्रत्ययः। 'कृतः' इतीडागमः। एकत्र कित्त्वान्न गुणः। द्वित्वे कित्त्वाभावे 'उपधाया लघोः' इति गुणः 'स्वरहीनं०' प्रथमैकवचने 'अव्यया०' विदित्वा वेदित्वा। वृतित्वा वर्तित्वा ॥ 'अलंखल्वोः प्रतिषेधे क्त्वा' अलं खलु एतयोः पूर्वपदयोः पूर्वकालं विनापि निषेधार्थे धातोः क्त्वाप्रत्ययो भवति। भुज क्त्वाप्रत्ययः। 'चोः कुः' 'खसे चपा०' अलंपूर्वः। 'स्वरहीनं०' 'अव्यया०'। अलं भुक्त्वा भोजनेन अलं। भोजनं मा कुर्विंत्यर्थः ॥ वच् परिभाषणे। वच् क्त्वाप्रत्ययः। 'यजां यवराणां०' इति संप्रजारणम्। 'चोः कुः' 'स्वरहीनं०' खलुपूर्वः। 'सवर्णे०' खलूक्त्वा वचनेन अलं मावदेत्यर्थः॥

**उदितः क्त्वा वेट् ॥ उदितो धातोः परस्य क्त्वाप्रत्ययस्य वा इडागमो भवति ॥ एषित्वा-इष्ट्वा। भ्रमु-चलने। भ्रमित्वा-भ्रान्त्वा। अदो जग्धः। जग्ध्वा ॥**

सूत्रम्—'उदितः क्त्वा वेट्' ॥ उदितः पञ्चम्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विं०'। क्त्वा षष्ठ्येकवचनान्तम्। 'अव्यया०'। वा प्रथमैकवचनान्तम्। इट् प्रथमैकवचनान्तम्। 'हसेपः०' ॥ उत् उकारः इद्यस्य स उदित् तस्मात् उदितः। उदितो धातोः परस्य क्त्वाप्रत्ययस्य इडागमो भवति। इषु इच्छायाम्। इष् क्त्वाप्रत्ययः। 'उदितः क्त्वा वेट्' इत्येकत्र इडागमः। 'स्वरहीनं०' 'उपधाया लघोः' इति गुणः। इडभावे कित्त्वान्न गुणः। ष्टुभिः ष्टुः' प्रथमैकवचने 'अव्यया०' एषित्वा इष्ट्वा ॥

**समासे क्यप् ॥ समासे सति पूर्वकाले क्यप्प्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने ॥ ह्रस्वस्य पिति कृति तुक् ॥ डुभृञ् धारणपोषणयोः। सं भृत्वा करोतीति संभृत्य करोति। णमु प्रह्वत्वे शब्दे च। प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति प्रणम्य गच्छति। अनञ्पूर्व इत्येके। अकृत्वा जल्पति। अकृत्वा गच्छति ॥**

**अजित्वा शात्रवान्सर्वानकृत्वा विमलं यशः।**
**अदत्त्वा वित्तमर्थिभ्यः कथं जीवन्ति भूभृतः ॥ १ ॥**

सूत्रम्—'समासे०' ॥ सप्तम्येकवचनान्तम्। 'अ इ ए'। क्यप् प्रथमैकवचनान्तम्। 'हसेपः०' ॥ समासे सति उपसर्गपूर्वकत्वे सति धातोः पूर्वकाले क्यप्प्रत्ययो भवति स एव कर्ता यस्य स तत्कर्तृकः तस्मिन् तत्कर्तृके एककर्तृके धातोः प्रयुज्यमाने सति। उदाहरणम्। डुभृञ् भृ क्यप्प्रत्ययः। 'ह्रस्वस्य पिति' संपूर्वः। 'स्वर०' 'अव्य०' संभृत्य मिलित्वा सं सम्यक् प्रकारेण भृत्वा करोति ॥ अत्र समुपसर्गेण समासः अत्र संभारकरणक्रिययोः एक एव कर्ता। ततः संभारक्रियायाः पूर्वकालीनत्वात् क्यप्प्रत्ययः ॥ णम् प्रह्वीभावे। 'आदेः ष्णः स्नः' नम् प्रपूर्वः। क्यप्प्रत्ययः। 'प्रादेश्च तथा तौ०' इति नस्य णः। 'स्वरहीनं०' प्रथमैकवचने 'अव्यया०' अत्र प्रकर्षेण नत्वा प्रणम्येति समासे क्यप्। देवदत्तः प्रणम्य गच्छति। अत्र प्रणामगमनरूपद्वयोः क्रिययोः एक एव कर्ता यत्र स एव प्रणन्ता स एव गन्ता इत्येककर्तृत्वम्। ततः प्रणामस्य पूर्वकालीनत्वात् क्यप्प्रत्ययः ॥ अनञ्पूर्व इति। नञ्पूर्वकत्वे क्यप्प्रत्ययो न भवति इत्येके वदन्ति। यथा कृ नञ्पूर्वः।

क्त्वाप्रत्ययः । 'ना' इति सूत्रेण नस्य आकारादेशः । अकृत्वा गच्छति । अत्र नञ्पूर्वकत्वात् क्यप्प्रत्ययो नायातः । किंतु क्त्वाप्रत्यय एवायातः ॥

**क्यपि ञेर्गुणश्च ॥ क्यपि लघुपूर्वस्य ञेरयादेशोऽपि वाच्यः ॥ परिणमयित्वा इति परिणमय्य भुङ्क्ते । विगमय्य । विगणय्य ॥ अलघुपूर्वस्य न । तेन ञेर्लोपो वाच्यः । प्रतार्य । संप्रधारयित्वा इति संप्रधार्य । विचार्य करोति । आप्लृ व्याप्तौ । आप्नोतेर्वा । प्रापय्य । प्राप्य ॥ दादीनां क्यपि क्त्वाभावो वाच्यः ॥ क्यपि 'स्थामी' इति ईकारो न भवति ॥ दो अवखण्डने । प्रदाय । प्रसाय । प्रमाय । प्रस्थाय । उप समीपे स्थित्वा इति उपस्थाय ॥ पिबतेर्वा-प्रपाय प्रपीय । लोपस्त्वनुदात्ततनाम् ॥ नमस्य क्यपि वा लोपः ॥ प्रकर्षेण नत्वा इति प्रणम्य प्रणत्य । आसमन्तात् ग्रामे आगम्य आगत्य ॥ विपूर्वस्य दधातेः करोतेरर्थे क्यप् ॥ विधाय । प्रहाय ॥ तत्कालेऽपि क्यप् दृश्यते ॥ नेत्रे निमीत्य हसति । मील संमीलने । मील संगमे उभयपदी । अक्षिणी संमीलित्वा इति अक्षिणी संमील्य हसति । चक्षुषी संमील्य हसति । मुखं व्यादत्त्वा इति मुखं व्यादाय स्वपिति ॥**

'क्यपि ञेर्गुणश्च' ॥ क्यप्प्रत्यये परे ञिप्रत्ययस्य गुणो भवति । णम् परिपूर्वः । 'धातोः प्रेरणे' ञिप्रत्ययः । [ 'प्रत्ययान्तात्' ] इति समासे क्यप्प्रत्ययः । परिणमिय इति स्थिते । 'क्यपि ञेर्गुणः' क्वचित्स्वरवद्यकारः 'स्वरहीनं०' 'अव्यया०' परिणमय्य भुङ्क्ते परितो सामस्त्येन नमयित्वा परिणमय्य पूर्वभुक्तं परिपाकं प्राप्य भुङ्क्ते इत्यर्थः । एवम् उन्नमय्य आकलय्य ॥ 'तत्कालेऽपि' द्वयोः क्रिययोः समकालत्वेऽपि क्यप्प्रत्ययो भवति । मील मीलने मील् संपूर्वः । क्यप्प्रत्ययः । 'स्वरहीनं०' । प्रथमैकवचने 'अव्यया०' नेत्रे संमील्य हसति समकालमेव संमीलति हसति च । अत्र नेत्रसंमीलनहसनयोः समकालीनत्वात्पूर्वकालं विनापि तत्कालेऽपि क्यप्प्रत्ययः ॥ डुदाञ् दाने । विआङ्पूर्वः । क्यप्प्रत्ययः । 'इ यं स्वरे' वि आङ्पूर्वको दाधातुः मुखप्रसारणार्थे । तेन मुखं व्यादाय प्रसार्य स्वपिति । अत्रापि मुखप्रसारणस्वप्नयोः युगपत्कालीनत्वात् समानकाले क्यप्प्रत्ययः । कचिद्भिन्नकर्तृकेऽपि क्यप्प्रत्ययो दृश्यते—'मत्प्रसूतिमनाराध्याऽप्रजेति त्वां शशाप सा' इति । 'अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसम्' इत्यादि ॥

**पौनःपुन्ये णम्पदं द्विश्च ॥ समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनःपुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचनं भवति ॥ आतो युक् । पीत्वा पीत्वा इति पायं पायं गच्छति । आदरे वीप्सायां द्विर्भावः ॥ भुक्त्वा भुक्त्वा इति भोजं भोजं व्रजति । स्मृत्वा स्मृत्वा इति स्मारं स्मारं नमति शिवम् ॥ कथमादिषु स्वार्थे कृञो णम् ॥ कथं इत्थं**

१ 'अनाराध्य' 'अवधार्य' इत्युत्तरम् 'यतमामस्य' इत्येवं विवक्षया समानकर्तृकता निराबाधा इति दाधिमथाः ॥

अन्यथा एवं एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति ॥ कथंकारं इत्थंकारं अन्यथाकारं एवंकारं पठति । एवं पठतीत्यर्थः ॥ समूलाकृतजीवेषु हन्कृञ्ग्रहां णम् वाच्यः स्वार्थे तेषामनुप्रयोगश्च ॥ समूलघातं हन्ति । अकृतकारं करोति । जीवं गृहीत्वा इति जीवग्राहं गृह्णाति इत्यादि ॥

सूत्रम्—'पौनःपुन्ये णम्पदं द्विश्च' ॥ पुनःपुनर्भवतीति पौनःपुन्यं तस्मिन् । सप्तम्येकवचनान्तम् । 'अ इ ए' । णम् 'हसेपः०' । पदं प्रथमैकवचनान्तम् । 'अतोऽम्' । द्विः प्रथमैक० । 'अव्यया०' । च प्रथमैक० । 'अव्यया०' ॥ पौनःपुन्ये वारंवारार्थे धातोः पूर्वकाले णम्प्रत्ययो भवति तस्य च णम्सहितस्य पदस्य द्वित्वं भवति समानकर्तृकेषु धातुषु प्रयुज्यमानेषु सत्सु । पा पाने । पा णम्प्रत्ययः । अम् । 'आतो युक्०' 'स्वरहीनं०' 'मोऽनुस्वारः' द्वित्वम् । प्रथमैकवचने 'अव्यया०' पायं पायं गच्छति । पीत्वा पीत्वा गच्छतीत्यर्थः । एवं कारंकारं स्मारंस्मारम् । द्विश्चेति चकारात्—समूलघातं हन्ति जीवग्राहं गृह्णाति केशग्राहं युध्यति इत्यादावपि णम्कथनात् एषु पूर्वपदेषु सत्सु स्वार्थे कथमादीनामेवार्थे कृञ् धातोर्णम्प्रत्ययो भवति णित्त्वाद्वृद्धिः । कृ कथंपूर्वः । णम्प्रत्ययः । अम् । 'धातोर्नामिनः' इति वृद्धिः । 'स्वरहीनं०' प्रथमैकवचने 'अव्यया०' कथंकारं कथमित्यर्थः । इत्थंकारम् । इत्थमित्यर्थः ॥

वर्णात्कारः ॥ वर्णमात्रात्कारः प्रत्ययो भवति ॥ क इति वर्णः ककारः । व इति वर्णो वकारः । अ इति वर्णः अकारः । वर्णसमुदायादपि कारो दृश्यते । अहंकारः । ओंकारः । टकारः । पकारः । तकारः । इत्यादि ॥

'वर्णात्कारः' ॥ वर्णनिर्देशे वाच्ये सति वर्णात् अकारादिक्षकारान्तात् अग्रे कारप्रत्ययो भवति । क अग्रे कारप्रत्ययः । ककारः खकारः गकारः अकारः इकारः । अत्र बहुलमित्यनुवर्तते तेन अ इ उ ऋ ऌ हयवरल इत्यादौ कारप्रत्ययो न । वर्णभिन्ननिर्देशे यथा । अः कृष्णः इः कामः को ब्रह्मा खमाकाशमित्यादौ न ॥

रादिफो वा ॥ र इति वर्णः रेफः-रकारः ॥

[रकारादीनि नामानि रामत्रस्तस्य रावण ।
रत्नानि च रमण्यश्च संत्रासं जनयन्ति मे ॥ २ ॥]
रकारादीनि नामानि शृण्वतो मम पार्वति ।
मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥ ३ ॥

'रादिफो वा' ॥ रात् रकाराक्षरात् वा विकल्पेन इफप्रत्ययो भवति । र अग्रे इफप्रत्ययः । 'अ इ ए' रेफशब्दात् प्रथमैकवचने 'स्रोर्विं०' । पक्षे कारप्रत्ययः ॥ रकार इति प्रयोगे संमतिमाह—रकारादीनीति श्लोकः । हे पार्वति रकारादीनि रकार आदिर्येषां तानि नामानि शृण्वतः ततो मम मनः प्रसन्नतां प्रसन्नभावं नैर्मल्यं सानन्दत्वं एति प्राप्नोति । कया । रामनामाभिशङ्कया रकारादीनि नामान्युच्चरन् कदाचिद्रामनामाप्युच्चरेदित्याशङ्कया इत्याकाङ्क्षया ॥

**लोकाच्छेषस्य सिद्धिर्यथा मातरादेः ॥ अस्य सारस्वतव्याकरणस्य ये शेषप्रयोगास्तेषां लोकात् अन्यव्याकरणात्सिद्धिर्भवति यथा मातरादेः। इत्यादिप्रयोगानुसारेण बोद्धव्यम् ॥**

अथोपसंहारसूत्रमाह—'लोकाच्छेषस्य०' लोकात् ॥ पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०'। शेषस्य षष्ठ्येकवचनान्तम्। 'ङस्य'। सिद्धिः प्रथमैकवचनान्तम्। 'स्रोर्विं०' उक्तादन्यः शेषस्तस्य शेषस्य। अत्र व्याकरणेऽनुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणात् ज्ञातव्या। माता च पिता च पितरौ इत्यादीनां सिद्धिर्लोकाज्ज्ञेया ॥

शास्त्रान्ते च मङ्गलाचरणं युज्यते अतो मातृपित्रोर्नामग्रहणेन मङ्गलमप्याचरितम् ॥

**स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः।**
**स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥ ४ ॥**

अथ कविः स्वनामगर्भमलंकारश्लोकमाह—स्वरूपान्त इति। स मस्करी मस्करो वंशदण्डोऽस्त्यस्येति मस्करी संन्यासिकः प्रक्रियां शुभामृज्वीं चक्रे कृतवान्। कथंभूतां प्रक्रियां चतुरोचितां चतुराणां सुबुद्धीनां पुरुषाणामुचिता योग्या तां। स कः। यत्र यस्मिन् मस्करिणि अनुभूत्यादिः अनुभूतिः इति आदौ यस्य सः अनुभूत्यादिः तथा स्वरूपान्तः स्वरूप इति शब्दोऽन्ते यस्य स अर्थात् अनुभूतिनामवाचकः शब्दः सार्थकः। अनुभूतिर्ज्ञानमेव स्वरूपं यस्येत्यर्थः। सहितोऽभूदित्यनेन अनुभूतिनामा संन्यासिकः इमां प्रक्रियां शुभामृज्वीं सरलां चक्रे। शुभामित्यनेन स्वकपोलकल्पनानिरासः कृतः ॥

**अवताद्वो हयग्रीवः कमलावर ईश्वरः।**
**सुरासुरनराकारमधुपापीतपत्कजः ॥ ५ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्योऽनुभूतिस्वरूपाचार्यविरचितायां कृदन्तप्रक्रियायां क्त्वादिप्रत्ययप्रक्रिया समाप्ता ॥ ९ ॥**

अथ पाठकश्रोतॄणामभीष्टसिद्ध्यै इष्टदेवताशिषमाह—अवतादिति। हयग्रीवः ईश्वरः वो युष्मान् शिष्यान् अवतात् रक्षतु। हयस्य ग्रीवा इव ग्रीवा यस्य सः। अर्थात् पुरुषशरीरः अश्वमुखः चतुर्विंशत्यवतारमध्यस्थः एको भगवतोऽवतारः। उक्तं च भागवतेऽष्टादशाध्याये षष्ठस्कन्धे। 'वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः। प्रत्याददे वा कवयेऽभियाचते तस्मै नमस्ते विदधे हिताय।' सांप्रतं तु तां हयग्रीवमूर्तिं भद्राश्वखण्डे धर्मपुत्रो राजा भद्रश्रवाः पूजयन्नस्ति इति पुराणोक्तिः। कथंभूतो हयग्रीवः। कमलाकरः कमलां लक्ष्मीं करोतीति। यद्वा कमलाया लक्ष्म्या आकरः। पुनः कथंभूतः? ईश्वरः ईष्टे ऐश्वर्यं करोतीति ईश्वरः। पुनः कथंभूतः?। सुरासुरनराकारमधुपापीतपत्कजः। के पानीये जाते कजे, पादावेव कजे कमले पत्कजे, सुराश्च असुराश्च नराश्च त एव आकारा येषामीदृशा ये मधुपाः भ्रमरास्तैरापीते अत्यादरेणावलोकिते पत्कजे चरणकमले यस्य सः ॥

इति कृत्प्रक्रिया ॥

श्रीनागपुरीयतपागच्छाधिराजभट्टारकश्रीचन्द्रकीर्तिसूरिविरचिता सारस्वतव्याकरणस्य दीपिका समाप्ता ॥

---

## व्याख्यातृप्रशस्तिः ।

सुबोधिकायां कृप्तायां सूरिश्रीचन्द्रकीर्तिभिः ।
कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥
तीर्थे वीरजिनेश्वरस्य विदिते श्रीकोटिकाख्ये गणे
श्रीमच्चन्द्रकुले वटोरुहबृहद्गच्छे परिम्लाचिते । (?)
श्रीमन्नागपुरीयकाह्वयतया प्राप्तावदातेऽधुना
स्फूर्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥ २ ॥
वर्षे वेदमुनीन्द्रशंकरमिते ११७४ श्रीदेवसूरिप्रभु-
र्जज्ञेऽभूत्तदनु प्रसिद्धमहिमा पद्मप्रभः सूरिराट् ।
तत्पट्टे प्रथितः प्रसन्नशशभृत्सूरिः सतामादिमः
सूरीन्द्रास्तदनन्तरं गुणसमुद्राह्वा बभूवुर्बुधाः ॥ ३ ॥
तत्पट्टे जयशेखराख्यसुगुरुः श्रीवज्रसेनस्तत-
स्तत्पट्टे गुरुहेमपूर्वतिलकः शुद्धक्रियाद्योतकः ।
तत्पट्टे प्रभुरत्र शेखरगुरुः सूरीश्वराणां वर-
स्तत्पट्टांबुधिपूर्णचन्द्रमनसः श्रीपूर्णचन्द्रः प्रभुः ॥ ४ ॥
तत्पट्टेऽजनि हेमहंससुगुरुः सर्वत्र जाग्रद्यशा
आचार्या अपि रत्नसागरवरास्तत्पट्टपद्मार्यमा ।
श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्तत-
स्तत्पट्टे प्रभुसोमरत्नगुरवः सूरीश्वराः सद्गुणाः ॥ ५ ॥
तत्पट्टोदयशैलहेलिरमलश्रीजेसवालान्वया-
ऽलंकारः कलिकालदर्पदमनः श्रीराजरत्नप्रभुः ।
तत्पट्टे जिनविश्ववादिनिवहा गच्छाधिपाः संप्रति
सूरिश्रीप्रभुचन्द्रकीर्तिगुरवो गाम्भीर्यधैर्याश्रयाः ॥ ६ ॥
तैरियं पद्मचन्द्राख्योपाध्यायाभ्यर्थनात्कृता ।
शुभा सुबोधिका नाम्नी श्रीसारस्वतदीपिका ॥ ७ ॥
श्रीचन्द्रकीर्तिसूरीन्द्रपादाम्भोजमधुव्रतः ।
हर्षकीर्तिरिमां टीकां प्रथमादर्शकेऽलिखत् ॥ ८ ॥
अज्ञानध्वान्तविध्वंसविधाने दीपिकानिभा ।
दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ॥ ९ ॥
स्वल्पस्य सिद्धस्य सुबोधकस्य सारस्वतव्याकरणस्य टीकाम् ।
सुबोधिकाख्यां रचयांचकार सूरीश्वरः श्रीप्रभुचन्द्रकीर्तिः ॥ १० ॥

**सारस्वतव्याकरणं चन्द्रकीर्तिव्याख्यासहितं संपूर्णम् ।**

# सारस्वतवृत्तित्रयस्थसूत्राणां

## अकारादिवर्णक्रमः ।